णमोत्थु णं समणस्स भगवओ महावीरस्स ।

वादिवृन्दवन्दितचरणारविन्द–सुविहितसूरिशक्रचक्रचूडामणि–श्रीसौधर्मबृहत्तपो-
गच्छावतंसकाऽऽबालब्रह्मचारि–जैनशासनस्फारशृङ्गारहार–सर्वतन्त्रस्वतन्त्र–
कलिकालसर्वज्ञकल्प–जङ्गमयुगप्रधान–जगत्पूज्य–परमयोगिराज–
गुरुदेव–प्रभुश्रीमद्विजयराजेन्द्रसूरीश्वर–विरचितः–

# अभिधानराजेन्द्रः ।

( प्राकृत–मागधी–संस्कृत–शब्दकोषः )

## तस्य शकारादिशब्दसङ्कलने सप्तमो भागः ।

स च-

श्रीसर्वज्ञप्ररूपितगणधरनिर्वर्तिताद्यऽऽधुनोपलभ्यमानाशेषसूत्रतन्नियुक्ति-
भाष्य–चूर्णि–वृत्त्यादिनिहितसकलदार्शनिकसिद्धान्तेतिहास–
शिल्प-वेदान्त-न्याय-वैशेषिक-मीमांसादिप्रदर्शितपदार्थानां
युक्ताऽयुक्तत्व–निर्णायकः ।

---

उपाध्याय–श्री श्री १००८ श्रीमन्मोहनविजयोपदेशतः–
आचार्य–श्रीमद्भूपेन्द्रसूरिभि–रुपाध्याय–श्रीयतीन्द्रविजयैश्च संशोधितः,
श्रीसौधर्मबृहत्तपोगच्छीय-जैनश्वेताम्बर–श्रीसङ्घेन


रतलामस्थे स्वीये श्रीजैनप्रभाकर-यन्त्रालये
सम्मुद्र्य प्रकाशितश्च ।

श्रीवीर निर्वाण संवत् २४६१ }
श्रीराजेन्द्रसूरि संवत् २८ }

पुनर्मुद्रित
मूल्यम्-३८) रु०

{ श्रीविक्रमाब्द १९९१
{ ख्रिस्ताब्द १९३४

# आभार-प्रदर्शनम् ।

सुविहितसूरिकुलतिलकायमान—सकलजैनागमपारदृश्व-आबालब्रह्मचारी—जङ्गमयुगप्रधान—प्रातःस्मरणीय—परमयोगिराज—क्रियाशुद्ध्युपकारक—श्रीसौधर्मबृहत्तपोगच्छीय—सितपटाचार्य—जगत्पूज्य-गुरुदेव-भट्टारक श्री १००८ प्रभु श्रीमद्विजयराजेन्द्रसूरीश्वरजी महाराजने 'श्रीअभिधानराजेन्द्र' प्राकृत मागधी महाकोश का सङ्कलनकार्य मरुधरदेशीय श्रीसियाणा नगर में संवत् १९४६ के आश्विनशुक्लद्वितीया के दिन शुभ लग्न में आरम्भ किया । इस महान् संकलनकार्य में समय समय पर कोशकर्त्ता के मुख्य पट्टधर शिष्य-श्रीमद्धनचन्द्रसूरीजी महाराजने जो आपको बहुत सहायता दी । इस प्रकार करीब साढे चौदह वर्ष के अविश्रान्त परिश्रम के फलस्वरूप में यह प्राकृत बृहत्कोष संवत् १९६० चैत्र—शुक्ला १३ बुधवार के दिन श्री सूर्यपुर ( सूरत—गुजरात ) में बनकर परिपूर्ण ( तैयार ) हुआ ।

ग्वालियर रियासत के राजगढ ( मालवा ) में गुरुनिर्वाणोत्सव के दरमियान संवत् १९६३ पौष-शुक्ला १३ के दिन महातपस्वी—मुनि श्रीरूपविजयजी, मुनिश्रीदीपविजयजी, मुनिश्रीयतीन्द्रविजयजी, आदि सुयोग्य मुनि महाराजाओं की अध्यक्षता में मालवदेशीय-छोटे बडे ग्राम-नगरों के प्रतिष्ठित-सद्गृहस्थों की सामाजिक मिटिंग में सर्वानुमत से यह प्रस्ताव पास हुआ कि-मर्हुम-गुरुदेव के निर्माण किये हुए 'अभिधानराजेन्द्र' प्राकृत मागधी महाकोश का जैन जैनेतर समानरूप से लाभ प्राप्त कर सकें, इस लिये इसको अवश्य छपाना चाहिये, और इसके छपाने के लिये रतलाम (मालवा) में सेठ जसुजी चतुर्भुजजीत्-मिश्रीमलजी मथुरालालजी, रूपचंदजी खबदासजीत् नागोरथजी, बीमाजी जवरचंदजीत्-प्यारचंदजी और गोमाजी गम्भीरचंदजीत्-निहालचंदजी, आदि प्रतिष्ठित सद्गृहस्थों की देख-रेख में श्रीअभिधानराजेन्द्र कार्यालय और 'श्रीजैनप्रभाकर' प्रिंटिंग प्रेस स्वतन्त्र खोलना चाहिये । कोष के संशोधन और कार्यालय के प्रबन्ध का

समस्त--जार मर्हुम--गुरुदेव के सुयोग्य--शिष्य मुनिश्रीदीपविजयजी ( श्रीमद्विजयभूपेन्द्रसूरिजी ) और मुनिश्रीयतीन्द्रविजयजी को सोंपा जाय। बस, प्रस्ताव पास होने के बाद सं० १९६४ श्रावणसुदि ५ के दिन उक्त कोश को छपाने के लिये रतलाम में उपर्युक्त कार्यालय और प्रेस खोला गया और उक्त दोनों पूज्य--मुनिराजों की देख--रेख से कोश क्रमशः छपना शुरू हुआ, जो सं० १९८१ चैत्र--वदि ५ गुरुवार के दिन संपूर्ण छप जाने की सफलता को प्राप्त हुआ।

इस महान् कोश के मुद्रणकार्य में कुवादिमत्तमतंगजमदभञ्जनकेसरी-कलिकालसिद्धान्तशिरोमणि--प्रातःस्मरणीय—आचार्य--श्रीमद्धनचन्द्रसूरिजी महाराज, उपाध्याय--श्रीमन्मोहनविजयजी महाराज, सच्चारित्री-मुनिश्रीटीकमविजयजी महाराज, पूर्णगुरुदेवसेवाहेवाक--मुनिश्रीहुकुमविजयजी महाराज, सत्क्रियावान्--महातपस्वी--मुनिश्रीरूपविजयजी महाराज, साहित्यविशारद--विद्याभूषण--श्रीमद्विजयभूपेन्द्रसूरिजी महाराज, व्याख्यानवाचस्पत्युपाध्याय--मुनिश्रीयतीन्द्रविजयजी महाराज, ज्ञानी ध्यानी मौनी महातपस्वी--मुनिश्रीहिम्मतविजयजी, मुनिश्री--लक्ष्मीविजयजी, मुनिश्री--गुलाबविजयजी, मुनिश्री--हर्षविजयजी, मुनिश्री--हंसविजयजी, मुनिश्री—अमृतविजयजी, आदि मुनिवरोंने अपने अपने विहार के दरमियान समय समय पर श्रीसंघ को उपदेश दे दे कर तन, मन और धन से पूर्ण सहायता पहोंचाई, और स्वयं भी अनेक भाँति परिश्रम उठाया है, अतएव उक्त मुनिवरों का कार्यालय आभारी है।

जिन जिन ग्राम--नगरों के सौधर्मबृहत्तपोगच्छीय--श्रीसंघ ने इस महान् कोषाङ्कन--कार्य में आर्थिक--सहायता प्रदान की है, उनकी शुभ-सुवर्णाक्षरी नामावली इस प्रकार है—

श्रीसौधर्मबृहत्तपोगच्छीय श्रीसंघ-मालवा—

| | | |
|---|---|---|
| श्रीसंघ-रतलाम। | श्रीसंघ-बाँगरोद। | श्रीसंघ-राजगढ़। |
| ,, जावरा। | ,, बारोदा-बड़ा। | ,, झाबुआ। |

| श्रीसंघ-बड़नगर। | श्रीसंघ-सरसी। | श्रीसंघ-झकणावदा। |
|---|---|---|
| ,, खाचरोद। | ,, मुंजाखेड़ी। | ,, कूकसी। |
| ,, मन्दसोर। | ,, खरसोद-बड़ी। | ,, आलीराजपुर। |
| ,, सीतामऊ। | ,, चीरोला-बड़ा। | ,, रींगनोद। |
| ,, निम्बाहेड़ा। | ,, मकरावन। | ,, राणापुर। |
| ,, इन्दौर। | ,, बरड़िया। | ,, पारां। |
| ,, उज्जैन। | ,, (भाट)पचलाना। | ,, टांडा। |
| ,, महेन्दपुर। | ,, पटलावदिया। | ,, बाग। |
| ,, नयागाम। | ,, पिपलोदा। | ,, खवासा। |
| ,, नीमच-सिटी। | ,, दशाई। | ,, रंभापुर। |
| ,, संजीत। | ,, बड़ी-कड़ोद। | ,, अमला। |
| ,, नारायणगढ़। | ,, धामणदा। | ,, बोरी। |
| ,, बरड़ावदा। | ,, राजोद। | ,, नानपुर। |

## श्रीसौधर्मबृहत्तपोगच्छीयसंघ-गुजरात—

| श्रीसंघ-अहमदाबाद। | श्रीसंघ-थिरपुर (थराद)। | श्रीसंघ-हीमा। |
|---|---|---|
| ,, वीरमगाम। | ,, वाव। | ,, दूधवा। |
| ,, सूरत। | ,, भोरोल। | ,, वात्यम। |
| ,, साणंद। | ,, भानेरा। | ,, वामण। |
| ,, बम्बई। | ,, भोराजी। | ,, जामनगर। |
| ,, पालनपुर। | ,, डुवा। | ,, खंभात। |

## श्रीसौधर्मबृहत्तपोगच्छीय-संघ-मारवाड़—

| श्रीसंघ-जोधपुर। | श्रीसंघ-भीनमाल। | श्रीसंघ-शिवगंज। |
|---|---|---|
| ,, आहोर। | ,, सांचोर। | ,, कोरटा। |
| ,, जालोर। | ,, बागरा। | ,, फतापुरा। |
| ,, भेंसवाड़ा। | ,, धानपुर। | ,, जोगापुरा। |
| ,, रमणिया। | ,, आकोली। | ,, भारुंदा। |
| ,, सांकलेसर। | ,, साधू। | ,, पोमावा। |
| ,, देवावस। | ,, सियाणा। | ,, बीजापुर। |
| ,, विशनगढ़। | ,, काणोदर। | ,, बाली। |
| ,, मांडवला। | ,, देलंदर। | ,, खिमेल। |

| श्रीसंघ-गोल । | श्रीसंघ-मंडवारिया । | श्रीसंघ-सांडेराव । |
|---|---|---|
| ,, साहेला । | ,, बलदूट । | ,, खुड़ाला । |
| ,, आलामण । | ,, जावाल । | ,, राणी । |
| ,, रेवनड़ा । | ,, सिरोही । | ,, खिमाड़ा । |
| ,, धाणसा । | ,, सिरोड़ी । | ,, कोशीलाव । |
| ,, वाकरा । | ,, हरजी । | ,, पावा । |
| ,, मोदरा । | ,, गुडाबालोतरा । | ,, एंदला का गुड़ा । |
| ,, थलवाड़ । | ,, भूति । | ,, चाँणोद । |
| ,, मेंगलवा । | ,, तख्तगढ । | ,, हूडसी । |
| ,, सूराणा । | ,, सेदरिया । | ,, धाँवला । |
| ,, दाधाल । | ,, गेवाडा । | ,, जोयला । |
| ,, धनारी । | ,, भावरी । | ,, काचोली । |

इनके सिवाय दूसरे भी कई गाँवों के संघों के तरफ से मदद मिली है, उन सभी का कार्यालय शुद्धान्तःकरण से पूर्ण आभारी है ।

## श्रीअभिधानराजेन्द्रकार्यालय.

रतलाम ( मालवा )

श्रीमद्विजयराजेन्द्रसूरीश्वरपट्टप्रभाकर-चर्चाचक्रवर्ति-आगमरहस्यवेदी-श्रुतस्थविरमान्य—

**श्रीसौधर्मबृहत्तपोगच्छीय-श्रीमद्विजयधनचन्द्रसूरिजी महाराज।**

विद्वच्चकोरजनमोदकरं प्रसन्नं, शुभ्रव्रतं सुकविकैरवमाढिलासम् ।
हृद्ध्वान्तनाशकरणे प्रसरत्प्रतापं, वन्दे कलानिधिसमं धनचन्द्रसूरिम् ॥ १ ॥

जन्म ... किसनगढ (मेवाड़) दीक्षोपसंपत् ... जावरा (...) सूरिपद ... जावरा ...
यतिदीक्षा ... धानेरा (...) उपाध्यायपद ... खाचरोद (...) स्वर्गारोहण ... बागरा (...)

# अभिधानराजेन्द्रः ।

शा-श--पुं० । तालुस्थानीये ऊष्मसंज्ञके वर्णे, मागध्याम् शौरसेन्यां च शस्य श एव प्राकृते तु सः । शी--ड । महादेवे, शब्द० । सूर्ये, शशाङ्के, रश्मौ, महार्णवे, शिष्ये, वल्मीके, कच्छपे, भूपे च । स्वस्त्यर्थे, शातने, तनूकृतौ, शीले, सुखे, मङ्गले, शस्त्रे च । नपुं० । एका० । " रसोर्लशौ " ॥ ८ । ४ । २८८ ॥ इति मागध्यां सकारस्थाने शकारादेशेन ये सकारादिशब्दाः प्राकृते दर्शयिष्यन्ते ते मागध्यां शकारादित्वेन स्वयमभ्यूह्याः । प्रा० ४ पाद ।

शलिश--सदृश--त्रि० । प्राकृतशैल्या सदृशस्थाने सरिसं । " रसोर्लशौ " ॥ ८ । ४ । २८८ ॥ इति उभयत्र शः । रस्य लः । तुल्ये, "शलिशं लिमं" प्रा० ४ पाद ।

शस्तवाह--सार्थवाह--पुं० । "स्थ-र्थयोः स्तः" ॥ ८ । ४ । २९१ ॥ इति र्थभागस्य सकाराक्रान्ततकारः । सार्थाधिपतौ, प्रा० ४ पाद ।

शस्यकवल--शस्यकवल--पुं० । " षषोः-संयोगे सोऽग्रीष्मे " ॥ ८ । ४ । २८९ ॥ इति मागध्यामूर्ध्वलोपापवादः स स्थाने स एवादेशः । शस्यरूपे कवले, प्रा० ४ पाद ।

शामञ्ञ- सामान्य--न० । "न्य-ण्य-ज्ञ-ञ्जां ञ्ञः" ॥८।४।२९३॥ इति न्यस्थाने द्विरुक्तो ञकारः । अविशेषे, प्रा०४ पाद ।

शालश--सारस--पुं० । "रसोर्लशौ" ॥ ८ । ४ । २८८ ॥ इत्युभयत्र सस्य शः रस्य लः । स्वनामख्याते पक्षिणि, प्रा०४ पाद।

शुद--श्रुत--न० । "सर्वत्र लवरामचन्द्रे" ॥८।२।७९॥ इति रलुप् । शेषं सौरसेनीवत् " ॥ ८ । ४ । ३०२ ॥ इति न्यायात्सस्य दः । " रसोर्लशौ " ॥ ८ । ४ । २८८ ॥ इति पुनः सस्य शः । आगमे, प्रा० १ पाद ।

सुपलिगढिद--सुपरिग्रथित--त्रि० । अत्यन्तमाबद्धे, " अम्महे एआए शुम्मिलाए सुपलिगढिदे भवं " प्रा० ४ पाद ।

शुस्क--शुष्क--त्रि० । "शषोः संयोगे सोऽग्रीष्मे" ॥८।४।२८९॥ अनेन षकारस्य सकारादेशः। शुस्कं । शोषमुपगते,प्रा०४पाद।

शुस्तिद--सुस्थित--त्रि० । स्थ-र्थयोस्तः ॥८ । ४ । २९१॥ इत्यनेन स्थभागस्य स्तः । सुखेन स्थिते, प्रा० ४ पाद ।

शोभन--शोभन--त्रि० । " रसोर्लशौ " ॥ ८ । ४ । २८८ ॥ इति प्राकृतलक्षणसकारस्य शस्य मागध्यां शः । शोभाकारिणि, प्रा० ४ पाद । किं खु शोभणे बम्हणे शिसिकलिअ लआपलिग्गहे दिण्णे । प्रा० ।

इति श्रीमत्सौधर्मबृहत्तपागच्छीय-कलिकालसर्वज्ञकल्प-
श्रीमद्भट्टारक-जैनश्वेताम्बराऽऽचार्य श्री श्री १००८ श्रीम-
द्विजयराजेन्द्रसूरीश्वरविरचिते 'अभिधानराजेन्द्रे'
शकाराऽऽदिशब्दसङ्कलनं समाप्तम् ॥

ष-पुं०। मूर्द्धस्थानीये ऊष्मसंज्ञके वर्णे, एका०। षो-क। सत्वम्। केशे, गर्भविमोचने, मानवे, सर्वश्रेष्ठ विज्ञे च। त्रि०। मदनी। अतिरोषे, अपवर्गे, प्रस्तरे, मानौ, वेधसि, षडूर्मिरहिते, सुखदुःखसमे, अनित्ये, नृपोत्तमे च। पुं०। वृषस्यन्त्यां सत्यां च। स्त्री०। नार्यांश्लेषे, मुखे, पण्डिते, जालके, भेषजे च। नपुं०। एका०। "षोऽतिरोषेऽपवर्गे षः, प्रस्तरे, सानुवेधसोः॥ ९॥ नार्यांश्लेषे मुखे षं स्या-त्पण्डितेऽपि ष-माहतम्। षडूर्मिरहिते षः स्या-ज्जालके भेषजे च षम्॥१०॥ सुखदुःखसमः षो ना, वृषस्यन्ती सती च षा॥११॥" एका०। त्रिदिवे, पारोक्ष्ये, विभवे च। पुं०। सुखे, अव्य०। रमायाम्, स्त्री०। अवसाने, गर्भमोक्षे, मर्षणे च। नपुं०। श्रेष्ठार्थे, त्रि०। एका०। "षकारस्त्रिदिवे पुंसि, पारोक्ष्ये विभवे तथा। षम-व्ययं सुखे स्यात्स्त्री, रमायां षा नपुंसके॥ ८९॥ अवसाने गर्भमोक्षे, मर्षणे च निरूप्यते। विशेष्यनिघ्नः षः शब्दः, श्रेष्ठार्थे समुदाहृतः॥ ९०॥ एका०। (संस्कृतभिन्नासु भाषासु प्रायः न षादयः शब्दाः सम्भवन्ति 'सर्वत्र' "शषोः सः"॥ ८। १। २६०॥ इति। अनेन सादेशादिति षादयः शब्दाः अभिधानेऽनुदाहार्याः।) (बहुलम्॥ ८। १। २॥ इत्यधिकारात्प्राकृतसर्वसूत्राणां वैकल्पिकत्वेऽपि षकाराभावः प्रायः प्राकृतशब्देषु। मागध्याम्-"तिष्ठश्चिष्ठः"॥८।४।२९८॥ इति चिष्ठा देशे षकारमध्यः दृश्यते। चिष्ठो। चिष्ठदि। प्रा०४ पाद।)

इति श्रीमत्सौधर्मबृहत्तपागच्छीय—कलिकालसर्वज्ञकल्प-
श्रीमद्भट्टारक-जैन श्वेताम्बराचार्य श्रीश्री १००८ श्री-
विजयराजेन्द्रसूरीश्वरविरचिते 'अभिधानराजेन्द्रे'
षकारादिशब्दसङ्कलनं समाप्तम्।

स–स–पुं० । दन्तस्थानीये ऊष्मसंज्ञके वर्णे, लो–इ–विष्णौ, सर्पे, ईश्वरे, विहगे च । शब्द० । साकार, गौरीपुत्रे, प्रभञ्जने, धर्महन्तौ च । देहकान्त्यां, श्रियां च । स्त्री० । एका० । सोमे, सोमपाने, सूर्ये, पार्श्वणि, तापसे, वृषे, सदानन्दे च । पुं० । वने, धने, यौवने, वस्तुवृन्दे च । नपुं० । एका० । समासे साहित्यार्थस्य सहशब्दस्य स्थाने साऽऽदेशः । सूत्र० १ श्रु० २ अ० २ उ० । तच्छब्दस्य प्रथमैकवचने स इति निर्देशे, नि० चू० १ उ० । दश० ।

तत्र सकारनिक्षेपमाह—

नामं ठवणासयारो, दव्वे भावे अ होइ नायव्वो ।
दव्वे पसंसमाई, भावे जीवो तदुवउत्तो ॥ ३२८ ॥

नामसकारः सकार इति नाम, स्थापनासकारः सकार इति स्थापना, द्रव्ये भावे च भवति ज्ञातव्यः—द्रव्यसकारो भावसकारश्च । तत्र द्रव्य इत्यागम नोआगम–ज्ञशरीर–भव्यशरीर–तद्व्यतिरिक्तः प्रशंसाऽऽदिविषयो द्रव्यसकारः । भाव इति भावसकारो जीवः तदुपयुक्तः—सकारोपयुक्तः तदुपयोगानन्यत्वादिति गाथाऽर्थः ।

प्रकृतोपयोगीत्यागमनोआगमज्ञशरीरभव्यशरीरा ऽतिरिक्तं प्रशंसादिविषयं द्रव्यसकारमाह—

निद्देसपसंसाए, अत्थीभावे अ होइ उ सगारो ।
निद्देसपसंसाए, अहिगारो इत्थ अज्झयणे ॥ ३२९ ॥

निर्देशे प्रशंसायामस्तिभावे चेत्येतेष्वर्थेषु भवति तु सकारः । तत्र निर्देशे यथा–सोऽनन्तरमित्यादि, प्रशंसायां यथा सत्पुरुष इत्यादि, अस्तिभावे यथा—सद्भूतममुकमित्यादि । तत्र निर्देशप्रशंसायामिति—निर्देशे प्रशंसायां च यः सकारस्तेनाऽधिकारोऽत्राध्ययने प्रक्रान्त इति गाथाऽर्थः ।

एतदेव दर्शयति—

जे भावा, दसवेआ–लिअम्मि करणिज्ज वण्णिआ जिणेहिं ।
तेसिं समावणम्मि ति, जो भिक्खू भण्णइ स भिक्खू ॥ ३३० ॥

ये भावाः—पदार्थाः पृथिव्यादिसंरक्षणादयो दशवैकालिके प्रस्तुते शास्त्रे करणीया—अनुष्ठेया वर्णिताः—कथिता जिनैः—तीर्थकरगणधरैः, तेषां भावानां समापने—यथाशक्त्या ( क्ति ) द्रव्यतो भावतश्चाऽऽसेवनेन पर्यन्तनयनेन यो भिक्षुः—तदर्थं यो भिक्षणशीलो न तूदरादिभरणार्थं भण्यते स भिक्षुरिति । इतिशब्दस्य व्यवहित उपन्यासः । 'स भिक्षु'रित्यत्र निर्देशे सकार इति गाथाऽर्थः ।

प्रशंसायामाह—

चरगमरुगाइआणं, भिक्खुवजीवीण काउणमपोहं ।
अज्झयणगुणनिउत्तो, होइ पसंसाइ उ स भिक्खू ॥ ३३१ ॥

चरकमरुकादीनामिति—चरकाः—परिव्राजकविशेषाः मरुकाः—धिग्वर्णाः आदिशब्दाच्छाक्यादिपरिग्रहः, अमीषां भिक्षोपजीविनां—भिक्षणशीलानामगुणवत्त्वेनापोहं कृत्वा अध्ययनगुणनियुक्तः—प्रक्रान्तशास्त्रनिष्यन्दभूतप्रक्रान्ताध्ययनाभिहितगुणसमन्वितो भवति, प्रशंसायामवगम्यमानायां सद्भिक्षुः—सश्चासौ भिक्षुश्च तदन्यापोहेन साद्भिक्षुरिति गाथाऽर्थः । उक्तः सकारः । दश० १० अ० । वायुतत्त्वे, जै० गा० ।

स्व–न० । स्वन्—ड । धने, आत्मनि, ज्ञातौ च । पुं० । आत्मीये, त्रि० । आत्मीये आत्मनि चार्थेऽस्य सर्वनामता । वाच० ।

सअंग–स्वाङ्ग–न० । शिरोऽधरादिषु स्वकायावयवेषु, " जहा कुम्मो सअंगाइं सए देहे समाहरे" सूत्र० १ श्रु० ८ अ० ।

सअंड–साऽण्ड–त्रि० । सह अण्डैर्वर्तत इति साऽण्डम् । कीटकादीनाम् अण्डैः सहिते, दशा० २ अ० ।

सअट्ठ–स्वार्थ–पुं० । स्वप्रयोजने, " इह खलु गाहावई अप्पणो सअट्ठाए अगणिकायं उज्जालेज्ज वा ।" आचा० २ श्रु० १ चू० २ अ० १ उ० ।

सार्थ–त्रि० । अर्थेन प्रयोजनेन सहितम् । एका० । अर्थसहिते, सूत्र० २ श्रु० ३ अ० । सप्रयोजने, कल्प० ३ अधि० २ क्षण ।

सअट्ठिय–सास्थिक–त्रि० । सहास्था वर्तत इति सास्थिकः । अस्था सहिते, पञ्चा० १६ विव० ।

सअढ–शकट–पुं० । न० । शक—अटन् । यानभेदे, असुरविशेषे, स्वल्पार्थे, वाच० । " क—ग—च—ज—त—द—प—य–वां प्रायो लुक्" ॥ ८ । १ । १७७ ॥ अनेन ककारस्य लोपः । प्रा० । सअढं । " अवर्णो यश्रुतिः ॥ ८ । १ । १८० ॥ पूर्वोक्तसूत्रेण कस्य लुक्यनेन अवर्णो यश्रुतिकः । सअढं । " सटाशकटकैटभे ढः" ॥ ८ । १ । १९६ ॥ इत्यनेन टस्य ढः । प्रा० ।

सअण–स्वजन–पुं० । " एकस्वरे श्वःस्वे" ॥ ८ । २ । ११४ ॥ अनेकस्वरगृहणाभावेऽस्मिन्नपि लक्ष्ये लक्षणस्य प्रवृत्तौ उत्वं स्यात् । सअणो । आत्मीये, प्रा० २ पाद ।

सअहुत्तं–शतकृत्वस्–अव्य० । शतवारशब्दार्थे, "कृत्वसो हुत्तं" ॥ ८ । २ । १५८ ॥ अनेन कृत्वसो हुत्तमादेशः । सअहुत्तं । प्रा० २ पाद ।

सइ–सकृत्–अव्य० । एकवारे, स्था० १६ स्था० । नि० चू० । सकृत्—एकवारम् । आचा० २ श्रु० १ चू० १ अ० १ उ० । ड्य० ।" असइ णाणगाए त्ति " । स इति संसारमनुमानसकृदनेकश उच्चैर्गोत्रमान् सत्कारार्हे उत्पन्न इति । शेषस्तथा असकृन्नीचैर्गोत्रे सर्वलोकावगीते पौनःपुन्येनोत्पन्न इति । आचा० १ श्रु० २ अ० ३ उ० । सर्वेष्वपि विशेषावगमेषु द्रष्टव्ये, नं० । सकृदेकदा कर्कसकान्तावित्यर्थः । स० १८ सम० ।

सदा-अव्य० । " इः सदादौ वा " ॥ ८ । १ । ७२ ॥ अन्त्याकारस्येत्वम् । सर्वस्मिन् काले, प्रा० १ पाद ।

स्मृति-स्त्री० । स्मरणं स्मृतिः । "इत् कृपादौ" ॥ ८ । १ । १२८ ॥ इत्यनेनादेः 'ऋत इत्वम्' । प्रा० । पूर्वाऽनुभूतार्थालम्बनप्रत्ययविशेषे, नं० । विशे० । उपधानलक्षणे, सामायिकस्य स्मृत्यकरणे सामायिकस्य सम्बन्धिनी या स्मरणा-स्मृतिरुपयोगलक्षणा । आव० ६ अ० । संस्कारप्रबोधसम्भूतमनुभूतार्थविषयं तदित्याकारवेदनं स्मृतिः । स्था० २ ठा० ३ उ० । स्मृतिरवबोध इत्यनर्थान्तरम् । आचा० १ श्रु०१ अ० १उ० । सइ त्ति वा मति त्ति वा पन्नत्ति वा सव्वमेयं आभिणिबोहियं एतेहिं एगट्ठिएहिं भणितं ति । आ० चू० १ अ० । वासनानन्तरं कुतश्चित्तादृशार्थदर्शनादिकारणात् संस्कारस्य प्रबोधे यज्ज्ञानमुदयते तदेवेदं यन्मया प्रागुपलब्धमित्यादिरूपं सा स्मृतिः । उक्तं च । नं० ।-" तदनन्तरं तदत्था, विच्चवणं जो उ वासणा जोगो । कालन्तरेण जं पुण, स्णुसरणं धारणा सा उ ॥ २९१ ॥ " विशे० ।

तथाऽनुभूतविषया सम्प्रमोषः स्मृतिः स्मृता ( ६ ) ।

द्वा० ११ द्वा० ।

( व्याख्यानमिदम् ' जोग ' शब्दे चतुर्थभागे १६२१ पृष्ठे )

अथैतेषु तावत् स्मरणं कारणगोचरस्वरूपैः प्ररूपयन्ति-

तत्र संस्कारप्रबोधसम्भूतमनुभूतार्थविषयं तदित्याकारं वेदनं स्मरणम् ॥ ३ ॥

तत्रेति-प्राक्तनेभ्यः संस्कारप्रबोधसम्भूतत्वादिना गुणेन स्मरणं निर्धारयन्ति । संस्कारस्याऽऽत्मशक्तिविशेषस्य प्रबोधात् फलदानाभिमुख्यलक्षणात् सम्भूतमुत्पन्नमिति कारणनिरूपणम् । अनुभूतः-प्रमाणमात्रेण परिच्छिन्नोऽर्थश्चेतनाऽचेतनरूपो विषयो यस्येति विषयव्यावर्णनम् । तदित्याकारं तदित्युल्लेखवत् । तदित्युल्लेखवत्ता चास्य योग्यताऽपेक्षयाऽऽख्यायि । यावता 'स्मरसि चैत्र ! कश्मीरेषु वत्स्यामस्तत्र द्राक्षा भोक्ष्यामहे ' इत्यादि स्मरणे तच्छब्दोल्लेखो नोपलक्ष्यत एव, किन्त्विदं स्मरणं तेषु कश्मीरेषु इति ता द्राक्षा इति तच्छब्दोल्लेखमर्हत्येव । न चैवं प्रत्यभिज्ञानेऽपि तत्प्रसङ्गः । तस्य स एवायमित्युल्लेखशेखरत्वात् । इति स्वरूपप्रतिपादनम् ॥ ३ ॥

अत्रोदाहरन्ति-

तत्तीर्थकरबिम्बमिति यथा ॥ ४ ॥

तदिति-यत् प्राक् प्रत्यक्षीकृतम् , स्मृतम् , प्रत्यभिज्ञातम् , वितर्कितम् , अनुमितम् , श्रुतं वा भगवतस्तीर्थकृतो बिम्बं प्रतिकृतिः तस्य परामर्शः, इत्येवं प्रकारं तच्छब्दपरामृष्टं यद्विज्ञानं तत्सर्वं स्मरणमित्यर्थः । ये तु यौगाः स्मृतेरप्रामाण्यमभ्यगोपत न ते साधु व्यधिषत । यतो यथावत् कश्चिदर्थजत्वादस्याः तदाम्नासिषुः तत्र हेतुः, ' अभूत् वृष्टिर्भविष्यति शकटम् ' इत्याद्यतीतानागतगोचरानुमानेन व्यभिचार इत्यनुचितं एवोच्चारयितुम् । परे तु मेनिरे-न स्मृतिः प्रमाणम् ; पूर्वाऽनुभवविषयोपदर्शनेनार्थे निश्चिन्वत्या अर्थपरिच्छेदे पूर्वानुभवपारतन्त्र्यात् । अनुमानज्ञानं तूत्पत्तौ पराधीनम् , स्वविषये तु स्वतन्त्रमेव । स्मृतेरिव तस्माऽपूर्वाऽनुभवाऽनुसन्धानेनार्थप्रतीत्यभावात् । तदुक्तम्-"पूर्वविज्ञानविषयं विज्ञानं स्मृतिरिष्यते । पूर्वज्ञानाद्विना तस्याः, प्रामाण्यं नावगम्यते ॥ १ ॥ तत्र यत्पूर्वविज्ञानं,तस्य प्रामाण्यमिष्यते । तदुपस्थानमात्रेण, स्मृतेः स्याच्चरितार्थता ॥२॥" इति । तदपि न पेशलम् । स्मृतेरप्युत्पत्तिमात्रेऽनुभवसव्यपेक्षत्वात् , तदाहितसंस्कारात्तदुत्पत्तेः । स्वविषयपरिच्छेदे त्वस्याः स्वातन्त्र्यमेव । ननु नास्त्र स्वातन्त्र्यम् ; अस्याः पूर्वानुभवभावितभावभासनायामेवाभ्युद्यतत्वात् । एवं तर्हि व्याप्तिप्रतिपादिप्रमाणप्रतिपन्नपदार्थोपस्थापनमात्रे प्रवृत्तेरनुमानस्यापि कुतस्त्या स्वातन्त्र्यसङ्गतिः । अथ व्याप्तिग्राहकेणानैयत्येन प्रतिपन्नास्तनूनपातो नैयत्यविशेषेणानुमानेन परिस्फुरणसम्भवात् कुतो न स्वातन्त्र्यमिति चेत् , तर्हि अनुभवे भूयो विशेषशालिनः स्मरणे तु कतिपयैरेव विशेषैर्विशिष्टस्य वस्तुनो भानात् कुतो नास्याऽपि तत् स्यात् । ननु तेऽपि विशेषास्तावदनुभूतौ प्रत्यभुरेव । अन्यथा स्मरणमेव तत्र स्यात् इति चेत् , नियतदेशोऽपि पावको व्याप्तिग्राहिणा प्रत्यभादेव । अन्यथाऽनुमानमेव तत्र स्यात् इति किन्न चेतयसे । अथ तत्र सर्वे सार्वदिकाः सार्वत्रिकाश्च पावकाः पुस्फुरुः, अनुमाने तु स एवैकश्चकास्तीत्युक्तमिति चेत् , ननूत्तरमपि तत्राक्रमेव मा विस्मार्षीः । ननु नसर्वत्रैव कतिपयविशेषावसायव्याकुलं स्मरणम् ; कदाचिदावदनुभूतरूपादिविशेषमपि तस्योत्पत्तेस्ततस्तत्र का गतिरिति चेत् । नैवम् । नहि रूपादय एव विशेषा वस्तुनः, किन्तु अनुभूयमानताऽपि । न चाऽसौ स्मरणे काऽपि चकास्ति, तस्याऽपि प्राचीनानुभवस्वभावतापत्तेः । किन्त्वनुभूततैव भावस्य तत्र भाति । इति सिद्धमनुमानस्येव स्मरणस्याऽपि प्रामाण्यम् । न च तस्याप्रामाण्येऽनुमानस्याऽपि प्रामाण्यमुपपादि, सम्बन्धस्याप्रमाणस्मरणसन्दर्शितस्यानुमानाङ्गत्वात् , संशयितलिङ्गवत् । न च प्राक्प्रवृत्तसम्बन्धग्राहिप्रमाणव्यापारोपस्थापनमात्रचरितार्थत्वात्स्य तत्र प्रामाण्येन प्रयोजनमिति वाच्यम् । अप्रमाणस्य तदुपस्थापनेऽपि सामर्थ्यासंभवात् । किञ्च-अर्थोपलब्धिहेतुत्वं प्रमाणलक्षणं लक्षयाञ्चक्रुः । तच्च धारावाहिप्रत्यक्षस्येवास्याप्यन्यूनमीक्ष्यत एवेति किमन्यैरसत्प्रलापैरिति ॥ ४ ॥ रत्ना० ३ परि० । सर्वेष्वपि विशेषावगमेषु द्रष्टव्ये, द्वा० १६ द्वा० । आव० । अनुभूतवस्तुन उद्बोधकसहकारेण संस्काराधीने ज्ञानभेदे, वाच० । ( स्मृतिसंस्कारयोरानन्तर्यम् 'इस्सर' शब्दे द्वितीयभागे ६७१ पृष्ठे उक्तम् । )

सइअंतरद्धा-स्मृत्यन्तर्द्धा-स्त्री० । स्मृत्यन्तर्धाने, स्मृतेः-स्मरणस्य योजनशतादिरूपदिक्परिमाणविषयस्यान्तर्द्धा-भ्रंशः स्मृत्यन्तर्द्धा । पञ्चा० १ विव० । स्मृतेर्भ्रंशे यद्भवनं तत् स्मृत्यन्तर्द्धानम् । किं मया परिगृहीतं कया वा मर्यादया व्रतमित्येवमननुस्मरणमित्यर्थः । प्रा० । आव० ।

सइअकरण-स्मृत्यकरण-न० । स्मृत्यन्तर्द्धाने,स्मृतेः-स्मरणस्य सामायिकविषयाया अकरणमनासेवनं स्मृत्यकरणम् । प्रबलप्रमादाद्यैवं स्मरति , यदुतास्यां वेलायां मया सामायिकं कर्तव्यं कृतं न कृतं वेति, स्मृतिमूलं च मोक्षानुष्ठानम् । पञ्चा० १ विव० । उत्त० ।

सइअणोयारण--स्मृत्यनवतारण--न०। स्मृतेः सामयिककरणावसरविषयायाः कृत्यस्य वा सामयिकस्य प्रबलप्रमादयोगादनवतारणमनुपस्थापनं मया कदा सामयिकं कर्त्तव्यं कृतं वा मया सामयिकं नवेत्येवरूपं स्मरणभ्रंशे, ध० २ अधि०।

सइआभास--स्मृत्याभास--पुं०। स्मरणाऽऽभासे, रत्ना०।

अथ परोक्षाऽऽभासं विवक्षवः, स्मरणाऽऽभासं तावदाहुः--

**अननुभूते वस्तुनि तदिति ज्ञानं स्मरणाभासम् ॥३१॥**

अननुभूते प्रमाणमात्रेणानुपलब्धे ॥ ३१ ॥

उदाहरन्ति--

**अननुभूते मुनिमण्डले तन्मुनिमण्डलमिति यथा॥३२॥**

रत्ना० ६ परि०।

सइंगाल--साङ्गार--न०। चारित्रेन्धनधूमाङ्गारमिव यः करोति भोजनविषयरागाग्निः सोऽङ्गारः एवोच्यते तेन सह यद्वर्तते पानकादि तत् साङ्गारम्। अङ्गारदोषविशिष्टे, भ०६श०७उ०। "रागेण सइंगालं दोसेण सधूमगं ति णायव्वं" महा० ३ अ०।

सइंदिय--सेन्द्रिय--पुं०। इन्द्रियपर्याप्ते, स्था० २ ठा० २ उ०। संसारिणि च। स्था० २ ठा० १ उ०। ('अणिंदिय' शब्दे प्रथमभाग ३३४ पृष्ठे दण्डक उक्तः।)

सइकरण--स्मृतिकरण--न०। स्मृत्युत्पादे, बृ० १ उ० ३ प्रक०।

सइकाल--स्मृतिकाल--पुं०। स्मर्यते यत्र भिक्षाकालः स स्मृतिकालः। "सइकाले चरे भिक्खू" दश० ५ अ० १ उ०।

सइज्झिता--देशी--वसतिप्रवेशिन्याम्, पिं०।

सइण--देशी--धान्यविशेष, स्था०।

सइण्ण--सैन्य--न०। "अइर्दैत्यादौ च" ॥ ८। १। १५१॥ इत्यनेनैकारस्य अइ इत्यादेशः। सइन्नं। सेनायां समवैति। अभिमिलित हस्त्यश्वादौ, प्रा०। सेनायाः संघः। ष्यञ्। सेनासमुदाये न०।

सइब्भंस--स्मृतिभ्रंश--पुं०। स्मृत्यन्तर्द्धाने, स्मृतेः--स्मरणस्य योजनशतादिरूपदिक्परिमाणविषयस्यातिव्याकुलत्वप्रमादित्वमत्यपाटवादिना भ्रंशो ध्वंसः स्मृतिभ्रंशः। विस्मरणशीलतायाम्, प्रव० २०७ द्वार।

सइर--स्वैर--न०। "अइर्दैत्यादौ च" ॥ ८। १। १५१॥ इत्यनेनैकारस्य 'अइ' इत्यादेशः। सइरं। प्रा०। स्वच्छन्दे, व्य० ७ उ०।

सइरचारि--स्वैरचारिन्--त्रि०। उद्भ्रामके, बृ० १ उ० ३ प्रक०।

सइरिन्--स्वैरिन्--त्रि०। स्वेच्छाचारिणि, ग० १ अधि०।

सइल--शैल--पुं०। पर्वते, "उच्छलन्ति समुद्दा, सइला निपतंति तं हलं नमथ" प्रा० ४ पाद।

सइविप्पहूण--स्मृतिविप्रहीन--त्रि०। अपगतकर्त्तव्यविवेके,सू० १ श्रु० ४ अ० १ उ०।

सइसंजाय--सकृत्संजात--त्रि०। एकवारं समुत्पन्ने, पञ्चा० ३ विव०।

सईण--देशी--धान्यविशेष, स्था० ५ ठा० ३ उ०।

२

सउज्जोय--सोद्योत--त्रि०। सहोद्योतेन वस्त्वन्तरप्रकाशनेन वर्तन्त इति सोद्योतानि। स०। बहिर्विनिर्गतवस्तुस्तोमप्रकाशकेषु, प्रज्ञा० २ पद। प्रत्यासन्नवस्तूद्योतके, भ० २ श० ८ उ०। जं०। रा०। स०। बहिर्व्यवस्थितप्रत्यासन्नवस्तुस्तोमप्रकाशकरोद्योतसहिते, रा०।

सउण--शकुन--पुं०। लोमपक्षिभेदे, औ०। नि० चू०। ज्ञा०। विवक्षितार्थसूचकनिमित्ते, नपुं०। पञ्चा० ७ विव०। पं० व०।

इदानीं भाष्यकारः शकुनं प्रतिपादयन्नाह--

**नन्दीतूरं पुण्ण--स्स दंसणं संख पडह सद्दो य।**
**भिंगारछत्त चामर, धयप्पडागा पसत्थाई ॥ १०६ ॥**
**समणं संजयं दंतं, सुमणं मोयगा दहिं।**
**मीणं घंटं पडागं च,सिद्धमत्थं वियागरे ॥११०॥**

एता निगदसिद्धा। ओघ०।

नन्दीतूर्यम्--द्वादशविधतूर्यसमुदायो युगपद्वाद्यमानः पूर्णस्य--पूर्णकलशस्य दर्शनं शङ्खपटहयोः--शब्दश्च श्रूयमाणः भृङ्गारछत्रचामराणि प्रतीतानि, वाहनानि--हस्तितुरङ्गमादीनि, यानानि--शिबिकादीनि एतानि प्रशस्तानि--शुभावहानि श्रमणं--लिङ्गमात्रधारिणं संयतं--षट्कायरक्षणे सम्यग्यतं दान्तमिन्द्रियनोइन्द्रियदमनेन, सुमनसः--पुष्पाणि मोदका दधि च प्रतीतं, मीनम्--मत्स्यं घण्टाम् एतानि च दृष्ट्वा श्रुत्वा वा सिद्धं निष्पन्नमर्थं प्रयोजनं व्यागृणीयादिति। बृ० १ उ० २ प्रक०।

शकुनाशकुनयोरेव स्वरूपोद्देशमाह--

**णंदाइ सुहो सद्दो, भरिओ कलसो त्थ सुन्दरा पुरिसा।**
**सुहजोगाई सउणो, कंदिअसद्दादि इअरो उ ॥ ५ ॥**

नन्द्यादिः--नन्दीप्रभृतिः तत्र नन्दी--द्वादशतूर्यनिर्घोषः, तद्यथा--

" भंभामउंदमद्दल, कलंबझल्लरिहुडुक्ककंसाला।
वीणा वंसो पडहो, संखो पणवो अ बारसमो ॥ १॥"

आदिशब्दात्--घण्टाशब्दादिग्रहः। तथा भृतो जलपरिपूर्णः कलशो घटः। अत्र व्यतिकरे सुन्दराकारनेपथ्या नराः शुभयोगादिप्रशस्तचेष्टाप्रभृतिशुभचन्द्रनक्षत्रादि संबन्धादि वा शकुनो--विवक्षितार्थसिद्धिसूचकं निमित्तम्, क्रन्दितशब्दादिः--आक्रन्दध्वनिप्रतिषेधवचनप्रभृतिः, पुनः इतरोऽशकुन इत्यर्थः।षोडशकेऽपि"दार्वपि च शुद्धमिह य-आनीतं देवताद्युपवनादेः। प्रगुणं सारवदभिनव-मुबैर्मन्ध्यादिरहितं च ॥१॥ सर्वत्र शकुनं पूर्वं, ग्रहणादावत्र वर्त्तितव्यमिति। पूर्णकलशादिरूप-श्चित्तोत्साहानुगः शकुनः ॥ २॥" ध० २ अधि०। "गहदिणाउ मुहुत्तो, मुहुत्ता सउणो बली। सउणाओ बलवं लग्गं, ततो निमित्तं पहाणं तु ॥८०॥"॥१२६॥ द० प०।"यावद् यातो गुरुं पृष्ट्वा, शकुनस्तावदुचितवान्। ततस्तौ सूरयोऽवोचन्, भावी लाभोऽद्य वां महान् ॥ ४२ ॥" आ०क० १ अ०।

सउणग--शकुनक--पुं०। पक्षिविशेषे, नि० चू० ५ उ०।

सउणपुव्व--शकुनपूर्व--न०। शकुनमूले, षो० ५ विव०।

अस्य पुस्तकं निःशुल्कम्।

सउणवुड्डि-शकुनवृद्धि-स्त्री०।सन्निमित्तवर्द्धने शुभशकुनसत्त्वे, पञ्चा० १२ विव०।

सउणरुय-शकुनरुत-न०। शकुनविचारे, शकुनरुतम् अत्र शकुनपदं रुतपदं चोपलक्षणं तेन वसन्तराजाद्युक्तसंग्रहः गतिचेष्टादिगुबलादिपरिग्रहश्च। जं० २ वक्ष०। स०। कल्प०। औ०। ज्ञा०। स्था०।

सउणि-शकुनि-पुं०। स्त्री०। पक्षिणि, सूत्र० २ श्रु० २ अ०। औ०। जं०। आ० क०। तं०। बृ०। शकुनिः पक्षिविशेषो लावकादिकः। सूत्र० २ श्रु० १ अ०। क्लीबभेदे,प्रव० २४७ द्वार। शकुनिर्वेदोत्कटतया गृहचटकवत् प्रतिसेवनां करोति। बृ० ४ उ०। प्रव०। करणे,पं० भा०। बवादिकरणेषु चलमम, उत्त० ४ अ०। कृष्णचतुर्दशीरात्रौ सदावस्थितं शकुनिनामकं करणम्। आ० म० १ अ०। विशे०। जं०। सूत्र०। दुर्योधनराजमन्त्रिणि, पुं०। ज्ञा० १ श्रु० १६ अ०। चतुर्दशविद्यासु,स्त्री०। शकुनीपारगोऽपि द्विजो गर्हितो भवति। शकुनीशब्देन चतुर्दशविद्यास्थानानि गृह्यन्ते। बृ० ३ उ०। आव०।

सउणिगण-शकुनिगण-पुं०। पक्षिसमूहे, कल्प० १ अधि० ३ क्षण।

सउणिपोस-शकुनिपोष-पुं०। पक्षिणो गुदे, "सउणिपोस पिट्ठंतरोरुपरिणया" इति। शकुनिपक्षिण इव पुरीषोत्सर्गे निर्लेपतया पोसन्ति पोसः—अपानदेशः। पुस—उत्सर्गे, पुस्यन्ति पुरीषमुत्सृजन्तीति व्युत्पत्तेः। तथा लब्धपरिणामतया पृष्ठं च प्रतीतम् अन्तरे च पृष्ठोदरयोरन्तराले पार्श्वावित्यर्थः ऊरू चेति द्वन्द्वस्ते परिणता येषां ते शकुनिपोसपृष्ठान्तरोरुपरिणताः निष्ठान्तस्य परनिपातः। आव०।

सउणिय-शाकुनिक-पुं०। शकुनेन—श्येनादिना—मृगयां कुर्वन्ति इति शाकुनिकाः प्राकृतत्वाद्ह्रस्वत्वम्। पक्षिव्याधेषु, प्रश्न० २ आश्र० द्वार। शकुनिभिः पक्षिभिश्चरतीति शाकुनिकः। सूत्र० २ श्रु० २ अ०।

सउणिया-शकुनिका-स्त्री०। पक्षिण्याम्, शकुनिविकुर्वणात्मिकायां परिव्राजकविद्यायाम्, व्य० १ उ०। "सुघराए स उणिगाए भणिओ" आव० १ अ०। "सउणिय त्ति" भण्यते या तु शकुनिका हितैव पक्षिणी सा कथम् "सउणिय" त्ति इत्येवमिहापि प्राकृतशैल्यामवमङ्कीकृत्याययथार्थता। अनु०।

सउत्तरोट्ठ-सोत्तरोष्ठ-पुं०। सह उत्तरोष्ठेन सोत्तरौष्ठस्तस्मिन्। सश्मश्रुके, भ० १५ श०।

सउदय-सोदक-त्रि०। उदकेन सहिते, आचा० २ श्रु० १ चू० २ अ० ३ उ०। सह उदकेन वर्त्तत इति सोदकम्। उदकं भौमान्तरिक्षभेदादनेकप्रकारम्। दशा० १ अ०।

सउली-सौली-स्त्री०। महौषधिभेदे, नि० ६ कल्प।

सउवक्कोस-सोपक्रोश-पुं०। अप्रशस्तविनयभेदे, स्था० ७ ठा० ३ उ०।

सउवचार-सोपचार-त्रि०। उपचारसहिते, बृ०। ततस्ते तासां वसतिं—सोपचाराः प्रविशन्ति। सोपचारा नाम त्रिषु स्थानेषु प्रयुक्ता नैषेधिकीशब्दाः, यद्वा—संयतीभिर्येषां वक्ष्यमाण उपचारः प्रयुक्तस्ते सोपचारा उच्यन्ते। बृ० ३ उ०।

सउवद्दव-सदुपद्रव-त्रि०। उपद्रवसहिते, तत्र तैः सदुपद्रवैर्वोऽभिभूतो व्याप्तः। ज्ञा० १ श्रु० १ अ०।

सदोपद्रव-पुं०। सर्वकालीने उपद्रवे, ज्ञा० १ श्रु० १ अ०।

सउह-सौध-न०। "अउः पौरादौ च" ॥ ८। १। १६२ ॥ अत्रौकारस्योकलक्षणेन 'अउ' इत्यादेशः। सुधानिर्मिते पक्वगृहे, प्रा० १ पाद।

सं-सम्-अव्य०। समन्तात् प्रकर्षेणेत्यर्थे, उत्त० १ अ०। एकीभावे, सू० प्र० १० पाहु०। रा०। सम्यगर्थे, स० १ सम०।

संकंत-संक्रान्त-त्रि०। प्रविष्टे, स्था०। "दिव्वं संकंते भवइ" दिवि भवं दिव्यं स्वर्गगतवस्तुविषयं संक्रान्तं तत्र देवे प्रविष्टं भवतीति। स्था० ३ ठा० ३ उ०।

शङ्कमान-त्रि०। अतिमूढत्वाद् विपर्यस्तबुद्धौ, सूत्र० १ श्रु० १ अ० २ उ०।

संकंति-संक्रान्ति-स्त्री०। संक्रमणं संक्रान्तिः। दश० १ अ०। संक्रमे, विशे०।

संकट्ठ-संकष्ट-त्रि०। व्यासे, संथा०। रा०।

संकृष्ट-त्रि०। विलिखिते, ज्ञा०१ श्रु०१ अ०।

संकड्डिय-संकर्षित-त्रि०। सत्राद्याकर्षिते, स्था० ४ ठा० ४ उ०।

संकड-संकट-त्रि०। संकीर्णे, प्रश्न० २ आश्र० द्वार। अष्ट०। कल्प०। स०।

संकणिज्ज-शङ्कनीय-त्रि०। भयजनके, ज्ञा० १ श्रु० १ अ०।

संकप्प-संकल्प-पुं०। अध्यवसाये, आव० ३ अ०। परिणामे, पं० चू० ३ कल्प। विकल्पे, भ० ६ श० ३ उ०। नि०। ज्ञा०। प्रारम्भे, विशे०। सत्त०। विचारे, कल्प० १ अधि० २ क्षण। युक्तायुक्तविवेचने, ज्ञा० १ श्रु० १ अ०। संकल्पस्तु द्विधा भवति—कश्चिद् ध्यानात्मकोऽपरश्चित्तात्मकः। रा०। प्रव०। चित्तस्वभावे, स्था० ४ ठा० २ उ०। (संकल्पः 'अट्ठारसट्ठाण' शब्दे प्रथमभागे २४६ पृष्ठे व्याख्यातः।) "संकप्पो संरंभो" भ० ३ श०३ उ०। पं० भा०।

> संकप्पो उ इदाणिं य, सो य पसत्थो य अप्पसत्थो य।
> एतेसिं दोण्हं पि, परूवणा होतिमा कमसो।
> दंसणणाणचरित्ते, अणुपालणपत्थणा पसत्थो उ।
> इंदियविसयकसाए-सु अपसत्थो उ संकप्पो।
> दंसणपभावकाइं, सत्थाइं कहमहं अहिज्जेज्जा।
> जा चिंतयतो एसो, संकप्प दंसणे होति।

दारं—

> णाणतियारं न करे, कहं व णाणं अहं अहिज्जेज्जा।
> इति णाणे चारित्ते, सुद्धचरित्तो कहं होज्जा।
> उत्तरउत्तरिएहि य, चारित्तगुणेहि कह णु विमरेज्जा।
> एमो तु चरित्तम्मी, संकप्पो सत्थगो भणितो।

पं० भा० ३ कल्प। आचा०। पं०चू०। नि०चू०। अष्ट०। गौ-

कमैथुने, प्रश्न०। संकल्पो विकल्पस्तत्प्रभवत्वादस्य संकल्प इति नाम, उक्तं च-"काम! जानामि ते रूपं, संकल्पात्किल जायसे। न त्वां संकल्पयिष्यामि, ततो मे न भविष्यसि ॥१॥" इति। प्रश्न० ४ आश्र० द्वार।

**संकप्पकय**-संकल्पकृत-त्रि०। आकुट्टिकाविविहिते, "पाणातिवायपभितिसु, संकप्पकयेसु चरणविगमम्मि। आउट्ट परिहारा, पुण पट्ठवणं तु मूलं ति।" पञ्चा० १६ विव०।

**संकप्पय**-संकल्पज-पुं०। सङ्कल्पाज्जाते प्राणातिपाते, आव०। संकल्पजः मनसा संकल्पाद् द्वीन्द्रियादिप्राणिनां मांसास्थिचर्मनखवालदन्ताद्यर्थं व्यापाद्यतो भवति। आव० ६ अ०।

**संकप्पिय**-संकल्पित-त्रि०। आलोचिते, विशे०।

**संकम**-संक्रम-पुं०। संक्रम्यते येन स संक्रमः। काष्ठचारे,(नाकादौ) नि०चू० १ उ०। जलगर्तपरिहाराय पाषाणकाष्ठरचिते (दश० ५ अ० १ उ०) विषमोत्तरणमार्गे, प्रश्न० १ आश्र० द्वार। "संकमेणं न गच्छेज्जा विज्जमाणे परक्कमे" दश० ५ अ० १ उ०। बृ०। नि० चू०। जीवेन बध्यमानायाः कर्मप्रकृतेरनुभावेन प्रकृत्यन्तरस्थवीर्यविशेषेण परिणमने, स्था०।

चउव्विहे संकमे पण्णत्ते, तं जहा-पगइसंकमे ठिइसंकमे अणुभागसंकमे पएससंकमे। ( सू० २६६ )

यां प्रकृतिं बध्नाति जीवः तदनुभावेन प्रकृत्यन्तरस्थं दलिकं वीर्यविशेषेण यत्परिणमयति स संक्रमः। उक्तं च-" सो संकमो त्ति भन्नइ, जब्बंधणपरिणओ पओगेणं। पयर्यतरत्थदलियं, परिणामइ तदणुभावे जं ॥ १ ॥" इति। तत्र प्रकृतिसंक्रमः सामान्यलक्षणावगम्य एवेति, मूलप्रकृतीनामुत्तरप्रकृतीनां वा स्थितेर्यदुत्कर्षणम् अपकर्षणं वा प्रकृत्यन्तरस्थितौ वा नयनं स स्थितिसंक्रम इति। उक्तं च (कर्मप्रकृतौ)- " ठिइसंकमो त्ति वुच्चइ, मूलुत्तरपगइओ उ जा हि ठिई। उव्वट्टिया व ओव-ट्टिया व पगई णिया वऽन्नं ॥ २८ ॥" इति, अनुभागसंक्रमोऽप्येवमेव, यदाह (क०प्र०)—

" तत्थऽट्टपयं उव्व—ट्टिया व ओवट्टिया व अविभागा।
अणुभागसंकमो ए-स अन्नपगइं णिया वावि ॥ १ ॥" इति,

अट्ठपयं ति-अनुभागसंक्रमस्वरूपनिर्धारणम्, 'अविभाग' त्ति अनुभागाः 'निय' त्ति नीता इति। यत्कर्मद्रव्यमन्यप्रकृतिस्वभावेन परिणम्यते स प्रदेशसंक्रमः, उक्तञ्च—" जं दलियमन्नपगइं, णिज्जइ सो संकमो पएसस्स" इति, निधानं निहितं वा निधत्तम्, भावे कर्मणि वा क्तप्रत्यये निपातनात्, उद्वर्तनापवर्तनावर्जितानां शेषकरणानामयोग्यत्वेन कर्मणोऽवस्थापनमुच्यते, नितरां काचनं-बन्धनं निकाचितं-कर्मणः सर्वकरणानामयोग्यत्वेनावस्थापनम्। उक्तञ्चोभयसंवादि-" संकमणं पि निहत्तीए, णऽत्थि सेसाणि व त्ति इयरस्स" इति। स्था० ४ ठा० २ उ० ॥

सम्प्रत्युद्देशक्रमेण यथावसरप्राप्तं संक्रमकरणम्। संक्रमश्च प्रकृतिस्थित्यनुभागप्रदेशरूपविषयभेदाच्चतुर्विधः। तत्र प्रथमतः संक्रमस्य सामान्यलक्षणमभिधातुकाम आह-

सो संकमो त्ति वुच्चइ, जं बंधणपरिणओ पओगेणं।
पगयंतरत्थदलियं, परिणमयइ तयणुभावे जं ॥ १ ॥

'सो संकमु' त्ति इह जीवो यद्बन्धनपरिणतो यस्याः प्रकृतेर्बन्धनेन-बन्धकत्वेन परिणतः। अनेन किलेदमावेद्यते-यदि जीवस्तथारूपबन्धनपरिणामपरिणतो भवति ततः कर्मवर्गणापुद्गला अपि कर्मरूपतया परिणमन्ते, नान्यथा, उक्तं च-

" जीवपरिणामहेऊ, कम्मत्ता पुग्गला परिणमंति।
पोग्गलकम्मनिमित्तं, जीवो वि तहेव परिणमइ ॥ १ ॥"

अस्याक्षरगमनिका-जीवस्य सत्कात्परिणामादध्यवसायाद्धेतोः,जीवपरिणामं हेतुमाश्रित्येत्यर्थः। कर्मवर्गणान्तःपातिनो जीवस्वप्रदेशावगाढाः पुद्गलाः कर्मरूपतया ज्ञानावरणीयादिकर्मरूपतया परिणमन्ते। अथ जीवस्याऽपि तथारूपः परिणामः कस्माद्भवतीति चेदुच्यते'पुग्गल'त्यादि पुद्गलरूपं प्राग्बद्धं कर्म विपाकोदयप्राप्तं तन्निमित्तं तत्सामर्थ्यादिति भावः। जीवोऽपि तथैव प्रदेशावगाढकर्मवर्गणान्तःपातिपुद्गलकर्मरूपतापत्तिहेतुतयैव परिणमत इति। 'पओगेण' ति प्रयोगेण संक्लेशसंज्ञितेन विशोधिसंज्ञितेन वा वीर्यविशेषेण विवक्षिताया प्रकृतेरन्या प्रकृतिः प्रकृत्यन्तरं विवक्षितबध्यमानप्रकृतिव्यतिरिक्ताऽन्या प्रकृतिरित्यर्थः। तत्रस्थं दलिकं तदनुभावेन बध्यमानप्रकृतिस्वभावेन यत्परिणमयति परिणमनमापादयति, स संक्रम उच्यते एतदुक्तं भवति-बध्यमानासु प्रकृतिषु मध्येऽबध्यमानप्रकृतिदलिकं प्रक्षिप्य बध्यमानप्रकृतिरूपतया यत्तस्य परिणमनम्, यच्च वा बध्यमानानां प्रकृतीनां दलिकरूपस्येतरेतररूपतया परिणमनं तत्सर्वं संक्रमणमित्युच्यते। तत्र बध्यमानप्रकृतिष्वबध्यमानप्रकृतीनां संक्रमो यथा-सातवेदनीये बध्यमानेऽसातवेदनीयस्य, उच्चैर्गोत्रे वा नीचैर्गोत्रस्येत्यादि। बध्यमानानां परस्परं संक्रमो यथा-बध्यमाने मतिज्ञानावरणीये बध्यमानमेव श्रुतज्ञानावरणं संक्रमयति, श्रुतज्ञानावरणे वा बध्यमाने बध्यमानमेव मतिज्ञानावरणीयमित्यादि। इह यत्प्रकृतिबन्धकत्वेन परिणत आत्मा तदनुभावेन प्रकृत्यन्तरस्थं दलिकं यत्परिणमयति स संक्रम इत्युक्तम्।

एतच्च लक्षणं दर्शनत्रिकव्यतिरेकेणान्यत्र द्रष्टव्यम्, दर्शनत्रिके पुनर्बन्धं विनाऽपि संक्रमोऽवगन्तव्यः। तथा चाह—

दुसु वेगे दिट्ठिदुगं, बंधेण विणा वि सुद्धदिट्ठिस्स।
परिणामइ जीसे तं, पगईए पडिग्गहो एसा ॥ २ ॥

'दुसु' त्ति शुद्धदृष्टेः सम्यग्दृष्टेर्द्वयोः सम्यक्त्वसम्यग्मिथ्यात्वयोराधारभूतयोर्मिथ्यात्वम्,एकस्मिंश्च सम्यक्त्वे सम्यग्मिथ्यात्वं बन्धं विनापि संक्रामति। इयमत्र भावना-इह मिथ्यात्वस्यैव बन्धो न सम्यक्त्वसम्यग्मिथ्यात्वयोः।यतो मिथ्यात्वपुद्गला एव मदनकोद्रवस्थानीया औषधविशेषकल्पनौपशमिकसम्यक्त्वानुगतेन विशोधिस्थानेन त्रिधा क्रियन्ते।तद्यथा-शुद्धा अर्धविशुद्धा अविशुद्धाश्च। तत्र विशुद्धाः सम्यक्त्वम्, अर्द्धविशुद्धाः सम्यग्मिथ्यात्वम्, अविशुद्धा मिथ्यात्वम्। तत्र विशुद्धसम्यग्दृष्टिः सम्यक्त्वसम्यग्मिथ्यात्वयोः बन्धं विनापि तत्र मिथ्यात्वं संक्रमयति, सम्यग्मिथ्यात्वं च सम्यक्त्वे इति। तदेवमुक्तं संक्रमस्य सामान्यलक्षणम्। सम्प्रति यासु प्रकृतिषु प्रकृत्यन्तरस्थं दलिकं संक्रमयति तासां संज्ञान्तरमाह—'परिणामे' त्यादि यस्यां प्रकृतौ

आधारभूतायां तत्प्रकृत्यन्तरस्थं दलिकं परिणमयति आधारभूतप्रकृतिरूपतामापादयति एषा प्रकृतिराधारभूता पतद्ग्रह इत्युच्यते । पतद्ग्रह इव पतद्ग्रहः, संक्रम्यमाणप्रकृत्याधार इत्यर्थः ।

संक्रमलक्षणं च प्रागुक्तमतिप्रसक्तमिति तत्राऽपवादमाह-

मोहदुगाउगमूल-प्पगडीणँ न परोप्परम्मि संकमणं ।
संकमबंधुदउव्व-ट्टणा (णव) लिगाईण करणाइं ॥ ३ ॥

'मोह' त्ति मोहद्विकं-दर्शनमोहनीयं, चारित्रमोहनीयं च । तयोः परस्परं संक्रमो न भवति । तथाहि—न दर्शनमोहनीयं चारित्रमोहनीये संक्रमयति, चारित्रमोहनीयं वा दर्शनमोहनीये । तथा आयूंषि चत्वार्यपि न परस्परं संक्रमयन्ति, नापि मूलप्रकृतयः परस्परं संक्रमयन्ति । तथाहि—न ज्ञानावरणीयं दर्शनावरणीये संक्रमयति, नापि दर्शनावरणीयं ज्ञानावरणीयम् । एवं सर्वास्वपि मूलप्रकृतिषु भावनीयम् । अपि च—यस्मिन् दर्शनमोहनीये यो जन्तुर्वर्तितष्ठते, स तदन्यत्र न संक्रमयति । यथा मिथ्यादृष्टिर्मिथ्यात्वम्, सम्यग्मिथ्यादृष्टिः सम्यग्मिथ्यात्वम्, सम्यग्दृष्टिः सम्यक्त्वम्, तथा सासादनः सम्यग्मिथ्यादृष्टयश्च न किमपि दर्शनमोहनीयं क्वापि संक्रमयन्ति, अविशुद्धदृष्टित्वात् । बन्धभावे हि दर्शनमोहनीयस्य संक्रमो विशुद्धदृष्टेरेव भवति, नाविशुद्धदृष्टेः । अन्यच्च-परप्रकृतिसंक्रान्तं दलिकमावलिकामात्रं कालं यावदुद्वर्तनादिसकलकरणायोग्यमवगन्तव्य, न केवलं संक्रान्तमपि तु बन्धावलिकागतमपि । तथा चाह-'संकम' त्यादि संक्रमावलिकागतम्, बन्धावलिकागतम्, उदयावलिकागतम्, उद्वर्तनावलिकागतम्, आदिशब्दादुपशान्तं मोहनीयं दर्शनमोहनीयत्रिकरहितमित्येतानि सर्वाण्यप्यकरणानि सकलकरणायोग्यान्यवसेयानि । दर्शनत्रिकं तूपशान्तमपि संक्रमयति ।

तदेवं लक्षणापवादोऽभिहितः । सम्प्रति क्रमेणोत्क्रमेण वा विशेषण (षण) संक्रमे प्राप्ते सति नियममाह—

अंतरकरणम्मि कए, चरित्तमोहेऽणुपुव्विसंकमणं ।
अन्नत्थ सेसिगाणं, च सव्वहिं सव्वहा बंधे ॥४॥

'अंतरकरणम्मि' त्ति अन्तरकरणविधिरग्रे उपशमनाकरणाभिधानावसरे प्रतिपादयिष्यते, तत्रोपशमश्रेण्यां चारित्रमोहनीयोपशमनार्थमेकविंशतेः प्रकृतीनाम्, क्षपकश्रेण्यां पुनः कषायाष्टकक्षपणानन्तरं त्रयोदशप्रकृतीनामन्तरकरणे कृते सति, चारित्रमोहे पुरुषवेदसंज्वलनचतुष्टयलक्षणे । अत्र हि चारित्रमोहनीयग्रहणेनता एव पञ्च प्रकृतयो गृह्यन्ते, न शेषाः बन्धाभावात् । तत्रानुपूर्वीपरिपाट्या संक्रमणं भवति, न त्वनानुपूर्व्या । तथाहि-पुरुषवेदं संज्वलनक्रोधादावेव संक्रमयति नान्यत्र । संज्वलनक्रोधमपि संज्वलनमानादावेव न तु पुरुषवेदे । संज्वलनमानमपि संज्वलनमायादावेव, न तु संज्वलनक्रोधादौ । संज्वलनमायामपि संज्वलनलोभे एव, न तु संज्वलनमानादाविति । 'अन्नत्थ' त्ति अन्तरकरणादन्यत्र पञ्चानामपि पुरुषवेदादिप्रकृतीनां शेषाणां पुनः प्रकृतीनाम् । 'सव्वहिं' ति सर्वस्मिन्नप्यवस्थाविशेषेऽन्तरकरणावस्थायामन्यत्र वा इत्यर्थः । सर्वैः प्रकारैः क्रमेणोत्क्रमेण वा संक्रमोऽवगन्तव्यः । किं सर्वदैव ? नेत्याह—बन्धे बन्धकाले, न त्वन्यदा यथोक्तं प्राक् । तदेवं संक्रमस्य सामान्यलक्षणविधिरपवादो नियमश्चोक्तः ।

संप्रति यदुक्तं यस्याः प्रकृतेर्बन्धः सा प्रकृत्यन्तरदलिकसंक्रमणं प्रति पतद्ग्रह इति तत्रापवादमाह—

तिसु आवलियासु समऊ-णियासु अपडिग्गहा उ संजलणा ।
दुसु आवलियासु पढम-ठिइए सेसासु वि य वेदो ॥५॥

'तिसु' त्ति—अन्तरकरणे कृते प्रथमस्थितौ, तिसृष्वावलिकासु समयोनासु सतीषु चत्वारोऽपि संज्वलना अपतद्ग्रहाः, पतद्ग्रहा न भवन्ति । एतदुक्तं भवति—चतुर्ष्वपि संज्वलनेषु प्रथमस्थितौ तिसृष्वावलिकासु समयोनावलिकात्रिकशेषायां सत्यां बध्यमानेष्वपि नान्यत्प्रकृत्यन्तरदलिकं तेषु संक्रामति, तेन तदानीमपतद्ग्रहाः । तथाऽन्तरकरणे कृते सति द्वयोरावलिकयोः प्रथमस्थितिसत्कयोः समयोनयोः सत्योर्वेदः पुरुषवेदः पतद्ग्रहो न भवति, न किमपि तत्र प्रकृत्यन्तरदलिकं संक्रामतीत्यर्थः । वेदश्चेह पुरुषवेद एव द्रष्टव्यः, न स्त्रीनपुंसकवेदौ, तदानीं तयोर्बन्धाभावादेवापतद्ग्रहत्वसिद्धेः । अपि च—मिथ्यात्वे क्षपिते सति सम्यग्मिथ्यात्वस्य मिथ्यात्वसम्यग्मिथ्यात्वयोश्च क्षपितयोः सम्यक्त्वस्योद्वलितयोस्तु सम्यक्त्वसम्यग्मिथ्यात्वयोर्मिथ्यात्वस्यापतद्ग्रहताऽनुक्ताऽपि द्रष्टव्या, न खलु तत्रापि किंचित् संक्रामतीति ।

संप्रति साद्यनादिप्ररूपणामाह—

साइअणाईधुवअ-धुवा य सव्वधुवसंतकम्माणं ।
साइयधुवा य सेसा, मिच्छायवणीयनीएहिं ॥ ६ ॥

'साइ' त्ति सम्यक्त्वसम्यग्मिथ्यात्वनरकद्विकमनुजद्विकदेवद्विकवैक्रियसप्तकाहारकसप्तकतीर्थकरोच्चैर्गोत्रलक्षणाश्चतुर्विंशतिप्रकृतयोऽध्रुवसत्कर्माणि आयुश्चतुष्टयं च । शेषं पुनस्त्र्युत्तरं प्रकृतिशतं ध्रुवसत्कर्म । ततोऽपि साताऽसातवेदनीयनीचैर्गोत्रमिथ्यात्वरूपं चतुष्टयमपनीयते । ततः शेषस्य षड्विंशत्युत्तरप्रकृतिशतस्य साद्यादिरूपतया चतुर्विधोऽपि संक्रमो भवति । तथाहि-अमूषां ध्रुवसत्प्रकृतीनां संक्रमविषयप्रकृतिबन्धव्यवच्छेदे सति संक्रमो न भवति । ततः पुनरपि तासां संक्रमविषयप्रकृतीनां स्वबन्धहेतुसम्पर्कतो बन्धारम्भे सति भवति, ततोऽसौ सादिः, तत्तद्बन्धव्यवच्छेदस्थानमप्राप्तस्य पुनरनादिः, अभव्यस्य ध्रुवः कदाचिदपि व्यवच्छेदाभावात्, भव्यस्य पुनरध्रुवः कालान्तरे व्यवच्छेदसम्भवात् । शेषाश्चतुर्विंशतिप्रकृतयोऽध्रुवसत्कर्माणो मिथ्यात्ववेदनीयनीचैर्गोत्रैः सह साद्यध्रुवाः—साद्यध्रुवसंक्रमा अवगन्तव्याः । तथाहि-अध्रुवसत्कर्मणामध्रुवसत्कर्मत्वादेव संक्रमः सादिरध्रुवश्चावगन्तव्यः, सातासातवेदनीयनीचैर्गोत्राणां तु परावर्तमानत्वात् । मिथ्यात्वस्य पुनः संक्रमो विशुद्धसम्यग्दृष्टेः, विशुद्धसम्यग्दृष्टित्वं च कादाचित्कं, ततस्तस्याऽपि संक्रमः साद्यध्रुव एव ।

साम्प्रतं पतद्ग्रहाणां साद्यनादिप्ररूपणामाह-

मिच्छत्तजढा य परि-ग्गहम्मि सव्वधुवबंधपगईओ ।
नेया चउव्विगप्पा, साई अधुवा य सेसाओ ॥ ७ ॥

'मिच्छत्त' त्ति मिथ्यात्वजढाः—मिथ्यात्वरहिताः सर्वा अपि ध्रुवबन्धिन्यः प्रकृतयः-पञ्च ज्ञानावरणीयानि, नव दर्शनावरणीयानि, षोडश कषायाः, भयं, जुगुप्सा, तैजससप्तकं, वर्णादिविंशतिः, अगुरुलघु उपघातं, निर्माणम्, अन्तरायपञ्चकं चेति । एताः संक्रममधिकृत्य चतुर्विकल्पाः साद्यनादिध्रुवाध्रुवरूपचतुर्भेदा ज्ञेयाः । तथाहि-एतासां सप्तचत्वारिंशत्संख्यानां ध्रुवसंबन्धिनीनामात्मीयात्मीयबन्धव्यवच्छेदसमये पतद्ग्रहत्वं न भवति, न किमपि प्रकृत्यन्तरदलिकं तासु संक्रामतीत्यर्थः । पुनः स्वस्वबन्धहेतुसम्पर्कतो बन्धारम्भे सति पतद्ग्रहत्वं भवति ततः सादिः, तद्बन्धव्यवच्छेदस्थानमप्राप्तस्य पुनरनादिः. ध्रुवाध्रुवे अभव्यभव्यापेक्षया । 'साई' इत्यादि शेषास्त्वध्रुवबन्धिन्योऽष्टाशीतिसंख्याः प्रकृतयोऽध्रुवबन्धित्वादेव (तासां) साद्यध्रुवपतद्ग्रहता भावनीया । मिथ्यात्वस्य पुनर्ध्रुवबन्धित्वेऽपि यस्य सम्यक्त्वसम्यग्मिथ्यात्वे विद्येते स एव ते तत्र संक्रमयति, नान्य इति तस्य साद्यध्रुवपतद्ग्रहता द्रष्टव्या ।

तदेवमेकैकप्रकृतीनां संक्रमस्य पतद्ग्रहत्वस्य च साद्यनादिप्ररूपणा कृता । सम्प्रति प्रकृतिस्थानेषु तां चिकीर्षुरतिदेशमाह—

पगइठाणे वि तहा, पडिग्गहो संकमो य बोधव्वो ।
पढमंऽतिमपगईणं, पंचसु पंचण्ह दो वि भवे ॥ ८ ॥

'पगइठाणे' त्ति यथैकैकस्याः प्रकृतेः पतद्ग्रहत्वं संक्रमश्च साद्यादिरूप उक्तस्तथा प्रकृतिस्थानेष्वपि बोद्धव्यः । द्वित्र्यादीनां च प्रकृतीनां समुदायः प्रकृतिस्थानम् । तत्र प्रथमतो ज्ञानावरणीयस्य तत्समानवक्तव्यत्वादन्तरायस्य च संक्रमपतद्ग्रहत्वात् स्थानप्रतिपादनार्थमाह—' पढमंतिम '-त्यादि प्रथमप्रकृतेर्ज्ञानावरणीयस्य अन्तिमप्रकृतेरन्तरायस्य सम्बन्धिनीनां प्रत्येकं पञ्चानामपि प्रकृतीनां पञ्चस्वपि प्रकृतिषु द्वावपि संक्रमपतद्ग्रहभावौ भवतः । एतदुक्तं भवति—ज्ञानावरणीयान्तराययोरेकैकं पञ्चप्रकृत्यात्मकं स्थानं संक्रमे पतद्ग्रहभावे च भवतीति । तौ चेमौ संक्रमपतद्ग्रहभावौ साद्यादिरूपतया चतुष्प्रकारौ । तथाहि-उपशान्तमोहगुणस्थानके तयोरभावात् , ततः प्रतिपाते च पुनः सम्भवात् सादी , तत्स्थानमप्राप्तस्य पुनरनादी, ध्रुवाध्रुवता चाभव्यभव्यापेक्षया भावनीया ।

सम्प्रति दर्शनावरणीयस्य संक्रमपतद्ग्रहत्वस्थानप्रतिपादनार्थमाह-

नवगच्छक्कचउक्के, नवगं छक्कं च चउसु बिइयम्मि ।
अन्नयरस्सि (स्से) अन्नय-रा वि य वेयणीयगोएसु ॥ ९ ॥

'नवग त्ति' द्वितीये दर्शनावरणीये नवकषट्कचतुष्केषु नवकं संक्रामति, षट्कं च चतसृषु प्रकृतिषु । तेनेह द्वे संक्रमस्थाने । तद्यथा-नवकं, षट्कं च । त्रीणि पतद्ग्रहस्थानानि, तद्यथा-नवकं, षट्कं, चतुष्कं च । तत्र नवकरूपे पतद्ग्रहे मिथ्यादृष्टयः सासादनाश्च नवविधदर्शनावरणीयबन्धका नवकमपि संक्रमयन्ति । अयं च नवकरूपः पतद्ग्रहः साद्यादिरूपतया चतुष्प्रकारः । तद्यथा-सादिरनादिर्ध्रुवोऽध्रुवश्च । तथाहि-सम्यग्मिथ्यादृष्ट्यादिगुणस्थानेषु न भवति , ततः प्रतिपाते च-भवति , ततोऽसौ सादिः । तत्स्थानकमप्राप्तस्य पुनरनादिः । ध्रुवाध्रुवावभव्यभव्यापेक्षया । तथा सम्यग्मिथ्यादृष्टिगुणस्थानकादारभ्यापूर्वकरणस्यासंख्येयतमं भागं यावन्नवविधदर्शनावरणीयसत्कर्माणः षड्विधदर्शनावरणीयबन्धकाः षट्के नवकं संक्रमयन्ति । अयं तु षट्करूपः पतद्ग्रहः साद्यध्रुवः कादाचित्कत्वात् । तथा-अपूर्वकरणस्य संख्येयतमे भागे निद्राप्रचलयोर्बन्धव्यवच्छेदे तत ऊर्ध्वं सूक्ष्मसम्परायगुणस्थानकचरमसमयं यावदुपशमश्रेण्यां नवविधदर्शनावरणीयसत्कर्माणश्चतुर्विधदर्शनावरणीयबन्धकाश्चतुष्के नवकं संक्रमयन्ति । अयमपि च चतुष्करूपः पतद्ग्रहः साद्यध्रुवः, कदाचिद्भावात् । नवकरूपः संक्रमश्चतुष्प्रकारः । तद्यथा-सादिरनादिर्ध्रुवोऽध्रुवश्च । तथाहि-सूक्ष्मसम्परायात्परतः उपशान्तमोहे न भवति , ततः प्रतिपाते च भवति , ततोऽसौ सादिः । तत्स्थानमप्राप्तस्य पुनरनादिः । ध्रुवाध्रुवावभव्यभव्यापेक्षया । क्षपकश्रेण्यां पुनरनिवृत्तिकरणाद्धायाः । संख्येयतमे भागेऽवशिष्टे सति स्त्यानर्द्धित्रिकक्षयात् परतः सूक्ष्मसंपरायगुणस्थानकचरमसमयं यावत् षड्विधदर्शनावरणीयसत्कर्माणश्चक्षुरादिदर्शनावरणीयचतुष्टयं बध्नन्तस्तस्मिन् दर्शनावरणचतुष्के षट्कं संक्रमयन्ति । इमावपि संक्रमपतद्ग्रहौ , साद्यध्रुवौ , कादाचित्कत्वात् । अतः परं तु न संक्रमो नापि पतद्ग्रहत्वमिति । संप्रति वेदनीयगोत्रयोः संक्रमपतद्ग्रहत्वस्थानप्रतिपादनार्थमाह—' अन्नयरस्से 'त्यादि । वेदनीये गोत्रे चान्यतरस्यां प्रकृतौ बध्यमानायामन्यतराऽबध्यमाना प्रकृतिः संक्रामति । तत्र या यत्र संक्रामति सा तस्याः पतद्ग्रहः । इतरा च संक्रमस्थानम् । तत्र सातबन्धकानां मिथ्यादृष्टिप्रभृतीनां सूक्ष्मसम्परायपर्यन्तानां सातासातसत्कर्मणां सातवेदनीयं पतद्ग्रहः असातं संक्रमस्थानम् । असातबन्धकानां पुनर्मिथ्यादृष्टिप्रभृतीनां प्रमत्तसंयतपर्यन्तानां सातासातसत्कर्मणाम् असातवेदनीयं पतद्ग्रहः, सातवेदनीयं तु संक्रमस्थानम् इमौ च सातासातरूपौ संक्रमपतद्ग्रहौ साद्यध्रुवौ भूयो भूयः परावृत्त्य ( त्ति ) भावात् । तथा मिथ्यादृष्टिप्रभृतीनां सूक्ष्मसम्परायपर्यन्तानामुच्चैर्गोत्रबन्धकानामुच्चनीचैर्गोत्र ( बन्ध ) सत्कर्मणामुच्चगोत्रं पतद्ग्रहः, नीचैर्गोत्रं तु संक्रमस्थानम् । नीचैर्गोत्रबन्धकानां तु मिथ्यादृष्टिसासादनानामुच्चनीचैर्गोत्रसत्कर्मणां नीचैर्गोत्रं पतद्ग्रहः, उच्चैर्गोत्रं तु संक्रमयमाणम् । ( मस्थान ) इमावप्युच्चैर्गोत्रनीचैर्गोत्ररूपौ संक्रमपतद्ग्रहौ प्रागिव साद्यध्रुवौ भावनीयौ ।

सम्प्रति मोहनीयस्य संक्रमपतद्ग्रहत्वस्थानप्रतिपादनावसरस्तत्र प्रथमतः संक्रमासंक्रमस्थाननिर्देशं चिकीर्षुराह—

अट्ठचउरहियवीसं, सत्तरसं सोलसं च पन्नरसं ।
वज्जियसंकमठाणा-इँ होंति तेवीसइ मोहे ॥ १० ॥

'अट्ठ' त्ति अष्टाधिका चतुरधिका च विंशतिः अष्टाविंशतिश्चतुर्विंशतिश्चेत्यर्थः। तथा सप्तदश षोडश पञ्चदश च—त्यमूनि स्थानानि वर्जयित्वा शेषाणि एकद्वित्रिचतुःपञ्चषट्सप्ताष्टनवदशैकादशद्वादशत्रयोदशचतुर्दशाष्टादशैकोनविंशतिविंशत्येकविंशतिद्वाविंशतित्रयोविंशतिपञ्चविंशतिषड्विंशतिसप्तविंशतिलक्षणानि त्रयोविंशतिसंख्यानि मोहनीये संक्रमस्थानानि भवन्ति। तथाहि—अष्टाविंशतिसत्कर्मणो मिथ्यादृष्टेर्मिथ्यात्वं सम्यक्त्व-सम्यग्मिथ्यात्वयोः पतद्ग्रह इति मिथ्यात्वव्यतिरिक्ताः शेषाः सप्तविंशतिः संक्रामन्ति। तत्र चारित्रमोहनीयं पञ्चविंशतिप्रकृत्यात्मकं परस्परं संक्रामति सम्यक्त्वसम्यग्मिथ्यात्वयोः मिथ्यात्वे। तथा सम्यक्त्वे उद्वलिते सति सप्तविंशतिसत्कर्मणो मिथ्यादृष्टेर्मिथ्यात्वं सम्यग्मिथ्यात्वस्य पतद्ग्रह इति तद्व्यतिरिक्ताः शेषाः षड्विंशतिः संक्रामन्ति। सम्यग्मिथ्यात्वेऽप्युद्वलिते सति षड्विंशतिसत्कर्मणः पञ्चविंशतिः। अथवा-अनादिमिथ्यादृष्टेः षड्विंशतिसत्कर्मणः पञ्चविंशतिः, मिथ्यात्वस्य संक्रमाभावात्। न हि तत् चारित्रमोहनीये संक्रामति, दर्शनमोहनीयचारित्रमोहनीययोः परस्परं संक्रमाभावात्। अथवौपशमिकसम्यग्दृष्टेरष्टाविंशतिसत्कर्मणः सम्यक्त्वलाभादावलिकाया ऊर्ध्वं वर्तमानस्य सम्यक्त्वे मिथ्यात्वसम्यग्मिथ्यात्वयोः संक्रमः। तेन तत् पतद्ग्रह इति। तस्मिन्नपसारिते शेषा सप्तविंशतिः संक्रमं प्राप्यते। तस्यैव चौपशमिकसम्यग्दृष्टेरष्टाविंशतिसत्कर्मण आवलिकाया अभ्यन्तरे वर्तमानस्य सम्यग्मिथ्यात्वं सम्यक्त्वे न संक्रामति। यतो मिथ्यात्वपुद्गला एव सम्यक्त्वानुगाति (न) विशोधिप्रभावेन सम्यग्मिथ्यात्वलक्षणं परिणामान्तरमापादिताः। अन्यप्रकृतिरूपतया परिणामान्तरापादनं च संक्रमः, संक्रमावलिकागतं च सकलकरणायोग्यमिति सम्यक्त्वलाभादावलिकाया अभ्यन्तरे वर्तमानेन सम्यग्मिथ्यात्वं सम्यक्त्वे न संक्रम्यते, किं तु केवलं मिथ्यात्वमेव। ततः सम्यग्मिथ्यात्वेऽप्यपसारिते शेषा षड्विंशतिः संक्रामति। चतुर्विंशतिस्तु संक्रमं न प्राप्यते, यतश्चतुर्विंशतिसत्कर्मा सम्यग्दृष्टिर्मिथ्यात्वं गतः सन् यद्यप्यनन्तानुबन्धिनो भूयोऽपि बध्नाति, तथापि तान् सतोऽपि न संक्रमयति, बन्धावलिकागतस्य सर्वकरणायोग्यत्वात्। मिथ्यात्वं च सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रह इति तस्मिन्नपसारिते शेषा त्रयोविंशतिरेव संक्रामति। अथवा—चतुर्विंशतिसत्कर्मणः सम्यग्दृष्टेः सम्यक्त्वं मिथ्यात्वसम्यग्मिथ्यात्वयोः पतद्ग्रह इति तस्मिन्नपसारिते शेषा त्रयोविंशतिः संक्रामति। तस्यैव मिथ्यात्वे क्षपिते द्वाविंशतिः। अथवौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य चारित्रमोहनीयस्यान्तरकरणे कृते सति लोभसंज्वलनस्यापि संक्रमो न भवति, "अन्तरकरणे कृते पुरुषवेदसंज्वलनचतुष्टयस्यानुपूर्व्या संक्रमो भवति" इति वचनप्रामाण्यात्, अनन्तानुबन्धिचतुष्टयस्य च विसंयोजितत्वादुपशान्तत्वाद्वा संक्रमाभावः। सम्यक्त्वं च मिथ्यात्वसम्यग्मिथ्यात्वयोः पतद्ग्रह इति संज्वलनलोभानन्तानुबन्धिचतुष्टयसम्यक्त्वेष्वष्टाविंशतेरपनीतेषु शेषा द्वाविंशतिः संक्रामन्ति। तस्यैवौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य न-

पुंसकवेदे उपशान्ते एकविंशतिः। द्वाविंशतिसत्कर्मणो वा सम्यक्त्वं न क्वापि संक्रामतीत्येकविंशतिः संक्रमं प्राप्यते। यद्वा—क्षपकश्रेण्यां वर्तमानस्य क्षपकस्य यावदद्याप्यष्टौ कषाया न क्षयमुपयान्ति तावदेकविंशतिः संक्रमं प्राप्यते। औपशमिकसम्यग्दृष्टेः सम्बन्धिन्याः प्रागुक्ताया एकविंशतेः स्त्रीवेदे उपशान्ते सति शेषा विंशतिः संक्रामति। यद्वा—क्षायिकसम्यग्दृष्टेरुपशमश्रेणिं प्रतिपन्नस्य चारित्रमोहनीयस्यान्तरकरणे कृते लोभसंज्वलनस्यापि। प्रागुक्तयुक्तेः संक्रमो न भवतीति तस्मिन्नपसारिते विंशतिः संक्रमं प्राप्यते। ततो नपुंसकवेदे उपशान्ते एकोनविंशतिः; स्त्रीवेदे उपशान्तेऽष्टादश। औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताया विंशतेः षट्सु नोकषायेषूपशान्तेषु शेषाश्चतुर्दश संक्रामन्ति। ततः पुरुषवेदे उपशान्ते त्रयोदश। यद्वा—क्षपकस्य क्षपकश्रेण्यां वर्त्तमानस्य प्रागुक्ताया एकविंशतेरष्टसु कषायेषु क्षीणेषु शेषास्त्रयोदश संक्रामन्ति। तस्यैव क्षपकस्य चारित्रमोहनीयस्यान्तरकरणे कृते संज्वलनलोभस्य प्रागुक्तयुक्तेः संक्रमो न भवतीति तस्मिन्नपसारिते शेषा द्वादश संक्रामन्ति। अथवा—क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्योऽष्टादशभ्यः षट्सु नोकषायेषूपशान्तेषु सत्सु शेषा द्वादश संक्रामन्ति। ततः पुरुषवेदे उपशान्ते एकादश। क्षपकस्य वा प्रागुक्ताभ्यो द्वादशभ्यो नपुंसकवेदे क्षीणे शेषा एकादश संक्रामन्ति। अथवौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां प्रागुक्ताभ्यस्त्रयोदशभ्योऽप्रत्याख्यानप्रत्याख्यानावरणक्रोधद्विके उपशान्ते शेषा एकादश संक्रमं प्राप्यन्ते। क्षपकश्रेण्यामेकादशभ्यः स्त्रीवेदे क्षीणे शेषा दश संक्रामन्ति। औपशमिकसम्यग्दृष्टेर्वोपशमश्रेण्यां वर्तमानस्यैकादशभ्यः संज्वलनक्रोधे उपशान्ते शेषा दश संक्रामन्ति। क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्य एकादशभ्योऽप्रत्याख्यानावरणलक्षणे क्रोधद्विके उपशान्ते शेषा नव संक्रामन्ति। तस्यैव संज्वलनक्रोधेऽप्युपशान्तेऽष्टौ। अथवौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्यो दशभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मानद्विके उपशान्ते शेषा अष्टौ संक्रामन्ति। तस्यैव संज्वलनमाने उपशान्ते सप्त। क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्योऽष्टाभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मानद्विके उपशान्ते शेषाः षट् संक्रामन्ति। तस्यैव संज्वलनमाने उपशान्ते पञ्च। यद्वौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्यः सप्तभ्यः प्रकृतिभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मायाद्विके उपशान्ते शेषाः पञ्च संक्रामन्ति। तस्यैव संज्वलनमायायामुपशान्तायां चतस्रः। अथवा-क्षायिकसम्यग्दृष्टेः क्षपकस्य प्रागुक्ताभ्यो दशभ्यः षट्सु नोकषायेषु क्षीणेषु शेषाश्चतस्रः प्रकृतयः संक्रामन्ति। तस्यैव पुरुषवेदे क्षीणे तिस्रः। अथवा क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्यः पञ्चभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मायाद्विके उपशान्ते शेषास्तिस्रः संक्रामन्ति। तस्यैव संज्वलनमायायामुपशान्तायां द्वे। अथवौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्यश्चतसृभ्यः प्रकृतिभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्ष-

संसाहण–संसाधन–न० । गच्छतोऽनुव्रजने, दश० ६ अ० १ उ० । वदन्तं प्रति छलत्साधूक्तं साक्षित्वेन प्रशंसाकरणे, आ० १ श्रु० १४ अ० । ध० । अनुगमने, दे० ना० ८ वर्ग १६ गाथा ।

संसिच्चमाण–संसिच्यमान–त्रि० । आपूर्यमाणे, गर्भाद् गर्भान्तरमुपयाति संसारचक्रवालेऽरघट्टघटीयन्त्रन्यायेन पर्यटति, आचा० १ श्रु० ३ अ० २ उ० ।

संसिद्ध–संसिद्ध–त्रि० । सम्यग् निष्पादिते, सूत्र० २ श्रु० ३ अ० । निश्चिततत्त्वकृत्ताविलिङ्गसंसिद्धे, षो० ७ विव० । सर्वैः प्रत्यक्षानुमानागमप्रमाणैः प्रतिष्ठिते, विशे० ।

संसिद्धिय–सांसिद्धिक–त्रि० । "मांसादिष्वनुस्वारे" ॥ ८ । १ । ७० ॥ अनेनाऽऽदेराकारस्य वैकल्पिकोऽत्रादेशः । संसिद्धिओ । संसिद्धिअं, प्रा० १ पाद ।

संसिय–संश्रित–त्रि० । प्रतिबद्धे रूपकादिद्रव्ये, अनु० । आश्रिते, प्रश्न० ३ आश्र० द्वार ।

संसिलेस–संश्लेष–पुं० । परस्परं सम्बन्धे, स्था० १० ठा० ३ उ० । आचा० ।

संसिलेसिया–संश्लेषिकी–स्त्री० । कर्मश्लेषजनन्याम्, आचा० २ श्रु० २ चू० ६ अ० ।

संसीइ–संशीति–स्त्री० । संदेहे, आचा० १ श्रु० ५ अ० १ उ० । चित्तभ्रान्तौ, सूत्र० १ श्रु० १२ अ० ।

संसुद्ध–संशुद्ध–त्रि० । सम्–समस्तं शुद्धं संशुद्धम् । आ० चू० ५ अ० । सम्–सामस्त्येन शुद्धं संशुद्धम् । कषच्छेदतापकोटिशुद्धत्वादेकान्ताकलङ्के संशुद्धे, ध० ३ अधि० । निर्दोषे । उपा० २ अ० । सामस्त्येन शुद्धे, भ० ११ श० ६ उ० । ज्ञा० । आव० । सूत्र० । कषायादिभिः शुद्धे सुवर्णवन्निर्दोषे, औ० । अशबलचरणे, स्था० ।

एगे संसुद्धे अहाभूए पत्ते । ( सू० ३७ )

एकः संशुद्धः—अशबलचरणः अकषायत्वात् यथाभूतः तात्त्विकः 'पत्ते' त्ति–पात्रमिव पात्रमतिशयवत् ज्ञानादिगुणरत्नानां प्राप्तो वा गुणप्रकर्षमिति गम्यते । स्था० १ ठा० ।

संसुद्धणाणदंसणधर–संशुद्धज्ञानदर्शनधर–पुं० । केवलज्ञानदर्शनधारिणि, भ० २५ श० ६ उ० ।

संसेइम–संसेकिम–न० । संसेकेन निर्वृत्तमिति संसेकिमम्, अरणिकादिपत्रशाकमुत्काल्य येन शीतलजलेन संसिच्यते । तस्मिन्, स्था० ३ ठा० ३ उ० । कल्प० । अरणिकादिसंसिक्तधावनोदके, ग० २ अधि० । तिलधावनोदके, आचा० २ श्रु० १ चू० १ अ० ७ उ० । पिष्टोदके, दश० ५ अ० १ उ० । "तिलाति संसेतिमं ति वायव्वं । नि० चू० १५ उ० । संसेतिमं वा णाम पिट्ठे पाणियं तावेत्ता पिंडियट्ठिया तिला तेण ओहलिज्जंति तत्थ जे आमा तिला ते संसेतिमा भण्णंति । आदिग्गहणेणं जं पि अण्णं किंचि एतेणं कमेणं संसिज्जति तं पि संसेतिमं भण्णति । नि० चू० १५ उ० । 'संसेतिमं तिला उण्हे, पाणिएण सिणा अंति, सीतोदगेण धोवेंति तं संसेतिमं भण्णति' नि० चू० १७ उ० ।



संसेइय–स्रंस–धा० । अधः पतने, "स्रंसेर्ल्हस-डिम्भौ" ॥ ८ । ४ । १९७ ॥ स्रंसेरेतावादेशौ वा, इति आदेशाभावे–संसेइ । स्रंसते । अधः पततीत्यर्थः । प्रा० ४ पाद ।

संसेय–संसेक–पुं० । जलसेके, स्था० ३ ठा० ३ उ० ।

संस्वेद–पुं० । शरीरप्रस्वेदे, स्था० ७ ठा० ३ उ० । आचा० ।

संसेयय–संस्वेदज–पुं० । संस्वेदाज्जाताः संस्वेदजाः । यूकमत्कुणकृम्यादिषु, सूत्र० १ श्रु० ७ उ० । दश० । आचा० । करीषादिसंस्वेदनमुपगमानेषु घुणपिपीलिकाकृम्यादिषु, सूत्र० १ श्रु० ७ अ० । स्था० ।

संसोहण–संशोधन–न० । गात्रस्य सम्यक् शोधने, आचा० १ श्रु० ६ अ० ४ उ० ।

संसोहिय–संशोधित–त्रि० । सम्यक् शोधिते, "संसोहियं पण्हमुदाहरंति" सम्यक् शोधितं पूर्वोत्तराविरुद्धं प्रश्नमुदाहरन्ति । सूत्र० १ श्रु० १४ अ० ।

संहण्णमाण–संहन्यमान–त्रि० । उत्सार्यमाणे, नि० चू० २० उ० ।

संहणियकारिया–संहत्यकारिता–स्त्री० । सम्भूय मिलितार्थक्रियाकारितायाम्, द्वा० ११ द्वा० ।

संहत–संहत–त्रि० । पिण्डतामापन्ने, उत्त० १ अ० । मिलिते, भ० १ श० ६ उ० । आ० म० । अविरले, ओघ० ।

संहर–संहर–पुं० । संघाते, " उप्पंको ओप्पीलो, उक्केरो पहयरो गणो पयरो । ओहो निवहो संघो, संघाओ संहरो निअरो ॥१८॥ संदोहो निउरंबो, भरो निहाओ समूहनामाइं " ॥ पाइ० ना० १८ गाथा ।

संहरण–संहरण–न० । भारनयने, स्था० ४ ठा० ३ उ० । क्षपणायाम्, पिं० ।

संहरणचरियणिबद्ध–संहरणचरितनिबद्ध–न० । संहरणं चरमभरतक्षेत्रावसर्पिणीतीर्थकरजन्माभिषेकचरमबालभावचरमयौवनचरमकामभोगचरमनिष्क्रमणचरमतपश्चरणचरमज्ञानोत्पादचरमतीर्थप्रवर्त्तनचरमपरिनिर्वाणनिबद्धं नाट्यविधाने, रा० ।

संहरिय–संहृत–न० । दानपात्रं सचित्तेषु कृत्वा दत्तेऽन्ने, पिं० । ('पसणा' शब्दे तृतीयभागे ४६ पृष्ठे अस्य वक्तव्यता गता । ) येन हस्तपात्रेण करोटिकया साधोरशनादिकं दास्यति तत्र शिष्यादिकं वा यदि स्यात् तदन्यत्र सचित्ते अचित्ते वा क्षिप्त्वा तेन यद्ददाति तत्संहृतम् । जीत० । आचा० । उत्त० ।

संहरिस–संघर्ष–पुं० । स्पर्द्धायाम्, स्था० ३ ठा० ३ उ० । आ० चू० ।

संहार–संहार–पुं० । पूर्वपर्यायात् प्रच्याव्य पर्यायान्तरेण स्थापने, नं० । व्यापारनिवर्त्तने, सूत्र० १ श्रु० ८ अ० ।

संहारवाय–संहारवात–पुं० । प्रलयवाते, अनु० १ अधि० ।

संहिअ-संहृत्य-अव्य० । सह सम्भूयेत्यर्थे, स्था० १ श्रु० ३ अ० ।

संहिय-संहित-त्रि० । अविरले, प्रश्न० ४ आश्र० द्वार । नं० ।

संहत--त्रि० । संश्लिष्टमध्ये, जं० २ वक्ष० । औ० ।

संहिया-संहिता-स्त्री० । अस्खलितपदोच्चारणे, आ० म० १ अ० । दशा० । कल्प० । अनु० । उत्त० । ('वक्खाण' शब्दे षष्ठभागे ७७६ पृष्ठे संहिता विस्तरतो व्याख्याता । ) व्याख्यायाः प्रथमं लक्षणं, " संहिता च पदं चैव, पदार्थः पदविग्रहः । चालना प्रत्यवस्थानं; व्याख्याया लक्षणानि षट् ॥ १ ॥ " तत्र संहिता " नो कल्पते " ( सू० १४ ) इति निर्ग्रन्थानां निर्ग्रन्थीनां वा श्रवं वा तालप्रलम्बमभिन्नं प्रतिग्रहीतुमिति । बृ० १ उ० १ प्रक० ।

सकंकडावडेंसग-सकङ्कटावतंसक--पुं० । सकङ्कटैः कवचैरवतंसैश्च-शेखरकैः शिरस्त्राणभूतैर्यः स तथा । कवचशेखरकाभ्यां युक्ते, भ० ७ श० ६ उ० । जी० ।

सकंप-सकम्प-त्रि० । अदृढ, द्वा० ६ द्वा० ।

सकक्कस-सकार्कश्य-त्रि० । कर्कशभावोपेते, ग० १ अधि० ।

सकज्जमूढ--स्वकार्यमूढ-त्रि० । स्वस्वार्थमौढ्यगते, नं० ।

सक(ड)टलेव-सकटलेप -पुं० । छिन्नकर्नाम्नि लेपभेदे, बृ० १ उ० १ प्रक० । ( व्याख्या 'लेव' शब्दे षष्ठभागे ६६३ पृष्ठे गता । )

सकणुय--सकणुक-त्रि० । कणुकेन त्वगाद्यवयवेन यद्वर्त्तते तत्तथा । सत्वचि, आचा० २ श्रु० १ चू० १ अ० ८ उ० ।

सकण्ण-सकर्ण--त्रि० । अवगर्णाशङ्कासहिते, आच० १ अ० ।

सकम्म-सकर्मन्-न० । बाले, सूत्र० १ श्रु० ८ अ० । आत्मीये कर्मणि, ब्राह्मणस्य यजनादिकं षड्विधं कर्म स्वकर्म । उत्त० १४ अ० । " सकम्मसीलस्स पुरो । हियस्स " उत्त० १४ अ० । स्वव्यारे, व्य० ३ उ० । आत्मना बद्धे ज्ञानावरणीयादिकर्माणि, सूत्र० १ श्रु० ११ अ० ।

सकम्मफलभोयणा-स्वकर्मफलभोजन--न० । स्वोपात्तकर्मफलभोगे, दशा० ४ अ० ।

सकम्मवीरिय-स्वकर्मवीर्य--न० । स्वकर्मणां बालानां वीर्यम् । बालवीर्ये, सूत्र० १ श्रु० ११ अ० ।

सकल--शकल-न० । खण्डे, जं० २ वक्ष० ।

सकलचन्द्रगणि-सकलचन्द्रगणिन्-पुं० । जिनचन्द्रगणिशिष्ये समयसुन्दरगुरौ, प्रतिष्ठाकल्पादिकानामनेकेषां ग्रन्थानामयं कर्त्ता विक्रम १६६० संवत्सरे विद्यमान आसीत् । जै० इ० ।

सकवाड-सकपाट-त्रि० । कपाटसहिते, व्य० ४ उ० । नि० चू० ।

सकसाय-सकषाय-त्रि० । सचित्तपृथिव्याद्यवगुण्डिते, आचा० २ श्रु० १ अ० ७ उ० ।

सकहा-सक्थि-न० । अस्थि, स० ३५ सम० । तीर्थकराणां मनुजलोकनिर्वृत्तानां सक्थीनि-अस्थीनीति । स० ३५ सम० । ( विशेषस्तु ' जिणसकहा ' शब्दे चतुर्थभागे १५०६ पृष्ठे गतः । )

सकथा--स्त्री० । याज्ञिकसमयप्रसिद्धे उपकरणविशेषे, नि० १ श्रु० १ वर्ग । भ० ।

सकाइय-सकायिक-पुं० । काययोगयुक्ते, प्रज्ञा० ३ पद ।

सकाम-सकाम-त्रि० । समनोरथे, पञ्चा० १८ विव० ।

स्वकाम--पुं० । स्वकीयायामिच्छायाम्, बृ० ३ उ० ।

सकामकिच्च-सकामकृत्य-न० । स्वेच्छाचारितायाम्, सूत्र० २ श्रु० ६ अ० ।

सकामणिज्जरा-सकामनिर्जरा--स्त्री० । निर्जराभेदे, सेन० ४ उल्ला० । तथा--चरकपरिव्राजकतामल्यादिमिथ्यादृष्टीनां तपश्चरणाद्यज्ञानकष्टं कुर्वतां सकामनिर्जरा भवत्यकामनिर्जरा वा इति, केचन वदन्ति तेषामकामनिर्जरैवेति साक्षरं प्रसाद्यमिति प्रश्नः ?, अत्रोत्तरं--ये चरकपरिव्राजकादिमिथ्यादृष्टयोऽस्माकं कर्मक्षयो भवत्विति धिया तपश्चरणाद्यज्ञानकष्टं कुर्वन्ति तेषां तत्त्वार्थभाष्यवृत्तिसमयसारसूत्रवृत्तियोगशास्त्रवृत्त्यादिग्रन्थानुसारेण सकामनिर्जरा भवतीति सम्भाव्यते, यतो योगशास्त्रचतुर्थप्रकाशवृत्तौ सकामनिर्जराया हेतुर्बाह्याभ्यन्तरभेदेन द्विविधं तपः प्रोक्तं, तत्र षट्प्रकारं बाह्यं तपः, बाह्यत्वं च बाह्यद्रव्यापेक्षत्वात्परप्रत्यक्षत्वात्कुतीर्थिकैर्गृहस्थैश्च कार्यत्वाच्चेति, तथा-ऽलोकप्रतीतत्वात्कुतीर्थिकैश्च स्वाभिप्रायेणासेव्यत्वाद्बाह्यत्वमिति त्रिंशत्तमोत्तराध्ययनचतुर्दशसहस्रीवृत्तौ एतदनुसारेण षड्विधबाह्यतपसः कुतीर्थिकासेव्यत्वमुक्तं, परं सम्यग्दृष्टिसकामनिर्जरापेक्षया तेषां स्तोका भवति, यदुक्तं भगवत्यष्टमशतकदशमोद्देशके 'देसाराहए' त्ति बालतपस्वी स्तोकमंशं मोक्षमार्गस्याराधयतीत्यर्थः, सम्यग्बोधरहितत्वात्क्रियापरत्वाच्चेति, तथा च मोक्षप्राप्तिर्न भवति, स्तोककर्मांशनिर्जरणात्, भवत्यपि च भावविशेषाद्वल्कलचीर्यादिवद् । यदुक्तम्--" आसंवरो अ सेयं-बरो अ बुद्धो य अहव अन्नो वा । समभावभावियप्पा, लहइ मुक्खं न संदेहो " ॥ १ ॥ इति, यदि तेषामकामनिर्जरैवाङ्गीक्रियते तर्हि ' जीवे णं भंते ! असंजए अविरए अप्पडिहयपच्चक्खायपावकम्मे इतो चुए पेच्चा देवे सिया ? ' गोयमा ! अत्थेगतिए देवे सिआ, अत्थेगतिए नो सिआ, से केणट्ठेणं जाव इतो देवे सिआ ? गोयमा ! जे इमे जीवा अकामतण्हाए अकामछुहाए अकामबंभचेरवासेणं अकामसीयायवदंसमसगअण्हाणगसेयजल्लमलपंकपरिदाहेणं अप्पतरं वा भुज्जतरं वा कालं अप्पाणं परिकिलेस्संति, परिकिलेसित्ता कालमासे कालं किच्चा अण्णयरेसु वाणमंतरेसु देवलोएसु देवत्ताए उववत्तारो भवन्ति ' श्रीभगवतीसूत्रप्रथमशतकप्रथमोद्देशकौपपातिकसूत्रादौ अकामनिर्जरया व्यन्तरत्वोत्पा-

दः कथितोऽस्ति, तत्कथं सङ्गच्छते, यतः—संग्रहण्यादौ ' चरगपरिव्वाय बंभलोगा जा ' इति वचनात्पञ्चमदेवलोकं तेषामुत्पादस्य भणितत्वादिति विरोधापत्तेः, हारिभद्रथा-मपि " अणुकंपऽकामनिज्जर-बालतवे दाणविणयविब्भंगे । संजोगविप्पओगे, वसणूसवइड्डिसक्कारे ॥ १ ॥ " इत्यत्रा-कामनिर्जराबालतपसोर्भेदद्वयमणनं व्यर्थमेव, एकेनाका-मनिर्जरालक्षणेन चरितार्थत्वात् । तथा ' चउहिं ठाणेहिं जीवा देवाउयत्ताए कम्मं पकरेंति, तं जहा-' सरागसंजमेणं १ संजमासंजमेणं २ बालतवोकम्मेणं अकामनिज्जराए ४ ' एतद्वृत्तिलेशः—सकषायसंयमेन—सकषायचारित्रेण वीतरागसंयमिनामायुषो बन्धाभावात् १ संयमासंयमस्य द्विस्वभावत्वाद्देशसंयमः २ बाला-मिथ्यादृशस्तेषां तपः-कर्म्म—तपःक्रिया बालतपःकर्म्म तेन ३, अकामेन-नि-र्जरां प्रत्यनभिलाषेण निर्जराऽकामनिर्ज्जरणहेतुर्बुभुक्षा-दिसहनं यत्साऽकामनिर्जरा तया इति, स्थानाङ्गसूत्रचतुर्थ-स्थानके तथा 'अकामनिर्जरारूपात्-पुण्याज्जन्तोः प्रजायते । स्थावरत्वं त्रसत्वं वा, तिर्यक्त्वं वा कथंचन ' ॥ १०८ ॥ इत्यत्र पुण्यादिति पुण्यं न पुण्यप्रकृतिरूपं किन्तु लाघ-वरूपं, तस्मात्स्थावरत्वादिकं प्राप्यते । तामलितापसादीनां तु शास्त्रेष्विन्द्रत्वादिप्राप्तिः कथिताऽस्ति, सा च सका-मनिर्ज्जरया भवति । यदुक्तं तत्त्वार्थभाष्यतद्भाष्ययत्त्वृत्तौ अमरेषु तावदिन्द्रसामानिकादिस्थानानि प्राप्नोतीति । ननु ' सया सकामा यमिनाः '—मित्यत्र यदि यमिनां—यती-नामेव सकामनिर्ज्जरा प्रोच्यते श्रावकाणामविरतसम्य-ग्दृष्ट्यादीनां च का गतिरिति चेदुच्यते यमिनामिति सामान्यतयोक्तः श्रावकादीनामपि तारतम्येन द्वादशदेव-लोकादिदायका सकामा भवतीति ज्ञायते, श्राद्धादीनामित्य-त्रादिशब्दाद्बालतपस्विनामपि कथमिति चेत्, शृणु, बालम-समर्थं सन्मार्गप्रदाने सकलकर्मक्षये वा, बालं च तत्तपश्च बालतपः, तच्चाग्निप्रवेशभृगुगिरिप्रपतनादि कायक्लेशरूपं, कायक्लेशश्च ' कायकिलेसो संलीणया य ' त्यागमवचनाद्बा-ह्यतपः, तच्च सकामनिर्ज्जराहेतुरिति ॥ १०५ ॥ सेन० ४ उल्ला० ।

सकाममरण–सकाममरण–न० । पण्डितमरणे, उत्त० ५ अ० । (विशेषार्थः 'मरण' शब्दे षष्ठे भागे उक्तः । )

सकाय–सकाय–पुं० । सह कायो यस्य येन वा सकायः । प्र-ज्ञा० १५ पद । पृथिव्यादिषड्विधकायविशिष्टे, स्था० २ ठा० ४ उ० ।

स्वकाय–पुं० । स्वस्य कायः स्वकायः । आत्मनो देहे, अनु० ।

सकिच्च–सकृत्य–न० । स्वाचारे कायोत्सर्गकरणादौ, द्वा० २२ द्वा० ।

सकिरिय–सक्रिय–त्रि० । कायिक्यादिक्रियायुक्ते, औ० । ग० । 'नत्थि दुसकिरियाणं अबंधगं किंचिविहगणट्ठाणं' मिति वच नात् । आ० म० १ अ० । सावद्यानुष्ठाने, सूत्र० २ श्रु० ४ अ० । प्रशस्तमनोविनयभेदे, स्था० ८ ठा० ३ उ० । सह क्रिय-या अनर्थदण्डप्रकृतिलक्षणया वर्त्तत इति सक्रिया । अनर्थद-ण्डप्रवर्त्तिकायां भाषायाम्, आचा० २ श्रु० १ चू० ४ अ० १ उ० ।

सकिलेस–संक्लेश–पुं० । विशुद्धिप्रतिपक्षे कालुष्ये, पं० १४ विव० । आचा० ।

सकुंत–शकुन्त–पुं० । पक्षिणि, अनु० ।

सकुंतपोय–शकुन्तपोत–पुं० । पक्षिशावके, स्था० २ ठा० १ उ० ।

सकुहर–सकुहर–त्रि० । शुद्धवंशतन्त्रीसम्प्रयुक्ते, रा० ।

सकेय–सकेत–पुं० । कितनिवासे इत्यस्य धातोः कित्यते उ-ष्यतेऽस्मिन्निति घञि केतो-गृहमुच्यते, सह तेन वर्त्तत इति सहस्य सभावे सकेतः । गृहस्थेषु,प्रव० ४ द्वार ।

सकेयपच्चक्खाण–सकेतप्रत्याख्यान–न० । केतनं केतश्च-ह्नमङ्गुष्ठग्रन्थिगृहादिकं स एव केतकः,सह केतकेन सकेतकम् । तच्च प्रत्याख्यानं चेति । ग्रन्थ्यादिसहिते प्रत्याख्यानभेदे, एतच्च स्वार्थिकप्रत्ययोपादानात्साकेतमित्युच्यते । स्था० १० ठा० ३ उ० । स० । प्रव० ।

सकोरिंटमल्लदाम–सकोरिण्टमाल्यदामन्–त्रि० । सह कोरिण्ट-प्रधानैः कोरिण्टकाभिधानकुसुमगुच्छैर्माल्यदामभिः पुष्पमा-लाभिर्यत्तत्तथा । भ०७श०६उ० । सकोरिण्टकानि-कोरिण्टक-पुष्पगुच्छयुक्तानि माल्यदामानि यत्र तत्तथा । कोरिण्टकमा-ल्यदामयुक्तेषु, भ० ११ श० १० उ० ।

सकोव–सकोप–त्रि० । कुपिते, सूत्र० १ श्रु० ५ अ० २ उ० ।

सक्क–शक–धा० । मर्षणे, "शकादीनां द्वित्वम् " ॥८।४।२३० ॥ अनेनान्त्यस्य द्वित्वम् । सक्कइ । शक्नोति । प्रा० ४ पाद ।

शक्य–त्रि० । सोढुं योग्ये, दश० ६ अ० ३ उ० ।

शक्त–त्रि० । " शक्त—मुक्त-दष्ट—रुग्ण—मृदुत्वे को वा " ॥ ८ । २ । २ ॥ इति संयुक्तस्य को वा । प्रा० । शक्तिमति,नि० चू० १४ उ० ।

शक्र–पुं० । शक्नोतीति शक्रः । स्था० १०ठा०३ उ० । सौधर्म-कल्पेन्द्रे, विशे० । उत्त० । अनु० । सूत्र० । जं० प्र० । स्था० । कल्प० । उपा० । आ०म० । स० । ( शक्रस्य सौधर्मकल्पः स्था-नं.तत्र शक्रः कथं कीदृशाध्यवसायश्च तिष्ठति, इत्युक्तं 'ठाण' शब्दे चतुर्थभागे १७०८ पृष्ठे । )

शक्रवर्णनमाह—

तेणं कालेणं तेणं समएणं सक्के देविंदे देवराया वज्ज-पाणी पुरंदरे सयक्कऊ सहस्सक्खे मघवं पागसासणे दा-हिणड्ढलोगाहिवई एरावणवाहणे सुरिंदे बत्तीसविमाणसय-सहस्साहिवई अरयंबरवत्थधरे आलइअमालमउडे नवहेम-चारुचित्तचंचलकुंडलविलिहिज्जमाणगल्ले महिड्ढिए मह-ज्जुइए महाबले महायसे महाणुभावे महासुक्खे भासुर-

बोंदी पलंबवणमालधरे, सोहम्मे कप्पे सोहम्मावडिंसए विमाणे सुहम्माए सभाए सक्कंसि सीहासणंसि । से णं तत्थ बत्तीसाए विमाणावाससयसाहस्सीणं चउरासीए सामाणिअसाहस्सीणं तायत्तीसाए तायत्तीसगाणं, चउण्हं लोगपालाणं अट्ठण्हं अग्गमहिसीणं सपरिवाराणं तिण्हं परिसाणं सत्तण्हं अणीआणं सत्तण्हं अणीआहिवईणं चउण्हं चउरासीणं आयरक्खदेवसाहस्सीणं अन्नेसिं च बहूणं सोहम्मकप्पवासीणं वेमाणिआणं देवाणं देवीण य आहेवच्चं पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे महया हयनट्टगीयवाइअतंतीतलतालतुडियघणमुइंगपडुपडहवाइयरवेणं दिव्वाइं भोगभोगाइं भुंजमाणे विहरइ ॥ १४ ॥ कल्प० १ अधि० १ क्षण ।

( शक्रस्य विकुर्वणा पूर्वभवश्च व्याख्यातः 'विउव्वणा' शब्दे षष्ठ भागे । ) ( शक्रस्य सुधर्मासभामूर्ति च अस्मिन्नेव भागे 'सुहम्मा' शब्दे वक्ष्यते । ) ( शक्रस्य पारियानिकविमानं, 'कप्प' शब्दे तृतीयभागे ४८६ पृष्ठे उक्तम् । ) ( शक्रस्य वीरस्वामिनं प्रति अवग्रहविषयप्रश्नः 'उग्गह' शब्दे द्वितीयभागे ६६८ पृष्ठे गतः । )

शक्रस्य सम्यग्वादित्वं मिथ्यावादित्वं वा—

सक्के णं भंते ! देविंदे देवराया किं सम्मावादी मिच्छावादी ?, गोयमा ! सम्मावादी, णो मिच्छावादी । सक्के णं भंते ! देविंदे देवराया किं सच्चं भासं भासइ, मोसं भासं भासइ, सच्चामोसं भासं भासइ, असच्चा मोसं भासं भासइ ?, गोयमा ! सच्चं पि भासं भासइ, ०जाव असच्चा मोसं पि भासं भासइ । सक्के णं भंते ! देविंदे देवराया किं सावज्जं भासं भासइ, अणवज्जं भासं भासइ ?, गोयमा ! सावज्जं पि भासं भासइ, अणवज्जं पि भासं भासइ । से केणट्ठेणं भंते ! एवं वुच्चइ—सावज्जं पि ० जाव अणवज्जं पि भासं भासइ ?, गोयमा ! जाहे णं सक्के देविंदे देवराया सुहुमकायं अणिजूहित्ता णं भासं भासइ, ताहे णं सक्के देविंदे देवराया सावज्जं भासं भासइ, जाहे णं सक्के देविंदे देवराया सुहुमकायं निज्जूहित्ता णं भासं भासइ, ताहे णं सक्के देविंदे देवराया अणवज्जं भासं भासइ, से तेणट्ठेणं ०जाव भासइ । (सू० ५६८+)

'सक्के णं' मित्यादि, सम्यग् वदितुं शीलं—स्वभावो यस्य स सम्यग्वादी प्रायेणासौ सम्यगेव वदतीति । सम्यग्वादशीलत्वेऽपि प्रमादादिना किमसौ चतुर्विधां भाषां भाषते न वा ? इति प्रश्नयन्नाह—'सक्के णं' मित्यादि, सत्या अपि भाषा कथंचिद् भाष्यमाणा सावद्या संभवतीति पुनः पृच्छति—'सक्के णं' मित्यादि, 'सावज्जं' ति—महावद्येन गर्हितकर्मणेति सावद्या तां 'जाहे णं' ति—यदा 'सुहुमकायं' ति—सूक्ष्मकायं हस्तादिकं वस्तु इति वृद्धाः, अन्ये त्वाहुः—'सुहुमकायं' ति—वस्त्रम्, 'अणिज्जूहित्त' त्ति—अपोह्य अदत्त्वा हस्ताद्यावृतमुखस्य हि भाषमाणस्य जीवसंरक्षणतोऽनवद्या भाषा भवति, अन्या तु सावद्येति । भ० ३ श० १ उ० ।

शक्रमेवाधिकृत्य भवसिद्धिमाह—

सक्के णं भंते ! देविंदे देवराया किं भवसिद्धिए अभवसिद्धिए सम्मादिट्ठीए मिच्छादिट्ठीए एवं जहा पढमुद्देसए सणंकुमारे० जाव णो अचरिमे । ( सू० ५६८× )

'सक्के णं' मित्यादि 'पढमुद्देसए' त्ति—तृतीयशतके प्रथमोद्देशके । भ० १६ श० २ उ० । (शक्रः पूर्वभवे कार्तिकश्रेष्ठिरासीदिति तत्कथानकं 'कत्तिय' शब्दे तृतीयभागे २१८ पृष्ठे उक्तम् । )

शक्रः पुरुषस्य शिरश्छित्त्वा चूर्णयितुं च शक्नोति तथैव पुनः कर्तुमिति दर्शयति—

पभू णं भंते ! सक्के देविंदे देवराया पुरिसस्स सीसं पाणिणा असिणा छिंदित्ता कमंडलुम्मि पक्खिवित्तए ?, हंता पभू से कहमिदाणिं पकरेइ ?, गोयमा ! छिंदिय छिंदिय च णं वा पक्खिवेज्जा, भिंदिय भिंदिय च णं वा पक्खिवेज्जा, कुट्टिय कुट्टिय च णं वा पक्खिवेज्जा, चुण्णिय चुण्णिय च णं वा पक्खिवेज्जा । तओ पच्छा खिप्पामेव पडिसंघाएज्जा णो चेव णं तस्स पुरिसस्स किंचि वि आबाहं वा वाबाहं वा उप्पाएज्जा छविच्छेदं पुण करेति ए सुहुमं च णं पक्खिविज्जा । ( सू० ५३२ )

'सपाणिणा' त्ति—स्वकपाणिना 'से कहमियाणिं पकरेइ' त्ति—यदि शक्रः शिरसः कमण्डल्वां प्रक्षेपणे प्रभुः तत् प्रक्षेपणं कथं तदानीं करोति ?, उच्यते—" छिंदिय छिंदिय च णं' ति—छित्त्वा छित्त्वा क्षुरप्रादिना कूष्माण्डादिकमिव खण्डखण्डीकृत्येत्यर्थः, वाशब्दो विकल्पार्थः । प्रक्षिपेत्कमण्डल्वाम् 'भिंदिय' त्ति—विदार्योर्ध्वपाटनेन शाटकादिकमिव, 'कुट्टिय' त्ति—कुट्टयित्वा उदूखलादौ तिलादिकमिव 'चुण्णिय' त्ति—चूर्णयित्वा शिलायां शिलापुत्रकादिना गन्धद्रव्यादिकमिव, 'तओ पच्छ' त्ति—कमण्डलुप्रक्षेपणानन्तरमित्यर्थः । 'पडिसंघाएज्ज' त्ति—मीलयेदित्यर्थः । 'ए सुहुमं च णं पक्खिवेज्ज' त्ति—कमण्डल्वामिति प्रकृतम् । भ० १४ श० ८ उ० । (शक्रस्योत्पातपर्वतवर्णनम् 'उप्पायपव्वय' शब्दे द्वितीयभागे ८३७ पृष्ठे गतम् । ) ( कस्मिंश्चित्कार्ये शक्रस्येशानसमीपे गमनम्, तयोर्विवादे च सनत्कुमारेण न्यायः क्रियत इति 'पाउब्भाव' शब्दे पञ्चमभागे ८१८ पृष्ठे । 'विवाय' शब्दे षष्ठभागे च गतम् । ) ( शक्रस्य अहिल्यागमनं गौतमशापेन सहस्रभगावाप्तिश्च 'महादेव' शब्दे षष्ठभागे १६३ पृष्ठे उक्ता । )('णमिपव्वज्जा' शब्दे चतुर्थभागे १८१२ पृष्ठे नमिशक्रयोः संवादो दर्शितः । )

शाक्य-पुं० । बौद्धश्रमणे, न० । स्था० । आचा० । सूत्र० । अनु० । पिं० । सुगतशिष्ये बौद्धे , प्रव० ६४ द्वार । सूत्र० । आचा० ।

सक्कअ-संस्कृत-त्रि० । संस्कारयुक्ते , प्रा० २ पाद ।

सक्कड-सत्कृत-त्रि० । सत्कारयुक्ते, उत्त० २ अ० ।

सक्कज्झय-शक्रध्वज-पुं० । इन्द्रध्वजे , आ० म० १ अ० ।

सक्कत्थय-शक्रस्तव-पुं० । जिनजन्मादिषु स्वविमानेषु तीर्थप्रवृत्ते, ध० २ अधि० ।

नमोत्थु णं अरिहंताणं , भगवंताणं ॥ १ ॥ आइगराणं तित्थगराणं, सयं संबुद्धाणं ॥ २ ॥ पुरिसुत्तमाणं पुरिससीहाणं पुरिसवरपुंडरीआणं पुरिसवरगंधहत्थीणं ॥ ३ ॥ लोगुत्तमाणं लोगनाहाणं लोगहियाणं लोगपईवाणं लोगपज्जोअगराणं ॥ ४ ॥ अभयदयाणं चक्खुदयाणं मग्गदयाणं सरणदयाणं बोहिदयाणं ॥ ५ ॥ धम्मदयाणं धम्मदेसयाणं धम्मनायगाणं धम्मसारहीणं धम्मवरचाउरंतचक्कवट्टीणं ॥ ६ ॥ अप्पडिहयवरनाणदंसणधराणं विअट्टछउमाणं ॥ ७ ॥ जिणाणं जावयाणं तिन्नाणं तारयाणं बुद्धाणं बोहयाणं मुत्ताणं मोअगाणं ॥ ८ ॥ सव्वन्नूणं सव्वदरिसीणं सिवमयलमरुअमणंतमक्खयमव्वाबाहमपुणरावित्तिसिद्धिगइनामधेयं ठाणं संपत्ताणं नमो जिणाणं जिअभयाणं ॥ ९ ॥ " जे अ अईया सिद्धा , जे अ भविस्संति ऽणागए काले । संपइ अ वट्टमाणा, सव्वे तिविहेण वंदामि " ॥ १ ॥

सक्कदूय-शक्रदूत-पुं० । शक्रादेशकारिणि, भ० ५ श० ४ उ० ।

सक्कपुज्ज-शक्रपूज्य-पुं० । शक्राणाम्—इन्द्राणामर्चनीयः जन्मकालाद्यष्टमहाप्रातिहार्यादिसम्पादनेनेन्द्राणामपि अर्चनीये, रत्ना० १ परि० ।

सक्कपुत्त-शाक्यपुत्र-पुं० । बौद्धे, "मृद्वी शय्या प्रातरुत्थाय पेया , भक्तं मध्ये पानकं चापराह्णे । द्राक्षाखण्डं शर्करा चार्द्धरात्रे , मोक्षश्चान्ते शाक्यपुत्रेण दृष्टः ॥ १ ॥ " सूत्र० १ श्रु० ३ अ० ४ उ० ।

सक्कप्पभ-शक्रप्रभ-पुं० । शक्रस्योत्पादपर्वते , स्था० १ ठा० ३ उ० । ('उप्पायपव्वय' शब्दे द्वितीयभागे ८२७ पृष्ठे ' सक्कस्स णं देविंदस्स देवरण्णो सक्कप्पभे उप्पायपव्वए दस जोयणसहस्साइं" इत्यादि प्रतिपादितम् । )

सक्कमह-शक्रमह-पुं० । इन्द्रमहे, व्य० १ उ० । नि० चू० ।

सक्कम्म-सत्कर्मन्-त्रि० । लोकव्यापारप्रवृत्तेषु , स्था० ३ ठा० ३ उ० ।

स्वकर्मन्-न० । आत्मीयकर्मणि, सूत्र० १ श्रु० ७ अ० ।

सत्कर्मन्-न० । शोभनानि धार्मिकाणामर्थः कर्म्माणि कृत्यानि । धार्मिककृत्येषु, ध० २ अधि० ।

सक्कम्मकरण-सत्कर्मकरण-न० । धार्मिककर्मणां करणलक्षणे विशेषतो गृहधर्मे, ध० २ अधि० ।

सक्कम्मयट्ठाण-सत्कर्मतास्थान-न० । सत्ताकर्म्मणि,आचा० १ श्रु० ३ अ० १ उ० ।

सक्कय-संस्कृत-न० । " विंशत्यादेर्लुक् " ॥ ८ । १ । २८ । अनेनानुस्वारस्य लुक् । सक्कयं । प्रा० । मलयगिरिप्रभृतिव्याकरणप्रणीतेन लक्षणेन संस्कारमापादिते, बृ० १ उ० १ प्रक० । लटलिटशपप्रकृतिप्रत्ययादिविकारविकल्पनानिष्पन्ने वचने , सूत्र० २ श्रु० १ अ० १ उ० । आ० चू० । स्त्रीणां संस्कृतेऽनधिकारित्वात् प्राकृतः सिद्धान्तः कृतः । ध० १ अधि० । संस्कारिते , आ० चू० १ अ० । "सक्कयं मत्ता विदू अणगभिधाणेण वा बि तं अत्थं " नि० चू० १ उ० ।

शाक्यक-पुं० । कलिकपुत्रदत्तराजसमकालिके वर्षान्तरराजे, ति० ।

सत्कृत-त्रि० । पूजिते, प्रश्न० १ आश्र० द्वार ।

सक्कया-संस्कृता-स्त्री० । लट्लिटशपप्रकृतिप्रत्ययादिविकारविकल्पनानिष्पन्नायां भाषायाम् , स्था० ७ ठा० ३ उ० ।

सक्करप्पभा-शर्कराप्रभा-स्त्री०।शर्कराणाम्-उपलखण्डानां प्रभा-प्रकाशनं स्वरूपेणावस्थानं यस्यां सा । अनु० । गोत्रेण द्वितीयनरकपृथिव्याम् , स्था० ७ ठा० ३ उ० । जी० । प्रज्ञा० । भ० । प्रव० । स० ।

सक्करप्पभाए णं भंते ! पुढवीए बत्तीसुत्तरजोयणसयसहस्सबाहल्लाए उवरिं केवइयं ओगाहित्ता हेट्ठा वज्जेत्ता मज्झे चेव केवइए केवइया णिरयावाससयसहस्सा पण्णत्ता?, गोयमा ! सक्करप्पभाए णं पुढवीए बत्तीसुत्तरजोयणसयसहस्सबाहल्लाए उवरिं एगं जोयणसहस्सं वज्जेत्ता मज्झे तीसुत्तरजोयणसयसहस्से एत्थ णं सक्करप्पभा पुढवीनेरइयाणं पणवीसा नरयावाससयसहस्सा भवंतीति मक्खायं । ते णं णरगा अंतोवट्टा ०जाव असुभा नरएसु वेयणा । जी० ३ प्रति० १ उ० ।

सक्करा-शर्करा-स्त्री० । काशादिप्रभवे गुडविकारे, उत्त० १ अ० । जं० । जी० । सूत्र० । अनु० । लघूपलशकलरूपे, ( जी० १ प्रति० । प्रज्ञा० । ) कर्करके, जी० ३ प्रति० । घरघरट्टे , भ० १६ श० १ उ० ।

सक्कराभ-शर्कराभ-पुं० । गौतमगोत्रावान्तरगोत्रविशेषप्रवर्त्तके ऋषौ, तद्गोत्रजेषु पुरुषेषु च । स्था० ८ ठा० ३ उ० ।

सक्कवयण-शक्रवचन-न० । शक्रेण वैश्रवणादिप्रत्युक्ते वचने, कल्प० १ अधि० ४ क्षण ।

सक्कसिंह-शाक्यसिंह-पुं० । गौतमगोत्रे शुद्धोदनपुत्रे सप्तमबुद्धे, ग० १ अधि० ।

सक्कह-सत्कथ-त्रि० । सती धर्मकथाऽभीष्टा यस्य स स-

त्कथः । अनुर्थेगुणविशेषे श्रावके, ध० १ अधि० । दर्श० ।

अथ त्रयोदशस्य तत्कथाख्यगुणस्यावसरस्तं च विपर्यये दोषदर्शनद्वारेणाह—

नासइ विवेगरयणं, असुहकहासंगकलुसियमणस्स ।
धम्मो विवेगसारु, त्ति सकहो हुज्ज धम्मत्थी ॥ २० ॥

नश्यति-अपैति विवेकरत्नं विवेकः-सदसद्वस्तुपरिज्ञानं स एव रत्नम्-अज्ञानध्वान्तान्तकारित्वात् अशुभकथाः-स्त्र्यादिकथास्तासु सङ्गः-आसक्तिस्तेन कलुषितं मनः-अन्तःकरणं यस्य स तथा तस्याशुभकथासङ्गकलुषितमनसः । इदमत्र तात्पर्यम्—विकथाप्रवृत्तो हि प्राणी न युक्तायुक्तं विवेचयति, स्वार्थहानिमपि न लक्षयतीति रोहणीवत् । धर्मः पुनर्विवेकसार एव हिताहितावबोधप्रधान एव भवति, सावधारणत्वाद्वाक्यस्येतीत्यस्माद्धेतोः सत्या-शोभना तीर्थकरगणधरमहर्षिचरितगोचरा कथा—वचनव्यापारो यस्य स सत्कथो भूयाद्-भवेत् धर्मार्थी-धर्मचरणाभिलाषुकः, येन धर्मरत्नाऽर्हः स्यादिति । ध० र० १ अधि० १३ गुण । प्रव० । ( पूर्वभवाचरितरोहिणीज्ञातं 'रोहिणी' शब्दे षष्ठभागे ५८३ पृष्ठे गतम् । )

सक्काणुट्ठाण-शक्यानुष्ठान-न० । संहननाद्यनुसारेण तपआद्यनुष्ठाने, ध० र० ।

संघयणादणुरूवं, आरंभइ सक्कमेव ऽणुट्ठाणं ।
बहुलाभमप्पछेयं, सुयसारविसारओ सुजई ॥ ११५ ॥

संहननं—वज्रर्षभनाराचादि, आदिशब्दाद्-द्रव्यक्षेत्रकालभावा गृह्यन्ते , तदनुरूपं—तदुचितमेवारभते संयमनुष्ठानं तपः—प्रतिमाकल्पादि यदस्मिन् संहननादौ निर्वोढुं शक्यते तदेवारभतेऽधिकस्य निष्ठानयनाभावे प्रतिज्ञाभङ्गसंभवात् . कीदृशं पुनरारभते?बहुलाभं, विशिष्टफलप्रापकम्-अल्पच्छेदं-स्तोकव्ययम् , अल्पशब्दस्याभाववचनत्वात् संयमाबाधकमिति भाव: , श्रुतसारविशारदः-सिद्धान्ततत्त्वाभिज्ञः सुयतिर्भावसाधुरिति ।

कथं पुनरेवंविधं स्यादित्याह—

जह तं बहू पसाहइ, निवडइ अस्संजमे दढं न जओ ।
जणिउज्जमं बहूणं, विसमकिरियं तहा विहवइ ॥११६॥

यथा—येन प्रकारेण तदधिकृतमनुष्ठानं बहु प्रसाधयति पुनः पुनरासेवते, न निपतति चाऽसंजमे-सावद्यक्रियायां दृढमत्यर्थं नैव यतोऽनुष्ठानात् । किमुक्तं भवति-अनुचितानुष्ठानपीडितो न पुनस्तत्करणायोत्सहते कदाचिदामयसंभवे च चिकित्सायामसंयमस्तत्करणे चाविधिमृतस्य संयमान्तरायः, अत एवोक्तम्—"सो हु तवो कायव्वो, जेण मणोऽमंगलं न चिंतेइ । जेण न इंदियहाणी, जेण य जोगा न हायंति ॥२॥" इति । तथा जनितोद्यमं सर्पादितकरणमनोरथं बहूनामन्येषां समानधार्मिकाणां शिष्याणां शक्यानुष्ठाने हि बहूनां चिकीर्षा संभवति नेतरस्मिन्निति विशेषक्रियामधिकतरानुष्ठानं प्रतिमाभ्यासादिकं, तथाशब्दः समुच्चये; स चैवं योज्यते शक्तौ सत्यां विशेषक्रियां चारभते न तां निष्फलां विदधातीति ।

कथंभूतां पुनर्विशेषक्रियां करोतीत्याह—

गुरुगच्छुन्नइहेउं, कयतित्थपभावणं निरासंसो ।
अज्जमहागिरिचरियं, सुमरंतो कुणइ सक्किरियं ॥ १७ ॥

गुरोर्गच्छस्य चोन्नतिः-उत्सर्प्पणा धन्योऽयं गुरुर्गच्छो वा यत्रास्मिन्नपीदृशविधा दुष्करकारिणो दृश्यन्ते; इत्येवं जनश्लाघारूपा तद्धेतुः-तत्कारणं, तथा कृततीर्थप्रभावनां-समुत्पादितजिनशासनसाधुवादां साधुः—सुन्दरोऽयं जिनधर्मः सर्वधर्मेषु वयमप्येनमेव कुर्म इत्येवमादियत्वात्सात्त्विकामिति भावः । निराशंस ऐहिकामुष्मिकाशंसादिप्रमुक्तः । तदुक्तम्—" नो इहलोगट्ठयाए, आयारमहिट्ठिज्जा नो परलोगट्ठयाए आयारमहिट्ठिज्जा नो कित्तिवन्नसद्दसिलोगट्ठयाए आयारमहिट्ठिज्जा नन्नत्थ आरहंतिएहिं हेऊहिं आयारमहिट्ठिज्ज " त्ति । आर्यमहागिरेर्भगवतश्चरितं वृत्तान्तं स्मरन् करोति सत्क्रियां भावसाधुरिति गाथाक्षरार्थः । ध० र० ३ अधि० ५ लक्ष० ।

भावार्थस्तु कथानकादवसेयः, तच्चेदम्—

अज्जथूलभद्दस्स दो सीसा-अज्जमहागिरी, अज्जसुहत्थी य । महागिरी अज्जसुहत्थिस्स उवज्झाया, महागिरी गणं सुहत्थिस्स दाऊण वोच्छिन्नो जिणकप्पो त्ति, तहवि अपडिबद्धया होउ त्ति गच्छपडिबद्धा जिणकप्पपरिकम्मं करेंति,ते विहरंता पाडलिपुत्तं गया, तत्थ वसुभूती सेट्ठी; तेसिं अंतियं धम्मं सोच्चा सावगो जाओ । सो अण्णया भणइ अज्जसुहत्थि भयवं ! मज्झ दिन्नो संसारनित्थरणोवाओ, मए सयणस्स परिकहियं तं न तहा लग्गई । तुब्भे वि ता अणभिजाएणं गंतूणं कहेहि त्ति । सो गंतूण पकहिओ । तत्थ य महागिरी पविट्ठो तं दट्ठूण सहसा उट्ठिओ । वसुभूती भणइ-तुब्भवि अन्ने आयरिया ?, ताहे सुहत्थी तेसिं गुणसंथवं करेइ, जहा—जिणकप्पो अतीतो तहावि एए एवं परिकम्मं करेंति । एवं तेसिं चिरं कहित्ता अणुव्वयाणि य दाऊण गओ सुहत्थी । तेण वसुभूइणा जेमित्ता ते भणिया—जइ एरिसो साहू एज्ज तो से तुब्भे उज्झंतगाणि एवं करेज्ज, एवं दिण्णे महाफलं भविस्सइ । बीयदिवसे महागिरी भिक्खस्स पविट्ठो, तं अपुव्वकरणं दट्ठूण चिंतइ—दव्वओ ४, णायं जहा णाओ अहंति तहय अब्भोमित नियत्तो भणंति—अज्जो ! अणेसणा कया । केणं? तुमे जेणसि कल्लं अब्भुट्ठिओ, दोवि जणा वतिदिसं गया । तत्थ जियपडिमं वंदित्ता अज्जमहागिरी एलकच्छं गया गयग्गपदगं वंदया । तस्स कहं एलगच्छं नामं ?, तं पुव्वं दसण्णपुरं नगरमासी । तत्थ साविया एगस्स मिच्छद्दिट्ठिस्स दिन्ना । वेयालियं आवस्सयं करेति पच्चक्खाइ य । सो भणइ-किं रत्तिं उट्ठित्ता कोइ जेमइ ?, एवं उवहसइ, अण्णया सो भणइ—अहं पि पच्चक्खामि, सा भणइ-भंजिहिसि । सो भणइ-किं अण्णयावि अहं रत्तिं उट्ठित्ता जेममि ?, दिन्नं । देवया चिंतइ सावियं उव्वासेइ अज्ज णं उवालभामि । तस्स भगिणी तत्थेव वसइ, तीसे रूवेण रत्तिं पहेणयं गहाय आगया । पच्चक्खइओ । सावियाए वारिओ भणइ-तुब्भच्चएहिं आलपालेहिं किं ?, देवयाए पहारो दिण्णो, दो वि अच्छिगोलया भूमीए पडिया । सो मम अयसो होहि त्ति काउस्सग्गं ठिया।अद्धरत्ते देवया आगया भणइ-किं साविए!, सा भणइ-मम एस अजसो त्ति, ताहे अण्णस्स एलगस्स अच्छीणि सप्पएसाणि तक्खणमारियस्स आणेत्ता लाइयाणि।

तओ से सयणो भणइ-तुब्भं अच्छीणि एलगस्स जारिसाणि त्ति,तेण सव्वं कहियं,सड्ढो जाओ । जणो कोउहल्लेण एति पेच्छगो । सव्वरज्जे कुडं भण्णइ-कओ एसि ?, जत्थ सो एलकच्छओ । अण्णे भणंति-सो चेव राया, ताहे दसण्णपुरस्स एलकच्छं नामं जायं तत्थ गयग्गपयओ पव्वओ । तस्स उप्पत्ती-तत्थेव दसण्णपुरे दसण्णभद्दो राया । तस्स पंचसयाणि देवीणोरोहो । एवं सो जोव्वणेण रूवेण य पडिबद्धो एरिसं अण्णस्स नत्थि त्ति । तेणं कालेणं तेणं समएणं भगवओ महावीरस्स दसण्णकूडे समोसरणं । ताहे सो चिंतेइ-तहा कल्लं वंदामि जहा केणइ न अण्णेण वंदियपुव्वो । तं च अज्झत्थियं सक्को णाऊण एइ । इमो वि महया इड्ढीए निग्गओ वंदिओ य सव्विड्ढीए । सक्को वि एरावणं विलग्गो , तत्थ अट्ठ दंते विउव्वेइ । एक्केक्के दंते अट्ठट्ठ वावीओ, एक्केक्काए वावीए अट्ठट्ठ पउमाइं, एक्केक्कं पउमं अट्ठट्ठपत्तं, पत्ते य २ बत्तीसइबद्धनाडगं, एवं सो सव्विड्ढीए एरावणविलग्गो आयाहिणं पयाहिणं करेइ , ताहे तस्स हत्थिस्स दसण्णकूडे पव्वए य पयाणि देवप्पहावेण उट्ठियाणि । तेण णामं कयं गयग्गपदगो त्ति । ताहे सो दसण्णभद्दो तं पेच्छिऊण एरिसा कओ अम्हारिसाणमिड्ढी ?,अहो कएल्लओऽणेण धम्मो, अहमवि करेमि, ताहे सो पव्वयइ । एसा गयग्गपयगस्स उप्पत्ती । तत्थ महागिरीहिं भत्तं पच्चक्खायं देवत्तं गया । सुहत्थी वि उज्जेणिं जियपडिमं वंदया गया । उज्जाणे ठिया , भणिया य साहुणो-वसहिं मग्गह त्ति । तत्थ एगो संघाडगो सुभद्दाए सिट्ठिभज्जाए घरं भिक्खस्स अइगओ । पुच्छिया ताए-कओ भगवंतो ?, तेहिं भणियं-सुहत्थिस्स वसहिं मग्गामो । जाणसालाओ दरिसियाओ । तत्थ ठिया । अन्नया पओसकाले आयरिया नलिणिगुम्मं अज्झयणं परियट्टंति । तीसे पुत्तो अवंतिसुकुमालो सत्ततले पासाए बत्तीसाहिं भज्जाहिं समं उवलल‌इ । तेण सुत्तविबुद्धेण सुयं । न एयं नाडगं ति भूमीओ भूमीयं सुणंतो २ उविग्गणो बाहिं निग्गओ । कत्थ एरिसं ति जाईसरिया तेसि मूलं गओ । साहइ-अहं अवंतिसुकुमालो त्ति नलिणिगुम्मे देवो आसि । तस्स उस्सुगो पव्वयामि । असमत्थो य अहं सामण्णपरियागं पालउं इंगिणिं साहेमि । ते वि मायाविक्ता, तेण पुच्छिय त्ति । नेच्छंति, सयमेव लोयं करेति । मा सयंगिहीयलिंगी हवउ त्ति लिंगं दिण्णं । मसाणे कंथेर कुडगं , तत्थ भत्तं पच्चक्खायं । सुकुमालएहिं पाएहिं लोहियगंधेण सिवाए सपल्लियाए आगमणं । सिवा एगं पायं खायइ । एगं चिल्लगाणि । पढमे जामे जाणुयाणि, बीएऊरू, तइए पोट्टं कालगओ । गंधोदगपुप्फवासं, आयरियाणं आलोयणा । भज्जाणं परंपरं पुच्छा । आयरिएहिं कहियं-सव्विड्ढीए सुण्हाहिं समं गया मसाणं, पव्वइयाओ य । एगा गुव्विणी नियत्ता । तीसे पुत्तो तत्थ देवकुलं करेइ । तं इयाणिं महाकालं जायं । लोएण परिग्गहियं । उत्तरचूलियाए भणियं पाडलिपुत्ते त्ति समत्तं आणिस्सियतवो महागिरीणं ४ । आव० ४ अ० ।

सक्कार-सत्कार-पुं० । वस्त्रादिना सम्माने, कल्प० १ अधि०६ क्षण । उत्त० । ज्ञा० । स्था० । वस्त्राभरणादिभिरभ्यर्चने, आव० ५ अ० । भक्तपानवस्त्रपात्रादीनां परतो योगे , आव० ४ अ० । स्था० । ज्ञा० । अर्थप्रदानादौ गुणकथने च । उत्त० १ अ० । पञ्चा० । प्रवरवस्त्रादिभिः पूजने , स्था० १० ठा० ३ उ० । स्तवनवन्दनादौ, स्था० ७ ठा० ३ उ० । ध० । स० । नि० । सूत्र० । प्रव० । पञ्चा० । अभ्यादरकरणे वस्त्रादिना वा सम्माने , स्था० ३ ठा० ३ उ० । अभ्युत्थानासनदानवन्दनानुव्रजनादौ , आव०६ अ० । आ० चू० । प्रवरवस्त्रादिभिः पूजने, स्था० १० ठा० ३ उ० । विनयार्हेषु वन्दनादिना आदरकरणे प्रवरवस्त्रादिदाने च ।'सक्कारो पवरवत्थमाईहिं' इति वचनात् । भ० ।

अथ नैरयिकादीनाश्रित्य विनयविशेषानाह—

अत्थि णं भंते ! नेरइयाणं सक्कारेति वा सम्माणेति वा किइकम्मेइ वा अब्भुट्ठाणेइ वा अंजलिपग्गहेति वा आसणाभिग्गहेति वा आसणाणुप्पदाणेति वा इंतस्स पच्चुग्गच्छणया ठियस्स पज्जुवासणया गच्छंतस्स पडिसंसाहणया ?, नो तिणट्ठे समट्ठे । अत्थि णं भंते ! असुरकुमाराणं सक्कारेति वा सम्माणेति वा० जाव पडिसंसाहणया वा ? , हंता अत्थि, एवं० जाव थणियकुमाराणं । पुढविकाइयाणं० जाव चउरिंदियाणं एएसिं जहा नेरइयाणं । अत्थि णं भंते ! पंचिंदियतिरिक्खजोणियाणं सक्कारेइ वा० जाव पडिसंसाहणया ? हंता अत्थि, नो चेव णं आसणाभिग्गहेइ वा आसणाणुप्पयाणेइ वा, मणुस्साणं० जाव वेमाणियाणं जहा असुरकुमाराणं । (सू० ५०७)

'अत्थि ण' मित्यादि 'सक्कारेइ व'त्ति सत्कारो—विनयार्हेषु वन्दनादिनाऽऽदरकरणं प्रवरवस्त्रादिदानं वा'सक्कारो पवरवत्थमाईहिं' इति वचनात् 'सम्माणेइ व'त्ति सम्मानः तथाविधप्रतिपत्तिकरणं 'किइकम्मेइ व'त्ति कृतिकर्म—वन्दनं कार्यकारणं वा'अब्भुट्ठाणेइ व'त्ति अभ्युत्थानं-गौरवार्हदर्शने विष्टरत्यागः 'अंजलिपग्गहेइ व' त्ति अञ्जलिप्रग्रहः—अञ्जलीकरणम् 'आसणाभिग्गहेइ व' त्ति आसनाभिग्रहः—तिष्ठत एव गौरव्यस्यासनानयनपूर्वकमुपविशतेति भणनम् 'आसणाणुप्पयाणेइ व' त्ति आसनानुप्रदानं—गौरव्यमाश्रित्यासनस्य स्थानान्तरसंचारणम् 'इंतस्स पच्चुग्गच्छणय' त्ति—आगच्छतो गौरव्यस्याभिमुखगमनं ' ठियस्स पज्जुवासणय 'त्ति तिष्ठतो गौरव्यस्य सेवेति 'गच्छंतस्स पडिसंसाहणय' त्ति गच्छतोऽनुव्रजनमिति , अयं च विनयो नारकाणां नास्ति, सततं दुःस्थत्वादिति । भ० १४ श० ३ उ० । दशा० । औ० । माल्यादिभिरभ्यर्चने, पञ्चा० १ विव० । विपा० । आदरकरणे, भ०२श० १उ० ।दशा० । नि० । अथ सत्कारप्रस्तावात्सत्कारप्रतिपक्षभूतेन असत्कारेण सामायिकं लभ्यते इति प्रतिपादयति । असक्कारेणं एगो धिज्जाइओ तहारूवाणं थेराणं अंतिए धम्मं सोच्चा समहिलिओ पव्वइओ उग्गं २ पव्वज्जं करेति, णवरमवरोप्परं पीती ण ओसरइ, महिला मणागं धिज्जाइणि त्ति गव्वमुव्वहइ, मरिऊण देवलोगं गयाणि , अहाउगं भुत्तं । इतो य इलावद्धणे णगरे इलादेवया, तं एगा सत्थवाही पुत्तकामा ओलग्गइ,सो चविऊण पुत्तो से जाओ,

गामं च से कयं इलापुत्तो त्ति । इयरी वि गब्भवासेसं तओ चुया लंखगकुले उप्पन्ना, साऽवि जोव्वणं पत्ताणि, अरणया. तेण सा लंखगचेडी दिट्ठा, पुव्वभवरागेण अज्झोववणो, सा मग्गिज्जंती वि ण लब्भइ, जत्तिएण तुलइ तत्तिएण सुवरणेण तागि भणंति—एसा अम्ह अक्खयणिही, जइ सिप्पं सिक्खसि अम्हेहिं पि समं हिंडइ तो ते देमो, सो तेहिं समं हिंडिओ सिक्खिओ य, ताहे विवाहणिमित्तं रणो पेच्छयणं करेहि त्ति भणितो, बेरणायडं गयाणि, तत्थ राया पेच्छइ संतेपुरो, इलापुत्तो य खेड्डा उ करेइ रायाए दिट्ठी दारियाए, राया ण देइ, रायाणए अदेन्ते अरणे वि ण देति, साहुक्कारराय वट्टति । भणिओ राइणा—लंख ! पडणं करेह, तं किर वंससिहरे अट्ठं कट्ठं कप्पइयं तत्थ खीलयाओ, सो पाउआउ आविंधइ मूलं विंधियाओ । तओऽसिखेडगहत्थगओ आगासे उप्पइत्ता ते खीलगा पाउआणालियाहि पवेसेतव्वा सत्त अग्गिमाइद्धे सत्त पच्छिमाइद्धे काऊण, जइ फिडइ तओ पडिओ सयहा खंडिज्जइ, तेण कय, राया दारियं पलोएइ । लावए कलकलो कओ, ण य देइ राया, राया ण पेच्छइ, राया चिंतेइ—जइ मरइ तो अहं एयं दारियं परिणेमि । भणइ—ण दिट्ठं पुणो करेहि, पुणोऽवि कयं, तत्थऽवि ण दिट्ठं, ततियं पि वारा कयं, तत्थ वि ण दिट्ठं, चउत्थियाए वाराए भणिओ-पुणो करेहि । रंगो विरत्तो, ताहे सो इलापुत्तो वंसग्गे ठिओ चिंतेइ—धिरत्थु भोगाणं, एस राया एत्तियाहिं ण तित्तो, एताए रंगोवजीवियाए लग्गिउं मग्गइ, एताए कारणा ममं मारेउमिच्छइ । सो य तत्थ ठियओ एगत्थ सेट्ठिघरे साहुणो पडिलाभिज्जमाणे पासति सव्वालंकाराहिं इत्थियाहिं, साहू य विरत्तत्तेण पलोयमाणे पेच्छति । ताहे भणइ—' अहो धन्या निःस्पृहा विषयेषु ' अहं सेट्ठिसुओ एत्थं पि एस अवत्थो, तत्थेव विरागं गयस्स केवलणाणं उप्पराणं । ताए वि चेडीए विरागो विभासा, अग्गमहिसीए वि, रराणो वि पुणरावत्ती जाया-विरागो विभासा । एवं ते चत्तारि वि केवली जाया, सिद्धा य । एवं असक्कारेण सामाइयं लब्भइ ॥ ११ ॥ अहवा-तित्थगराणं देवासुरे सक्कारं करेमाणे दट्ठूण जहा मरियस्स । आव० १ अ० । ( मरीचिवृत्तान्तम् ' मरीइ ' शब्दे षष्ठ भाग १४१ पृष्ठे उक्तम् । )

**संस्कार**–पुं० । "विंशत्यादेर्लुक्‌॥८।१।२८॥इत्यनेनात्रानुस्वारस्य लुक् । प्रा० । "ष्कस्कयोर्नाम्नि"॥८।२।४॥ अत्र नामग्रहणाभावेऽस्मिन्नपि लक्ष्ये खकारादेशः स्यात्।प्रा०।सम्-कृ-घञ् सुट्च । सतो गुणान्तराधानरूपे प्रतियत्ने, यथा अलङ्कारादे रत्नादेर्मलादेश्च उद्दीपननिशानमार्जनादयः, व्रीह्यादेश्च यज्ञाङ्गतासम्पादनाय वैदिकमार्गेण प्रोक्षणादिः दर्पणादेर्निर्मलीकरणादिः । स्मृतिहेतौ, अनुभवजन्ये आत्मवृत्तिगुणभेदे, पृथिव्यादिचतुष्टयस्थे वेगाख्ये गुणे, यथावस्थितनतया स्थापनाप्रयोजके स्थितिस्थापनाख्ये गुणभेदे, शास्त्राभ्यासजन्यव्युत्पत्तौ, व्याकरणाद्युक्तदिशा शब्दानां साधनप्रकारे, विप्रादीनां वैदिककर्मार्हत्वसाधने गर्भाधानादौ क्रियाकलापे, पाके च । वाच० । सम्म० ।

**सक्कारकारण**–सत्कारकारण–न० । वस्त्रादिभिः सम्मानने, ' असंजयाण सक्कारं कारवणणामच्छे गरहिउमारद्धे ' । महा० ४ अ० ।

**सक्कारणिज्ज**–सत्कारणीय–त्रि० । आदरणीये, उपा० ७ अ० । वस्त्रादिना कल्याणं मङ्गलं दैवतं चैत्यमिति बुद्ध्या पर्युपासनीये, जी० ३ प्रति० ४ अधि० । भ० । औ० । ज्ञा० । चं० प्र० ।

**सक्कारत्त**–संस्कारत्व–अव्य० । संस्कृतादिलक्षणयुक्तत्वे, औ० । रा० ।

**सक्कारपुरक्कारपरीसह**–सत्कारपुरस्कारपरीषह–पुं० । सत्कारो-वस्त्रादिभिः पूजनं, पुरस्कारः-अभ्युत्थानासनादिसंपादनम्, यद्वा—सकलैव याऽभ्युत्थानाऽभिवाददानादिरूपा प्रतिपत्तिरिह सत्कारस्तेन पुरस्करणं सत्कारपुरस्कारः, ततस्तावेव स एव वा परीषहः सत्कारपुरस्कारपरीषहः । उत्त० २ अ० । आव० । प्रव० । प्रश्न० । भ० । स० । सत्कारपुरस्काराभावे दैन्यवर्जने, तदनाकाङ्क्षत्वे च । स० २२ सम० । विशेषितब्रह्मचर्यस्य महातपस्विनः स्वपरसमयज्ञस्य बहुकृत्वः परवादिविजयिनः प्रमाणभक्तिबहुमानसंभ्रमासनप्रदानभक्तमानवस्त्रपात्राद्यतिसर्जनं न मे कश्चित्करोतीति दुष्प्रणिधानपरिहरणे, पं० सं० २ द्वार । स चैवम्- " उत्थाने पूजने दाने, न भवेदभिलाषुकः । असत्कारे न दीनः स्यात्, सत्कारे स्याच्च हर्षवान् ॥ १ ॥ " ध० ३ अधि० । "उत्थानं पूजनं दानं, स्पृहयेन्नात्मपूजकः । मूर्च्छितो न भवेल्लब्ध्वा, दाने सत्कारितो न च ॥ १ ॥ " आ० म० १ अ० । आ० चू० ।

एतदेव सूत्रकृदाह—

अभिवायणमब्भुट्ठाणं, सामी कुज्जा निमंतणं ।
जे ताइं पडिसेवंति, न तेसिं पीहए मुणी ॥ ३८ ॥

अभिवादनं-शिरोनमनचरणस्पर्शनादि पूर्वमभिवादये इत्यादि वचनम्, अभ्युत्थानं-ससम्भ्रममासनमोचनं स्वामी-राजादिः कुर्यात्-विदधीत निमन्त्रणम्-अद्य भवद्भिर्भिक्षा मदीयगृहे ग्रहीतव्येत्यादिरूपम्, 'ये' इति-स्वयूथ्याः परतीर्थिका वा तानि-अभिवादनादीनि प्रतिसेवन्ते-आगमनिषिद्धान्यपि भजन्ते, न तेभ्यः स्पृहयेत्—यथा सुलब्धजन्मानोऽमी य एवमेवंविधैरभिवादनादिभिः सत्क्रियन्त इति मुनिः-अनगार इति सूत्रार्थः ।

किं च—

अणुक्कसाई अप्पिच्छे, अण्णाएसि अलोलुए ।
रसेसु नाणुगिज्झिज्जा, नाणुतप्पिज्ज पण्णवं ॥ ३९ ॥

उत्कः-उत्कण्ठितः सत्कारादिषु शेते इत्येवं शील उत्कशायी न तथा अनुत्कशायी, यद्वा-प्राकृतत्वादणुकषायी सर्वधनादित्वादिनिः, कोऽर्थः ?—न सत्कारादिकमकुर्वते कुप्यति, तत्सम्पत्तौ वा नाहङ्कारवान् भवति । यत उक्तम्-

पलिमंथमहं वियाणिया, जा वि य वंदणपूयणा इह ।
सुहुमे सल्ले दुरुद्धरे, इति संखाइ मुणी ण मज्जइ ॥ १ ॥

न वा तदर्थं क्षुद्र तत्र वा गृद्धिं विधत्ते, अत एवाल्पा—स्तोका धर्मोपकरणप्राप्तिमात्रविषयत्वेन न तु सत्कारादिकामितया महती; अल्पशब्दस्याभाववाचित्वे-

नाविद्यमाना वा इच्छा वाञ्छा वा यस्येति अल्पेच्छः; इच्छायाश्च कषायान्तर्गतत्वेऽपि पुनरुपत्त्याभिधानं बहुतरदोषत्वोपदर्शनार्थम् । अत एव च—अज्ञातो जातिश्रुतादिभिः एषति—उञ्छति अर्थात्—पिण्डादीत्यज्ञातैषी, कुतः पुनरेवम् ?—यतः अलोलुपः—सरसौदनादिषु न लाम्पट्यवान्, एवंविधोऽपि सरसाहारभोजिनोऽपरान् वीक्ष्य कदाचिदन्यथा स्यात्, अत आह—सरसेषु—रसवत्स्वोदनादिषु, पाठान्तरतो—रसेषु वा—मधुरादिषु नानुगृध्येत्—नाभिकाङ्क्षां कुर्वीत, रसगृद्धिवर्जनोपदेशश्च तद्गृद्धित एव वालिशानामभिवादनादिस्पृहासम्भवात्, तथा न तेभ्यो—रसगृद्धेभ्यः स्पृहयेन्मुनिः, पाठान्तरतश्च-नानुतप्येत् तीर्थान्तरीयान् नृपत्यादिभिः सत्क्रियमाणानवेक्ष्य, किमेतत्परित्यागेनाहमत्र प्रव्रजित ?, इति प्रज्ञा—हेयोपादेयविवेचनात्मिका मतिस्तद्वान्, अनेन सत्कारकारिणं तोषं न्यक्कारकारिणि च द्वेषमकुर्वताऽयं परीषहोऽध्यासितव्य इत्युक्तं भवतीति सूत्रार्थः ॥ ३९ ॥

अत्र ' अक्कविद्ये ' ति द्वारमनुसरन् सूत्रोक्तमर्थं व्यतिरेकोदाहरणेन स्पष्टयन्नाह—

महुराइ इंददत्तो, पुरोहिओ साहुसेवओ सिट्ठी ।
पासायविज्ज पाडण, पायच्छेदिंदकीले य ॥ ११८ ॥

मथुरायामिन्द्रदत्तः पुरोहितः, साधुसेवकः श्रेष्ठी प्रासादविद्यापातनं, पादच्छेदश्चेन्द्रकीले, चस्य भिन्नक्रमत्वादिति गाथासंस्कारः ॥ ११६ ॥ एतदर्थश्च सम्प्रदायादवसेयः ।

स चायम्—

" चिरकालपइट्ठियाए महुराए इंददत्तेण पुरोहिएणं पासायगएणं हेट्ठेणं साधुस्स वच्चंतस्स पाओ, ओलंबितो सीसे कतो त्ति काउं, सो य सावएण सिट्ठिणा दिट्ठो तस्सामरिसो जाओ । दिट्ठं भो एएणं पावेणं, साहुस्स उवरिं पादो कतो त्ति, तेण पइण्णा कया—अवस्सं मए एयस्स पादो छिंदियव्वो—तस्स छिद्दाणि मग्गइ, अलभमाणो अन्नया आयरिआण सगासं गंतूण वंदित्ता परिकहेइ । तेहिं भण्णइ—का पुच्छा ?, अहियासियव्वो सक्कारपुरक्कारपरीसहो । तेण भणियं—मए पइण्णा कया(?)ल्लिया, आयरिएहिं भण्णइ—एयस्स पुरोहियस्स किं घरे वट्टइ ?, तेण भण्णइ-एयस्स पुरोहियस्स पासाओ कएल्लतो, तस्स पवेसणे रण्णो भत्तं करेहि त्ति, तेहिं भण्णइ—जाहे राया पविसइ तं पासायं ताहे तुमं रायं हत्थेण गेण्हऊण अवसारिज्जासि जहा-पासाओ पडति, ताहेऽहं पासायं विज्जाए पाडिस्सं । तेण तहा कयं, सेट्ठिणा राया भणितो-एएण तुब्भे मारिया आसि, रुट्ठेण रण्णा पुरोहितो सावगस्स अप्पितो, तेण तस्स इंदकीले पादो कतो । पच्छा छिन्न ( ओ ), एवं काउं इयरो विसज्जितो । तेण णाहियासितो सक्कारपुरक्कारपरीसहो " इति । यथा तेन श्राद्धमासौ न सोढो न तथा विधेयं, किन्तु साधुवत्सोढव्यः । इह पूर्वत्र च श्रावकपरीषहाभिधानमाद्यनयचतुष्टयमतेनेति भावनीयम् । उक्तं हि प्राक्-" तिण्हं पि णेगमनतो, परीसहो जाव उज्जुसुत्तातो " त्ति, अङ्गं चात्र पादो, विद्या च प्रासादपातनविद्या । उत्त० २ अ० ।



सक्कारबंध–संस्कारबन्ध–पुं० । बौद्धमतप्रसिद्धे पुण्यापुण्यादिधर्मसमुदाये, सूत्र० १ श्रु० १ अ० १ उ० ।

सक्कारवंत–संस्कारवत्त्व–न० । संस्कृतादिलक्षणयुक्तत्वे, स० ३६ सम० ।

सक्कारवत्तिय–संस्कारप्रत्यय–न० । संस्कारार्थे, औ० । स्तुत्यादिगुणोत्कीर्तनकरणे, स० २२ सम० । प्रवरवस्त्राभरणादिभिरभ्यर्चनाभिधे, ल० । सत्कारनिमित्ते, सत्कारश्च प्रवरवस्त्राभरणादिभिरभ्यर्चनम् । ध० २ अधि० । प्रति० ।

सक्कारहज्ज–सत्कारभाज्य–त्रि० । विद्वज्जनपूज्ये, व्य० ३ उ० ।

सक्कारासंसापओग–सत्काराशंसाप्रयोग -पुं० । दशमे आशंसाप्रयोगभेदे, स्था० १० ठा० ३ उ० । (' आसंसापओग ' शब्दे द्वितीयभागे ४६६ पृष्ठे व्याख्यातः । )

सक्कारित्ता–सत्कारयित्वा–अव्य० । वस्त्रादिना विनये, स्था० १ ठा० ।

सक्कारिय–सत्कारित–त्रि० । फलवस्त्रादिदानतः संमानिते, ज्ञा० १ श्रु० १ अ० । कल्प० । औ० ।

सक्काल–संस्कार–पुं० । " हरिद्रादौ लः " ॥ ८ । ४ । २५४ ॥ अनेनात्र लकारादेशः । सक्कालो । संस्करणे, प्रा० ४ पाद ।

सक्किरिया–सत्क्रिया–स्त्री० । सच्चेष्टायाम्, द्वा० १३ द्वा० ।

सक्कुच्छव–शक्रोत्सव–पुं० । इन्द्रमहे, आ० म० १ अ० ।

सक्कुलिया–सष्कुलिका–स्त्री० । पिष्टमयपोलिकायाम्, आचा० १ श्रु० १ अ० ५ उ० । दश० ।

सक्कुलीकण्ण–सष्कुलीकर्ण–पुं० । हयकर्णादिषु अन्यतमे अन्तर्द्वीपे, तत्रत्ये मनुष्ये च । प्रज्ञा० १८ पद । स्था० । प्रव० । जी० । कर्म । नं० । उत्त० । नि० चू० । ('अन्तरद्दीव ' शब्दे प्रथमभागे ६६ पृष्ठे वक्तव्यतोक्ता । )

सक्केंद–शक्रेन्द्र–पुं० । सौधर्मदेवलोकेन्द्रे, स्था० १० ठा० ३ उ० ।

सक्कोस–सक्रोश–त्रि० । क्रोशसहिते, बृ० ३ उ० । तत्र यत्क्रोशं तत्पूर्वासु दिक्षु प्रत्येकं सगव्यूतमूर्द्धमधश्चार्धक्रोशार्द्धप्रयोजनेन च समन्ततो ग्रामाः सन्ति । व्य० १० उ० ।

सक्ख–साक्ष्य–न० । परप्रत्ययार्थं यथादृष्टवादिनि, पिं० । स्वयंकरणतः शब्दार्थे, पञ्चा० ६ विव० ।

सख्य–न० । सख्युर्भावः । मित्रतायाम्, सौहार्दे, वाच० ।

सक्खं–साक्षात्–अव्य० । " षा स्वरे मश्च " ॥ ८ । १ । २४ ॥ अस्य बहुलाधिकारीयत्वादन्यस्यापि व्यञ्जनस्य मकारः । प्रा० । समक्षे, उत्त० २ अ० । अनुपचारे, द्वा० १० द्वा० । परिस्फुटे, उत्त० २ अ० ।

सक्खिय–साक्षिक–त्रि० । सदा परित्यागसाक्षिणि केवलिप्रनिषिद्धे, दश० । " ससक्खं न पिबे भिक्खू " दश० ५ अ० २ उ० । साक्षित्वकारिणि, प्रश्न० २ आश्र० द्वार । अध्यक्षे, ज्ञा० १ श्रु० २ अ० ।

सक्खिखिणिय–सकिङ्किणीक–त्रि० । क्षुद्रघण्टिकोपेते, उपा० २ अ० ।

**सक्खुड्ड**–सक्षुद्र–त्रि० । क्षुद्रैर्मार्जारादिभिः सह वर्त्तमाने अवबद्धसिंहादौ, आचा० २ श्रु० १ चू० २ अ० १ उ० ।

**सग**–शक–पुं० । अनार्यदेशभेदे , प्रज्ञा० १ पद । शकदेशनिवासिनि म्लेच्छे, प्रज्ञा० १ पद । प्रव० । बृ० । सूत्र० । मासवर्षानन्तरं वीरमोक्षाज्जाते उज्जयिनीपतौ , ति० । ("तोह ४८३ पृष्ठ उक्तम ।)"परिनिव्वुयस्स अरहा-तो उप्पन्नो सगो राया ।" ति० । धूर्ताख्याने प्रतिपादितानां धूर्त्तानामधिपतौ, ग० २ अधि० ।

**स्वक**–त्रि० । आत्मीये,दर्श०४तत्त्व ।आ० म० । निजे,सूत्र०१ श्रु० ३ अ० २ उ० । लोकरूढितः सौन्दर्ये , उत्त० १ अ० ।

**सप्त**–त्रि० । स्वनामख्यातायां संख्यायाम् , कर्म० ५ कर्म० ।

**सगउरल**–सप्तौदारिक–न० । औदारिकोपलक्षिते सप्तके,औदारिकौदारिकबन्धनौ ४, दारिकतैजसबन्धनौ५, दारिककार्मणबन्धनौ६ , दारिकतैजसकार्मण ७ इत्येवमौदारिकोपलक्षिते सप्तके , कर्म० ५ कर्म० ।

**सगड्डभट्टिया**–स्वकार्यभर्तृका–स्त्री० । लौकिकश्रुतभेदे,अनु० ।

**सगड**–शकट–न० । शक्नोति शक्यते वा धान्यादिकमनेन वोढुमिति शकटम् । गन्त्र्याम् , उत्त० ५ अ० । आव० । गन्त्र्यादिके,सूत्र० १ श्रु० ७ अ० । विपा० । आ० म० । अनु० । प्रश्न० । जं० । रा० । औ० । भ० । स्कन्धावारनिवेशादिके, आचा०२ श्रु० १ चू० ३ अ० २ उ० । सुभद्रस्य गृहपतेर्भद्राकुक्षिसंभवे पुत्रे, पुं० । स्था० १० ठा० ३ उ० ।

एतदेव सूत्रकृदाह—

जंबू ! तेणं कालेणं तेणं समएणं साहंजनीनामं नयरी होत्था , रिद्धत्थिमियसमिद्धा । तीसे णं साहंजणीए बहिया उत्तरपुरच्छिमे दिसीभाए देवरमणे णामं उज्जाणे होत्था । तत्थ णं अमोहस्स जक्खस्स जक्खाऽऽययणे होत्था पुराणे , तत्थ णं साहंजणीए णयरीए महचंदे नामं राया होत्था । महया०,तस्स णं महचंदस्स रन्नो सुसेणे नामं अमच्चे होत्था । सामभेयदंडदाण० निग्गहकुसले , तत्थ णं साहंजणीए सुदंसणाणामं गणिया होत्था , वन्नओ , तत्थ णं साहंजणीए नयरीए सुभद्दे नामं सत्थवाहे परिवसइ अड्डे०, तस्स णं सुभद्दस्स सत्थवाहस्स भद्दानामं भारिया होत्था; अहीण० , तस्स णं सुभद्दसत्थपुत्ते भद्दाए भारियाए अत्तए- सगडे नामं दारए होत्था अहीण० । तेणं कालेणं तेणं समएणं समणे भगवं महावीरे समोसरणं परिसा राया य निग्गए धम्मो कहिओ, परिसा पडिगया । तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स जेट्ठे अंतेवासी० जाव रायमग्गमोगाढे तत्थ णं हत्थि आसे पुरिसे, तेसिं च णं पुरिसाणं मज्झगए पासति एगं सइत्थीयं पुरिसं अवउडगबंधणं उक्खित्तं ०जाव घोसेणं चिंता तहेव ०जाव भगवं वागरेति । एवं खलु गोयमा ! तेणं कालेणं तेणं समएणं इहेव जंबुद्दीवे दीवे भारहे वासे छगलपुरं नामं णगरे होत्था , तत्थ सीहगिरिनामं राया होत्था महया० । तत्थ णं छगलपुरे णगरे छणिए नामं छगलीए परिवसति अड्डे० अहम्मिए ०जाव दुप्पडियाणंदे, तस्स णं छणियस्स छगलियस्स बहवे अयाण य एलाण य रोज्झाण य वसभाण य ससयाण य सूयराण य पसयाण य सिंघाण य हरिणाण य मयूराण य महिसाण य सतबद्धाण य सहस्सबद्धाण य जूहाणि वाडगंसि सन्निरुद्धाइं चिट्ठंति , अन्ने य तत्थ बहवे पुरिसा दिन्नभइभत्तवेयणा बहवे य अए ०जाव महिंसे य सारक्खमाणा संगोवेमाणा चिट्ठंति , अयाण य से बहवे पुरिसा अयाण य ०जाव गिहंसि निरुद्धा चिट्ठंति । अन्ने य से बहवे पुरिसा दिन्नभइ० बहवे सयए य सहस्से य जीवियाओ ववरोविंति मंसाइं कप्पिणीकप्पियाइं करेंति, छणियस्स छगलीयस्स उवणेंति, अन्ने य से बहवे पुरिसा ताइं बहुयाइं अयमंसाइं ०जाव महिसमंसाइं तवएसु य कवल्लीसु य कंदूएसु य भज्जणेसु य इंगालेसु य तलंति य भज्जेंति य सोल्लयंति य २ ततो रायमग्गंसि वित्तिं कप्पेमाणा विहरंति । अप्पणा वि य णं से छणियए छागलीए तेहिं बहुविहमंसेहिं ०जाव महिसमंसेहिं सोल्लेहि य तलेहि य भज्जेहि य सुरं च ६ आसाएमाणे विहरंति । तते णं से छणिए य छगलीए य कम्म प० वि० स० सुबहुं पावकम्मं कलिकलुसं समज्जिणित्ता सत्तवाससयाइं परमाउयं पालइत्ता कालमासे कालं किच्चा चोत्थीए पुढवीए उक्कोसेणं दससागरोवमट्ठिइएसु नेरइयत्ताए उववन्ने । ( सू० २१ )

तते णं तस्स सुभद्दसत्थवाहस्स भद्दा भारिया ०जाव निंदुया यावि होत्था , जाया दारगा विनिहायमावज्जंति , तते णं से छणीए छागले चोत्थीए पुढवीए अणंतरं उव्वट्टित्ता इहेव साहंजणीए नयरीए सुभद्दस्स सत्थवाहस्स भद्दाए भारियाए कुच्छिंसि पुत्तत्ताए उववन्ने, तते णं सा भद्दा सत्थवाही अन्नया कयाइ णवण्हं मासाणं बहुपडिपुन्नाणं दारगं पयाया , तए णं तं दारगं अम्मापियरो जायमेत्तं चेव सगडस्स हेट्ठातो ठावेंति, दोच्चं पि गिण्हावेंति अणुपुव्वेणं सारक्खंति संगोवेंति संवड्ढेंति जहा उज्झियए ०जाव जम्हा णं अम्हं इमे दारए जायमेत्ते चेव सगडस्स हेट्ठा ठाविए तम्हा णं होउ णं अम्ह

एस दारए सगडे नामेणं, सेसं जहा उज्झियते । सुभद्दे लवणसमुद्दे कालगते मायाऽवि कालगया । से वि सयाओ गिहाओ निच्छूढे, तते णं से सगडे दारए सयातो गिहाओ निच्छूढे समाणे संघाडग तहेव० जाव सुदरिसणाए गणियाए सद्धिं संपलग्गे याऽवि होत्था । तते णं से सुसेणे अमच्चे तं सगडं दारगं अन्नया कयाइं सुदरिसणाए गणियाए गिहाओ निच्छुभावेति, सुदंसणियं गणियं अब्भितरियं ठावेति, ठावित्ता सुदरिसणाए गणियाए सद्धिं उरालाइं माणुस्सगाइं भोगभोगाइं भुंजमाणे विहरति । तते णं से सगडे दारए सुदरिसणाए गिहाओ निच्छूढे समाणे अन्नत्थ कत्थ वि सुतिं वा अलभ० अन्नया कयाइं रहसियं सुदरिसणागेहं अणुप्पविसइ अणुप्पविसित्ता सुदरिसणाए सद्धिं उरालाइं भोगभोगाइं भुंजमाणे विहरइ । इमं च णं सुसेणे अमच्चे ण्हाते० जाव विभूसाए मणुस्सवग्गुराए जेणेव सुदरिसणागणियाए गेहे तेणेव उवागच्छति तेणेव उवागच्छित्ता सगडं दारयं सुदंसणाए गणियाए सद्धिं उरालाइं भोगभोगाइं भुंजमाणं पासइ पासित्ता आसुरुत्ते० जाव मिसमिसेमाणे तिवलियं भिउडिं निडाले साहट्टु सगडं दारयं पुरिसेहिं गिण्हावेति अट्ठि० जाव महियं करेति अवउडगबंधणगं करेति करेत्ता जेणेव महचंदे राया तेणेव उवागच्छति उवागच्छित्ता करयल० जाव एवं वयासी--एवं खलु सामी ! सगडे दारए मम अंतेपुरंसि अवरद्धे, तते णं से महचंदे राया सुसेणं अमच्चं एवं वयासी-तुमं चेव णं देवाणुप्पिया ! सगडस्स दारगस्स दंडं वत्तेहि, तए णं से सुसेणे अमच्चे महचंदेणं रन्ना अब्भणुन्नाए समाणे सगडं दारयं सुदरिसणं च गणियं एएणं विहाणेणं वज्झं आणवेति , तं एवं खलु गोयमा ! सगडे दारगे पोरा पुराणाणं० पच्चणुब्भवमाणे विहरति । ( सू० २२ । ) सगडे णं भंते ! दारए कालगए कहिं गच्छिहिति ? कहिं उववज्जिहिइ ?, सगडे णं दारए गोयमा ! सत्तावण्णं वासाइं परमाउयं पालइत्ता अजेव तिभागावसेसे दिवसे एगं महं अओमयं तत्तसमजोइभूयं इत्थिपडिमं अवयासाविते समाणे कालमासे कालं किच्चा इमीसे रयणप्पभाए पुढवीए णेरइयत्ताए उववज्जिहिति, से णं तता अणंतरं उव्वट्टित्ता रायगिहे णगरे मातंगकुलंसि जुगलत्ताए पच्चायाहिति, तते णं तस्स दारगस्स अम्मापियरो णिवत्तवारसगस्स इमं एयारूवं गोणणं नामधेजं करिस्संति, तं होऊणं दारगं सगडे नामेणं होऊणं दारिया सुदरिसणा नामेणं, तते णं से सगडे दारए उम्मुक्कबालभावे जोव्वणगमणुपत्ते० भविस्सइ, तए णं सा सुदरिसणा वि दारिया उम्मुक्कबालभावा ( विण्णय ) जोव्वणगमणुप्पत्ता रूवेण य जोव्वणेण य लावण्णेण य उक्किट्ठा उक्किट्ठसरीरा या वि भविस्सइ । तए णं से सगडे दारए सुदरिसणाए रूवेण य जोव्वणेण य लावण्णेण य मुच्छिए सुदरिसणाए सद्धिं उरालाइं भोगभोगाइं भुंजमाणे विहरिस्सति । तते णं से सगडे दारए अन्नया कयाइं सयमेव कूडगाहित्तं उवसंपज्जित्ता णं विहरिस्सति । तते णं से सगडे दारए कूडगाहे भविस्सइ अहम्मिए० जाव दुप्पडियाणंदे एयकम्मे० सुबहुं पावकम्मं समज्जिणित्ता कालमासे कालं किच्चा इमीसे रयणप्पभाए पुढवीए णेरइयत्ताए उववण्णे, संसारो तहेव० जाव पुढवीए, से णं ततो अणंतरं उव्वट्टित्ता वाणारसीए नयरीए मच्छत्ताए उववज्जिहिति, से णं तत्थ णं मच्छबंधिएहिं वहिए तत्थेव वाणारसीए नयरीए सेट्ठिकुलंसि पुत्तत्ताए पच्चायाहिति । बोहिं बुज्झे० पव्व० सोहम्मे कप्पे महाविदेहे वासे सिज्झिहिति निक्खेवो दुहविवागाणं । ( सू०-२३ ) विपा० १ श्रु० ४ अ० ।

स्वकृत-त्रि० । अनेकजन्मोपात्त आत्मकृते कर्मणि, आचा० १ श्रु० ३ अ० ४ उ० ।

सगडब्भि-स्वकृतभिद्-त्रि० । स्वकृतकर्मणां भेत्तरि आ-चा० । " आयाणं सगडब्भि " आदीयते गृह्यते आत्मप्रदेशैः सह श्लिष्यते अष्टप्रकारं कर्म येन तदादानं हिंसाद्याश्रवद्वारमष्टादशपापस्थानरूपं वा तत्स्थितेर्निमित्तत्वात्, कषाया वा आदानं तन्निरोद्धा स्वकृतभिद्भवति । स्वकृतमनेकजन्मोपात्तं कर्म भिनत्तीति स्वकृतभित्, यो ह्यादानं कर्मणां कषायादि निरुणद्धि सोऽपूर्वकर्मप्रतिषेधप्रवेशः स्वकृतकर्मणां भेत्ता भवतीति भावः । आचा० १ श्रु० ३ अ० ४ उ० ।

सगडमुह-शकटमुख-न० । पुरिमतालनगरसमीपवने, आ० म० १ अ० । आ० चू० ।

सगडविहिपरिमाण-शकटविधिपरिमाण-न० । इयद्भिरेव शकटैर्मया गन्तव्यमिति परिमाणकरणे, उपा० १ अ० । (' आणंद ' शब्दे द्वितीयभागे १०६ पृष्ठे सूत्रं गतम् । )

सगडवूह-शकटव्यूह-न० । शकटाकृतिर्सैन्यरचनायाम्, ज्ञा० १ श्रु० १ अ० । जं० । औ० ।

सगडाल--शकटाल-पुं० । स्थूलभद्रस्वामिपितरि नन्दराजमन्त्रिणि, आव० ४ अ० । कल्प० । नि० । आ० क० । वृ० ।

सगडालनंदण-शकटालनन्दन-पुं० । शकटालपुत्रे स्थूलभद्रस्वामिनि, कल्प० २ अधि० ८ क्षण । आ० चू० । ' ( थूलभद्द ' शब्दे चतुर्थभागेऽस्य वर्णनम् २४१५ पृष्ठे उक्तम् । )

भूमिसूरितिलकैरपि श्रिया,
पूरितैर्विजयसिंहसूरिभिः ॥ १९ ॥
धामभास्वदधिकं निरामयं,
रामणीयकमपि प्रमृत्वरम् ।
नाम कामकलशातिशायिना,
मिष्टपूर्भिषु यदीयमञ्चति ॥ २० ॥
यैरुपेत्य विदुषां सतीर्थ्यतां,
स्फीतजीतविजयाभिधानताम् ।
धर्मकर्म विदधे जयन्ति ते,
श्रीनयादिविजयाभिधा बुधाः ॥ २१ ॥
उद्यतैरहमपि प्रसद्य तै-
स्तर्कतन्त्रमधिकाशि पाठितः ।
एष तेषु धुरि लेख्यतां ययौ,
सद्गुणस्तु जगतां सतामपि ॥ २२ ॥
येषु येषु तदनुस्मृतिर्भवे-
त्तेषु धावति च दर्शनेषु धीः ।
यत्र यत्र मरुदेति लभ्यते,
तत्र तत्र खलु पुष्पसौरभम् ॥ २३ ॥
तद्गुणैर्मुकुलितं रवेः करैः,
शास्त्रपद्ममिह मन्मनोह्रदात् ।
उल्लसत्नयपरागसंगतं ,
सेव्यते सुजनषट्पदव्रजैः ॥ २४ ॥
निर्गुणो बहुगुणैर्विराजितां
स्तान् गुरूनुपकरोमि कैर्गुणैः ।
वारिदस्य ददतो हि जीवनं,
किं ददातु वत चातकार्भकः ॥ २५ ॥
प्रस्तुतश्रमसमर्थितैर्नयै-
र्योग्यदानफलितैस्तु तद्यशः ।
यत्प्रसर्पति सतामनुग्रहा—
देतदेव मम चेतसो मुदे ॥ २६ ॥
आसते जगति सज्जनाः शतं ,
तैरुपैमि नु समं कमञ्जसा ।
किं न सन्ति गिरयः परः शता ,
मेरुरेव तु बिभर्तु मेदिनीम् ॥ २७ ॥
तत्पदाम्बुरुहषट्पदः स च,
ग्रन्थमेनमपि मुग्धधीर्व्यधाम्
यस्य भाग्यनिलयोऽजनि श्रियां,
सद्म पद्मविजयः सहोदरः ॥ २८ ॥
मत्त एव मृदुबुद्धयश्च ये ,
तेऽवतोऽप्युपकृतिश्च भाविनी ।
किं च बालवचनानुभाषणा-
नुस्मृतिः परमबोधशालिनाम् ॥ २९ ॥
अत्र पद्यमपि पाङ्क्तिकं क्वचि—
द्वर्तते च परिवर्तितं क्वचित् ।
स्वान्ययोः स्मरणमात्रमुद्दिशं-
स्तत्र नैव तु जनोऽपराध्यति ॥ ३० ॥
ख्यातिमेष्यति परामयं पुनः,
सज्जनैरनुगृहीत एव च ।
किं न शङ्करशिरोविवासतो ,
निम्नगा सुविदिता सुरापगा ॥ ३१ ॥

यत्र स्याद्वादविद्या परमततिमिरध्वान्तसूर्यांशुधारा,
निस्ताराजन्मसिन्धोःशिवपदपदवीं प्राणिनो यान्ति यस्मात्।
अस्माकं किं च यस्माद्भवति शमरसैर्नित्यमाकण्ठतृप्ति,
जैनेन्द्रं शासनं तद्विलसति परमाऽऽनन्दकन्दाम्बुवाहः ॥ ३२ ॥ द्वा० ३२ द्वा० ।

सज्जमरण–सद्योमरण–न० । तात्कालिकमरणे, आव० ४ अ०।

सज्जमाण–सज्जमान–त्रि० । सङ्गं कुर्वति, सूत्र० १ श्रु० १ अ० । आसक्तिं कुर्वति, सूत्र० १ श्रु० ७ अ० । नि० चू० । "सज्जमाणेहि विणिग्घायमाणाहिं" आचा० २ श्रु० ३ चू० ।

सज्जम्मदरिद्द–सज्जन्मदरिद्र–पुं० । आजन्मदरिद्रे, महा०२ चू० ।

सज्जा–शय्या–स्त्री० । शेरतेऽस्यामिति शय्या । प्रव० १२१ द्वार । वसतौ, आव० ४ अ० । शयने, स्था० ५ ठा० २ उ० । गृहशालादिरूपायां वसतौ, स० २० सम० । प्रव० ।

संज्ञा–स्त्री० । "ज्ञो ञः" ॥८। २ । ८३ ॥ अनेनात्र सम्मिलितस्य अकारस्य वैकल्पिको लुक् । सज्जा । सण्णा । ज्ञाने, प्रा० २ पाद ।

सज्जिय–सज्जित–त्रि० । निष्पादिते, जी० ३ प्रति ४ अधि० । वितानिते, औ० ।

सज्जोग–सद्योग–पुं० । सद्धर्मपरायणे, षो० ६ विव० ।

सज्जोगविग्घवज्जणया–सद्योगविघ्नवर्जनता–स्त्री०। सन्तश्च ते योगाश्च धर्मव्यापाराः स्वाध्यायध्यानादयस्तेषु विघ्न उपरोधो विघातस्तस्य वर्जना । सद्योगापरिहारे,पञ्चा०५ विव०। पं०।

सज्जोगावंचग–सद्योगावञ्चक–पुं० । " सद्भिः कल्याणसम्पन्नै-र्दर्शनादपि पावनैः।तथाऽऽत्मनो योग,आद्यो यञ्चक उच्यते ॥१॥" इत्युक्तलक्षणे प्रवञ्चकयोगे, षो० ६ विव० ।

सज्झ–साध्य–त्रि० । "साध्वस–ध्य–ह्यां झः ॥ ८ । २६ ॥ इति ध्यस्य झः । सज्झ । प्रा० । शक्ये, पिं० । निवर्त्यस्वभावे,आ० म० १ अ० । अनुमानतः साध्ये,रत्ना० ३परि०। (अस्यान्या सर्वा वक्तव्यता ' हेउ' शब्दे ऽस्मिन्नेव भागे वक्ष्यते । )

सज्झंतिय-साद्यान्तिक-पुं०—ब्रह्मचारिणि, बृ० ४ उ० ।

सज्झंतिया-साद्यान्तिका-स्त्री० । भगिन्याम् , व्य० ३ उ० ।

सज्झब्भराग-सन्ध्याभ्रराग-पुं० । वर्षासु सन्ध्यासमयभाविनि अभ्ररागे, रा० ।

सज्झय-सध्वज-पुं० । कल्पपाले, बृ० ५ उ० ।

सज्झवयणणिद्देस-साध्यवचननिर्देश-पुं० । साध्यत इति साध्यम् ,उच्यत इति वचनम् अर्थः,यस्मात्स एवोच्यते।साध्यं च तद्वचनं च साध्यवचनं साध्यार्थ इत्यर्थस्तस्य निर्देशः-प्रतिज्ञा । अनुमानकोटौ प्रतिज्ञावचने, दश० १ अ० ।

सज्झस-साध्वस-न० ।"साध्वस-ध्य-ह्यां झः" ॥८।२।२६॥ इति संयुक्तस्य ध्यस्य झः । सज्झसं । भये , प्रा० २ पाद ।

सज्झाइय-स्वाध्यायिक-पुं० । अध्ययनम्-अध्यायः, शोभनोऽध्यायः स्वाध्यायः स एव स्वाध्यायिकः । स्वाध्याये ,आव० ४ अ० ।

सज्झाण-सद्ध्यान-न० । शोभनध्याने , पो० १ विव० ।

सज्झाय-स्वाध्याय-पुं०।अध्ययनम्-अध्यायः,शोभनोऽध्यायः स्वाध्यायः, स एव स्वाध्यायः । आव० ४ अ०। सुष्ठु आ-मर्यादया अधीयते इति स्वाध्यायः । स्था० २ ठा० २ उ० । सुष्ठु आ—मर्यादया—कालवेलापरिहारेण पौरुष्यपेक्षया वा अध्यायः—अध्ययनं स्वाध्यायः । ध० ३ अधि० ।"साध्वस-ध्य-ह्यां झः" ॥ ८ । २ । २६ ॥ इति ध्यस्य झः । प्रा० । अणुव्रतविद्याविस्मरणे नमस्कारपरावर्त्तने , ध० २ अधि० । अधीतगुणने, प्रश्न० १ संव० द्वार । सूत्रपौरुष्याम् , आव० ४ अ० ।

अधुना स्वाध्यायमाह—

यत्तु खलु वाचनादि-रासेवनमत्र भवति विधिपूर्वम् ।
धर्मकथान्तं क्रमश-स्तत्स्वाध्यायो विनिर्दिष्टः ॥३॥

यत्तु—यत्पुनः खलुशब्दो वाक्यालङ्कारे, वाचनादिर्वाचना-प्रश्नानुप्रेक्षादिरासेवनमभिव्याप्त्या मर्यादया वा प्रवचनाज्ञया सेवनं करणमत्र प्रक्रमे भवति—जायते । विधिपूर्वं-विधिमूलं धर्मकथान्तं-धर्मकथाऽवसानं क्रमशः—क्रमेण तदासेवने स्वाध्यायोऽपि पूर्वोक्तनिर्वचनो विनिर्दिष्टः—कथित इति । षो० १३ विव० । " बारसंगो जिणक्खाओ, सज्झाओ कहिओ बुहे । तं उवइसंति जम्हा , उवज्झाया तेण वुच्चंति " ॥ ३१९७ ॥ विशे० । ( व्याख्यातैषा गाथा ' उवज्झाय ' शब्दे द्वितीयभागे ८८२ पृष्ठे । )

स्वाध्यायस्य भेदानाह—

से किं तं सज्झाए ?, सज्झाए पंचविहे पण्णत्ते,तं जहा-वायणा पडिपुच्छा परिअट्टणा अणुप्पेहा धम्मकहा । से तं सज्झाए । सू० २० ) औ० ।

' पंचविहे ' इत्यादि सुगमम् , नवरं शोभनम् आ—मर्यादया अध्ययनं—श्रुतस्याधिकमनुसरणं स्वाध्यायः, तत्र वाचना शिष्यस्तं प्रति गुरोः प्रयोजकभावो वाचना पाठनामित्यर्थः, गृहीतवाचनेनापि संशयाद्युत्पत्तौ पुनः प्रष्टव्यमिति पूर्वाधीतस्य सूत्रादेः शङ्कितादौ प्रश्नः प्रच्छनमिति , प्रच्छनाविशोधितस्य सूत्रस्य मा भूद्विस्मरणमिति परिवर्त्तना, सूत्रस्य गुणनमित्यर्थः । सूत्रवदर्थेऽपि सम्भवति विस्मरणमतः सोऽपि परिभावनीय इत्यनुप्रेक्षणमनुप्रेक्षा , चिन्तनिकेत्यर्थः । एवमभ्यस्तश्रुतेन धर्मकथा विधेयेति , धर्मस्य-श्रुतरूपस्य कथा-व्याख्या धर्मकथेति । स्था० ५ ठा० ३ उ० । औ० । ( पञ्चविधस्वाध्यायः ' पडिक्कमण ' शब्दे पञ्चमभागे २६६ पृष्ठे व्याख्यातः । ) ( स्वाध्यायार्थं कालवेलाग्रहणम् 'जोगविहि' शब्दे चतुर्थभागे १६४३ पृष्ठे उक्तम् ।)

अस्वाध्यायविषयमाह—

एसो उ असज्झाओ,तव्वज्जिउ(स)ज्झाउ तत्थिमा मेरा ।
कालपडिलेहणाए, गंडगमरुएहिँ दिट्ठंतो ॥१३६१॥

एसो संयमघाताइओ पंचविहो असज्झाओ भणिओ । तेहिं चेव पंचहिं वज्जिओ सज्झाओ भवति । ' तत्थ ' त्ति-तम्मि सज्झायकाले इमा-वक्ष्यमाणा ' मेर ' त्ति-सामाचारी—पडिक्कमित्तु जाव वेला न भवति ताव कालपडिलेहणाए कयाए गहणकाले पत्ते गंडगदिट्ठंतो भविस्सइ । गहिए सुद्धे काले पट्ठवणवेलाए मरुयगदिट्ठंतो भविस्सति त्ति गाथार्थः ।

स्याद् बुद्धिः-किमर्थं कालग्रहणम् ? । अत्रोच्यते—

पंचविह असज्झाय-स्स जाणणट्ठाए पेहए कालं ।
चरिमा चउभागवसे-सियाइभूमिं तओ पेहे ॥१३६२॥

पञ्चविधः संयमघातादिकोऽस्वाध्यायः ; तत्परिज्ञानार्थं प्रेक्षते कालं-कालवेलां निरूपयतीत्यर्थः । कालो निरूपणीयः , कालनिरूपणमन्तरेण न ज्ञायते पञ्चविधसंयमघातादिकम्—" जइ अग्घेणं करेंति ता चउलहुगा , तम्हा कालपडिलेहणाए इमा सामाचारी—दिवसचरिमपोरिसीए चउभागावसेसाए कालग्गहणभूमिओ ततो पडिलेहियव्वा , अहवा-तओ उच्चारपासवणकालभूमी य " त्ति गाथार्थः ।

अहियासियाइँ अंतो, आसन्ने चेव मज्झे दूरे य ।
तिन्नेव अणहियासी,अंतो छ छच्च बाहिरओ ॥१३६३॥

' अंतो ' त्ति—निवेसणस्स तिन्नि उच्चारअहियासियथंडिले आसण्णे मज्झे दूरे य पडिलेहइ । अणहियासियाथंडिले वि अंतो एवं चेव तिन्नि पडिलेहेति । एवं अंतो थंडिल्ला छ, बाहिं पि निवेसणस्स एवं चेव छ भवंति । एत्थ अहियासिया दूरयरे अणहियासिया आसन्नयरे कायव्वा ।

एमेव य पासवणे, बारस चउवीसतिं तु पेहेत्ता ।
कालस्स य तिन्नि भवे,अह सूरो अत्थमुवयाई ।१३६४।

पासवणे एएणेव कमेण बारस एवं चउवीसं अतुरियमसंभंतं उवउत्तो पडिलेहत्ता पच्छा तिन्नि कालग्गहणथंडिले पडिलेहेति । जहण्णेणं हत्थंतरिए, ' अह ' त्ति-अनंतरं थंडिलपडिलेहा जोगाणंतरमेव सूरो अत्थमेति, ततो आवस्सगं करेइ ।

तस्सिमो विही—

अह पुण निव्वाघाओ, आवासं तो करेंति सव्वेऽवि ।
सड्ढाइकहणवाघा-यया‍इ पच्छा गुरू ठंति ॥ १३६५ ॥

अथस्यानन्तर्यं, सूरत्थमणाणंतरमेव आवस्सयं करेंति । पुनर्विशेषयति, दुविहमावस्सगकरणं विसेसेइ—निव्वाघायं, वाघाइमं च । जदि निव्वाघायं ततो सव्वे गुरुसहिया आवस्सयं करेंति । अह गुरू सड्ढेसु धम्मं कहेंति तो आवस्सगस्स साहूहिं सह करणिज्जस्स वाघाओ भवइ । जम्मि या काले तं करणिज्जं तं-हासेंतस्स वाघाओ भण्णइ तओ गुरू निसिज्जहरो य पच्छा चरित्तातियारजाणणट्ठा काउस्सग्गं ठाहिंति ।

सेसा उ जहासत्तिं, आपुच्छित्ताणँ ठंति सट्ठाणे ।
सुत्तत्थकरणहेउं, आयरिएँ ठियम्मि देवसियं ॥१३६६॥

सेसा साहू गुरुं आपुच्छित्ता गुरुणस्स मग्गओ आसन्ने दूरे आधाराइणियाए जं जस्स ठाणं तं सट्ठाणं । तत्थ पडिक्कमंताणं इमा ठवणा । गुरू पच्छा ठायंतो मज्झेण गंतुं सट्ठाणे ठायइ, जे वामओ ते अणंतरसव्वेण गंतुं सट्ठाणे ठायन्ति । जे दाहिणओ अणंतरसव्वेण गंतुं ठायंति, तं च अणागयं ठायंति सुत्तत्थसरणहेउं । तत्थ य पुव्वामेव ठायंता 'करेमि भंते ! सामाइयमिति' सुत्तं करेंति, पच्छा जाहे गुरु सामाइयं करेत्ता वोसिरामि त्ति भणित्ता ठिया उस्सग्गे, ताहे देवसियाइयारे चिंतेंति । अन्ने भणंति–जाहे गुरू सामाइयं करेंति ताहे पुव्वट्ठिया वि तं सामाइयं करेंति सेसं कंठं ।

जो हुज्ज उ असमत्थो, बालो वुड्ढो गिलाणपरितंतो ।
सो विकहाइविरहिओ, अच्छिज्जा निज्जरापेही ॥१३६७॥

परिस्संता पाहुणगादि सो वि सज्झायज्झाणपरो अच्छंति । जाहे गुरू ठंति ताहे ते वि बालादिया ठायंति एएण विहिणा ।

आवासगं तु काउं, जिणोवइट्ठं गुरूवएसेणं ।
तिन्नि थुई पडिलेहा, कालस्स इमा विही तत्थ ॥१३६८

जिणेहिं गणहराणं उवइट्ठं, ततो परंपरएण जाव अम्हं गुरूवएसेण आगयं. तं काउं आवस्सयं अणंतरं तिन्नि थुतीओ करेंति । अहवा—एगा एगसिलोगिया, बितिया बिसिलोइया, ततिया (त) तियसिलोगिया । तेसिं समत्तीए कालपडिलेहणविही कायव्वा ।

अच्छउ ताव विही, इमो कालभेओ ताव वुच्चइ—

दुविहो उ होइ कालो, वाघाइम एतरो य नायव्वो ।
वाघातो घंघसालाए, घट्टणं सड्ढकहणं वा ॥१३६९॥

पुव्वद्धं कंठं । पच्छद्धस्स व्याख्या—जा अतिरित्ता वसही कप्पडिगसेविया य सा घंघसाला । ताए अतिंताणं घट्टणपडणाइ वाघायदोसो, सड्ढकहणेण य वेलाइक्कमणदोसो त्ति । एवमादि ।

वाघाए तइओ सिं, दिज्जइ तस्सेव ते निवेएंति ।
इयरे पुच्छंति दुवे, जोगं कालस्स घेच्छामो ॥१३७०॥

तम्मि वाघातिमे ततिएण जे कालपडियरगा ते निग्गच्छंति । तेसिं ततिओ उवज्झायादि दिज्जइ । ते कालग्गाहिणो आपुच्छणसंदिसावणकालपवेयणं च सव्वं तस्सेव करेंति । एत्थ गंडगादिट्ठंतो न भवइ । इयरे उवउत्ता चिट्ठंति । सुद्धे काले तत्थेव उवज्झायस्स पवेयंति ताहे दंडधरो बाहिं कालपडिचरओ चिट्ठइ । इयरे दुइगा वि अंतो पविसंति, ताहे सीतिदंडधरो अतीति । तए पट्ठविए सज्झायं करेंति ।

निव्वाघाए पच्छद्धं. अस्यार्थः—

आपुच्छण किइकम्मं, आवासिय पडियरिय वाघाते ।
इंदियदिसा य तारा, वासमसज्झाइयं चेव ॥१३७१॥

निव्वाघाते दोन्नि जणा गुरुं आपुच्छंति-कालं घेच्छामो । गुरुणा अणुण्णाया 'कितिकम्मं' ति-वंदणं काउं दंडगं घेत्तुं उवउत्ता आवासियमासज्जं करेन्ता पमज्जन्ता य निग्गच्छंति । अंतरे य जइ पक्खलंति पडंति वा वत्थादि वा विलग्गति कितिकम्मादि किंचि वितहं करेंति ततो कालवाघाओ । इमा कालभूमीपडियरणविही । इंदिएहिं उवउत्ता पडियरंति । 'दिस' त्ति—जत्थ च चउरो वि दिसा दीसंति । उडुम्मि जइ तिन्नि तारा दीसंति । जइ पुण न उवउत्ता अणिट्ठो वा इंदियविसओ 'दिस' त्ति दिसामोहो दिसाओ वा तारगाओ वा न दीसंति वासं वा पडइ । असज्झाइयं वा जायं तो कालवहो त्ति गाथार्थः ।

किं च—

जइ पुण गच्छंताणं, छीयं जोइं ततो नियत्तंति ।
निव्वाघाए दोन्नि उ, अच्छंति दिसा निरिक्खंता१३७२

तेसिं चेव गुरुसमीवा कालभूमी गच्छंताणं अंतरे जइ छीतं जोतिं वा फुसइ तो नियत्तंति । एवमाइकारणेहि अव्वाहया ते दो वि निव्वाघाएण कालभूमिं गया । संडासगादिविहीए पमज्जित्ता निसन्ना उद्धट्ठिया वा एक्केक्का दो दिसाओ निरिक्खंतो अच्छइ त्ति गाथार्थः ।

किं च-तत्थ कालभूमीए ठिया—

सज्झायमचिंतंता, कणगं दट्ठूण पडिनियत्तंति ।
पत्ते य दंडधारी, मा बोलं गंडए उवमा ॥ १३७३ ॥

तत्थ सज्झायं (अ) करेंता अच्छन्ति, कालवेलं च पडियरेइ । जइ गिम्हे तिन्नि सिसिरे पंच वासासु सत्त कणगाणि (पडंति) पेच्छेज्ज तहा विनियत्तंति । अह निव्वाघाएणं पत्ता कालग्गहणवेला ताहे जो दंडधारी सो अंतो पविसित्ता भणइ—बहुपडिपुण्णा कालवेला मा बोलं करेह, एत्थ गंडगोवमा पुव्वभणिया कज्जइ त्ति गाथार्थः ।

आघोसिए बहूहिं, सुयम्मि सेसेसु निवडए दंडो ।
अह तं बहूहिं न सुयं, दंडिज्जइ गंडओ ताहे ॥१३७४॥

जहा लोए गामादिदंडगेण आघोसिए बहूहिं सुए थेवेहिं असुए गामादिठिउं अकरेंतस्स दंडो भवति । बहूहिं असुए गंडगस्स दंडो भवति । तहा इहं पि उवसंहारियव्वं । ततो-दंडधरे निग्गए कालग्गाही उट्ठइ त्ति गाथार्थः ।

सो य इमरिसो-

पियधम्मो दढधम्मो, संविग्गो चेवऽवज्जभीरू य ।

खमएणो य अभीरू, कालं पडिलेहए साहू ॥१३७५॥

पियधम्मो दढधम्मो य एत्थ चउभंगो । तत्थिमो पढमभंगो । निच्चं संसारभउव्विग्गो संविग्गो । वज्जं-पावं तस्स भीरू-जहा तं न भवति तहा जयइ । एत्थ कालविहीजाणगो खमगो । सत्तवंतो अभीरू । एरिसो साहू कालपडिलेहओ । प्रतिजागरकश्च ग्राहकश्चेति गाथार्थः ।

ते य तं वेलं पडियरंता इमेरिसं कालं तुलेंति—

कालो संझाय तहा, दो वि समप्पंति जह समं चेव ।
तह तं तुलेंति कालं, चरिमं च दिसं असज्झाए ॥१३७६॥

संझाए धरेंतीए कालग्गहणमाढत्तं तं कालग्गहणं सज्झाए य जं समं एते दो वि समं जहा समप्पंति तहा तं कालवेलं तुलेंति । अहवा-तिसु उत्तरादियासु संझाए गिण्हंति । 'चरिमं' ति-अवराए अवगयसंझाए वि गेण्हंति तहावि न दोसो त्ति गाथार्थः । आव० ४ अ० ।

ततः कालस्य ग्रहणवेला वर्त्तते न वा ? इति, तत्र च-कालवेलानिरूपणं एव निर्धारिति वक्ष्यमाणः—

दुविहो य होइ कालो, वाघातिम एयरो य नायव्वो ।
वाघाओ घंघसालाएँ, घट्टणं सड्ढकहणं वा ॥ ६३९ ॥

द्विविधो भवति कालो—व्याघातकालः, इतरश्च—अव्याघातकालः । तत्र व्याघातकालं प्रतिपादयन्नाह—व्याघातः घट्टशालायाम्—अनाथमण्डपे दीर्घे, घट्टना—परस्परेण वैदेशिकैर्वा स्तम्भैर्वा सह निर्गच्छतः प्रविशतो वा तादृशो व्याघातकालः । तथा श्राद्धकादीनां यत्राचार्यो धर्मकथां करोति सोऽपि व्याघातकालः । न तत्र कालग्रहणं भवति नापि कलावेलानिरूपणार्थं प्रच्छनं भवति ।

वाघाते तइओ सिं, दिज्जइ तस्सेव ते निवेयंति ।
निव्वाघाते दुन्नि उ, पुच्छंती काल घेच्छामो ॥ ६४० ॥

एव घट्टशालायां व्याघाते सति तृतीयस्तयोः—कालग्राहिणोः उपाध्यायादिर्दीयते येन तस्यैवाग्रतो बाह्यत एव निवेदयन्ति सांदिशापयन्ति च । अथ निर्व्याघातं भवति-न कश्चिद् घट्टशालायां धर्मकथादिर्वा कालव्याघातः वैदेशिकादिव्याघातो वा, ततश्च निर्व्याघाते सति द्वावेव निर्गच्छतः, एकः कालग्राहकः अपरो दण्डधारी, पुनश्च तौ पृच्छतः । यदुत कालं गृह्णीवः-वेलां निरूपयाव इत्यर्थः, तयोश्च निर्गच्छतो यदेते व्याघाता भवन्ति ततश्च निवर्त्तन्ते-न गृह्णन्ति कालम् ।

के च ते व्याघाताः ?,—

आपुच्छण किइकम्मं, आवस्सियखलियपडियवाघाओ ।
इंदियदिसा य तारा, वासमसज्झाइयं चेव ॥ ६४१ ॥

जइ पुण वच्चंताणं, छीयं जोइं च तो नियत्तंति ।
निव्वाघाते दोन्नि उ, अच्छंति दिसा निरिक्खंता ॥६४२॥

गोणादि कालभूमिए, होज्जा संसप्पगा व उट्ठेज्जा ।
कविहसियवासविज्जु- क्कगज्जिए वावि उवघातो ॥६४३॥

आपृच्छना नाम-आपुच्छित्ता गच्छन्ति, दंडगं गहाय मत्थएण वंदामि खमासमणो कालस्स वेलं निरूवेमो । एवं च यदि न पृच्छन्ति ततो व्याघातो भवति-न ग्राह्यः कालः । अथाविनयेन वा पृच्छन्ति तथाऽपि व्याघात एव । कृतिकर्म च-वन्दनं यदि न कुर्वन्ति, अविनयेन वा कुर्वन्ति, आवश्यिकां च यदि न करोति, अविनयेन वा करोति, स्खलनं वा गच्छतो यदि स्तम्भादौ भवति, पतनं वा तयोरन्यतमस्य यदि भवति, एवमभिर्व्याघातो भवति । तथा 'इंदिय' त्ति-श्रवणेन्द्रियादीनामिन्द्रियाणां ये विषयास्ते अननुकूला भवन्ति ततो न गृह्यते । एतदुक्तं भवति—यदि छिन्नं भिन्नं धीत्यवमादि शृण्वन्ति शब्दं ततो निवर्त्तन्ते । एवं गन्धश्चाशुभो यदि भवति, यत्र गन्धस्तत्र रस इति, विरूपं पश्यन्ति रूपं किञ्चिद् एवं सर्वत्र योजनीयं ततो निर्गच्छन्ति, तथा दिग्मोहश्च यदि भवति ततो न गृह्यते । तारकाश्च यदि पतन्ति, वर्षणं वा यदि भवति; तत एभिरनन्तरोक्तैर्व्याघातैः कालो न गृह्यते । अस्वाध्यायिकं च यदि भवति, तथा यदि पुनर्व्रजतां क्षुतं ज्योतिर्वा—अग्निः उद्द्योतो वा भवति ततो निवर्त्तन्ते । यदा तु पुनरुक्तलक्षणो व्याघातो न भवति, तदा निर्व्याघाते सति द्वावेव तिष्ठतो दिशो निरूपयन्तौ क्षणमात्रम् । तथा एभिश्च कालभूमौ गतानामुपघातो भवति । यदि तत्र कालमण्डलके गौरुपविष्टः, आदिग्रहणाद्-महिष्यादिर्वा उपविष्टो भवति ततो व्याघातः । कदाचिद्वा तस्यां कालभूमौ संसर्पगाः पिपीलिकादय उत्तिष्ठेरन् ततश्च व्याघातः । कदाचिद्वा कपिहसितं-विकृतवानरमुखहसितं भवति । अथवा-कपिहसितम्-'उवरयं वा दीसइ' जलं वा विद्युत् वा भवति, उल्कापातो वा भवति, गर्जितध्वनिर्वा श्रूयते, एभिः सर्वैर्व्याघातः कालस्य, न गृह्यत इत्यर्थः ।

सज्झायमचिंतंता, कणगं दट्ठूण तो नियत्तंति ।
वेलाएँ दंडधारी, मा बोलं गंडए उवमा ॥ ६४४ ॥

एवं ते कालवेलानिरूपणार्थं निर्गताः स्वाध्यायमकुर्वाणा एकाग्राः कालवेला निरूपयन्ति । अथ तत्र कनकं पश्यन्ति ततः प्रतिनिवर्त्तन्ते । कनकपरिमाणं च वक्ष्यति—"तिपंचसत्त सिसिरगिम्हवास" इत्येवमादिना । अथ तत्र वर्त्तते तदा कालग्रहणवेलायां जातायां दण्डधारी प्रविश्य गुरुसमीपे कथयति, यदुत कालग्रहणवेला वर्त्तते मा बोलं कुरुत अल्पशब्दैर्वाहितैश्च भवितव्यम् । अत्र च गण्डकदृष्टान्तः, यथा हि गण्डकः कस्मिंश्चित्कारणे आपन्ने उत्कुरुटिकायामारुह्य घोषयति ग्रामे इदं प्रत्यूषसि कर्त्तव्यम् । एवमसावपि दण्डधारी भणति—यदुत कालग्रहणवेला वर्त्तते ततश्च भवद्भिरपि गर्जितादिषूपयुक्तैर्भवितव्यमिति ।

आघोसिए बहुहिं, सुयम्मि सेसेसु निवडई दंडो ।
अह तं बहुहिं न सुयं, दंडिज्जइ गंडओ ताहे ॥ ६४५॥

एवमाघोषिते सति दण्डधारिणा बहुभिश्च श्रुतं शेषैश्च स्तोकैस्तैर्न श्रुतम्, ततश्च तेषामुपरि दण्डो निपतति-सूत्रार्थकरणं नानुज्ञायते । अथेदृशं तदा घोषितं यद्बहुभिर्न श्रुतं स्तोकैः श्रुतं ततश्च तस्यैव दण्डधारिणो निपतति-तस्यैव स्वाध्यायनिरोधः क्रियते । कथं गण्डकस्येव ?, यथा

गण्डकेनाघोषिते बहुभिर्ग्रामीणकैः श्रुते सति यैः स्तोकैर्न श्रुतं ते दण्ड्यन्ते, अथाघोषिते स्तोकैः श्रुतं बहुभिर्न श्रुतं ततो गण्डक एव दण्डो निपततीति ।

कालो सज्झाय तहा, दो वि समप्पंति जह समं चेव ।
तह तं तुलंति कालं, चरिमदिसं वा असज्झागं ॥६४६॥

तौ च प्रत्युपेक्षकौ कालः सन्ध्या च यथा द्वे अपि समकमेव समाप्तिं व्रजतस्तथा तं कालं तुलयतः । एतदुक्तं भवति—यथा कालसमाप्तिर्भवति सन्ध्या च समाप्तिं याति तथा तुलयतः प्रत्युपेक्षकौ । 'चरिमदिसं वा असज्झागं' ति—चरिमा—पश्चिमां दिग् असन्ध्या—विगतसन्ध्या भवति यथा कालश्च समाप्यते तथा गृह्णन्ति ।

इदानीं किंविशिष्टेन पुनः कालः प्रतिजागरणीय ? इत्यत आह-

पियधम्मो दढधम्मो, संविग्गो चेवऽवज्जभीरू य ।
खेयन्नो य अभीरू, कालं पडिलेहए साहू ॥६४७॥

प्रियः-इष्टो धर्मोऽस्येति प्रियधर्मा, तथा दृढः-स्थिरो निश्चलो धर्मो यस्य स तथा, 'संविग्गो' मोक्षसुखाभिलाषी, अवद्यभीरुः-पापभीरुः, खेदज्ञः—गीतार्थः तथा अभीरुः—सत्त्वसंपन्नः एवंविधः कालं—कालग्रहणवेलां प्रत्युपेक्षते साधुः, एवंविधः कालवेलायाः प्रतिजागरणं करोति ।

इदानीं दण्डधारिणि घोषयित्वा निर्गते पुनश्च स द्वितीयः कालग्राही कालसंदिशनार्थं गुरोः समीपं प्रविशति । कथम् ?—

आउत्तपुव्वभणिए, अणापुच्छा खलियपडियवाघाते ।
घोसंतमूढसंकिय,इंदियविसए वि अमणुन्ने ॥६४८॥

स च प्रविशन् आयुक्तः—उपयुक्तः सन् प्रविशति । एतस्मिंश्च प्रवेशने पूर्वोक्तमेव द्रष्टव्यं; यतो निर्गच्छतो यो विधिः प्रविशतोऽपि स एव विधिरित्यत आह—पूर्वभणितमेतत् । अथ त्वनापृच्छ्यैव गुरुं कालं गृह्णाति ततश्चानापृच्छ्य गृहीतस्य कालस्य, एतदुक्तं भवति—गृहीतोऽप्यसौ न भवति । तथा स्खलितस्य सतः कालव्याघातः, पतितस्य व्याघातः कालस्य । एवं संजाते सति कालो न गृह्यते । तथा प्रविष्टस्य गुरुवन्दनकाले केनचित्सह जल्पतः कालो व्याहन्यते । तथा मूढो यदि भवति आवर्त्तान् विधिविपर्यासेन ददाति तथाऽपि व्याहन्यते कालः, तथा शङ्कया न जानाति किमावर्त्ता दत्ता न वेत्यस्यामवस्थायां व्याहन्यते कालः । इन्द्रियविषयाश्च यद्यमनोज्ञा भवन्ति तथाऽपि कालो व्याहन्यते, छिन्धि भिन्धीत्येवंविधान् शब्दान् शृणोति । गन्धोऽनिष्टो यदि भवति यत्र गन्धस्तत्र रसोऽपि, विकरालं रूपं पश्यति, स्पर्शेन लेष्ट्वभिघातोऽकस्माद्भवति, एवंविधे सत्यामपि वेलायां न गृह्णाति कालम् ।

प्रविष्टश्चासौ किं करोतीत्यत आह—

निसीहिया नमोक्कार, काउस्सग्गे य पंचमंगलए ।
पुव्वाउत्ता सव्वे, पट्ठवणचउक्कनाणत्तं ॥ ६४९ ॥

प्रविशंश्च गुरुसमीपे कालसन्दिशनार्थं यदि नैषेधिकां न करोति ततः कालो व्याहन्यते । नमस्कारं करोति-'नमो खमासमणाणं', अथैवं न भणति ततः कालव्याघातो भवति । प्रासश्चैर्यापथिकाप्रत्ययं कायोत्सर्गम् अष्टोच्छ्वासं करोति, नमस्कारं च चिन्तयति, इरियावहियं च अवस्सं पडिक्कमति, जइ दूराओ जदि आसन्नओ वा आगतो, पुनरसौ नमस्कारेणोत्सारयति-पञ्चमङ्गलकेनेत्यर्थः । पुनश्च संदिशापयित्वा कालग्रहणार्थं निर्गच्छति । निर्गच्छंश्च "जदि आवस्सियं न करेइ खलति पडति वा जीयो वा अंतरे हवजा एवमादीहिं उवहम्मइ " इदानीं कालग्रहणवेलायां किं कर्त्तव्यं साधुभिः ? इत्याह-'पुव्वाउत्ता' पूर्वमेव दण्डधारिघोषणानन्तरमुपयुक्ताः सर्वे गर्जितादौ भवन्ति । उपयुक्ताश्च सन्तः कालग्रहणोत्तरकालं सर्वे स्वाध्यायप्रस्थापनं कुर्वन्ति । 'चउक्कनाणत्तं' ति-कालचतुष्कस्य यथा नानात्वं भवति तथा वक्ष्यामः, कालचतुष्कम्-एकः प्रादोषिकः, अपरोऽर्द्धरात्रिकः, अपरो वैरात्रिकः, अपरः प्राभातिकः । एतच्च भाष्यकारो वक्ष्यति ।

इदानीं कालं गृह्णतः को विधिरित्यत आह—

थोवावसेसियाए, सञ्झाए ठाइ उत्तराहुत्तो ।
चउवीसगदुमपुप्फिय-पुव्वग एक्केक्कयदिसाए ॥६५०॥

स्तोकावशेषायां सन्ध्यायां 'पुणो कालमंडलयं पमज्जित्ता' नैषेधिकां कृत्वा कालमण्डलके प्रविशति, ततश्चोत्तराभिमुखः कायोत्सर्गं करोति, तस्मिंश्च पञ्चनमस्कारमष्टोच्छ्वासं चिन्तयति । पुनश्च नमस्कारेणोत्सार्य मूक एव चतुर्विंशतिस्तवं "लोगस्सुज्जोयकरं" पठति मुखमध्ये, तथा 'दुमपुप्फियपुव्वगं' ति-द्रुमपुष्पिका-"धम्मो मंगलं पुव्वगं" ति-श्रामण्यपूर्वकं कहं नु कुज्जा सामण्णमित्यर्थः । एतच्च एकैकस्यां दिशि चतुर्विंशतिस्तवादि "सामण्णपुव्वगपज्जंतं कड्डइ, दंडधारी वि उत्तराभिमुहस्स संठियस्स वामपासे पुव्वाद्दिसाहुत्तो अग्गओ तिरिच्छं दंडगं धरेइ उद्धट्ठियओ, पुणो तस्स पुव्वाईसु दिसासु चलतस्स दंडधारी वि तहेव भमति " ।

इदानीं स गृह्णन् कालं यथैवं गृह्णाति ततो व्याहन्यते । कथमित्यत आह—

भासंतमूढसंकिय, इंदियविसए य होइ अमणुन्ने ।
बिंदू य छीयऽपरिणय,सगणे वा संकियं तिण्हं ।६५१।

भाषमाणः—ओष्ठसञ्चारेण पठन् यदि कालं गृह्णाति ततो व्याहन्यते कालः । मूढो दिशि अध्ययने वा यदि भवति ततो व्याहन्यते कालः । शङ्कितो वा-न जानाति किं मया द्रुमपुष्पिका पठिता न वेत्येवंविधायां शङ्कायां व्याहन्यते कालः । इन्द्रियविषयाश्च अमनोज्ञाः-अशोभनाः शब्दादयो यदि भवन्ति ततो व्याहन्यते कालः । 'सोइंदिए छिंद भिंदमारह विस्सरं बालाईणं रोवणं वा रूवं वा पेच्छति, पिसायाईणं बीहावणयं, गंधं य दुरभिगंधं, रसो वि तत्थेव जत्थ गंधो तत्थ रसो, फासो विट्ठलिट्ठुपहारादि ' एवमेतेष्वमनोज्ञेषु विषयेषु सत्सु व्याघातो भवति । तथा बिन्दुर्यद्युपरि पतति शरीरस्योपधेर्वा कालमण्डलके वा ततो व्याहन्यते ।

तथा क्षुतं यदि भवति ततो व्याहन्यते । 'अपरिणत' इति । कालग्रहणभावोऽपगतोऽन्यचित्तो वा जातस्ततश्च व्याहन्यते कालः । तथा शङ्कितेनापि गर्जितादिना व्याहन्यते कालः । कथम् ?, यद्येकस्य साधोर्गर्जितादिशङ्का भवति ततो न व्याहन्यते कालः, द्वयोरपि शङ्किते न भज्यते कालः, त्रयाणां तु यदि शङ्का गर्जितादिजनिता भवति ततो व्याहन्यते । तच्च स्वगणे—स्वगच्छे त्रयाणां यदि शङ्कितं भवति, न परगणे, ततो व्याहन्यते ।

इदानीमस्या एव गाथाया भाष्यकारः किञ्चिद्व्याख्यान (यत्ना) माह—

मूढो व दिसऽज्झयणे, भासंतो वाऽवि गिण्हइ न सुज्झे ।
अन्नं च दिसज्झयणं, संकंतोऽणिट्ठविसयं वा ॥३०६॥

मूढो यदा दिशि भवति अध्ययने वा तदा व्याहन्यते । भाषमाणो वा ओष्ठसञ्चारेण यदि गृह्णाति कालं ततो न शुद्ध्यति । अन्यां वा दिशं संक्रान्तो मोहात्, अध्ययनं वाऽन्यत् सङ्क्रान्त द्रुमपुष्पिकां मुक्त्वा 'सामन्नपुव्वए णमो उसगए वा तिस्नाए दक्खिणं गतो' यद्वाऽन्यां दिशं शङ्कमानः, अन्यद्वाऽध्ययनं शङ्कमानो यदा भवति तदा न शुद्ध्यति । अनिष्टे—अशोभने वा शब्दादिविषयसन्निधाने व्याहन्यते । काल, 'ततो आवस्सियं काऊण नीसरति कालमंडलाओ' एवं गृहीतेऽपि काले यदि कालमण्डलकान्निर्गच्छन्नावश्यकादि न करोति ततो व्याहन्यत एव काल इति ।

किञ्च—

जो वसंतम्मि विही, आगच्छंतम्मि होइ सो चेव ।
जं एत्थं नाणत्तं, तमहं वुच्छं समासेणं ॥ ६५२ ॥

य एव प्रथमं वसतेर्व्रजतो विधिरुक्तस्तद्यथा-" यदि कविहसियं वा उक्का वा पडति, गज्जति वा, एवमाईहिं उवघाओ गहियस्स वि कालस्स होइ, आगच्छंतस्स वसहिं ' ततश्च यो विधिर्व्रजतः कालभूमावुक्तः आगच्छतोऽपि पुनर्वसतौ स एव विधिर्भवति । यत्पुनरत्र वसतौ प्रविशतो नानात्वं—भेदस्तदहं नानात्वं वक्ष्ये समासतः—संक्षेपेण ।

इदानीं नानात्वं प्रतिपादयन्नाह—

निसीहिया नमुक्कारं, आसज्जावडणपडणजोइक्खे ।
अपमज्जियभीए वा, छीए छिन्नेव कालवहो ॥ ६५३ ॥

कालं गृहीत्वा गुरुसकाशे प्रविशन् यदि नैषेधिकां न करोति ततः कालव्याघातः, तथा ' नमोक्कारं ' नमो खमासमणाणं इत्येवं यदि न प्रविशन् भणति ततो गृहीतोऽपि कालो व्याहन्यते । तथा 'आसज्जासज्ज' इत्येवं तु यदि न करोति ततो व्याहन्यते गृहीतोऽपि । तथा साधोः कस्यचिदावडणे- अभिघटने कालो व्याहन्यते, पतने लेष्ट्वादेरात्मनो वा, ज्योतिष्कस्पर्शे वा व्याहन्यते । तथा यदि प्रमार्जयन् न प्रविशति ततश्च व्याहन्यते कालः । भीतः—त्रस्तो वा यदि भवति तथाऽपि व्याहन्यते । क्षुते वा व्याहन्यते । छिनत्ति वा-यदि मार्जारश्वादिस्तिर्यक् छिन्दन् व्रजति, ततश्चैभिरनन्तरोदितैः कालस्य वधो-भङ्गो भवतीति ।

आगम इरियावहिया, मंगल आवेयणं तु मरुनायं ।
सव्वेहि वि पट्ठविएहि, पच्छाकरणं अकरणं वा । ६५४ ।

आगत्य च गुरुसमीपमीर्यापथिकां प्रतिक्रामति । कायोत्सर्गं चाष्टोच्छ्वासं पञ्चनमस्कारं चिन्तयति, तेनैव चोत्सारयति । मङ्गलमिति पञ्चनमस्कारम् उच्यते । तत ईर्यापथिकां प्रतिक्रम्य गुरोः आवेदयति —निवेदयति कालमित्यर्थः । अत्र मरुओ बंभणो तेनेव ज्ञातं-दृष्टान्तः । तं जहा-कम्हिइ पट्टणे धिज्जाइयाणं राइणा दिन्नं, तेसिं च घोसावियं—जो सामत्थो सो गएहउ आगंतूणं भागं एत्थ, एवं हक्कारिए जो आगतो तेण लद्धो भागो, जो पुण गामाइसु गतो सो चुक्को । एवं साहू वि दंडधारिणो घोसिए जे उवउत्ता ठिया णिवेदिए य काले जेहिं सज्झाओ पट्ठविओ ताण सज्झाओ दिज्जइ । जे पुण विकहादिणा ठिया ताणं सज्झायकरणं न दिज्जइ । एतदेवाह—सर्वैः साधुभिः स्वाध्याये प्रस्थापिते सति पश्चात्तेभ्यः स्वाध्यायकरणं दीयते । ये पुनः कालग्रहणवेलायामुपयुक्ता न स्थिताः न स्वाध्यायप्रस्थापनवेलायां सन्निहिता भूतास्तेभ्यः स्वाध्यायकरणं न दीयते ।

इदानीं मरुककथानकमुपसंहरन्नाह—

सन्निहियाण वडारो, पट्ठवियपमाय नो दए कालं ।
बाहिठिए पडियरए, पविसइ ताहे व दंडधरो ॥ ६५५ ॥

सन्निहितानां धिग्जातिब्राह्मणानां 'वडारो' वण्टकः आकरणम्-आह्वानं यथासन्निहितानां, ये तु नागतास्तेषां न वण्टको—विभागो जातः । एवमत्रापि 'पट्ठविय' त्ति-स्वाध्यायप्रस्थापनं यैः कृतं तेभ्यो दीयते स्वाध्यायः । ये पुनः प्रमादिनस्तेभ्यो न दीयते काल इति । काले गृहीते स्वाध्यायो भवति । पुनश्च निवेदिते सति काले पुनर्बहिरन्यः प्रतिजागरकः प्रेष्यते । पुनश्च तत्र बहिः स्थिते प्रतिजागरके सति ततो दण्डधारी प्रविशतीति ।

पट्ठविय वंदिए य, ताहे पुच्छेइ किं सुयं भंते ! ।
ते वि य कहेंति सव्वं, जं जेण सुयं व दिट्ठं वा ॥ ६५६ ॥

पुनश्चासौ प्रस्थापितस्वाध्यायो वन्दितगुरुश्च सन् तदा साधून् पृच्छति दण्डधारी, यदुत-हे भदन्त ! भवतां मध्ये केन किं श्रुतम् ?, तेऽपि च साधवः कथयन्ति सर्वं येन श्रुतं गर्जितादि, दृष्टं वा कपिहसितादि ।

पुनश्च तत्र केषाञ्चिद्गर्जितादिशङ्का भवति ततश्च को विधिरित्यत आह—

एक्कस्स दोण्ह वा सं-कियम्मि कीरइ न कीरए तिण्हं ।
सगणम्मि संकिए पर-गणम्मि गंतुं न पुच्छंति ॥६५७॥

एकस्य गर्जितादिशङ्किते क्रियते स्वाध्यायः, द्वयोर्वा, त्रयाणां पुनर्गर्जिताद्याशङ्कायां न क्रियते स्वाध्यायः । एवं यदि स्वगणे शङ्का भवति; ततश्चैवंविधायां स्वगणे शङ्कायां सत्यां परगणे— अन्यगच्छे गत्वा न पृच्छन्ति । किं कारणम् ?

यत इह कदाचित्स कालग्राहकः साधुः रुधिरादिनाऽनायुक्त आसीत्, ततश्च देवता कालं शोधयितुं न ददाति । तत्र तु परगणे नैवम् । अथवा-परगण एव कदाचिदनायुक्तः कश्चिद्भवति इह तु नैवम् । तस्मात्परगणो न प्रमाणमिति ।

इदानीं यदुक्तमासीत् ' कालचतुष्कं नानात्वं वक्ष्यामः ' तत्प्रदर्शयन्नाह—

कालचउक्के नाणा-त्तयं तु पादोसियम्मि सव्वे वि ।
समयं पट्ठवयंती, सेसेसु समं व विसमं वा ॥ ६५८ ॥

कालानां चतुष्कं कालचतुष्कम् । तत्रैकः प्रादोषिकः, द्वितीयोऽर्धरात्रिकः, तृतीयो वैरात्रिकः, चतुर्थः प्राभातिकः काल इति । एतस्मिन् कालचतुष्के नानात्वं प्रदर्श्यते । तत्र प्रादोषिककाले सर्व एव समकं स्वाध्यायं प्रस्थापयन्ति । शेषेषु तु त्रिषु कालेषु समकम्—एककालं स्वाध्यायं प्रस्थापयन्ति विषमं वा—न युगपद्वा स्वाध्यायं प्रस्थापयन्तीति ।

इदानीं चतुर्णामपि कालादीनां कनकपतने सति यथा व्याघातो भवति तथा प्रदर्शयन्नाह—

इंदियमाउत्ताणं, हणंति कणगा उ सत्त उक्कोसं ।
वासासु य तिन्नि दिसा, उउबद्धे तारगा तिन्नि ॥६५६॥

इन्द्रियैः-श्रवणाऽऽदिभिरुपयुक्तानां घ्नन्ति-व्याघातं कुर्वन्ति कालस्य कनका उत्कृष्टेन सप्त । एतच्च वक्ष्यति । ' वासासु य तिन्नि दिसा ' त्ति-वर्षासु--वर्षाकाले प्राभातिके काले गृह्यमाणे तिसृषु दिक्षु यद्यालोकः शुद्ध्यति चक्षुषो न कुड्यादिभिरन्तरितस्ततो गृह्यत एव कालः, अन्यथा व्याघात इति । एतद्विशेषविषयं द्रष्टव्यं, शेषेषु त्रिष्वाद्येषु कालेषु चतसृष्वपि दिक्षु चक्षुष आलोको यदि शुद्ध्यति ततो गृह्यते वर्षाकाले नान्यथा । एतच्च प्रकटीकरिष्यति । 'उउबद्धे तारगा तिण्णि' त्ति-ऋतुबद्धे—शीतोष्णकालयोराद्येषु त्रिषु कालेषु यदि मेघच्छन्नेऽपि तारकात्रयं दृश्यते ततः शुद्ध्यति कालग्रहणम् । यदि पुनस्तिस्रोऽपि न दृश्यन्ते ततो न ग्राह्यः । प्राभातिकस्तु कालः ऋतुबद्धे मेघैरदृश्यमानायामप्येकस्यामपि तारकायां गृह्यते कालः । वर्षाकाले त्वेकस्यामपि तारकायामदृश्यमानायां चत्वारोऽपि काला गृह्यन्ते ।

इदानीमेनामेव गाथां भाष्यकृद् व्याख्यानयति—

कणगा हणंति कालं, तिपंचसत्तेव घिंसिसिरवासे ।
उक्का उ सरेहागा, रेहारहितो भवे कणगो ॥ ३१० ॥

कनकाः घ्नन्ति कालं त्रयः पञ्च सप्त यथासंख्येन 'घिंसिसिरवासे ' ग्रीष्मकाले त्रयः कनकाः कालं व्याघ्नन्ति, शिशिरकाले पञ्च घ्नन्ति कालं, वर्षाकाले सप्त घ्नन्ति कालम् । इदानीमुल्काकनकयोर्लक्षणं प्रतिपादयन्नाह—उल्का सरेखा भवति । एतदुक्तं भवति—निपततो ज्योतिष्पिण्डस्य रेखायुक्तस्य उल्केत्याख्या । स एव च रेखारहितो ज्योतिष्पिण्डः कनकोऽभिधीयते ।

सव्वेऽवि पढमजामे, दोन्नि उ वसभा उ आइमा जामा ।
तइओ होइ गुरूणं, चउत्थओ होइ सव्वेसिं ॥६६०॥

तस्मिंश्च प्रादोषिके काले गृहीते सति सर्व एव साधवः प्रथमयामं यावत्स्वाध्यायं कुर्वन्ति । द्वौ त्वाद्यौ यामौ वृषभाणां भवतो गीतार्थानाम् । ते हि सूत्रार्थं चिन्तयन्तस्तावत्तिष्ठन्ति यावत्प्रहरद्वयमतिक्रान्तं भवति, तृतीया च पौरुष्यवतरति । ततस्ते चैव कालं गृह्णन्ति ' अड्ढरत्तियं उवज्झायाईणं संदिसावेत्ता तओ कालं घेत्तूणं आयरियं उट्ठवेंति, वंदणयं दाऊण भणन्ति—सुद्धो कालो, आयरिया भणंति—तह त्ति, पच्छा ते वसभा सुयंति, आयरिओ वि विणियं उट्ठावेत्ता कालं पडियरावेइ, ताहे एगचित्तो सुत्तत्थं चिंतइ० जाव वेरत्तियस्स कालस्स बहुदेसकालो, ताहे तइयपहरे अतिक्कंते सो कालपडिलेहगो आयरियस्स पडिसंदेसावित्ता वेरत्तियं कालं गेण्हइ । आयरिओ वि कालस्स पडिक्कमित्ता सोवति । ताहे जे सोइयव्वया साहू आसी ते उट्ठेऊण वेरत्तियं सज्झायं करेंति जाव पाभाइयकालग्गहणवेला जाया । तओ एगो साहू उवज्झायस्स वा अण्णस्स वा संदिसावेत्ता पाभाइयं कालं गेण्हइ, जहा नवण्हं कालगहणाणं वेला पहुच्चति सज्झाए आरतो चेव पुणो ताहे साहुणो सव्वे उट्ठेंति । किह पुण नव काला पडिलेहिज्जंति । पढमो उवट्ठिओ कालग्गाहो तम्मि तिन्नि वारा कालो उवहओ एक्कम्मि मंडलए । तओ पुणो बितिओ उट्ठइ सो बितिए मंडलए तिन्नि वारा लेइ । तित्तस्स जइ न सुज्झति तओ तइओ साहू उट्ठइ । सोऽवि तत्तिए मंडलए तिण्णि वारा लेइ, तित्तस्स जदि न सुज्झति ताहे भग्गो कालो । एत्थ तिताण साहूण नव वाराऽवसाणे एभा फुट्टंति । तओ तीए वेलाए पडिक्कमन्ति । अह तिणिण कालगाहिणो नऽत्थि, किं तु-दुवे चेव, तओ इक्को पढमं पढमकालमंडलए तिणिण वारा उ लेऊण तओ बितिए दो वारं गेण्हइ । तओ बितिओ साहू बीयए चेव कालमंडलए एक्कं वारं लेऊण तओ तइए मंडले तिन्नि वारा तो गेण्हइ । एवं चेव नव वारा हवंति । अहवा-पढमे चेव कालमंडलए एगो चत्तारि वाराओ लेइ । बितिओ पुण बितिए कालमंडलए दो वाराओ लेइ । ततिए तिन्नि वाराओ लेइ सो चेव बितिओ । एवं वा दोण्ह साहूणं नव वाराओ भवंति । अह एक्को चेय कालग्गाही ततो अववाएण सो चेव पढमे तिन्नि वारा लेइ । पुणो सो चेव बितिओ मंडले तिन्नि वारा लेइ । पुणो सो चेव ततिए मंडलए तिन्नि चेव वाराओ लेइ । एसा पाभाइयकालस्स विही । एवं च सति कालस्स पडिक्कमित्ता सुवंति । एगो न पडिक्कमति । सो अववाएण कालं निवेदिस्सइ ।

इदानीं यदुक्तं " वासासु य तिण्णि दिस " त्ति तद्व्याख्यानयन्नाह भाष्यकारः-

वासासु य तिन्नि दिसा, हवंति पाभाइयम्मि कालम्मि ।
सेसेसु तीसु चउरो, उउम्मि चउरो चउदिसं पि॥३११॥

वर्षासु तिस्रो दिशो यदि कुड्यादिभिस्तिरोहिता न भवन्ति ततः प्राभातिककालग्रहणं क्रियते । शेषेषु त्रिषु कालेषु चतस्रोऽपि दिशो यदि कुड्यादिभिस्तिरोहिता न भवन्ति ततो गृह्यन्ते कालाः ?, नान्यथा, ' उउम्मि चउरो चउदिसं पि ' त्ति ऋतुबद्धे काले चत्वारोऽपि काला गृह्य-

१-इय गाथा भाष्यकृत इति बहुषु वैपम्यम् ।

न्ते, यदि चत्वारोऽपि दिशोऽतिरोहिता भवन्ति, नान्यथा। एतदुक्तं भवति—चतसृष्वपि दिक्षु यद्यालोको भवति तत-श्चत्वारोऽपि काला गृह्यन्ते।

इदानीम् " उउबद्धे तारका तिरिण " त्ति व्याख्यायते-

तिसु तिरिण तारगा उ, उदुम्मि पाभाइए अदिट्ठे वि।
वासासु अतारागा, चउरो छन्ने निविट्ठोऽवि ॥ ३१२ ॥

त्रिषु—आद्येषु कालेषु घनमेघाच्छादितेऽपि ऋतुबद्धे काले यदि तारकास्तिस्रो दृश्यन्ते ततस्त्रयः काला आद्या गृह्यन्त इति। 'पाभाइए अदिट्ठे वि' त्ति—प्राभातिके काले गृह्यमाणे ऋतुबद्धे घनाच्छादिते यदि तारकात्रितयमपि न दृश्यते तथाऽपि गृह्णन्ति कालं इति, वर्षाकाले पुनर्घनाच्छादितेऽपि अदृष्टतारा एव चत्वारोऽपि काला गृह्यन्ते। छन्ने न सावकाशे एते चत्वारोऽपि काला गृह्यन्ते। 'निविट्ठो वि' त्ति—प्राभातिके स्वयं विशेषः-उपविष्टोऽपि छन्ने स्थाने ऊर्ध्वस्थानस्यासति गृह्णाति।

एतदेव व्याख्यानयन्नाह—

ठाणासति बिंदूसु, गएहइ विट्ठो वि पच्छिमं कालं।
पडियरइ बाहिं एको, एको अंतट्ठिओ गिएहे ॥६६१॥

स्थानस्याऽसति, एतदुक्तं भवति- यद्यूर्ध्वस्थितो न शक्नोति प्रहीतुं कालं ततः स्थानाभावे सति तोयबिन्दुषु वा पतत्सु सत्सु गृह्णात्युपविष्टः पश्चिमं-प्राभातिकं कालं तथा प्रतिजागरणं करोति,द्वारि एको स्थितः। आलिकापातादधस्तात्स्थितः साधुः, एकश्च साधुरन्तः-मध्ये स्थितो गृह्णाति कालमिति।

इदानीं कः कालः कस्यां दिशि प्रथमं गृह्यते?,

एतत्प्रदर्शयन्नाह—

पाओसियऽड्ढरत्ते, उत्तरदिसि पुव्वपेहए कालं।
वेरत्तियम्मि भयणा, पुव्वदिसा पच्छिमे काले ॥६६२॥

प्रादोषिकः अर्द्धरात्रिकश्च कालः द्वावप्येतावुत्तरस्यां दिशि पूर्वं—प्रथमं प्रत्युपेक्षते—गृह्णाति, ततः पूर्वादिदिक्षु, वैरात्रिके—तृतीयकाले भजना-विकल्पः कदाचित् उत्तरस्यां पूर्वं पूर्वस्यां वा, पुनः पश्चिमे—प्राभातिके काले पूर्वस्यां दिशि प्रथमं करोति कायोत्सर्गं ततः पुनर्दक्षिणादाविति।

सज्झायं काऊणं, पढमबितीयासु दोसु जागरणं।
अहवा वाऽवि गुणंती, सुणंति झायंति वाऽसुद्धे ॥६६३॥

एवं यदि शुद्ध्यति प्रादोषिकः कालस्ततः स्वाध्यायं कृत्वा प्रथमद्वितीयपौरुष्योर्जागरणं कुर्वन्ति साधवः। अथासौ प्रादोषिकः कालो न शुद्धस्ततः अन्यत्—उत्कालिकं गुणयन्ति शृण्वन्ति ध्यायन्ति, तथाऽशुद्धे सति, वयणेह अववाओ भएणइ--जति पाओसिओ सुद्धो ततो अड्ढरत्तिओ, जइ वि न सुज्झइ तह वि तं चेव पवेयइत्ता सज्झायं कुणंति। एवं जइ वेरत्तिओ न सुज्झइ ततो अणुग्गहत्थं, जइ अड्ढरत्तिओ सुद्धो तओ तं चेव पवेयइत्ता सज्झायं कुणंति। एवं जइ न पाभाइओ तओ तं चेव पवेयइत्ता सज्झायं कुणंति। एवं द्रव्यक्षेत्रकालभावा ज्ञातव्या इति।

जो चेव य सयणविही, ऽणगाणं वसिओ वसहिदारे।
सो चेव इहं पि भवे, नाणत्तं उवरि सज्झाए ॥६६४॥

य एव शयितव्ये विधिः पूर्वमनेकानां प्रत्युपेक्षकाणां व्यावर्णितो वसतिद्वारे स एवात्रापि द्रष्टव्यः, नानात्वं यदि परमिदं यदुत स्वाध्यायं कृत्वा स्वपन्तीति। ओघ०। पं० व०। ध०। आ० चू०।

स्वाध्यायविधिः—

स्वाध्याय—इति, अन्वयस्तूक्त एव, स्वाध्यायश्च कियत्काले कार्य इत्याह-आद्यपौरुषीमिति-प्रथमपौरुषीं पादोनप्रहरं यावदित्यर्थः। अत्र विधिश्चैवं—वसतेर्हस्तशतावधि क्षेत्रं शोधयित्वा तत्रास्थिप्रमुखं पतितं विधिना परिष्ठाप्य वसतिं प्रवेदयन्ति गुरवे साधवः। यः पुनः कालग्राही स मुखवस्त्रिकाप्रतिलेखनापूर्वं वन्दनकं दत्त्वा वसतिं शुद्धं च कालं प्रवेदयति, ततश्चोपयुक्तः पूर्वं वाचनाचार्यस्तदनुतदनुज्ञाताश्चेतरेऽपि सूत्रोक्तविधिना स्वाध्यायं प्रस्थापयन्ति, यदुक्तं सर्वमेतद्यतिदिनचर्यायाम्—

" हत्थसयं सोहित्ता, जाणित्ता पसवमिन्थिआईणं।
परिठविअ अट्ठिपमुहं, विहिणा वसहिं पवेइंति ॥ १ ॥
जं उण कालग्गाही, तं पुत्तिं पेहिऊण किइकम्मं।
काउं वसहिं तत्तो, कालं सुद्धं पवेअंति ॥ २ ॥
सिक्खंतसिद्धविहिणा, उवउत्तो पट्ठवेइ सज्झायं।
पढमं वायणायरिओ, तयणुगणाया तहा इयरे ॥ ३ ॥ "

इयं च मण्डली सूत्रविषयेति सूत्रमण्डलीत्युच्यते। सा चाद्यपौरुषीप्रमाणेति आद्या पौरुष्यपि सूत्रपौरुषीत्युच्यते। इदानीं तूपयोगकरणकाले स्वाध्यायं कुर्वन्तो गीतार्था एनां सत्यापयन्ति, यतस्तत्रैव-" उवओगकरणकाले, गीअत्था जं करेंति सज्झायं। सो सुत्तपोरिसीए, आयारो दंसिओ तहिं ॥ १ ॥ " इति। द्वितीया पौरुषी त्वर्थविषयेति इयमित्युत्सर्गः, अपवादस्तु अगृहीतसूत्राणां बालानां द्वे अपि पौरुष्यौ सूत्रस्यैव, गृहीतसूत्राणां तु द्वे अप्यर्थस्येति, तदुक्तं तत्रैव—" उस्सग्गेणं पढमा छग्घडिआ सुत्तपोरिसी भणिआ। बिइआ य अत्थविसया, निद्दिट्ठा दिट्ठसमएहिं ॥ १ ॥ बिइअपयं बालाणं, अगहिअसुत्ताण दो वि सुत्तस्स। जं अहि असुत्तसारा, तेसिं दो चेव अत्थस्स ॥२॥ " इति। स स्वाध्यायो-वाचनापृच्छनापरिवर्त्तनाऽनुप्रेक्षाधर्मकथारूपः पञ्चविधः। ध० ३ अधि०। " पडिक्कमंताणं पडिक्कमणकालं० जाव सज्झायं करिज्जा दुवालसं " महा० १ चू०। चतुष्काले स्वाध्यायः कर्त्तव्यः। नि०चू०१६ उ०। (चतुष्कालस्वाध्यायवक्तव्यता 'पुच्छण' शब्दे पञ्चमभागे द्रष्टव्या।) (तथा 'कालियसुय' शब्दे तृतीयभागे ५०० पृष्ठे द्रष्टव्या।)

पट्ठविय वंदिए वा, ताहे पुच्छंति किं सुयं भंते!।
ते वि य करेंति सव्वं,जं जेण सुयं व दिट्ठं वा ॥१३८५॥

दंडधरेण पट्ठविए वंदिए, एवं सव्वेहि वि पट्ठविए पुच्छा भवइ-अज्जो! कण किं दिट्ठं सुयं वा? दंडधरो पुच्छइ अन्ना वा ते वि सव्वं ( व्वे ) कहेंति जति सव्वेहि वि भणियं-न किंचि सुयं दिट्ठं वा, तो सुद्धे करेंति सज्झायं। अह एगेण वि किंचि विज्जुमादि फुडं दिट्ठं गज्जियादि वा सुयं तो असुद्धं न करेंति त्ति गाथार्थः।

अह संकियं—

इक्कस्स दोण्ह व सं—कियम्मि कीरइ न कीरती तिण्हं ।
सगणम्मि संकिए पर—गणं तु गंतुं न पुच्छंति ।१३८६।

जदि एगेण संदिद्धं दिट्ठं सुयं वा, तो कीरइ सज्झाओ, दोण्ह वि संदिद्धे कीरति, तिण्हं विज्जुमादिएण संदेह ण कीरइ सज्झाओ, तिण्हं अण्णाण संदेहे कीरइ, सगणम्मि संकिए परवयणाओऽसज्झाओ न कीरइ । खेत्तविभागेण तेसिं चेव असज्झाइयसंभवा ।

'जं एत्थं णाणत्तं तमहं वोच्छं समासेणं' ति-अस्यार्थः-

कालचउक्के णाण—त्तगं तु पाओसियम्मि सव्वे वि ।
समयं पट्ठवयंती, सेसेसु समं च विसमं वा ।।१३८७।।

एवं सव्वं पाओसियकाले भणियं, इयाणिं चउसु कालेसु किंचि सामण्णं किंचि विसेसियं भणामि, पाओसियं दंडधरं एक्कं मोत्तु सेसा सव्वे जुगवं पट्ठवेंति, सेसेसु तिसु अड्ढरत्तवेरत्तियपाभाइए य समं वा विसमं वा पट्ठवेंति ।

किं चान्यत्—

इंदियमाउत्ताणं, हणंति कणगा उ तिन्नि उक्कोसं ।
वासासु य तिन्नि दिसा,उउबद्धे तारगा तिन्नि।१३८८।

सुट्ठु इंदियउवओगउवउत्तेहिं सव्वकाला पडिजागरियव्वा घेत्तव्वा, कणगेसु कालसंखाकओ विसेसो भण्णइ-तिण्णि गिम्हे उवहणंति त्ति, तेण उक्कोसं भण्णइ, चिरेण उवघाउ त्ति, तेण सत्त ( तिण्णि ) जहण्णं सेसं मज्झिमं ।

अस्य व्याख्या—

कणगा हणंति कालं,ति पंच सत्तेव गिम्हि सिसिरवासे ।
उक्का उ सरेहागा, रेहारहितो भवे कणओ ।।१३८९।।

कणगा गिम्हे तिन्नि सिसिरे पंच वासासु सत्त उवहणंति, उक्का पुणेगावि, अयं चासिं विसेसो—कणगो सण्हरेहो पगासरहिओ य, उक्का महंतरेहा पकासकारिणी य । अहवा-रेहारहिओ विप्फुलिंगा पभाकरा उक्का चेव ।

'वासासु तिण्णि दिसा' अस्य व्याख्या—

वासासु य तिन्नि दिसा,हवंति पाभाइयम्मि कालम्मि ।
सेसेसु तीसु चउरो,उडुम्मि चउरो चउदिसिं पि ।१३९०।

जत्थ ठिओ वासाकाले तिन्नि वि दिसा पेक्खइ तत्थ ठिओ पाभाइयं कालं गेण्हइ, सेसेसु तिसु वि कालेसु वासासु ( उडुबद्धे सव्वेसु ) जत्थ ठिओ चउरो वि दिसाभागा पेच्छइ तत्थ ठिओऽवि गेण्हइ ।

'उडुबद्धे तारगा तिन्नि' अस्य व्याख्या—

तिसु तिन्नि तारगाओ, उडुम्मि पाभातिए अदिट्ठेऽवि ।
वासासु (य)तारगाओ,चउरो छन्ने निविट्ठोऽवि ।१३९१।

तिसु कालेसु पाओसिए अड्ढरत्तिए वेरत्तिए, जति तिन्नि ताराओ जहण्णेण पेच्छंति तो गिण्हंति । उडुबद्धे चेव अब्भादिसंथडे जइ वि एक्कं पि तारं न पेच्छंति तहावि पाभाइं कालं गेण्हंति । वासाकाले पुण चउरो वि काला अब्भाइसंथडे तारासु अदीसंतासु वि गेण्हंति ।

'छन्ने निविट्ठो' त्ति अस्य व्याख्या—

ठाणासइ बिंदुसु अ, गिण्हं चिट्ठो वि पच्छिमं कालं ।
पडियरइ बहिं एक्को, एक्को [व] अंतट्ठिओ गिण्हे ।१३९२।

जदि वि वसहिस्स बाहिं कालग्गाहिस्स ठाणं नत्थि ताहे अंतो छण्णे उद्धट्ठिओ गेण्हति । अह उद्धट्ठियस्स वि अंतो ठाणं नत्थि ताहे छण्णे चेव निविट्ठो गिण्हइ । बाहिट्ठिओ वि एक्को पडियरइ । वासबिंदुसु पडंतीसु नियमा अंतो ठिओ गिण्हइ । तत्थ वि उद्धट्ठिओ निसण्णो वा । नवरं पडियरगो वि अंतो ठिओ चेव पडियरइ । एस पाभाइए गच्छुवग्गहट्ठा अववायविही । सेसा काला ठाणासति न घेत्तव्वा, आइण्णतो वा जाणियव्वं ।

'कस्स कालस्स कं दिसमभिमुहेहिं ठायव्वं' मिति भाष्यते-

पाओसि अड्ढरत्ते, उत्तरदिसि पुव्वपेहए कालं ।
वेरत्तियम्मि भयणा, पुव्वदिसा पच्छिमे काले ।।१३९३।।

पाओसिए अड्ढरत्तिए नियमा उत्तराभिमुहो ठाइ, 'वेरत्तिए भयणा' त्ति इच्छा उत्तराभिमुहो पुव्वाभिमुहो वा पाभाइए नियमा पुव्वाभिमुहो ।

इयाणिं कालग्गहणपरिमाणं भण्णइ—

कालचउक्कं उक्को—सएण जहन्नतियं तु बोद्धव्वं ।
बीयपएणं तु दुगं, मायामयविप्पमुक्काणं ।। १३९४ ।।

उस्सग्गे उक्कोसेणं चत्तारि काला घेप्पंति । उस्सग्गे चेव जहण्णेण तिगं भवति । 'बितियपए ' त्ति-अववाओ, तेण कालदुगं भवति, अमायाविनः कारणे अगृह्णमाणस्येत्यर्थः । अहवा-उक्कोसेणं चउक्कं भवति । जहण्णेण हाणिपदे तिगं भवति । एक्कम्मि अगहिए इत्यर्थः । बितिए हाणिपदे कए दुगं भवति । द्वयोरग्रहणात इत्यर्थः, एवममायाविणो तिन्नि वा अगेण्हंतस्स एक्को भवति । अहवा-मायाविमुक्तस्य कारणे एकमपि कालमगृह्णतो न दोषः, प्रायश्चित्तं न भवतीति गाथार्थः ।

कहं पुण कालचउक्कं ?, उच्यते—

फिडियम्मि अड्ढरत्ते, कालं घित्तुं सुवंति जागरिया ।
ताहे गुरू गुणंती, चउत्थि सव्वे गुरू सुअइ ।। १३९५ ।।

पादोसियं कालं घेत्तुं सव्वे सुत्तपोरिसिं काउं पुण्णपोरिसीए सुत्तपाढी सुवंति । अत्थचिंतया उक्कालियपाढिणो य जागरंति । जाव अड्ढरत्तो । तेतो फिडिए अड्ढरत्ते कालं घेत्तुं जागरिया सुवंति, ताहे गुरू उट्ठेत्ता गुणेंति । जाव चरिमो पत्तो । चरिमजामे सव्वे उट्ठेत्ता वेरत्तियं घेत्तुं सज्झायं करेंति, ताहे गुरू सुवंति । पत्ते पाभाइयकाले जो पाभाइयं कालं घेच्छिहिति सो कालस्स पडिक्कमिउं पाभाइयकालं गेण्हइ । सेसा कालवेलाए पाभाइयकालस्स पडिक्कमंति । ततो आवस्सयं करेंति । एवं चउरो काला भवंति ।

तिण्णि कहं ?, उच्यते-पाभाइए अगहिए सेसा तिन्नि । अहवा—

गहियम्मि अड्ढरत्ते-वेरत्तिय अगहिए भवइ तिन्नि ।

वेरत्तिय अड्डरत्ते, अइ उवओगा भवे दुण्णि ॥१३६६॥
पडिजग्गियम्मि पढमे, बीयविवज्जा हवंति तिन्नेव ।
पाओसिय वेरत्तिय,अइउवओगा उ दुण्णि भवे ।१३६७।

वेरत्तिए अगहिए सेसेसु तिसु गहिएसु तिरिण, अड्ड-रत्तिए वा अगहिए तिरिण, दोरिण कहं ?, उच्यते, पाउ-सियअड्डरत्तिएसु गहिएसु सेसेसु दोरिण भवे । अहवा-पाउसियवेरत्तिए गहिए य दोण्णि । अहवा-पाउसियपा-भाइएसु अगहिएसु दोरिण, एत्थ विकप्पे पाउसिए चेव अणुवहयस्स उवओगओ सुपडियग्गियस्स सव्वकालस्स पढंति न दोसो । अहवा-वेरत्तिए अड्डरत्तिए अगहिए दोरिण। अह-वा-अड्डरत्तियपाभाइयगहिएसु दोरिण । अहवा-वेरत्तियपा-भाइएसु गहिएसु, जदा एक्को तदा अरणतरं गेरहइ । का-लचउक्ककारणा इमे कालचउक्के गहणं उस्सग्गविही चेव । अहवा-पाओसिए गहिए उवहए अड्डरत्ते घेत्तुं सज्झायं करेंति । पाभाइओ दिवसट्ठा घेत्तव्वो चेव । एवं कालचउक्कं दिट्ठं, अणुवहए पाओसिए सुपडियग्गिए सव्वं राइं पढ-न्ति । अड्डरत्तिएण वि वेरत्तिएण पढंति।वेरत्तिएण वि अणुव-हएण सुपडियग्गिएण पाभाइय असुद्धे उद्दिट्ठं दिवसओ वि पढंति । कालचउक्क अग्गहणकारणा इमे—पाउसियं न गिरहंति असिवादिकारणओ न सुज्झति वा, अड्डरत्तियं न गिरहंति, कारणतो ण सुज्झति वा, पाओसिएण वा सुपडियग्गिएण पढंति न गरहंति । वेरत्तियं कारणओ न गिरहंति न सुज्झइ वा । पाओसिय अड्डरत्तेण वा पढंति, निद्दि वा णो गरहंति । पाभाइय कारणओ न गिरहइ, न सुज्झइ वा, वेरत्तिएणेव दिवसओ पढंति ।

इयाणि पाभाइयकालग्गहणविहिं पत्तेयं भणामि-

पाभाइयकालम्मि उ, संचिक्खे तिन्नि छीयरुन्नाणि ।
परवयणे खरमाई, पावासु य एवमादीणि ॥ १३६८ ॥

व्याख्यां त्वस्या भाष्यकारः स्वयमेव करिष्यति । तत्थ पाभाइयम्मि काले गहणविही य, तत्थ गहणविही इमा-

नवकालवेलसेसे, उवग्गहियअट्ठया पडिक्कमई ।
न पडिक्कमई वेगो, नववारहए धुवमसज्झाओ ॥२२४॥

दिवसओ सज्झायविरहियाण देसादिकहासंभववज्जणट्ठा मेहावीतराण य पलिभंगवज्जणट्ठा, एवं सव्वेसिमणुग्गहट्ठा नवकालग्गहणकाला पाभाइय अणुण्णाया । अओ नवका-लग्गहणवेलाहिं सेसाहिं पाभाइयकालग्गाही कालस्स प-डिक्कमति । सेसा वि तं वेलं पडिक्कमति वा न वा । एगो नियमा न पडिक्कमइ, जइ छीयरुदादिहिं न सु-ज्झइ तो सो चेव वेरत्तिओ सुपडियग्गिओ होहिति त्ति सो वि पडिक्कंतेसु गुरुणो कालं निवेदित्ता अणुदिए सू-रिए कालस्स पडिक्कमति । जइ घेप्पंतो नववारं उवहओ कालो तो नज्जइ धुवमसज्झाइयमत्थि त्ति न करेंति सज्झायं ।

नववारगहणविही इमो-'संचिक्खे तिरिण छीतरुरणाणि ' त्ति अस्य व्याख्या—

इक्किक तिन्नि वारे, छीयाइहयम्मि गिरहई कालं ।
चोएइ खरो बारस, अणिट्ठविसए अ कालवहो ॥२२५॥

एक्कस्स गिरहओ छीयरुदादिहए संचिक्ख इति गह-णादिरमतीत्यर्थः, पुणो गिरहइ, एवं तिरिण वारा तओ परं अरणो अरणम्मि थंडिले तिरिण वाराउ, तस्स वि उवहए अरणो अरणम्मि थंडिले तिरिण वारा तिरिह असई दोरिण जणा णव वाराओ पूरेइ । दोरह वि असती ए एक्को चेव णव वाराओ पूरेइ । थंडिलेसु वि अव-वाओ, तिसु दोसु वा एक्कम्मि वा गिरहंति । 'परवयणे खरमाई' अस्य व्याख्या 'चोएइ खरो पच्छद्धं' चोदक आह—जदि रुदति मणिट्ठे कालवहो ततो खरेण रडिते बारहवरिसे उवहंमउ, अरणेसु वि अणिट्ठइंदिय विसएसु एवं चेव कालवहो भवतु ?,

आचार्य आह—

चोअग माणुसणिट्ठे कालवहो सेसगाण उपहारो ।
पावासुआइ पुव्विं, पन्नवणमणिच्छ उग्घाडे ॥२२६॥

माणुससरे अणिट्ठे कालवहो 'सेसग' त्ति-तिरिया तेसि जइ अणिट्ठो पहारसहो सुव्वइ तो कालवधो । 'पावासिय' त्ति-मूलगाथायां योऽवयवः अस्य व्याख्या 'पावासुयाय' पच्छद्धं, जइ पाभाइयकालग्गहणवेलाए पावासियभज्जा पइणो गुणे संभरंति दिवे दिवे रोयति, रुवणवेलाए पुव्वयरो कालो घेत्तव्वो । अहवा-सा वि पच्चूसे रोवज्जा ताहे दिवा गंतुं पण्णविज्जइ, पराणवण—मनिच्छाए उग्घाडणकाउस्सग्गो कीरइ ।

'एवमादीणि' त्ति अस्यावयवस्य व्याख्या—

वीसरसद्दरुअंते, अव्वत्तगडिंभगम्मि मा गिरहे ।
गोसे दरपट्ठविए, छीए छीए तिगी पेहे ॥ २२७ ॥

अच्चायासेण रुयंतं वीसरं भन्नइ । तं उवहणए, जं पुण महुरसद्दं घोलमाणं च तं न उवहणति, जाव-मजंपिरं ताव अव्वत्तं, तं अप्पेण वि वीसरेण उवहणइ । महंतं उस्सुंभरोवणेण उवहणइ, पाभाइयकालग्गहण-विही गया । इयाणि पाभाइयपट्ठवणविही—'गोसे दर' पच्छद्धं, 'गोसि' त्ति-उदितमादिच्चे, दिसालोयं करेत्ता पट्ठवेंति । 'दरपट्ठविए' त्ति अद्धपट्ठविए जइ छीतादिणा भग्गं पट्ठवणं अरणो दिसालोयं करेत्ता तत्थेव पट्ठवेंति । एवं ततियवाराए ।

दिसावलोयकरणे इमं कारणं—

आइन्न पिसियमहिया, पेहित्ता तिन्नि तिन्नि ठाणाई ।
नववारहए काले, हउ त्ति पढमाइ न पढंति ॥१३६६॥

'आइरणा पिसिय' त्ति-आइरणं-पोग्गलं तं कागमादीहिं आणीयं होज्जा, महिया वा पडिउमारद्धा, एवमाई एगट्ठाणे ततो वारा उवहए हत्थसयबाहिं अरणं ठाणं गंतुं पढंति पडिलेहेंति । पट्ठविति त्ति वुत्तं भवति । तत्थ वि पुव्वुत्तवि-हिणा तिन्नि वारा पट्ठवेंति । एवं बितियठाणे वि असुद्धे त-ओ वि हत्थसयं अन्नं ठाणं गंतुं तिन्नि वारा पुव्वुत्तविहाणेण पट्ठवेंति । जइ सुद्धं तो करेंति सज्झायं । नववारहए खुताइ-णा णियमा अहो, (ततो) पढमाए पोरिसीए न करेंति स-ज्झायमिति गाथार्थः ।

पट्ठवियम्मि सिलोगे, छीए पडिलेह तिन्नि अन्नत्थ ।

सोणिय मुत्तपुरीसे, घाणालोअं परिहरिज्जा ॥ १४००॥
जदा पट्ठवणाए तिण्णि अज्झयणा समत्ता, तदा उवरिमेगो सिलोगो कड्ढियव्वो। तम्मि, समत्ते पट्ठवणं समप्पइ। विति यपादो गयत्थो।

'सोणिय' त्ति अस्य व्याख्या—

आलोअम्मि चिलमिणी, गंधे अन्नत्थ गंतु पकरंति।
वाघाइयकालम्मी, दंडग मरुआ नवरि नऽत्थि॥१४०१॥
जत्थ सज्झायं करेंतेहिं सोणियवच्चिगा दीसंति तत्थ न करेंति सज्झायं। कडगं चिलिमिलिं वा अंतरं दातुं करेंति। जत्थ पुण सज्झायं चेव करेंताण मुत्तपुरीसकलेवरादीयाण गंधं अण्णम्मि वा असुभगंधे आगच्छंते तत्थ सज्झायं न करेंति। अण्णं पि बंधणसेहणादि आलोयं परिहरेज्जा। एयं सव्वं निव्वाघाए काले भणियं। वाघाइमकाले वि एयं चेव। नवरं गंडगमरुगदिट्ठंता न संभवंति।

एएसामन्नयरे—ऽसज्झाए जो करेइ सज्झायं।
सो आणाअणवत्थं, मिच्छत्तविराहणं पावे॥ १४०२॥
निगदसिद्धा। आव० ४ अ०।

से भयवं! कयरेणं अट्ठेणं गोयमा! जे भिक्खू जावज्जीवाए अभिग्गहेणं चाउक्कालियं वायणाइ जहासत्तीए सज्झायं न करेज्जा, से णं कुसीले णेए। अन्नं च जे केई जावज्जीवाभिग्गहेणं अपुव्वनाणाहिगमं करेज्जा तस्सासत्तीए पुव्वाहीयं गुणेज्जा तस्स वि य असत्तीए पंचमंगलाणं अक्खाइज्जं सहस्से परावत्ते से भिक्खू आराहगे, तं च नाणावरणं च खवइ। तिव्वयरेइ वा भवित्ताणं सिज्झेज्जा। महा० ३ अ०।

( अत्रत्या वक्तव्यता 'कुसील' शब्दे तृतीयभागे ६०६ पृष्ठे गता। )

जहा णं पढमबीयपोरिसीए जइ णं कहाइ महया कारणवसेणं अट्ठघडिगं वा सज्झायं न कयं तं तत्थ मिच्छुक्कडं गिलाणस्स अकरेंसि निव्विगइअं। महा० १ चू०।

जे णं भिक्खू उभयं थंडिलाणि विहिणा गुरुपुरो संदिसाविता णं पागणस्स य संचरेऊणं कालवेलं० जाव सज्झायं ण करेज्जा तस्स णं छट्ठं पायच्छित्तं। महा०१ चू०।

( काल एव स्वाध्यायः कर्तव्य इति 'आयार' शब्दे द्वितीयभागे ३४० पृष्ठे कालाचारप्रस्तावे उक्तम्। ) ( अस्वाध्यायिके स्वाध्यायो न कर्त्तव्यः, तच्चास्वाध्यायिकमात्मसमुत्थं परसमुत्थं चेति द्विविधम् 'असज्झाइय' शब्दे प्रथमभागे ८२७ पृष्ठे व्याख्यातम्। ) ( प्रतिपत्सु स्वाध्यायो न कर्त्तव्य इत्युक्तम्—'असज्झाय' शब्दे प्रथमभागे ८३० पृष्ठे। )

व्यतिकृष्टकाले स्वाध्यायो न कर्त्तव्यः। सूत्रम्—

नो कप्पइ निग्गंथाण वा निग्गंथीण वा वितिगिट्ठे काले असज्झायं उद्दिसित्तए वा करेत्तए वा॥ १०॥

अस्य संबन्धमाह—

वितिगिट्ठं खलु पगयं, एगंतरितो य होति उद्देसो।
अव्वितिगिट्ठ-विगिट्ठं अह पाहुडमेव नो सुत्तं॥ १८१॥
व्यतिकृष्टमिति खलु प्रकृतमनुवर्त्तमानमस्ति द्विकसूत्राऽव्यतिकृष्टे कालेः उद्घाटायां पौरुष्यामित्यर्थः, स्वाध्यायमुद्देष्टुं वा कर्त्तुं वेति सूत्राक्षरार्थः।

संप्रति भाष्यविस्तरः—

लहुगा य सपक्खम्मी, गुरुगा परपक्खे उद्दिसंतस्स।
अंगं सुयखंधं वा, अज्झयणुद्देसथुतिमाई॥१८२॥
यदि विकृष्ट-उद्घाटापौरुषीलक्षणे सपक्षं उद्दिशति संयतः संयतस्योद्दिशतीत्यर्थः; तदा तस्य प्रायश्चित्तं चत्वारो लघुकाः। परपक्षः-संयतस्य संयती, संयत्याः संयतस्तत्र संयतः संयत्या उद्दिशति, कारणे वा संयती संयतस्य तदा प्रायश्चित्तं चत्वारो गुरुकाः। अथ किमुद्दिशन् एवं प्रायश्चित्तमत आह—अङ्गं श्रुतं स्कन्धमध्ययनमुद्देशं स्तुतिम् आदिशब्दात् ( व्य० ७ उ०। ) शब्दसम्बन्धम्। सू०। ( स्वाध्याये प्रायश्चित्तम् 'पय' शब्दे चतुर्थभागे २३८३ पृष्ठे उक्तम्। )

अथ व्यतिकृष्टे काले उद्दिशतः पठतो वा को दोषः, अत आह—

अट्ठहा नाणमायारो, तत्थ काले य आदिमो।
अकालऽऽज्झाइणा सो उ,नाणायारो विराहितो॥१८४॥
ज्ञानाचारोऽष्टधा-अष्टप्रकारः 'काले विणए' इत्यादि प्रागुक्तलक्षणस्तेषु चाष्टसु ज्ञानाऽऽचारेषु मध्ये काले इत्यादिको ज्ञानाचारः, स चाऽकालाध्यायिना ज्ञानाचारो विराधितः, न केवलमयं दोषः किं त्वन्योऽपि।

तथा चाऽऽह—

कालादिउवयारेणं, न विज्जा सिज्झते विणा।
देति गंधं अवद्धंसं, सा व अण्णा व से तहिं॥ १८५॥
कालाद्युपचारेण विना विद्या न सिध्यति, न केवलं न सिध्यति,किं तु-कालादिर्येगुणयलक्षणं रन्ध्र-छिद्रं सति साऽधिकृतविद्याधिष्ठात्री देवता अन्या वा तत्रावसरे अवध्वंसं ददाति। एष दृष्टान्तः। अयमुपनयः—व्यतिकृष्टे काले सूत्रं उद्दिश्यमानं पठ्यमानं वा सूत्रं निर्जराफलदायितया तथा न सिध्यति। न केवलं न सिध्यति, किन्तु-यया देवतया सूत्रमधिष्ठितं सा कालातिक्रमेण पठतोऽज्ञाप्यन्ती प्रान्ता वा कासिद्देवता अकाले पठनलक्षणं छिद्रमवाप्यावध्वंसं दद्यात्।

अथ कथं ज्ञायते सूत्रं देवतयाऽधिष्ठितमत आह—

सलक्खणमिदं सुत्तं, जेण सव्वण्णुभासियं।
सव्वं च लक्खणोवेयं, समहिट्ठंति देवया॥ १८६॥
इदमधिकृतं सूत्रं सलक्षणं यत कारणेन सर्वज्ञेन भाषितं सर्वमपि च लक्षणोपेतं वस्तु जगति देवताः समधितिष्ठन्ति ततो ज्ञायते सूत्रमपि देवताधिष्ठितम्।

अन्यच्च—

जहा विज्जानरिंदस्स, जं किंचिदपि भासियं।
विज्जा भवति सा चेव, देसे काले य सिज्झइ॥ १८७॥
यथा विद्यानरेन्द्रस्य-विद्याचक्रवर्त्तिनो यत्किञ्चिदपि भाषितं (तत्) विद्या भवति। सा चेह जगति देशे काले वा सिध्यति। न कालाऽऽद्युपचारमन्तरेण। तथा।

जहा य चक्किणो चक्कं, पत्थिवेहिं वि पुज्जइ।
ण याऽवि किंकरणं तस्स, जत्थ तत्थ न जुज्जइ॥१८८॥

यथा वाशब्दो दृष्टान्तान्तरसूचने । चाक्रिणः-चक्रवर्तिनश्च-क्रम-आज्ञा पार्थिवैरपि सर्वैः युज्यते, न चापि तस्य यत्र तत्र वा कीर्त्तन-संशब्दनं युज्यते । उक्तो दृष्टान्तः ।

उपनयमाह—

तह अट्ठगुणोवेया, जिणसुत्तीकया जाति ।
पुज्जंत न य सव्वत्थ, तीसे झाया उ जुज्जती ॥१८९॥

तथा—तेन प्रकारेण इह—जगति जिनस्य वाक् सूत्रीकृता अष्टगुणोपेता वक्ष्यमाणनिर्दोषत्वाद्यष्टगुणसमन्विता सर्वैरपि सुरासुरमनुजैः पूज्यते, न च सर्वत्र देशे काले वा तस्याध्यायिना युज्यते, किन्तु यथोक्त एव देशे काले च ।

संप्रति तानेवाऽष्टौ गुणानाह—

निद्दोसं सारवंतं च, हेउजुत्तमलंकियं ।
उवणीयं सोवयारं च, मियं महुरमेव य ॥ १९० ॥

निर्दोषं-द्वात्रिंशताऽपि दोषैर्विनिर्मुक्तं सारवत् बह्वर्थाभिधेयत्वात् बहुपर्यायत्वात्, हेतवो ऽन्वयव्यतिरेकलक्षणास्तैर्युक्तमलंकृतम्-उपमाद्यलंकारोपेतम्, उपनीतम्-उपनयोपसंहृतं सोपचारं मितं-परिमिताक्षरं-मधुरं-ललिताक्षरं पदाद्यात्मकतया श्रोत्रमनोहारि ।

पुव्वण्हे उ परण्हे य, अरहा जेण भासई ।
एसाऽवि देसणा अंग, जं च पुव्वुत्तकारणं ॥ १९१ ॥

येन कारणेन भगवानर्हन्पूर्वाह्णे वा पश्चि च भगवतो देशना अङ्गं निबद्धा, तस्मादुद्धाटायां पौरुष्यां न पठनीयं, नाप्युद्देष्टव्यम् । यच्च पूर्व—निशीथाध्ययने उक्तं कारणं तच्चोदाहरणं लक्षणं तस्मादप्यकाले न पठनीयं, नाप्युद्देष्टव्यमिति ।

सन्ध्याकाले न पठनीयम् । यत आह-

रत्तीदिणाण मज्झेसु, उभओ संझओ स्त्री ।
चरंति गुज्झगा केइ, तेण तासिं तु णो सुतं ॥ १९२ ॥

रात्रिदिनमध्ययोः प्रातस्संध्यायां विकालसंध्यायां चेत्यर्थः । तथा उभयोरपि संध्ययोर्मध्याह्नसंध्यायामर्द्धरात्रसंध्यायां चेत्यर्थः, येन कारणेन केचिद् गुह्यका व्यन्तरविशेषाश्चरन्ति परिभ्रमन्ति तेन कारणेन तासु चतसृष्वपि संध्यासु न श्रुतमुद्दिश्यते पठ्यते वा, मा भूत् छलनादोष इति कृत्वा ।

आह यदि सन्ध्यासु गुह्यकाश्चरन्ति ततः कथमावश्यकं संध्यायां क्रियते । तत आह—

जवहोमाऽऽदिकज्जेसु, उभओ संझओ सुरा ।
लोगेण भाविया तेण, संझावासगदंसणा ॥ १९३ ॥

जपहोमादिकार्येषु उभयोः संध्ययोः सुरा-गुह्यका लोकेन भाविताः तिष्ठन्ति, तावद्वयमावश्यकं कुर्मस्तेषां तत्र व्यापृतत्वादावश्यकस्यापि च संध्याकृत्यरूपत्वात्तेन संध्यायामावश्यकदेशना ।

एते उ सपक्खम्मी, दोसा आणादओ समक्खाया ।
परपक्खम्मि विराहणा, दुविहणा विसेण दिट्ठंतो ॥१९४॥

एते प्रवचनवेदिनामतीव प्रसिद्धाः, स्वपक्षे उद्दिशतः आज्ञादयो दोषाः समाख्याताः । तद्यथा-आज्ञा-तीर्थकराज्ञा विराधना भवति, अनवस्था तं दृष्ट्वा अन्येषामपि तथा करणात् मिथ्यात्वं तीर्थकराज्ञाभङ्गात् । विराधना द्विविधा-संयमविराधना, आत्मविराधना च । तत्र संयमविराधना ज्ञानाचारविराधनात्, आत्मविराधना देवताछलनात् । परपक्षेऽप्येते दोषाः । केवलं या संयमविराधना सा ज्ञानाचारविघातात्मिका, ब्रह्मघातात्मिका च ज्ञातव्या । तत्र द्विविधेन विषेण द्रव्यविषेण भावविषेण च दृष्टान्तः ।

तत्र द्रव्यभावविषप्ररूपणार्थमाह—

दव्वविसं खलु दुविहं, सहजं संजोइमं च तं बहुहा ।
एमेव य भावविसं, सचेयणाऽचेयणं बहुहा ॥१९५॥

द्रव्यविषं खलु द्विविधं, तद्यथा-सहजं, संयोगिमं च । संयोजनं संयोगस्तेन निर्वृत्तं संयोगिमं 'भावादिमः ।६।४।२१।' इतीमप्रत्ययः । तच्च सहजं, संयोगिमं च । बहुधा-अनेकप्रकारमेवमेव अनेनैव प्रकारेण खलु द्विविधं भावविषम् । तद्यथा-सहजं, संयोगिमं च । तच्च प्रत्येकं सचेतनम्, अचेतनं च । बहुधा बहुप्रकारम् ।

संप्रति सहजसंयोगिमद्रव्यविषप्ररूपणार्थमाह-

सहजं सिंगियमादी, संजोइम घयमहुं च समभागं ।
दव्वविसं णेगविहं, एत्तो भावम्मि वुच्छामि ॥१९६॥

सहजं द्रव्यविषं शृङ्गिकादि संयोगिमं घृतं मधु च समभागम् । एतच्चैकैकमपि द्रव्यविषमनेकविधं द्रष्टव्यम् । अत ऊर्ध्वं भावे भावविषं वक्ष्यामि ।

प्रतिज्ञातमेव निर्वाहयति—

पुरिसस्स निसग्गविसं, इत्थी एवं पुमं पि इत्थीए ।
संजोइमो सपक्खे, दोस वि परपक्खनेवत्थो ॥१९७॥

पुरुषस्य निसर्गविषं स्त्री; स्त्रीनेपथ्योपेता, एवं स्त्रिया अपि सहजं विषं पुमान्; पुरुषनेपथ्योपेतः । संयोगिमविषं द्वयोरपि संयतस्य संयत्याश्चेत्यर्थः । स्वपक्षः परपक्षनेपथ्यः, तद्यथा-संयतस्य पुरुषः स्त्रीनेपथ्योपेतः, निर्ग्रन्थ्याः स्त्री, पुरुषनेपथ्योपेता ।

घाणरसफासतो वा, दव्वविसं वा सई ऽतिपातेइ ।
सव्वविसयाणुसारी, भावविसं दुज्जयं असई ॥१९८॥

द्रव्यविषं घ्राणतो रसनः स्पर्शतो वा सकृदेकवारतो वा अतिपातयति वा-विभाषायाम्, तदपि सकृदतिपातवैकल्पिकं भवति । तथाहि-द्रव्यविषं जीवितात् व्यावर्त्तयत्यपि, भावविषं पुनः सर्वविषयानुसारि पञ्चस्वपीन्द्रियविषयेषु संप्रापकत्वात्, तथा दुर्जयमल्पसत्त्वेन जेतुमशक्यत्वात् असकृदनेकवारमतिपातयति-विनाशयति, भावविषमूर्च्छितानामनेकमरणभावात् ।

उपसंहारमाह—

जम्हा एए दोसा, तम्हा उ सपक्खं समणसमणीहिं ।
उद्देसो कायव्वो, किमत्थ पुण कार उद्देसो –१९९॥

यस्माद्विपक्षे एते दोषास्तस्मात् श्रमणश्रमणीभ्यां स्वपक्षे उद्देशः कर्त्तव्यः, संयतैः संयतानामुद्देशः कार्यः, संयतीभिः संयतीनामित्यर्थः । ततः प्रागुक्ता दोषा न भवन्ति । आह परः-किमत्र पुनः कारणं यदुद्देशः क्रियते ।

न तत्त्वं तथापि न तत्रास्ति, न हि तीक्ष्णांशुकरनिकरो-
पहतदृशां गर्भगृहाद्यनुप्रवेशानन्तरमप्रतिभासमाना अपि
घटादयो भावाः स्वरूपीभूतनयनानां न प्रतिभान्ति, न च
प्रागप्रतिभासनान्न सन्ति यथा च सहकारिवशात् पूर्वमप्र-
तिभाता अपि पश्चात्प्रतिभान्ति । तथाऽत्राप्याद्यदर्शनं शुद्धा-
र्थावभासि यद्यपि तत्त्वं नानुभवति स्मरणसहायाक्षप्रभवा
तु प्रत्यभिज्ञा तदनुभविष्यतीति । न-तत्त्वस्याऽसत्त्वम् ना-
प्यक्षान्वयव्यतिरेकानुविधायिनी प्रत्यभिज्ञा न प्रत्यक्षमिति ।

अत्रोच्यते-यदक्षप्रभवा संविदाद्या न तत्त्वमवभासयति प-
श्चादपि तदविषयत्वान्नाऽवभासयेत् । यथा ह्यक्षमविषयत्वा-
न्नैकत्वे प्रतिपत्तिं विदधाति तथा स्मरणसहकृतमपि न तत्र
तां विधास्यति अविषयत्वाऽविशेषात् ,न हि परिमलस्मरण-
सहायमपि लोचनं गन्धं प्रतिपत्तिकृदुपलब्धमिति न तत्त्व-
ग्रहणमध्यक्षात् । किं च—किंकुर्वाणा स्मृतिरिन्द्रियस्य स-
हकारित्वं प्रतिपद्यते ? पूर्वापरस्य ढौकनमिति चेत् ; ननु वि
नष्टेऽप्यर्थे स्मृतिरुदयन्ती दृष्टेति कथं तत्सन्निधापिते पौर्वा-
पर्ये प्रवर्त्तमाना अध्यक्षधीः सत्यार्था भवेत् ? अथ यदुपरतं
वस्तु तद्ग्राहिणी बुद्धिर्न सत्याऽर्थग्राहिणीति युक्तम् ,अनुपरतं
त्वर्थमवगच्छन्ती कथं सा न सत्यार्था ?, अयुक्तमेतत् ; यतः-
स्मर्यमाणस्यार्थस्यानुपरतिः कुतोऽवगता ? न स्मरणाद् व्यु-
परतेऽपि स्मृतिपरत्वे प्रवृत्तेरित्युक्तत्वात् । नत्र स्मरणोपनी
तपौर्वापर्यस्य दर्शने प्रतिभासनात्तदप्रच्युतिः इतरेतराश्रय-
दोषप्रसङ्गः । तथाहि—स्मर्यमाणस्यार्थस्यानस्तमयसिद्धेस्त-
दुपनीते तत्र दर्शनप्रवृत्तिः सिद्धयति । तत्सिद्धौ च स्मरणो-
पनीतस्याऽनस्तमयसिद्धिरिति कथं नेतरेतराश्रयत्वम् ?। अथ
स्मृतिः संप्रति प्रतिभासविषयादर्थाद्भिन्नं विषयमध्यवस्यन्ती
निरालम्बना स्यात् । प्रतिभासविषयं तमेवार्थमुल्लिखन्ती तु
कथमसदर्थविषया ? नः दर्शनगृहीतमेवार्थमुल्लिखतीत्यत्र प्रमा-
णाभावात्र स्मरणोपनीतैकत्वाऽवभासिन्यध्यक्षमतिः सत्या-
र्थग्राहिणी सिद्धा । न च पूर्वदर्शनमेव पूर्वरूपसंगतमर्थमनु-
भवदेकत्वे प्रमाणं यतो यदि पूर्वरूपतामर्थस्याद्यदर्शनम-
वावभासयति तथा सति पूर्वापरैकत्वं तदेवावगमयिष्य-
तीति तत्र स्मृतिः प्रवर्त्तमाना व्यर्था । न च तदपि पूर्वरू-
पतां तस्याऽवभासयितुं क्षमं तस्य सन्निहितमात्रविषयत्वात्।
पूर्वरूपता हि पूर्वदेश-काल-दशासम्बन्धिता पूर्वदेशादीनां च
तद्दर्शने अप्रतिभासनात् न तत्संस्पर्शिरूपप्रतिभासस्तत्र संभ-
वी न हि तदप्रतिभासे तत्संबन्धिपदार्थरूपप्रतिभासः अन्यथा
नीलताऽप्रतिभासेऽपि पीते नीलसम्बन्धिताऽवगतिर्भवेत् ।
तदैकत्वग्राहिण्यध्यक्षमतिः। यच्च 'दृष्टता प्रत्यक्षग्राह्या' इति प-
रैरुच्यते तत्र दृष्टता यदि तद्दृशि प्रतिभातता तदा वर्त्तमान-
तैव । अथ पूर्वदृशि प्रतिभातता तदा पूर्वदृशोऽप्रतिभासने
कथं तत्प्रतिभातताऽवभासः संप्रति संवेदने ? तत्र हि स्वदृ-
ष्टतया सन्निहितं रूपमाभातीति सैव तत्र युक्ता, पूर्वदर्शनं तु
प्रत्यस्तमितमिति तद्दृष्टताऽपि व्युपरतेवेति कथं सा वर्त्त-
मानदृशि प्रतिभासेत ? तदभ्युपगमे वा तद्दृशो निराल-
म्बनप्रसक्तिः । न च पूर्वदृश्यमानता तत्र व्युपरता, दृष्टता तु
तदैवोत्पन्नेति कथमसती येन तां प्रतीयती प्रत्यक्षमतिर्निरा-
लम्बना भवेत् ?, यतो यदि दृष्टता तत्र सन्निहिता भवेत् तदा
प्रथममागतो नीलाऽऽदिरूपतामिव तामप्यधिगच्छेत् न चा-
ऽधिगच्छतीति ज्ञानस्वभावोऽसाधारणतयाऽसौ नार्थस्वरूप-
मिति कुतोऽध्यक्षताऽवसेया?, तथाहि-पूर्वदर्शनमनुस्मरन्नेव
पूर्वदृष्टतां व्यवहारी तत्राध्यारोपयति विस्मरणे तदनध्यव-
सायात् यत्र स्मृतिरध्यवस्यति स्वरूपं न तद्दर्शनपथोपप्रयु-
क्तम् आकारभेदात् । न च तद्दर्शन-स्मरणे एकं विषयं विधत्तः
'पूर्वदृष्टं पश्यामि' इत्यध्यवसायात् । यतः-किं स्मर्यमाणं दृश्य-
मानतया रूपं प्रतीयते, आहोस्विद् दृश्यमानं स्मर्यमाणतयेति
विकल्पद्वयम् ? । तत्र यद्याद्यः पक्षस्तथा सति स्मर्यमाणं
परिस्फुटतया रूपमाभातीति कथं तस्य परोक्षता ?, अथ
द्वितीयस्तत्रापि दृश्यमानं स्मर्यमाणेन रूपेणाऽवभातीति सर्वं
परोक्षं भवेदिति न काचिदध्यक्षमतिः सत्याऽर्था स्यात् ।
अतोऽक्षधीर्वर्त्तमानमेव रूपं प्रत्येति, स्मृतिरपि तदसंस्पर्शि
परोक्षं रूपमिति न तयोरैक्यं प्रतिभासभेदस्य सर्वत्र भेदक-
त्वात् । तस्य च विशदाऽविशदरूपतयाऽवभासमानयोर्दृश्य-
स्मर्यमाणयोः सद्भावात् कथं न भेदः ?, किञ्च-यदि शुद्धमेव
दर्शनं स्मृतिनिरपेक्षं पूर्वरूपताग्राहि: नन्वेवं भाविरूपताग्रा-
हि प्रथमदर्शनं किं नोपयते ?, नहि भाविभूतयोः सन्निहितत्वे
विशेषः, येनैकत्राध्यक्षवृत्तिरपरत्र नेति भवेत् ? नच 'पूर्वदृष्टं
पश्यामि' इति व्यवसायात् पूर्वरूपे एव दर्शनव्यापारः। 'पूर्व-
मेवेदं मया दृष्टम्' इत्यध्यवसायाद् भाविरूपेऽपि दर्शनव्या-
पारप्रसङ्गः। अतोऽपाकृतम् "इदानींतनमस्तित्वं न हि पूर्वधि-
या गतम् " इति । न च पूर्वदृशा तदाभाविकालतायाः असं-
न्निधानादग्रहणं संप्रति दर्शनकाले पूर्वरूपतायाः अप्यसन्नि-
धस्ततो ग्रहणप्रसङ्गः । यदि पुनर्भाविरूपतामप्यध्यक्षमनुभ-
वति , 'पूर्वमेवेदं मया दृष्टम्' इति व्यवहृतिदर्शनात् तर्हि प्र-
थमसंवेदनमेव मरणावधिरूपपरंपरामधिगच्छतीति तदैव
मृतो भवेत् । न च मृतिसद्भावे मृतो भवत्युत्पत्तिसमये तु
नासाविति कुतोऽयं दोषः । यतो यदि तदाऽसौ नाऽस्ति क-
थमसती सा दर्शने प्रतिभाति ?, तदप्रतिभासने तु कथं भा-
विरूपपरिगतो भावोऽवभातो भवेत् ? यदेव तत्र वर्तमानं
रूपमाभाति तदेवाध्यक्षमस्तु न भावि । यदि तु तदपि तदा-
ऽध्यक्षं तदाद्याऽध्यक्ष एव मृत्युपाधेः सकलविषयस्य प्रति-
भातस्याऽस्तमयात् तद्विषयात्तदुत्तरकालभाविनी सर्वा मति-
र्निर्विषया भवेत् । किं च-भाविभूतयोरध्यक्षविषयत्वे भिन्न-
मपि तदध्यक्षविषयं भवेदिति सर्वस्त्रिकालदर्शी भवेदिति
" भविष्यंश्चैषोऽर्थो न ज्ञानकालेऽस्तीति न प्रतिभाति " इति
निराकृतं द्रष्टव्यम्। भावि-भूतकाले तावद् भविष्यतो धर्माऽऽ-
देर्दर्शनकालेऽसतोऽपि प्रतिभासनात् । न चाभिन्नयोर्भावि-
भूतरूपयोः प्रतिभासेऽपि भाविधर्मादेर्भिन्नत्वान्न प्रतिभा-
सः। भेदेनाध्यक्षप्रतिभासनाऽविरोधात् । दृश्यन्त एव हि भि-
न्नरूपा घट-पटाऽऽदयोऽध्यक्षप्रतिभासमादधानास्तन्न भा-
विभूतरूपताऽध्यक्षावसेयेति स्मृतिविषयः । पूर्वरूपतादर्श-
नावभासिनोऽर्थस्य भाविरूपता चानुमानावसेया । तेन—

" नच स्मरणतः पश्चा-दिन्द्रियस्य प्रवर्त्तनम् ॥ "
" वार्यते केनचिन्नापि, तदिदानीं प्रदुष्यति । "
( श्लो० वा० प्रत्यक्ष० श्लो० २३५।२३६। ) ।

इति निरस्तं, यतो यदि स्मरणादूर्ध्वं वर्त्तमानरूपे इन्द्रियस्य
प्रवर्त्तनमभिप्रेतं तथा सति वर्त्तमानमात्रपरिच्छेदान्न
स्मरणोपढौकितैकत्वग्रहः । अथ पूर्वरूपे तत्राऽपि यथा प्राक्

स्मृतेर्दर्शनं पूर्वरूपतायामविषयत्वान्न प्रवर्त्तते तथा तदुत्तरकालमपि अविषयत्वाऽविशेषात्। "तदा प्रवर्त्तने चक्षुषो न दोषः" इत्यत्रापि यदसन्निहिते स्मरणोपढौकिते नयनं प्रवर्त्तते तदविद्यमानविषयत्वात्तदालम्बनं ज्ञानं निर्विषयं भवेदिति कथं न दोषः?, तिमिरोपहतदृशोऽप्यसत्यदर्शनमेव दोषः। तथाऽत्राऽपि समानमिति कथं न दोषः?। अथ वर्त्तमाने स्मृत्युत्तरकाले तत्प्रवर्त्तमानमदुष्टं तर्हि नैकत्वप्रतीतिः। न च यदेव वर्त्तमानं तदेव पूर्वमिति भेदाभावात्तत्त्वग्रहः अभेदस्यासिद्धेः—न हि दृश्यमानस्मर्यमाणयोरभेदसिद्धिः दृश्यमाने स्मृतेः स्मर्यमाणे च दृशोऽनवतारात्। न च स्मरणोपनीते पूर्वरूपे दोषाभावेऽपीन्द्रियप्रवर्त्तनं युक्तं धूमदर्शनोत्तरकालं स्मृत्युपस्थापिते पावकेऽपि दोषाभावादिन्द्रियप्रवृत्तिप्रसङ्गः। शक्यं यत्रापि वक्तुम्—

"तथाऽपि लिङ्गना पश्चा-दिन्द्रियस्य प्रवर्त्तनम्।
वार्यते केनचिन्नापि, तदिदानीं प्रदुष्यति" ॥ १ ॥

अथ प्रत्यक्षप्रतिभाता धूमात् स्पष्टावभासाद् व्यतिरिक्ता स्मृतिप्रभवाऽनुमितिर्भिन्नाकाराऽग्निमुल्लिखतीति न तत्र दृगवतारस्तर्हि विशददृगवसेयाद् रूपादस्पष्टतया पूर्वरूपमुल्लिखन्ती स्मृत्युपजनिता प्रतिपत्तिर्न दृगुपदर्शितं रूपमवतरतीत्यभ्युपगम्यं ततः स्मृतेः पूर्वमुत्तरकालं वा पौर्वापर्यविविक्तं वर्त्तमानकालमर्थं दृगवतरतीति नैकत्वग्राहिणी। ततो न विकल्पविकलाध्यक्षमतिः सिद्धा। एकत्वप्रतिपत्तिस्तु स्मृतिकृतोदया पृथगेव पूर्वापरविविक्तरूपावभासिस्पष्टदृशः।

अथ पौर्वापर्ये दृशोऽप्रवृत्तेर्न तद्ग्रहात् सविकल्पाध्यक्षमतिः जातिगुणक्रियादीनां तु दर्शनविषयत्वात् तद्विशिष्टार्थप्रतिपत्तिः सविकल्पिका भविष्यति, न; जात्यादेः स्वरूपानवभासनात् न हि व्यक्तिद्वयव्यतिरिक्तवपुर्ग्राह्याकारतां बहिर्बिभ्राणा विशददर्शने जातिराभातीति न तद्योजनादध्यक्षमतिः सविकल्पिका। न चाम्र-वकुलादिषु "तरुस्तरुः" इत्युल्लिखन्ती बुद्धिराभातीति नास्ति जातिर्विकल्पोल्लिख्यमानतयाऽपि बहिर्ग्राह्याकारतया जातेरनुद्भासनात् प्रतीतिरेव तत्रापि तुल्याकारतां वचनं वा बिभर्ति। न च शब्दः प्रतीतिर्वा जातिमन्तरेण तुल्याऽऽकारतां नानुभवति 'जातिर्जातिः' इत्यपरजातिव्यतिरेकेणापि गोत्वाऽऽदिसामान्येषु तयोस्तुल्याऽऽकारतादर्शनात्। न च तेष्वप्यपरा जातिः इति? अनवस्थाप्रसङ्गः। अथ तुल्याऽऽकारा प्रतिपत्तिर्यदि निर्निमित्ता तदा सर्वदा भवेत् न वा क्वचित् व्यक्तिनिमित्तत्वे आम्रादिष्विव घटादिष्वपि 'तरुस्तरुः' इति प्रतिपत्तिर्भवेत् व्यक्तिरूपतायाः अत्राऽपि समानत्वाद्, असदेतत्; व्यक्तिनिमित्तत्वेऽपि प्रतिनियतव्यक्तिनिमित्तत्वान्नातिप्रसङ्गः। यथा हि—ताः प्रतिनियता एव कुतश्चिन्निमित्तात् प्रतिनियतजातिव्यञ्जकत्वं प्रतिपद्यन्ते तथा प्रतिनियतां तुल्याऽऽकारां प्रतिपत्तिं तत एव जनयिष्यन्तीति किमपरजातिकल्पनया?, यथा वा गुडूच्यादयो भिन्ना एकजातिमन्तरेणापि ज्वरादिशमनमेकं कार्यं निर्वर्त्तयन्ति तथाऽऽम्रादयस्तरुत्वमन्तरेणापि तत एव "तरुस्तरुः" इति प्रतिपत्तिं जनयिष्यन्ति, नान्य इति व्यर्था तेषु तरुत्वजातिकल्पना, तथा; जातिदर्शने कल्पनाज्ञानं वा बहिराकारमाबिभ्रती स्वेन वपुषा प्रतिभाति कल्पना, बुद्धावप्यविशदाकारव्यक्तिरूपमन्तःप्रद्योतितं वाऽपहाय वर्णसंस्थानव्यतिरिक्तजातिस्वरूपानवभासनात्। तथाऽप्रतीयमाना जातिः सती। नापि कस्यचिद्विशेषणमिति न तद्योजनाविधायिनी अध्यक्षमतिरिति न सविकल्पिका। एवं गुण-क्रियादीनामप्रतिभासनादसत्त्वमिति न तद्विशिष्टार्थग्रहाऽध्यक्षं सविकल्पकतामनुभवति। अथ निर्विकल्पकत्वेऽध्यक्षस्य शुद्धवस्तुग्रहणात् कथं ततो व्यवहृतिः सा हि हेयोपादेययोर्दुःख-सुख-साधनत्वनिश्चये हानोपादानार्था दृष्टा न च निर्विकल्पकमध्यक्षं तन्निश्चयरूपम्, असदेतत्; यतो यद्यपि सविकल्पकमध्यक्षं तथापि कथं तदर्थिनां तत्र ततः प्रवृत्तिर्न हि निश्चयमात्रात् फलार्थिनः प्रवर्त्तन्ते अपि तु-तज्जननयोग्यतावसायात् सा चाऽसन्निहितफलानिश्चये न निश्चेतुं शक्या। न च परोक्षं सुखसाधनत्वं निश्चिन्वती मतिरध्यक्षतामनुभवति, अनुमितेरप्यध्यक्षताप्रसङ्गः। परोक्षनिश्चयरूपतायाः अविशेषात्। न च निश्चयात्मकेनाध्यक्षेण वस्तु निश्चीयते। तत्प्रतिबद्धा च प्रागर्थक्रियोपलब्धा ततः पुरस्थार्थावसायात्। तत्र स्मृतिः प्रादुर्भवन्ती तत्राभिलापजननात् प्रवृत्तिमुपजनयति निर्विकल्पकेऽप्यस्य समानत्वात्। तथाहि-प्रत्यक्षप्रतिभाते वस्तुनि पूर्वमर्थक्रियावगतेति तत्स्मरणाद (णाद्) भिलापेन प्रवृत्तिर्भविष्यतीति कः स्व-परपक्षयोर्विशेषः?, अथ वस्तुस्वरूपप्रतिभासं दर्शनमर्थक्रियासम्बन्धाऽननुभवान्न प्रवृत्तिमुपरचयितुं क्षमम्। तत्सम्बन्धानुभवे वा सविकल्पकं तद् भवेत्। न चाऽप्रवर्त्तकस्य प्रामाण्यम्-"प्रामाण्यं व्यवहारेण" इत्यत्र "व्यावहारिकस्य चैतत्प्रमाणस्य लक्षणमुक्तम्" इत्यभिधानात्, असदेतत्; यतो न दर्शनं केवलं प्रमाणं क्षणिकत्वादावपि तस्य भावात् किं तु-अभ्यासपाटवादिसव्यपेक्षं यत्रांऽशे विधिप्रतिषेधविकल्पद्वयं जनयत् पुरुषं प्रवर्त्तयति तत्रास्य प्रामाण्यमिति निश्चयापेक्षस्य प्रत्यक्षस्य व्यवहारसाधकत्वात् न प्रामाण्यक्षतिः; नन्वेवमपि यदि निश्चये सति प्रवृत्तिः तदभावे च नेत्यभ्युपगमस्तर्हि प्रवृत्तिकरणनिश्चय एव प्रमाणं भवेत्। न च दर्शनगृहीतं नीलं निश्चिन्वन्नुपजायमानो विकल्पो गृहीतग्राहितया अप्रमाणम्, यतोऽर्थक्रियासम्बन्धितामुल्लिखन्ती दर्शनाऽवगतस्यार्थस्य कल्पना प्रवृत्तिमारचयति। न च विशददृशाऽर्थक्रियासाधकता तस्यावगतेति कथं कल्पना न भिन्नविषया? सर्वत्र च कल्पनैव प्रवृत्तिं विरचयति दर्शनाभावेऽप्यनुमानात्प्रवृत्तिदर्शनात् दर्शनसद्भावेऽपि क्षणिकादौ व्यवसायाभावात्। प्रवृत्तेरभावाद् व्यवहारमुपरचयन्ती मतिः प्रमाणमिति न निर्विकल्पिका सा प्रमाणम्, किं तु-विकल्पिकैव। ननु न विकल्पस्याऽप्रामाण्यं किं त्वसौ प्रत्यक्षं न भवति अनुमानताऽभ्युपगमात्। अथ लिङ्गजत्वाभावादपरोक्षमर्थं निश्चिन्वन् कथमनुमानं विकल्पः? नैतत्; यतो नापरोक्षमेवार्थमसौ निश्चिनोति, अर्थक्रियासम्बन्धित्वस्य परोक्षस्याप्यध्यवसितेस्तदभावे च प्रवृत्तेरयोगात्। सा च फलसंगतिः परोक्षानुमानग्राह्या दृश्यमान इव प्रदेशे परोक्षदहनसंगतिः। न च तत्र धूमलिङ्गसद्भावादनुमानावतारेऽपि फलसम्बन्धितायां लिङ्गाभावान्नाऽनुमानप्रवृत्तिः प्रतिभासमानरूपस्यैव लिङ्गत्वात्। तथाहि-उपलभ्यमाने जलरूपे शीतस्पर्शादयस्तत्सहचारिणो यदि निश्चेतुं शक्याः कालान्तरस्थायितया तदा तत्र प्रवृत्तिर्युक्ता, रूपप्रतिभासमात्र-

स्य तु नैरन्तर्यान्न तदर्थी प्रवृत्तिः संगता प्रवृत्तौ वा तद्विरतिप्रसङ्गः स्पर्शादीनां चैकसामग्र्यधीनतयोपलभ्यमानं रूप हेतुः स्थैर्य चोपलभ्यमानं कालान्तरस्थितौ लिङ्गमिति कथं न निश्चयोऽनुमानम्? न च सम्बन्धस्मरणपक्षधर्मत्वनिश्चयादुपजायमानमनुमानमनुभूयते अत्र तु त्रैरूप्यपर्यालोचनमन्तरेणापि नीलानुभवानन्तरं 'नीलमेतत्' इति निश्चयो झगित्युदेतीति नानुमानताऽस्य यतो न सर्वदाऽनुमितिस्त्रैरूप्यपर्यालोचनमपेक्ष्य प्रवर्तते अत्यन्ताभ्यासात् कदाचित्संबन्धस्मरणानपेक्षलिङ्गस्वरूपदर्शनमात्रादुदयदर्शनात् धूमोपलम्भादभ्यासदशायामग्निप्रतिपत्तिवत्। अथाऽत्राग्निनाभावपर्यालोचनं प्रागासीदनवगतसम्बन्धस्य धूमदर्शनादेवाप्रतीतेस्तर्हि मन्दाभ्यासे प्रकृतेऽपि पर्यालोचनमस्त्येव–'एवंजातीयं पूर्वमप्यर्थक्रियोपलब्धा इदमप्येवं जातीयं प्रतिभासमानं रूपम्' इति। अभ्यासदशायां तु रूपदर्शनादेव, पर्यालोचनमन्तरेणापि झगिति फलयोग्यता प्रतीयते इति व्यवस्थितमेतत् दृश्यमानं रूपं धर्मि तत्फलयोग्यता साध्या तद्रूपसामान्यं लिङ्गमिति न प्रतिज्ञार्थैकदेशत्वमपि हेतोः अतो निश्चयः स्वरूपावभासादुदयमासादयन्परोक्षमर्थक्रियायोग्यत्वं निश्चिन्वन्ननुमानमेव। व्यवहारोऽप्यत एव न प्रत्यक्षात्। आह च–

"तद् दृष्टावेव दृष्टेषु, संवित्सामर्थ्यभाविनः।
स्मरणादभिलाषेण, व्यवहारः प्रवर्तते ॥१॥"

इति स्मरणादनुमानरूपाद्व्यवहारः प्रवर्तते इति अयमर्थः न त्वन्यगतचेतसोऽभ्यस्ते परिमलादावविकल्पात्मनः प्रवृत्तिदर्शनात्कथं न निर्विकल्पकं प्रवर्तकम्? किंच–यद्यनुमितिरेव बाह्ये सर्वदा प्रवृत्तिमारचयति तर्हि तत्र नाध्यक्षं प्रमाणमिति स्वसंवेदनमात्रमेवैकमध्यक्षं भवेत् तथा च–"रूपादिस्वलक्षणविषयमिन्द्रियज्ञानम् आर्यसत्यचतुष्टयगोचरं योगिज्ञानम्" इत्यादि चतुर्विधाध्यक्षोपवर्णनमसंगतमनुषज्येत। अथ निर्विकल्पकमध्यक्षं नार्थस्यार्थक्रियायोग्यतामधिगच्छति तदभावे न प्रवृत्तिरित्यप्रवर्तकत्वान्न बाह्ये प्रमाणम्, तर्ह्यनुमानमपि नार्थक्रियासंगतिमवभासयति तस्याऽवस्तुविषयत्वात् तथा च तदपि कथं प्रवर्तकम्? अथ तदध्यवसायितया तस्योत्पत्तेरर्थग्राहित्याभावेऽपि प्रवर्तकता, असदेतत्; तदध्यवसायित्वस्याप्यनुपपत्तेः। तथाहि–तदध्यवसायित्वं, तस्य किं ग्राहकाकारः, उत ग्राह्याकार इति वक्तव्यम्?, यदि ग्राहकाकारस्तदा तस्य ग्राहकं स्वरूपं न बाह्यमर्थं सन्निधापयतीति न तदध्यवसायोऽनुमानसाध्यः। अथ ग्राह्याकारः सोऽपि नार्थस्वरूपसंस्पर्शीति कथं तद्वशेन बाह्यार्थाध्यवसितिरनुमानफलम्?, तदेवमनुमितेः स्वसंवेदनमात्रपर्यवसितत्वान्नार्थप्रदर्शनद्वारेण प्रवर्तकता युक्ता। नन्वनुमाने सति प्रवृत्तिर्दृष्टा तदभावे सा न दृष्टेति तत्कार्याऽसौ निश्चीयते तर्ह्यभ्यासदशायां विकल्पविकले दर्शने सति प्रवृत्तिर्दृष्टा प्रतिपदोच्चारं तत्र विकल्पना संवेदनेऽपि पुरः परिस्फुटप्रतिभासमात्रादेव प्रवृत्त्युपपत्तेस्तत्कार्याऽसौ किं न व्यवस्थाप्यते?, अथानुमानादनभ्यासदशायां प्रवृत्तिरुपलब्धेति तदन्तरेण सा कथं भवेत्? न; मन्दाभ्यासे अनुमानादेव प्रवृत्तिः,अभ्यासदशायां तु पर्यालोचनलक्षणानुमानव्यतिरेकेणापि वस्तुदर्शनमात्रादेव समस्तु, तथा दर्शनात्, अन्यथा नाभ्यासदशायामनुमानात् प्रवृत्तिदर्शनात्सर्वदाऽनुमानस्यैव व्यवहृतिजनकत्वे प्रत्यक्षेण लिङ्गग्रहणाऽभावतस्तन्निश्चयकृदपरमनुमानमभ्युपगन्तव्यं तत्राऽप्यनुमानान्तराल्लिङ्गनिश्चय इति तन्निश्चयकृदपरमनुमानमित्यनवस्थाप्रसक्तेर्न कदाचित् व्यवहृतिर्भवेत्। ततोऽविकल्पकं दर्शनमभ्यासदशायां व्यवहारकृदभ्युपगन्तव्यम्, अन्यथा पूर्वोक्तप्रकारेणानुमानाऽनवतारात्। न च पौर्वापर्येऽप्रवृत्तिमत् सन्निहितमात्रावभास्यध्यक्षं कथं तादृग् लिङ्गग्रहणक्षमं यतोऽनभ्यासाऽवस्थायामनुमानात्प्राग् व्यवहारः पश्चात्त्वभ्यासादभ्यासदशायामिति प्रेर्यम्? यतः संवृत्त्या लिङ्गप्रतिबन्धग्राहि प्रत्यक्षमभिमतं, लोकस्य ह्येवमभिमानः तदेव–"साध्यप्रतिबद्धं लिङ्गमहं पश्यामि" इति तदभिमानाच्च लिङ्गप्रतिबन्धग्राह्यध्यक्षं व्यवहारकृदभ्युपगतं। परमार्थपर्यालोचनया तु न प्रत्यक्षानुमानभेदः नापि व्यवहारः संवेदनमात्रत्वात्सर्वप्रपञ्चस्य। स्वसंवेदनं च सकलविकल्पविकलमिति कथं स्वार्थनिर्णयस्वभावं ज्ञानं प्रमाणं सिद्धिमासादयेत्?।

( निर्विकल्पकमबाध्यक्षमिति मतं प्रतिविधाय सविकल्पस्याध्यक्षत्वमुपपाद्य च सिद्धान्तिना स्वार्थनिर्णयस्वभावज्ञानस्य प्रमाणसामान्यलक्षणत्वव्यवस्थापनम् )–

अत्र प्रतिविधीयते–'स्वार्थनिर्णयस्वभावं प्रत्यक्षं न भवति' इत्येतत् किं तद्ग्राहकप्रमाणाभावादभिधीयते, आहोस्वित्तद्बाधकप्रमाणसद्भावात्?,तत्र न तावदाद्यः पक्षोऽभ्युपगमार्हः स्थिरस्थूलसाधारणस्य स्तम्भादेरर्थस्य बहिरन्तश्च सद्द्रव्यचेतनत्वाद्यनेकधर्माक्रान्तस्य ज्ञानस्यैकदा निर्णयात्मनोऽध्यक्षस्य स्वसंवेदनप्रत्यक्षसिद्धत्वात्, तद्ग्राहकप्रमाणाभावोऽसिद्धः। ( तथाहि–अन्तर्बहिश्च स्वलक्षणं पश्यँल्लोकः स्थूलमेकं स्वगुणाऽवयवात्मकं ज्ञानं घटाऽऽदिकं च सकृत् प्रतिपद्याऽध्यवस्यति, न चायं प्रतिपत्तिरनध्यक्षा, विशदस्वभावतयाऽनुभूतेः। न च विकल्पाऽविकल्पयोर्मनसोर्युगपद्वृत्तेः, क्रमभाविनोर्लघुवृत्तेर्वा एकत्वमध्यवस्यति जनः तत्रत्याविकल्पाऽध्यक्षगतं वैशद्यं विकल्पे सांश (स्वांश) स्वार्थाध्यवसायिन्यध्यारोपयतीति वैशद्यावगतिः,एकस्यैव तथाभूतस्वार्थनिर्णयाऽऽत्मनो विशदज्ञानस्यानुभूतेरननुभूयमानस्याप्यपरानिर्विकल्पकस्य परिकल्पने बुद्धेरन्यस्याऽपरस्य परिकल्पनाप्रसङ्ग इति सांख्यमतमप्यनिषेध्यं स्यात्। किंच–सविकल्पाऽविकल्पयोः कः पुनरैक्यमध्यवस्यति?, न तावदनुभवो विकल्पेन आत्मन एक्यमध्यवस्यति, व्यवसायविकलत्वेनाभ्युपगमात्, तस्यान्यथा भ्रान्तताप्रसङ्गात्। नापि विकल्पो विकल्पेन स्वस्यैक्यमध्यवस्यति तेनाविकल्पस्याविषयीकरणात्, अन्यथा स्वलक्षणगोचरताप्राप्तेः अविषयीकृतस्य चाऽन्यत्राऽध्यारोपाऽभावात्, न ह्यप्रतिपन्नरजतः शुक्तिकायां रजतमध्यारोपयितुं रजतमनाश्रितं समर्थः। न च यथाश्वादिविकल्पस्तदविषयीकरणेऽप्यध्यवसितगवाद्य उपजायते तथाऽनाध्यवसिता विकल्पस्वभावो विकल्पः समुपजायत इति स तयोरैक्यमध्यवस्यति,उक्तोत्तरत्वात्। तथाहि–न तावदनुभव एवंरूपमात्मानमवगच्छति तेनाऽप्याऽर्थस्याऽविषयीकरणात् एतद्रूपतया तस्यासिद्धेश्च। न हि मरीचिका जलरूपतयाऽध्यवसिता तद्रूपतयाऽसिद्धार्थक्रियाप्यभिमतोपलब्धा,एवमनुभवोऽपि विकल्परूपतयाऽध्यवसि–

तस्तथाऽसिद्धो नार्थक्रियापर्यायिः नाऽतः किञ्चित्सिध्यति। नाऽपि विकल्पस्तस्याऽवस्तुविषयत्वाऽभ्युपगमात्। यदि पुनर्विकल्पस्तद्रूपमात्मानमध्यवस्येत् तर्हि परमार्थविषयता तस्येति। "विकल्पोऽवस्तुनिर्भासा-द्विसंवादादुपप्लवः" इति असंगतं स्यात्। अत एव न विकल्पान्तरमपि तमध्यवस्येत् तस्याऽपि तुल्यदोषत्वात्। किं च-तयोरैक्यं व्यवस्यतीत्यत्र यदि विकल्पं निर्विकल्पकतया मन्यते व्यवहारी तदा निर्विकल्पकमेव सर्वं ज्ञानमिति विकल्पव्यपहारोच्छेदादनुमानप्रमाणाऽभावः। अथाऽविकल्पं विकल्पतया तत्रा सविकल्पकमेव सर्वं प्रमाणमिति अविकल्पप्रत्यक्षवादो विशीर्येत। यथाहि—प्रज्ञाकराभिप्रायेण मणिप्रभायां मणिज्ञानं, 'य एव मणिर्मया दृष्टः स एव प्राप्त' इत्यभिमानिनः प्रत्यक्षं प्रमाणम् अन्यथाऽभ्यासदशायां भाविनी दृश्य-प्राप्ययोरेकत्वाध्यवसायात्प्रत्यक्षमेव प्रमाणमिति न भवेत्। अन्यस्य तादृशबन्धनस्य तत्राऽप्यभावात्-तथा सर्वं निर्विकल्पं विकल्पस्येव निश्चितस्य सविकल्पकमेव सर्वं ज्ञानमिति यो व्यवहरति तस्य किमिति तदेव न प्रमाणम्?, यथाहि-दृश्यं प्राप्यारोपात्प्राप्यं तथा अविकल्पो विकल्पाऽऽरोपाद्विकल्पो भवेत्, न्यायस्य समानत्वात्। अथ यथा-प्राप्यमणिप्रभा-मणिप्रतिभासयोरेकत्वाध्यवसायेऽपि न मणिप्राप्तौ तत्प्रतिभासस्याभावः-अन्यथा मणिः प्रतिभातो न प्राप्तः स्यात्—तथा सविकल्पाऽविकल्पयोरेकत्वाध्यवसायेऽपि निर्विकल्पकस्य नाऽभावः; नन्वेवं सांशस्थूलैकरूपप्रतिभासव्यतिरिक्तस्य निरंशक्षणिकपरमाणुऽप्रतिभासलक्षणनिर्विकल्पकानुभवस्यापि निर्णयप्रसक्तिः। अथ विकल्पेनाविकल्पस्य सहस्रांशुना तारानिकरस्येव तिरस्कारान्न तथा निर्णयस्तर्हि विकल्पस्याप्यविकल्पेन तिरस्कारात्प्रतिभासनिर्णयो न स्यात्।

अथ विकल्पस्य बलीयस्त्वादविकल्पस्य च दुर्बलत्वात् तेन तस्य तिरस्कारः, ननु कुतो विकल्पस्य बलीयस्त्वम्?, प्रचुरविषयत्वात् इति चेत्, न; अविकल्पविषय एव प्रवृत्त्यभ्युपगमाद् अन्यथाऽस्य गृहीतग्राहित्वाऽसंभवात्। निर्णयात्मकत्वात्तस्य तदात्मकत्वमिति चेत्?, ननु तस्य किं स्वरूपे निर्णयात्मकत्वम् उतार्थरूपे?, न तावत्स्वरूपे "सर्वचित्तचैत्तानामात्मसंवेदनं प्रत्यक्षम्" ( न्यायवि० १-१० ) इत्यस्य विरोधात्। एवमपि तत्र तस्य निर्णयात्मकत्वे चक्षुरादिज्ञानं स्वपरयोस्तदात्मकं किं न भवेत्? तथा च स्वार्थाकाराध्यवसायाधिगमश्चक्षुरादिचेतसां सिद्ध इति केन कस्य तिरस्कारः? तन्न विकल्पः स्वरूपे निर्णयात्मकोऽभ्युपगन्तव्यः। अथार्थे तस्य निर्णयात्मकत्वम्; नन्वेवमेकस्य विकल्पस्य निर्णयाऽनिर्णयस्वभावं रूपद्वयमायातम्। तच्च परस्परं तद्वतश्च यद्येकान्ततो भिन्नमभ्युपगम्यते समवायादेरनभ्युपगमात्सम्बन्धाऽसिद्धेः 'बलवान् विकल्पो निर्णयात्मकत्वाद्' इत्यस्यासिद्धिः। न च रूपादीनामिव परस्परमेकसामग्र्यधीनतालक्षणकतयोः संबन्धः तद्वतो वाऽग्निधूमयोरिव तदुत्पत्तिलक्षण इति वक्तव्यं स्वाऽभ्युपगमविरोधात्। किं च-यदा विकल्पस्य कारणत्वं निर्णयाऽनिर्णययोश्च कार्यत्वं तदा विकल्पस्य पूर्वकालत्वं, तयोश्चोत्तरकालत्वं, प्रज्ञाकराभिप्रायात् विपर्ययेऽपि मरणारिष्टस्यारिष्टादेस्तत्कार्यतया प्राक् भाविनस्तेनाभ्युपगमात्। तथा च भिन्नकालस्य विकल्पस्य न निर्णयाऽनिर्णयाऽऽत्मकत्वमिति ज्ञानरूपताया अप्यभावः तद्विकलस्य गत्यन्तराभावात् तयोश्च विकल्पस्वभावविकलतया निःस्वभावता। ज्ञानात् भिन्नयोरनुपलम्भत्वेन गत्यन्तराभावात्। स्वयं तयोरुपलम्भे विकल्पाद्भिन्नं ज्ञानं स्यात्ताम्। एवं च यदनिर्णयात्मकं तत्तदेव, यच्च निर्णयस्वरूपं तदपि तदेव। तथा च निर्विकल्पकस्य पृथगनुपलम्भनिर्णयः स्यादिति पूर्वोक्तमेव दूषणं पुनरापतति, निर्णयात्मकेऽपि चक्षुरादिज्ञानमपि तथैव स्यादिति पूर्वोक्त एव दोषः। तत्रापि रूपद्वयकल्पनायां प्रकृतो दोषः, अनवस्था च। तच्च परस्परं तद्वतश्च भेदैकान्तो युक्तः। अभेदैकान्तेऽपि तद्द्वयमेव तद्वान् वा भवेत्। तथा च न प्रकृतसिद्धिः।

अथ निर्णयाऽनिर्णयस्वभावयोरन्योन्यं तद्वतश्च कथंचित्तादात्म्यम् तर्हि यत् स्वात्मनि अनिर्णयात्मकं बहिरर्थे च निर्णयस्वभावरूपं तत्साधारणमात्मानं प्रतिपद्येत चेद्विकल्पः स्वरूपेऽपि सविकल्पकः प्रसक्तः, अन्यथा निर्णयस्वभावतादात्म्याऽयोगात्। न च स्वरूपमनिश्चिन्वन् विकल्पोऽर्थं निश्चिनोति इतरथा गृहीतस्वरूपमपि ज्ञानमर्थग्राहकं भवेदिति न नैयायिकमतप्रतिक्षेपः। न च नैयायिकाभ्युपगमेन परगृहीतस्य स्वगृहीततादोषः, भवन्मतेऽपि परनिश्चितस्य स्वनिश्चितत्वप्रसङ्गः। यथा च परज्ञानमननुभूतत्वान्नात्मनो विषयस्तथा विकल्पस्य स्वरूपमनिश्चितत्वान्नाऽऽत्मनो विषय इति समानं पश्यामः। न च तस्याऽपि विकल्पान्तरेण निश्चयः तस्याऽपि विकल्पान्तरेण निश्चयाऽऽपत्तेरनवस्थाप्रसङ्गः। नच विकल्पस्वरूपमनुभूतमपि क्षणिकत्वादिवदनिश्चितमर्थनिश्चायकं युक्तम्। अनिश्चितस्यानुभवेऽपि क्षणिकत्ववत् स्वयमव्यवस्थितत्वात्। अव्यवस्थितस्य च शशशृङ्गादेरिवान्यव्यवस्थापकत्वाऽयोगात्। यथा च विकल्पस्य स्वाऽर्थनिर्णयात्मकत्वं तथा चक्षुरादिबुद्धीनामपि तद् युक्तम् अन्यथा तासां तद्ग्राहकत्वाऽयोगात्। अथ विकल्पस्य बहिरर्थे प्रवृत्तिरेव नास्तीति कथं तन्निर्णयात्मकः? न हि नीलज्ञानं पीताऽप्रवृत्तिकं तन्निर्णयात्मकं वक्तुं शक्यम्, प्रतिपत्त्रभिप्रायवशात् बौद्धैर्बाह्यार्थव्यवसायाऽऽत्मकत्वं विकल्पस्य परमार्थतो निर्विषयत्वेऽपि व्यावर्ण्यते, तदयुक्तम्; यतः किमिदं विकल्पस्य परमार्थतो निर्विषयत्वम्? यद्यात्मविषयत्वं तर्ह्यात्मविषयं निर्विकल्पकमपि ज्ञानं निर्विषयमित्यर्थनिर्णयाऽऽत्मकत्वाद्बलवान् विकल्प इति निर्विकल्पकानुभवस्य निर्णयतिरस्कारक इत्यसङ्गतं स्यात् सविकल्पकस्येव कस्यचिदभावादात्मविषयस्य निर्विकल्पकस्यापि विकल्पवत्सविकल्पकस्यैव वा भावात् न चैवं कस्यचित्प्रतिपत्तुरभिप्रायः। अथ साधारणस्यास्पष्टस्य स्व-परयोरविद्यमानस्याकारस्य शब्दसंसर्गयोग्यस्य विषयीकरणं निर्विषयत्वं, न; तस्य तत्र सम्बन्धाऽभावतो विषयीकरणाऽसंभवात्, तथापि तद्विषयीकरणे सर्वमपि ज्ञानं तथैव स्वविषयं विषयीकुर्यादिति, तदुत्पत्त्यादिसम्बन्धकल्पनमनर्थकमासज्येत। न च तादात्म्यलक्षणस्तत्र तस्य सम्बन्धस्तदाकारं अविकल्पकस्यस्याऽविकल्पकत्वे वा तदाकारस्यस्य प्रसङ्गः। तदुत्पत्तिसंबन्धवशात् तेन तद्ग्रहणम् इत्येतदप्ययुक्तं तदाकारस्य तज्ज्ञानोत्पादकत्वेन स्वलक्षणत्वप्राप्तेस्तज्ज्ञानस्य सविषयताप्रसक्तिदोषात्। न च स्ववासनाप्रकृतिविभ्रमव-

ध्यादनुत्पन्नमतदाकारं च तत्तद्विषयीकरोति असमसमनन्तरविशेषात्, अन्यस्याप्युपजातस्य तथा स्वविषयीकरणप्रसङ्गः सर्वत्र तदाकारतदुत्पत्तिप्रतिबन्धकल्पनावैयर्थ्यप्रसङ्गः। अतस्तदाकारविषयीकरणासंभवाद्विकल्प्यार्थाभावतो दृश्य-विकल्प्यावर्थावेकीकृत्य प्रवर्त्तत इत्युक्तमभिधानम्। ततो न बलवान् विकल्प इति कथं तेनाऽविकल्पतिरस्कार इति अविकल्पकनिश्चयस्तदैव भवेत् नवैवम्—अतो नाऽविकल्पस्य विकल्पेन एकत्वाऽध्यवसायः। किञ्च—विकल्पेऽविकल्पकस्यैकत्वेनाध्यारोप इति कुतो निश्चीयते? अस्पष्टाऽस्वलक्षणग्राहिणि स्पष्टस्वलक्षणग्राहित्वस्य प्रतीतेस्तदध्यारोपावगतिरिति चेत्, ननु यदि नाम तत्र तत्प्रतीतिः अविकल्पारोपस्तु कुतः? स्पष्टत्वादेस्तद्धर्मस्य, तत्र दर्शनादिति चेत्; तद्धर्मः स्पष्टत्वादिरित्येतदेव कुतः? तत्र दर्शनादिति चेत्; अत एव विकल्पधर्मोऽप्यस्तु अन्यथा विकल्पस्यापि मा भूत्। न च विकल्पव्यतिरेकेणाविकल्पमपरमनुभूयते यस्य स्पष्टत्वादिधर्मः परिकल्पेत एवमपि तत्र तत्परिकल्पने ततोऽप्यपरमनुभूयमानं विशदत्वादिधर्माधारं परिकल्पनीयमिति अनवस्थाप्रसक्तिः। अथ किञ्चित् ज्ञानं सविकल्पकमपरं निर्विकल्पकं राश्यन्तराभावाद्विकल्पस्य चाऽर्थसामर्थ्योद्भूतत्वासंभवान्न विशदत्वादिधर्मयोगः, अविकल्पस्यापि तद्योगाभावे विशदत्वादिकं न क्वचिदपि भवेदित्यविकल्पस्यैव तदभ्युपगन्तव्यम्। भवेदेतद्यद्यर्थसामर्थ्यप्रभवत्वेन वैशद्यादेर्व्याप्तिः स्यात्तदभावे तन्न भवेत्। न चैवम्-अर्थसामर्थ्योद्भूतेऽपि दूरस्थितपादपादिज्ञाने वैशद्यादेरभावाद् योगिप्रत्यक्षे चार्थप्रभवत्वाभावेऽपि च भावात्। न च तदप्यर्थसामर्थ्योद्भूतं तत्समानसमयस्य चिराऽतीतत्वादनुत्पन्नस्य चार्थस्य तद्ग्रहणानुपपत्तेः। तथाहि—प्रागसर्वज्ञः सन् सुगतो विवक्षितक्षणे सर्वज्ञतामासादयंस्तत्समानसमयभाविनां भावानाम्-तज्ज्ञानं प्रति अजनकत्वात्तेषां-ग्राहको न स्यात्, एवमुत्तरोत्तरतद्विज्ञानक्षणा अपि स्वसमयार्थग्राहका न भवेयुः। चिरतरविनष्टस्य च भावकलापस्यासत्त्वेन तदकारणत्वान्न तं प्रति ग्राहकता भवेत्। अनुत्पन्नस्य च पदार्थसमूहस्य कारणत्वाऽसंभवात्, तं प्रति ग्राहकता तस्य दूरोत्सारितैव। अथ चिरातीतं भावि च तत्कारणमभ्युपगम्यत इति नायं दोषः; नन्वत्राऽप्यऽभ्युपगमे येन स्वभावेन तत्तदनन्तरभाविकार्यमुत्पादयति तेनैव यदि सुगतज्ञानमिदानींतनकालभावि जनयति तदेकस्वभावत्वान्नित्यादिवत् कार्यक्रमायोगात् पूर्वमेवैतदप्युत्पद्येत। अथ समनन्तरप्रत्ययस्य सुगतज्ञानहेतोरिदानीमेव भावान्न पूर्वमुत्पत्तिः, असदेतत्, यत आलम्बनकारणं चिरातीतसमयभावि तदैव तत्कार्यमुत्पादयितुं प्रभवति समनन्तरप्रत्ययस्त्विदानीमिति विरुद्धकारणसामर्थ्यानुविधायिनः कार्यस्योत्पत्तिरेव न भवेत्। अथान्येन स्वभावेन तर्हि सांशं तत्प्रसज्यत इति तद्ग्राहिणोऽपि ज्ञानस्य सांशिकवस्तुग्राहकत्वेन सविकल्पकताप्रसक्तिः। एवं भाविकारणेऽपि वक्तव्यम्। तन्न योगिप्रत्यक्षमर्थसामर्थ्यप्रभवमभ्युपगन्तव्यम्, अन्यथा पूर्वोक्तदोषप्रसक्तिः। तच्च तदप्रभवमपि यथा विशदम्—अन्यथा प्रत्यक्षत्वानुपपत्तेः-तथा विकल्पज्ञानमर्थसामर्थ्याप्रभवमपि यदि विशदं भवेत् तदा को विरोधः?, विकल्पस्य वैशद्यमेव विरोधः। तदुक्तम्

"न विकल्पानुबद्धस्य, स्पष्टार्थप्रतिभासिता।
स्वप्नेऽपि स्मर्यते स्मार्त्तं, न च तत्ताविरोधकृत्॥ १॥"

इति चेत्; ननु स्वप्नावस्थायां पुरोवर्त्तिहस्त्याद्यवभासमेकं ज्ञानमनुभूयते, अपरं तु स्मरणज्ञानम्। तत्र पूर्वोक्तक्रमतयोपजायमानस्य-यदि वैशद्यवैकल्यं नैतावता सर्वविकल्पस्य पुरोवर्त्तिस्तम्भाद्युल्लेखवतो वैशद्याभावस्तत्र तस्य स्वसंवेदनाध्यक्षतः प्रतीतेः। न चाविकल्पकं तदिति वक्तव्यं स्थिरस्थूरपुरोव्यवस्थितहस्त्याद्यवभासिनः स्वप्नदशाज्ञानस्याविकल्पकत्वे अनुमानस्यापि सांशवस्त्वध्यवसायिनो निर्विकल्पकत्वप्रसङ्गः विकल्पवार्त्ताविरतिरेव स्यात्। अत एव-'प्रथमं निर्विकल्पकं निरंशवस्तुग्राहकं तदर्थसामर्थ्योद्भूतत्वात् तदुत्तरकालभावि तु निर्विकल्पज्ञानप्रभवमर्थनिरपेक्षं सांशवस्त्वध्यवसायि सविकल्पकमविशदम्, लघुवृत्तेस्तु निर्विकल्पकज्ञानवैशद्याध्यारोपात्, तत्राध्यक्षत्वाभिमानो लोकस्य' इति, एतदपि निरस्तं द्रष्टव्यम्। विकल्प एव पूर्वोक्तन्यायेन वैशद्योपपत्तेः, निर्विकल्पकस्य च निरंशक्षणिकपरमाणुमात्रावसायिनः कदाचिदप्यनुपलब्धेस्तत्र वैशद्यकल्पनाया दूरापास्तत्वात्। अथ संहृतसकलविकल्पावस्थायां पुरोवर्त्तिवस्तुनिर्भासि विशदमक्षप्रभवं ज्ञानमविकल्पकं संवेद्यत एव तथा चाध्यक्षसिद्ध एव ज्ञानानां कल्पनाविरह इति नात्र प्रमाणान्तरान्वेषणमुपयोगि। तदुक्तम्-'प्रत्यक्षं कल्पनापोढं, प्रत्यक्षेणैव सिध्यति॥' इत्यादि। तथा पुनरप्युक्तम्—

"संहृत्य सर्वतश्चिन्तां, स्तिमितेनान्तरात्मना।
स्थितोऽपि चक्षुषा रूपं, वीक्षते साऽक्षजा मतिः॥ १॥"

न ह्यस्यामवस्थायां नामादिसंयोजितार्थोल्लेखो विकल्पस्वरूपोऽनुभूयते। न च विकल्पानां स्वसंविदितरूपतयाऽननुभूयमानानामपि संभव इति विकल्पविकला साऽवस्था सिद्धा, असदेतत्; यतस्तस्यामवस्थायां स्थिरस्थूरस्वभावशब्दसंसर्गयोग्यपुरोव्यवस्थितगवादिप्रतिभासस्याऽनुभूतेः सविकल्पकज्ञानानुभव एव। न हि शब्दसंसर्गप्रतिभास एव सविकल्पकत्वं तद्योग्यावभासस्यापि कल्पनात्वाभ्युपगमात्, अन्यथा व्युत्पन्नसंकेतस्य ज्ञानं शब्दसंसर्गविरहात् कल्पनावन्न स्यात्। तत्र पूर्वकालदृष्टत्वस्य वर्तमानसमयभाविनि संयोजनाच्छब्दोल्लेखाभावेऽप्यसदर्थग्राहितयाऽविशदप्रतिभासत्वात् तत् सविकल्पकम्, पूर्वकालदृष्टत्वस्य पूर्वदर्शनाप्रतीतावपि व्यापकाप्रतीतौ व्याप्यस्येव प्रतीतेरसत्त्वाऽसिद्धेः तत्सम्बन्धित्वग्राहिणोऽसदर्थासक्तेर्वैशद्याभावस्य तत्रानुपपत्तेः। शब्दसंसर्गयोग्यप्रतिभासस्य विशदतया विकल्परूपस्याप्यध्यक्षतोपपत्तेः शब्दयोजनामन्तरेणापि स्थिरस्थूरार्थप्रतिभासं निर्णयात्मकं ज्ञानमध्यक्षमभ्युपगन्तव्यम्, अन्यथा तस्य प्रामाण्यमेवानुपपन्नं भवेत्। तथाहि-यत्रैवांशे नीलाऽऽदौ विधिप्रतिषेधविकल्पद्वयं पाश्चात्यं तज्जनयति तत्रैव तस्य प्रामाण्यं तदाकारोत्पत्तिमात्रेण प्रामाण्ये क्षणिकत्वादावपि तस्य प्रामाण्यप्रसक्तेः क्षणक्षयानुमानवैफल्यमन्यथा भवेत् विकल्पश्च शब्दसंयोजितार्थग्रहणम् तत्संयोजना च शब्दस्मरणमन्तरेणासंभविनी तत्स्मरणं च प्राक्तनसन्निध्युपल-

१—' न च तत् तादृगर्थवत्।' पाठान्तरे।

र्थार्थदर्शनमन्तरेणानुपपत्तिमत् , तद्दर्शनं चाध्यक्षतः क्षणिकत्वादाविव निश्चयजननमन्तरेणाऽसंभवि, निश्चयश्च शब्दयोजनाव्यतिरेकेण नाभ्युपगम्यत इत्यध्यक्षस्य कचिदप्यर्थप्रदर्शकत्वाऽसंभवात् प्रामाण्यं न भवेत् । तस्माच्छब्दयोजनमन्तरेणाप्यर्थनिर्णयात्मकमध्यक्षमभ्युपगन्तव्यम् अन्यथा विकल्पाऽध्यक्षेण लिङ्गस्याप्यनिर्णयात् । अनुमानात् तन्निर्णये अनवस्थाप्रसक्तेः, अनुमानस्याप्यप्रवृत्तितः सकलप्रमाणादिव्यवहारविलोपः स्यात् । अत एव—" अश्वं विकल्पयतो गोदर्शनात् न तदा गोशब्दसंयोजना तस्यास्तदाऽननुभवात् युगपद्विकल्पद्वयानुत्पत्तेश्च । निर्विकल्पकगोदर्शनसद्भावस्तदा " इति निरस्तम् गोशब्दसंयोजनामन्तरेणापि तद्दर्शनस्य निर्णयात्मकत्वात् , अन्यथाऽश्वविकल्पनाद् व्युत्थितस्य गवि क्षणिकत्ववत् शब्दस्मरणासंभवतः स्मृतिर्न भवेत् । अभ्युपगमनीयं चैतत् अन्यथा गोशब्दस्मरणस्यापि विकल्परूपत्वादपरतच्छब्दस्मरणमन्तरेण तद्योजनारूपस्य तस्याऽसंभवात् तत्स्मरणमभ्युपगन्तव्यं तस्याऽपि चापरतच्छब्दस्मरणमन्तरेण तथाभूतस्याऽनुपपत्तेरपरतच्छब्दस्मरणमित्यनवस्थानात् न प्रथमशब्दस्मरणमिति न कचिद् विकल्पप्रसवो भवेत् , अथापरशब्दस्मरणमन्तरेणापि शब्दस्मरणसंभवान्नाऽनवस्था तर्हि प्रथमशब्दस्मरणं तद्योजनं च व्यतिरेकेणाप्यश्वविकल्पनसमये गोदर्शनस्य निर्णयाऽऽत्मनः संभवात् कथमस्या विकल्परूपतासिद्धिमुपगच्छेत् ? । यदपि-' निरंशवस्तुसामर्थ्योद्भूतत्वात् प्रथमाक्षसन्निपातजं निरंशवस्तुग्राहि निर्विकल्पकम् ' इति तदप्यसंगतम् ; निरंशस्य वस्तुनोऽभावेन तत्सामर्थ्योद्भूतत्वस्य निर्विकल्पकत्वहेतोस्तत्राऽसिद्धेः । न च यन्निरंशप्रभवं तन्निरंशग्राहि, निरंशरूपक्षणप्रभवस्याप्युत्तरक्षणस्य तद्ग्राहित्वाऽदर्शनात् । न च ज्ञानत्वे 'सति' इति विशेषणान्नायं दोषः प्रत्यक्षप्रभवविकल्पस्य ज्ञानत्वेऽपि तद्भावानुपपत्तेः उपपत्तौ वा हिंसाविरतिदानचित्तस्वसंवेदनाध्यक्षप्रभवनिर्णयेन तद्ग्रहणोपपत्तेः निश्चयविषयीकृतस्य चानिश्चितरूपान्तराभावात् स्वर्गप्रापणसामर्थ्यादेरपि तद्गतस्य निश्चयात् , तत्र विप्रतिपत्तिर्न भवेत् अथानुभवस्यैवायं यथावस्थितवस्तुग्रहणलक्षणः स्वभावविशेषो न विकल्पस्य तेनायमदोषस्तर्हि यथा दानचित्तानुभवः स्वसंवेदनाध्यक्षलक्षणः तद्गतं सद्द्रव्यचेतनादिकं विषयीकरोति तथा स्वर्गप्रापणसामर्थ्यमपि तत्स्वरूपाव्यतिरिक्तत्वाद्विषयीकुर्यात्ततश्च सद्द्रव्यचेतनत्वादाविव तत्राऽपि विवादो न भवेत् । न चासौ नास्तीति शक्यं वक्तुं चार्वाकादेस्तत्र विप्रतिपत्तिदर्शनात् । तथाहि-" यावज्जीवेत्सुखं जीवे " इत्याद्यभिधानान्न स्वर्गः नापि तत्प्राप्तिहेतुः कश्चिद् भाव इति चार्वाकाः । नैव दानादिचित्तात् स्वर्गः यदि ततो भवेत् तदनन्तरमेवासौ भवेत् अन्यथा मृतात् शिखिनः केकायितं भवेत्तस्मात्ततो धर्मस्तस्माच्च स्वर्ग इति नैयायिकादयः । " इष्टाऽनिष्टाऽर्थसाधनयोग्यतालक्षणौ धर्माऽधर्मावि " इति मीमांसकाः । उक्तं च-' शाबरे-" य एव श्रेयस्करः स एव धर्मशब्देनोच्यते," ( मीमांसाद० १-१-२ शाब० पृ० ४ ) अनेन द्रव्यादीनामिष्टार्थसाधनयोग्यता धर्म इति प्रतिपादितं शबरस्वामिना । भट्टोऽप्येतदेवाह—

" श्रेयो हि पुरुषप्रीतिः, सा द्रव्यगुणकर्मभिः ।
चोदनालक्षणैः साध्या, तस्मात्तेष्वेव धर्मता ॥ १ ॥
एषामैन्द्रियकत्वेऽपि, न ताद्रूप्येण धर्मता ॥
श्रेयःसाधनता ह्येषां , नित्यं वेदात्प्रतीयते ।
ताद्रूप्येण च धर्मत्वं, तस्मान्नेन्द्रियगोचरः । "

( श्लो० वा० सू० २ श्लो० १११-१३-१४) इति ।

एवमनेकधा विवाददर्शनाच्च विवादाभावः । स च स्वर्गप्रापणसामर्थ्यस्य दानचित्तादभेदे वस्तुस्वरूपग्राहिणा च स्वसंवेदनाध्यक्षेणाऽनुभवे सद्द्रव्यचेतनत्वादाविव न युक्तः । अथ तच्चित्तादभिन्नं तत्प्रापणसामर्थ्यं तद्ग्रहे गृहीतमेव, किं तु—स्वसंवेदनस्य " सर्वचित्तचैत्तानामात्मसंवेदनं ' प्रत्यक्षमविकल्पकम् ' " इति वचनात् अविकल्पाध्यक्षत्वात् तद्गृहीतस्यागृहीतकल्पत्वान्न विवादसंभवः तत्र आह च कीर्त्तिः—' पश्यन्नपि न पश्यति ' इत्युच्यते । असदेतत् ; यतो यदि तत्सामर्थ्यं निर्विकल्पकाध्यक्षविषयत्वाद् गृहीतमप्यगृहीतकल्पं तर्हि तच्चित्तमपि तत एव तथा भवेदविशेषात् तथा च-' यद्दानादिचित्तं तद्बहुजनसेव्यतानिबन्धनं यथा त्यागिनरपतिचित्तं, दानादिचित्तं च विवक्षितम् ' इत्याद्यनुमानमगमकम्-आश्रयासिद्धत्वादिदोषात्-प्रसज्येत । अथात्र विकल्पोत्पत्तेर्न दोषः, असदेतत् , यतो यद्धेतुको विकल्पः चित्तवत् तत्सामर्थ्येऽपि भवेत् । अथ न, तत्र चित्तेऽपि मा भूत् अविशेषात् । अनुभवाद्विकल्पोत्पत्तिर्नानिमित्तेति चेदुभयत्र स्यात् न वा कचिदप्यनुभवस्याऽप्यविशेषात् न च चेतोविकल्पप्रभव एवानुभवः समर्थः न तत्सामर्थ्यविकल्पोत्पत्ताविति वक्तव्यं यतो येन स्वभावेन तच्चित्तचेतनादिकं स्वसंवेदनाध्यक्षमनुभवति, तेनैव चेत् तत्सामर्थ्यं तद्धेतुभयत्रापि विकल्पस्ततः प्रादुर्भवेत् । अथ रूपान्तरेण तद्धेतुभयरूपतैकस्यानुभवस्याविकल्पैकान्तवादव्याघातः, न चैकेनैव स्वभावेनोभयानुभवेऽपि तत्सामर्थ्ये न विकल्पमुत्पादयत्यनुभवः अशक्तत्वान्न तदुत्पादयति विपर्ययादिति वक्तव्यम् , एकस्य शक्तेतररूपद्वयायोगात् । न चैकत्र शक्तिरन्यत्राशक्तिस्तस्येतीश्वरस्यापि क्रमभाविकार्यविधायिनः एकत्र शक्तिरपरत्राशक्तिरिति, स्वभावभेदो न भवेदिति न नित्यकारणप्रतिक्षेपो भवेत् । अथ नानुभवमात्राद्विकल्पप्रभवः अन्यथा निर्णयात्मकानुभववादिनोऽपि विस्तीर्णप्रघट्टकार्थे वर्णपदवाक्यादेः सकलस्य निर्णयात्मनाऽध्यक्षेणानुभवात् स्मरणविकल्पानुदयो न भवेत् । अथात्र दर्शनपाटवाभ्यासप्रकरणाद्यपेक्षा नान्यत्रापि सा तुल्येति । एतदप्यसत् ; यतो दर्शनस्य पाटवं सचेतनाऽऽदौ , तद्-

१ अत्र धर्मकीर्त्तिकृते न्यायबिन्दौ-" सर्वचित्तचैत्तानामात्मसंवेदनम् " इत्येतावदेव सूत्रं दृश्यते-प० १ सू० १० पृ० ११ । ततः- " प्रत्यक्षमविकल्पकम् " इत्यंशस्तत्सूत्रटीकानुसारी समुद्धृतो बोद्धव्यः । सा च टीकेयम् वर्त्तते-" तत्र ज्ञानरूपं वेदनमात्मनः साक्षात्कारि निर्विकल्पकमभ्रान्तं च तस्मात् प्रत्यक्षम् "- पृ० ११ पं० १४ । तट्टीकाटिप्पण्यामपि यथा-" तत् प्रत्यक्षं स्वसंवेदनरूपं निर्विकल्पकं तत्र शब्दादियोजनाभावात् । कुतः । शब्दसंकेताभावात् । अभ्रान्तं च तद्विज्ञानं स्वरूपेऽविपर्यस्तत्वाद् बाधकाभावाच्चेति "-पृ० १३ प० ५-६ " सर्वचित्तचैत्तानामात्मसंवेदनं प्रत्यक्षं निर्विकल्पकमिति "-सिद्धिवि० टी० लि० पृ० ५१ प० २७ ।

ग्रहणयोग्यता तत्सामर्थ्यं । अपाटवं तद्ग्रहणयोग्यता तच्च दर्शनस्य दृश्यस्य च सांशतायामुपपत्तिर्मादिति कथं न सविकल्पकता ?, विकल्पजननाऽजनने तत्पटुत्वाऽपाटवे अपि नाऽभ्युपगमनीये सांशतापत्तेरेवेति । अथाऽभ्यासादिसहायं दर्शनं विकल्पमुत्पादयति; नन्वयमपि यदेव सञ्चेतनादौ दर्शनं तदेव चेत् , अन्यत्राभयत्र विकल्पोत्पत्तिर्भवेत् , अन्यथा ' नित्यस्यापि सहकारिसन्निधमेकदैकत्र यद्रूपं तस्याऽन्यत्रान्यदा सद्भावेऽपि न तत्कार्यकरणं तदा तत्र' इति तस्य यद् दूषणं तदसंगतं भवेत् । किं च—यदपरमपेक्ष्य कार्यजनकं क्वचिद् दृष्टं तत् तत्सहकृतं कार्यं निर्वर्तयतीति युक्तं मृदादिवत् कुम्भकारासुपकृतम् । नत्वाभ्यासादिसहायमविकल्पकं कदाचिद्विकल्पमुपजनयद् दृष्टमिति कथं तस्य सहकारिसन्निधस्य विकल्पजनकताभ्युपगमः ? । अथ सञ्चेतनादिविकल्पमविकल्पकमुत्पादयत् दृष्टमिति तदभ्युपगमः; स्यादेतत् यदि क्रमभाविहेतुफलभूतमविकल्पसविकल्पकं ज्ञानद्वयमवसीयेत न च तदवसीयते सांशयिकविकल्पस्वभावस्य सामान्यविशेषात्मकवस्तुग्राहिणः प्रथममेवोपजायमानस्यैकस्यैव निश्चयात् । तथाऽप्यप्रतीयमानस्य पूर्वकालभाविनोऽपरस्याविकल्पस्याभ्युपगमे तत्राप्यपरस्य तथाभूतस्याभ्युपगम इत्यनवस्थाप्रसक्तिः ।

यदप्यविकल्पकस्याभ्यासादिसहायविकल्पजनने प्रघट्टकास्मरणं दृष्टान्तत्वेनोपन्यस्तं,तदप्ययुक्तम् ; यतो वर्णादीनां तज्ज्ञानानां च व्यक्तिभेदात् दृढसंस्काराण्येव निश्चयात्मकान्यपि ज्ञानानि स्मृतिजनकानि नाऽपराणीति प्रतिनियतविषयस्मृतिसंभवान्न सकलप्रघट्टकास्मरणदोषः । अनिश्चयात्मकं तु ज्ञानं क्षणिकत्वादाविव न कचिद्विकल्पहेतुर्भवेत् । इत्युक्तं प्राक् । न च भवत्पक्षे सञ्चेतनाऽऽदिस्वर्गप्रापणशक्त्यादीनां परस्परं तदनुभवानां च भेदः येनेदमुत्तरं समानं भवेत् । तथाहि—सञ्चेतनादितत्सामर्थ्ययोरभेदे तदनुभवादेकरूपादुभयत्र संस्कारः स्मरणं वा भवेत् न वा क्वचिदिति अन्यथा अनुभवस्य सांशतापत्तिरिति सविकल्पकत्वं भवेत्। तस्मादानिचत्तादौ सञ्चेतनत्वादिकमनुभूयते न स्वर्गप्रापणसामर्थ्यमित्यभ्युपगन्तव्यम् । अथ तच्चेतसो मूषिकाऽलर्कविषविकारवदनन्तरं फलस्यानुपलम्भात् , अतत्फलसाधर्म्यादसामर्थ्यसमारोपाद्वा,तदनुभवेऽपि न विकल्पः। तदुक्तम्-

"एकस्यार्थस्वभावस्य, प्रत्यक्षस्य सतः स्वयम् ।
कोऽन्यो न दृष्टो भागः स्या—द्यः प्रमाणैः परीक्ष्यते ॥ १ ॥
नो चेद् भ्रान्तिनिमित्तेन, संयोज्येत गुणान्तरम् ।
शुक्तौ वा रजताकारो, रूपसाधर्म्यदर्शनात् ॥२॥" इति ।

अत्र च तात्पर्यार्थः—यद् यतोऽभिन्नं तस्मिन्ननुभूयमाने तदनुभूयते यथा तस्यैव स्वरूपम् अभिन्नं च । सञ्चेतनादेः चेतसः स्वर्गप्रापणसामर्थ्यं तस्य ततो भेदे सम्बन्धासिद्धेः सामर्थ्यमेव तत्प्राप्तेश्चेतसस्तत् प्राप्तिं प्रत्यकारकत्वं च भवेत् निरंशस्य च वस्तुनोऽध्यक्षेणानुभवे अननुभूतापरांशाभावान्न तत्र प्रमाणान्तरप्रवृत्तिः प्रयोजनवती । अयं च निश्चयात्मकाध्यक्षवादिनो दोषः , निश्चिते विपरीतसमारोपाभावात् , निश्चयारोपमनसोर्बाध्यबाधकभावात् । अविकल्पदर्शनानुभूते तु वस्तुन्यनिश्चयात् भ्रान्तिनिमित्तगुणान्तराऽऽरोपसंभवात्तद्व्यवच्छेदार्थं प्रमाणान्तरप्रवृत्तिः सप्रयोजनैवेति , एतदप्ययुक्तम् ,-यतस्तत्सामर्थ्यस्य यत्फलं सच्चेतसां तदेव, उताऽन्यदिति ?। प्रथमपक्षे उभयत्र निश्चयाभावः फलादर्शनस्याविशेषात् । द्वितीयपक्षे घट पटवत् तद्भेदः । यदप्यसामर्थ्यसमारोपान्निश्चयानुत्पत्तिरिति तत्रापि तत्सामर्थ्यानुभवो यद्यनिश्चितोऽप्यस्ति सर्वं सर्वेणाऽनिश्चितमपि भवेत् इति सांख्यमतोऽप्रतिक्षेपः । न च तत्सामर्थ्यं तच्चेतसोऽभिन्नमिति तदनुभवे तस्याप्यनुभवश्चन्द्रग्रहणेऽपि तदेकत्वाग्रहणतः तैमिरिकदर्शनेन व्यभिचारात् , तस्यापि ग्रहणमिति चेत् , न; भ्रान्तरभावप्रसक्तेः "कल्पनापोढमभ्रान्तं प्रत्यक्षम् " ( न्यायबिं०१-४ ) इत्यत्राभ्रान्तग्रहणाऽऽनर्थक्यप्रसक्तेर्व्यवच्छेद्याभावात् । चन्द्रग्रहणमपि तत्र नास्तीति चेत् , न ; एकत्वाप्रतिपत्तावपि तत्प्रतिभासदर्शनात्। एकस्य द्वित्वविशिष्टतया तस्य ग्रहणान्मरीचिकाजलज्ञानवत् भ्रान्तं तदिति चेत् , न; द्वित्वे यथा विसंवादाभिप्रायात्तद्भ्रान्तं तथा चन्द्रमसि संवादाभिप्रायात्किमिति तत्रा(त्रा)भ्रान्तं प्रमाणेतरव्यवस्थाया व्यवहारानुरोधतः समाश्रयणात् ' प्रमाण्यं व्यवहारेण, शास्त्रं मोहनिवर्त्तनम् । ' इति भवतैवाभिहितत्वात् । नन्वेकत्र ज्ञाने भ्रान्तेतररूपद्वयमयुक्तं व्यवहारिणा तथाऽऽश्रयणाद् अन्यथैकचन्द्रदर्शनस्यापि ' चन्द्ररूपे प्रमाणता क्षणिकत्वे अप्रमाणता' इति रूपद्वयं न स्यात् क्षणक्षयेऽपि तत्प्रामाण्ये प्रमाणान्तरा प्रवृत्तिर्भवेत् । चन्द्रमस्यप्यप्रमाणत्वे न किञ्चित् क्वचित्प्रमाणं भवेदिति सर्वप्रमाणव्यवहारलोपो भवेत् यस्य तु मतं दृश्य-प्राप्ययोरेकत्वे अविसंवादाभिमानिनः प्रत्यक्षं प्रमाणम् , इतरस्य तयोर्विवेके सत्यनुभूतेऽपि न प्रमाणं तस्य चन्द्रदर्शने चन्द्रप्राप्त्यभिमानिनः किमिति चन्द्रमात्रे तत्र प्रमाणम्?, विवेकाध्यवसायिनस्तु यदि तदननुभूतेऽप्येकत्वे प्रमाणं तर्हि यद्यथाऽवभासते तत्तथैव परमार्थसद्व्यवहारावतारि, यथा नीलं नीलतयाऽवभासमानं तथैव सद्व्यवहारावतारि अवभासन्ते च क्षणिकतया सर्वे भावा इत्यनुमानमसंगतं इतोऽसिद्धताप्राप्तेः। अथ तं प्रत्येतदनुमानमेव नोपादीयते तर्हि कं प्रत्येतदुपादेयम् ?, यस्तयोर्विवेकं मन्यते तं प्रतीति चेत् , न ; तं प्रत्यनुमानानर्थक्यात् तदन्तरेणापि तदर्थनिष्पत्तेः । यश्च तं प्रति भाविनि प्रवर्त्तकत्वादनुमानं प्रमाणं युक्तम् तत् " सर्वचित्तचैत्तानामात्मसंवेदनं प्रत्यक्षम् " इति वचनात्स्वरूपे भ्रान्तं बहिरर्थे " भ्रान्तिरपि सम्बन्धतः प्रमा " इति वचनाद् भ्रान्तमित्येकमेव कथं द्विरूपम् ? किं च-यदि तस्य न प्रत्यक्षं प्रमाणमस्ति कथमनुमानप्रादुर्भावः ? अस्ति चेत् तत्किं विषयमिति वाच्यम् ? साधनावभासि जलादिसाधनविषयं प्राप्यावभासि प्राप्यार्थक्रियाविषयमिति चेत् ; ननु तदपि जलादिमात्रे प्रमाणं स्वविषयकार्यजननसामर्थ्यादावप्रमाणम् अन्यथा विवादाभावात् शास्त्रप्रणयनं तदर्थमनर्थकं भवेदिति तदप्यंशेनैव प्रमाणम् ।

यत्पुनरभ्यधायि—'दृश्यप्राप्ययोरेकत्वे विसंवादबुद्धिं प्रति प्रत्यक्षाऽऽभासम्' इति तत्र दृश्यादिमात्रे तदाभासत्वे वस्तुदर्शनमुच्छिद्येत । अथात्र प्रमाण-तदाभासधर्मद्वयमेकत्राप्यभ्युपगम्यते प्रकृतेऽप्यभ्युपगम्यताम् । अथ तैमिरिकज्ञानेनाप्रतीयमानमेकत्वं तस्येति कथं? ननु निश्चिते शब्दे अवि-

भिन्ना क्षणिकता तस्येत्यपि कथम्? अनुमानेन तत्रैव निश्चयात् तस्येत्येतदन्यत्रापि समानम्। तदेवं निरंशस्य वस्तुनः तज्जन्मग्रहणे तत्सामर्थ्यस्यापि ग्रहणप्रसङ्गेऽविवादाभावस्तत्रैव भवेत्। न चैवमिति सांऽशं वस्तु तथाभूतवस्तुग्राहकं प्रमाणमपि सांशं सत्सविकल्पकम् अपि च-यदि निरंशवस्तुसामर्थ्योद्भूतत्वात्कल्पनापोढमध्यक्षं स्वसंवेदनं तथाभूतवस्तुप्रभवत्वाभावात् संवेदनग्राहि निर्विकल्पकं च न भवेत्, अथ तादात्म्यं तत्र तन्निमित्तं, न; सन्तानान्तरस्य स्वर्गप्रापणसामर्थ्यादेरपि ग्रहणप्रसङ्गस्तदविशेषात्। अथ न तादात्म्याद् ग्रहणमेवाभिन्नस्य, किं तु-तादात्म्यादेव, असदेतत्; तादात्म्यादेव स्वरूपस्य ग्रह इत्यत्र प्रमाणाऽभावात्। अविकल्पकं दर्शनं प्रमाणमिति चेत्, न; सुषुप्ताऽवस्थायां तत्प्रसङ्गात् तत्रापि चैतन्यसद्भावात्। अन्यथा प्रबोधावस्थाविज्ञानमनुपादानम् अचेतनोपादानं वा भवेत्। न च तदनुरूपप्रबोधदर्शनाज्जाग्रद्विज्ञानोपादानं तद्विप्रकृष्टदेशकालस्यापि कारणत्वे तैमिरिकज्ञानस्यापि विप्रकृष्टदेशकालकारणप्रभवत्वसंभवात् निरालम्बनता न भवेत्। अतोऽव्यवहितं कारणमभ्युपगन्तव्यम्। न च सुषुप्तावस्थायां विकल्पानुत्पत्तेर्न तत्प्रसङ्गो विकल्पवशात् तादात्म्ये सत्यपि तद्व्यवस्थायां बाह्यार्थेऽपि तत एव तद्व्यवस्थोपपत्तेर्विकल्प एव प्रमाणं भवेत्।

किञ्च-यद्यर्थप्रभवत्वात् ज्ञानमर्थसंग्राहकं तर्हीन्द्रियादेरपि तत एव ग्राहकं भवेत् तद्यनिरिन्द्रियाद्बाह्यार्थग्राहकत्वं च तस्याभ्युपयते। तथाहि-" प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम्" (वात्स्या० भा० पृ० १ पं० १) इत्यत्र भाष्ये प्रमातृप्रमेयाभ्यामर्थान्तरमर्थसहकार्यर्थवत् प्रमाणं नैयायिकैर्व्याख्यातम्। तेन न तत्प्रभवत्वं तन्निमित्तम्। तदभ्युपगमे वा शब्दज्ञाने शब्दवत् तत्समवायिकारणकर्णशष्कुल्यवच्छिन्ननभोदेशाख्यश्रोत्रेन्द्रिय-तत्समवाययोरपि प्रतिभासः स्यादित्याकाशसमवायविषयानुमानोपन्यासो वैयर्थ्यमनुभवेत्, अध्यक्षसिद्धेऽनुमानोपन्यासप्रयासस्य वैफल्यात्। न च समवायविषयाध्यक्षस्याऽविकल्पत्वेन तद्गृहीतस्याऽगृहीतरूपत्वाच्चाऽयं दोषः, शब्देऽप्यस्य समानत्वात् यतो नैकमेकत्र निर्णयात्मकमपरत्रान्यथेत्यनेकान्तवादिना वक्तुं युक्तम्। एवं रूपत-त्सामान्य-समवायेष्वऽपि वाच्यम्। अथ न कारणमित्येवार्थग्रहः, किंतु-योग्यतातः, नन्वेवं किंनिमित्तमर्थस्य ज्ञानं प्रति कारणता परिकल्प्यते?। अथ न तद्ग्रहणान्यथाऽनुपपत्तेस्तत्प्रति तत्कारणतापरिकल्पनं किंत्वन्वयव्यतिरेकाभ्याम्-'अर्थे सति तदवभासं ज्ञानमुपलब्धं तदभावे च न' इत्यन्वयव्यतिरेकनिबन्धनोऽन्यत्रापि हेतुफलभाव इति, असदेतत्, योगिज्ञानस्य सकलातीतानागतपदार्थसाक्षात्कारिणोऽतीतानागततत्पदार्थाभावेऽपि भावाभ्युपगमात्। न च सर्वेऽप्यतीताऽनागता भावास्तदा सन्ति सर्वभावानां नित्यताप्रसङ्गः। न च तद्विषयं तज्ज्ञानं न भवति 'सदसद्वर्गः कस्यचिदेकज्ञानावलम्बनः अनेकत्वात्पञ्चाङ्गुलिवत्' इत्यनुमानविरोधात्। एतेन "यस्य ज्ञाने प्रतिभासस्तस्य तत्र तत्कारणत्वं निमित्तमभिधीयते, तत्प्रतिभाससामस्य समवायादेस्तन्निमित्तः प्रतिभासो भवतु इत्यासञ्जयितुं युक्तम्" इत्यध्ययनादिमतं निरस्तं योगिज्ञानेऽकारणस्यापि प्रतिभासप्रतिपादनात्। 'तैजसं चक्षुः रूपादीनां मध्ये रूपस्यैव प्रकाशकत्वात् प्रदीपवत्' तथा 'प्राप्तार्थप्रकाशकं चक्षुः तैजसत्वात् प्रदीपवत्' इति, एतदप्यत एव निरस्तम् रूपप्रकाशकत्वं हि रूपज्ञानजनकत्वं तच्च प्रदीपस्याऽसिद्धं तस्य रूपैकज्ञानसंसर्गित्वात्। प्रयोगश्चात्र—प्रदीपस्तद्विज्ञानकारणं न भवति विषयत्वात् यो हि यद्विषयो नासौ तत्कारणं यथा त्रिकालाशेषभावविषययोगिज्ञानस्यातीतादिकोऽर्थः, तथा च प्रदीपो विषयो यथोक्तरूपज्ञानस्य तस्मान्न कारणमिति। तैजसत्वाऽसिद्धौ च चक्षुषः प्राप्तार्थप्रकाशकत्वं दूरोत्सारितमेव। अत एव—" नाऽननुकृतान्वयव्यतिरेकं कारणं नाऽकारणं विषयः" इति सौगतमतमप्यपास्तम्। तथाहि-किं कारणम् विषय एव, उत कारणमेव विषयः?, प्रथमपक्षे रूपादिसंविदां चक्षुरादयोऽपि विषयो भवेत्, तथा च-' यस्मिन् सत्यपि यन्न भवति तत्तदतिरिक्तहेत्वपेक्षं यथा कुलालाऽभावे त्वन्यप्यपरकारकसमूहे अभवन् घटः कुलालापेक्षः, सत्यपि च रूपादौ कदाचिन्न भवति 'रूपादिज्ञानम्' इत्यनुमानोपन्यासो व्यर्थः अध्यक्षत एव चक्षुरादधिगतेः। द्वितीयपक्षेऽपि 'भविष्यति रोहिण्युदयः कृत्तिकोदयादतीतक्षपायामिव' इत्यस्यानुमानस्य भावी रोहिण्युदयोऽकारणत्वात् विषयो न स्यात् न हि भावी रोहिण्युदयः कृत्तिकोदयस्य परंपरयाऽपि कारणम्। अथ भावी रोहिण्युदयः प्राग्भाविनः कृत्तिकोदयस्य कारणं प्रज्ञाकराभिप्रायेण कार्यस्य प्राग्भावित्वात् तर्हि-'अभूद्भरण्युदयः कृत्तिकोदयात्' इत्यनुमानमविषयं भवेत्। अथ भरण्युदयोऽपि कृत्तिकोदयस्य कारणं तत्रायमदोषः; ननु येन स्वभावेन भरण्युदयात् कृत्तिकोदयस्तेनैव यदि शकटोदयादपि तदा भरण्युदयादिव पश्चात्ततोऽपि भवेत् यथा वा शकटोदयात्प्राक् तथैव भरण्युदयादपि प्राग् भवेत्। अथान्यतरकार्ये कृत्तिकोदयस्तर्ह्यन्यतरस्यैव ततः प्रतीतिर्भवेत्, न चैवमिति न युक्तम्-'कारणमेव विषयः' इति पक्षाश्रयणम्। अथ कारणं स्वाकाराधायकं विज्ञाने विषय इति पक्षः अयमप्ययुक्तः; यतः किं कारणमेव तदाधायकं तत्र, आहोस्वित् तत् तदाधायकमेवेति विकल्पद्वयानतिवृत्तेः। प्रथमविकल्पे केश(शो)न्दुकादिज्ञानं कुतः कारणात् तदाकारमुपजायते? न तावदर्थात्तस्य तत्कारणत्वानभ्युपगमात्, अभ्युपगमे वा तस्याभ्रान्ततापत्तेः। न समनन्तरप्रत्ययात्, तस्य तदाकारता ( ताऽ ) योगात् नेन्द्रियादेः, अत एव हेतोः। तन्न कारणमेव तदाधायकमिति पक्षाभ्युपगमः क्षमः। नापि तत्तदाधायकमेवेति पक्षोऽभ्युपगन्तुं युक्तः, इन्द्रियस्यापि तदाधायकतापत्तेस्तज्ज्ञानविषयताप्रसङ्गः। अर्थस्य च सर्वाऽऽत्मना तत्र स्वाकाराधाने ज्ञानस्य जडताप्रसङ्गः, उत्तरार्थक्षणवदेकदेशेन तदाधायकत्वे सांशताप्रसङ्गः, समनन्तरप्रत्ययस्य तत्र स्वाऽऽकाराधायकत्वाच्च जडतापत्तिलक्षणो दोष इति चेत्, न; समनन्तरप्रत्ययार्थक्षणयोः द्वयोरपि स्वाकारार्पकत्वे तज्ज्ञानस्य चेतनाऽचेतनरूपद्वयाऽऽपत्तेः। प्राक्तनज्ञानक्षणस्यैव तत्र स्वाकाराधायकत्वे सर्वात्मना तदाधाने तस्य पूर्वरूपताप्रसक्तिरिति कारणरूपतैव स्यात् तथा च पूर्वपूर्वक्षणानामप्येवं प्रसक्तेरेकक्षणवर्ती सर्वः सन्तानो भवेदिति प्रमाणादिव्यवहारलोपः।

किञ्च-तदाकारं तत उत्पन्नं च यदि समनन्तरप्रत्यये न तत्प्रमाणं तदुत्पत्तिसारूप्ययोर्व्यभिचारः इति नार्थेऽपि तत्प्रमाणं

भवेत । तथा च-"अर्थेन घटयत्येनां,नहि मुक्त्वाऽर्थरूपताम् ।
तस्मात्प्रमेयाधिगतेः, प्रमाणं मेयरूपता" ॥ १ ॥ इत्यसंगतम-
भिधानम् । सम्म० २ काण्ड २ गाथाव्या० ।

अत्र च द्रव्यार्थिकमतावलम्बी शब्दब्रह्मवादाह भर्तृहरिः-
" अनादिनिधनं ब्रह्म, शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन, प्रक्रिया जगतो यतः ॥ "

(वाक्यप०श्लो०१ प्रथमका०) इति । अत्र च आदिरुत्पादः, निधनं विनाशः, तदभावाद् 'अनादिनिधनम्'। 'अक्षरम्'इत्य-काराद्यक्षरस्य निमित्तत्वादनेन च विवर्तोऽभिधानरूपतया निर्दिष्टः। 'अर्थभावेन' इत्यादिना त्वभिधेयो विवर्तः। 'प्रक्रिया' इति भेदानामेव संकीर्तनम् ' ब्रह्म ' इति पूर्वापरादिदिग्विभागरहितम् अनुत्पन्नमविनाशि यच्छब्दमयं ब्रह्म तत-श्चायं रूपादिभावग्रामपरिणाम इति श्लोकार्थः । एतच्च शब्दस्वभावात्मकं ब्रह्म प्रणवस्वरूपम् , स च सर्वेषां शब्दानां समस्तार्थानां च प्रकृतिः । अयं च वर्णक्रमरूपो वेदस्त-दधिगमोपायः प्रतिच्छन्दकन्यायेन तस्यावस्थितत्वात् , तच्च परमं ब्रह्म अभ्युदयनिःश्रेयसफलधर्मानुगृहीतान्तःकरणैरवगम्यते । अत्र च प्रयोगो—ये यदाकारानुस्यूतास्ते तन्मयाः , यथा घटशरावोदञ्चनादयो मृदाकारानुगता मृण्मयत्वेन प्रसिद्धाः शब्दाऽऽकारानुस्यूताश्च सर्वे भावा इति स्वभावहेतुः । प्रत्यक्षत एव सर्वभावानां शब्दाकारानुगमोऽनुभूयते । तथाहि-अर्थेऽनुभूयमाने शब्दोल्लेखानुगता एव सर्वे प्रत्यया विभाव्यन्ते । उक्तं च—

" न सोऽस्ति प्रत्ययो लोके, यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं, सर्वं शब्देन भासते ॥ "
( वाक्यप० श्लो० १२४ प्रथमका० ) इति ।

न च वाग्रूपताऽननुवेधे बोधस्य प्रकाशरूपताऽपि भवेत् तस्यापरामर्शरूपत्वात् तदभावे तु तस्याभावात् बोधस्याप्य-भावः, परामर्शाभावे च प्रवृत्ता(स्या)दिव्यवहारोऽपि विशीर्येत इति । आह च—

" वाग्रूपता चेद् व्युत्क्रामे-दवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत, सा हि प्रत्यवमर्शिनी ॥ "
( वाक्यप० श्लो० १२५ प्रथमका० ) इति ।

ज्ञानाकारनिबन्धना च वस्तूनां प्रसिद्धिरिति नैषां शब्दाकारानुस्यूतत्वमसिद्धं, तत्सिद्धेश्च तन्मात्रभावित्वात्तन्मयत्वस्य तन्मयत्वमपि सिद्धमेव । अत एव 'अयं घटः' इत्यभेदेन शब्दार्थसंबन्धो वैयाकरणैः-' सोऽयमित्यभिसंबन्धाद्रूपमेकीकृतम् ' इत्यादिनाऽभिजल्पस्वरूपं दर्शयद्भिः प्रतिपादितः ।

अत्र च पर्यायास्तिकमतेन प्रतिज्ञादिदोष उद्भाव्यते-किमत्र जगतः शब्दपरिणामरूपत्वाच्छब्दमयत्वं साध्यते, उत शब्दात्तस्योत्पत्तेः शब्दमयत्वं यथा-' अन्नमयाः प्राणाः ' इति हेतौ ' मयट् ' विधानात् ? न तावदाद्यः पक्षः परिणामानुपपत्तेः । तथाहि—शब्दात्मकं ब्रह्म रूपाद्यात्मकतां प्रतिपद्यमानं स्वरूपपरित्यागेन वा प्रपद्येत, अपरित्यागेन वा ?। यदि परित्यागेनेति पक्ष आश्रीयते तदा ' अनादिनिधनम् ' इत्यनेन यदविनाशित्वमभ्युपगतं तस्य हानिप्रसक्तिः पौरस्त्यस्वभावध्वंसात् । अथाऽपरित्यागेनेति पक्षस्तदा रूपसंवेदनसमये बधिरस्य शब्दसंवेदनप्रसक्तिस्तदव्यतिरेकात् नीलादिवत् । तथाहि—यद् यदव्यतिरिक्तं तत्संवेदने संवेद्यते, यथा तत्स्वरूपम् , रूपाद्यव्यतिरिक्तश्च शब्दात्मेति स्वभावहेतुः । अन्यथा-भिन्नयोगक्षेमत्वात्तदात्मकत्वमेव न स्यादिति विपर्यये बाधकं प्रमाणम् । सम्म० १ काण्ड ६ गाथाव्या० ।

अथ यदाकारं यदुत्पन्नं यदध्यवस्यति तत्र तत्प्रमाणं तत्रापि यदाकारं यदुत्पन्नं विज्ञानमेवार्थाध्यवसायं जनयति, उत तत्त्वमेव, आहोस्विज्जनयत्येवेति कल्पनात्रयम् । आद्यकल्पनायां कारणान्तरनिषेधाद्विकल्पवासनाऽपि तत्कारणं न भवेत् एवं च निर्विकल्पकबोधाद् यथा सामान्याऽवभासी विकल्पस्तथाऽर्थादेव तथाभूताद् भविष्यतीति किमन्तरालवर्तिनिर्विकल्पदर्शनकल्पनया ?, नचाऽविकल्परूपताविशेषेऽपि दर्शनादेव विकल्पोत्पत्तिर्नार्थाद्वस्तुस्वाभाव्यादित्युत्तरं तस्य स्वरूपेणैवाऽसिद्धेः । किं च-यथा(थाऽ)विकल्पादर्थाद्विकल्पदर्शनप्रभवस्तथा दर्शनादपि तथाभूतात् तथाभूतस्यैवाविकल्पस्य प्रसव इति विकल्पवार्ताऽप्युपरतैव भवेत्। किं च-स्थिरस्थूराऽवभासि स्तम्भादिज्ञानं यद्यविकल्पकं कोऽपरो विकल्पो यस्तज्जन्यो भवेत् ?। अथ 'स्तम्भः स्तम्भोऽयम् ' इत्यनुगताकारावभासि ज्ञानं विकल्पः सामान्यावभासित्वात् तर्ह्ययमप्यनेकावयवसाधारणस्थूलैकाकारस्तम्भावभासिविकल्पः किं न भवेत् सामान्यावभासस्याऽत्राऽपि तुल्यत्वात् ? अस्यापलापेऽपरस्याऽप्रतिभासनात् प्रतिभासविकलं जगत्स्यात् । न च स्तम्भप्रतिभासात्प्राग् निरंशक्षणिकैकपरमाऽणुगोचरमविकल्पकं ज्ञानं पुरुषवत्प्रतिभाति तथाऽपि तत्कल्पनं पुरुषपरिकल्पनाऽपि भवेदिति न सौगतपक्षस्यैव सिद्धिः । किं च-निरंशक्षणिकानेकस्तम्भादिपरमाण्वाकारानेकं तद्बिभर्ति स्वाऽऽत्मनि तदा सविकल्पकमासज्येत अनेकानुविधानस्य विकल्पनान्तरीयकत्वात् । अथ भिन्नं प्रतिपरमाऽणु तदिष्यते भवेदेवमविकल्पकम् किंतु-एकपरमाणुग्रहणव्यापारवशाऽपरपरमाणुग्रहणाय व्याप्रियत इति तेषां परलोकप्रत्यक्षताप्रसक्तिः, तद्वेदनैक्ष्य तस्यावेदनामिति तस्याप्यभावः । न चैकैकपरमाणुनियतभिन्नं वेदनमविकल्पकम् अन्यविविक्तैकपरमाणोरर्वाग् दृशि अप्रतिभासनाद्विषयगोचरस्य तज्ज्ञानस्य विकल्पजनकत्वासिद्धेः । तन्न प्रथमपक्षो युक्तिसंगतः इतश्चायमसङ्गतो यतो येन स्वभावेनाविकल्पकं दर्शनं स्वजातीयमुत्तरं जनयति तेनैव यदि विकल्पं तर्ह्यविकल्पो विकल्पः प्रसज्येत विकल्पो वाऽविकल्पः अन्यथा कारणभेदः कार्यभेदविधायी न भवेत् , स्वभावान्तरेण जनने सांशतापत्तिरिति । अथ तत्तमेव जनयति तथा सति धारावाहिनिर्विकल्पसंततिर्न भवेत्। अथ तत् तं जनयत्येवेति तृतीयपक्षाश्रयणं तथा सति क्षणभङ्गादावपि निश्चय इति न ज्ञानसन्ततौ सत्त्वसमारोपः नच रागादयस्तन्निबन्धना इति तद्व्यवच्छेदार्थमनुमितिर्नैरर्थक्यमनुभवेत् । किं च-यदि व्यवसायवशात् निर्विकल्पकस्य प्रामाण्यव्यवस्था तर्हि तदुत्पत्तिसारूप्यार्थग्रहणमन्तरेणाध्यवसाय एव प्रमाणं भवेत् । अथ तथाभूतानुभवमन्तरेण विकल्प एव न भवेत् , असदेतत् ; तस्य तज्जन्यत्वाऽसिद्धेरक्षविकल्पदोषानतिक्रमात्। किं च-यदि तदाकाराद् दर्शनान्निर्णयप्रभवस्तदा स्वलक्षणगोचरो निर्णयो भवेत् , निर्णयवद्वा सामान्यविषयमविकल्पकमासज्येत अन्यथा स्मृतिसारूप्या-

मोहविवज्जुक्कोसो,मोहो समो उ भइयव्वो ॥९६॥

मोहोत्कर्षे मोहनीयस्योत्कृष्टायां स्थितौ सत्यां नियमतः आयुर्वर्जस्यान् शेषाणां कर्मणामुत्कृष्टा स्थितिर्भवति,मोह विवर्जस्य ज्ञानावरणीयादेरुत्कर्षे- उत्कृष्टायां स्थितौ मोहो-मोहनीयं शेषाश्च प्रकृतयो भक्ताः-विकल्पनाः, कदाचिदनुत्कृष्टस्थितिका भवन्ति कदाचिच्चेति भावः ।तत्र सर्वेषां कर्मणामुत्कृष्टस्थितौ वर्तमानः प्रबलमोहाऽऽच्छादितत्वान्न किमपि सम्यग्दर्शनं लभते, उक्तं च-"अट्ठण्ह वि पगडीणं, उक्कोसठिईए उ वट्टमाणो उ । न लभति सम्मद्दंसण--मिच्छत्तेण वि मोहा उ॥१॥" किंतु सप्तानामायुर्वर्जानामभ्यन्तरकोटीकोट्या वर्तमानाः ।

तथा चाह--

अंतिमकोडाकोडी-ऍ होइ सव्वासि कम्मपगडीणं ।
पलियाममंखभागे,खीणे सेसे हवइ गंठी ॥९८॥

आयुर्वर्जानां सर्वासां कर्मप्रकृतीनामन्तिमायां कोटीकोट्यां स्थितायां तत्रापि पल्योपमस्यासंख्येयतमे भागे क्षीणे शेषस्थितिदलिके सति सम्यग्दर्शनलाभो भवति, केवल तदानीं सम्यग्दर्शनलाभान्तरायात्ततः कर्कशघनरूढगूढग्रन्थिरिव दुर्भेदो घनरागद्वेषपरिणामरूपो ग्रन्थिर्भवति । ततस्तस्मिन् भिन्ने प्रतिपत्तव्यं, तस्य च भेदः करणवशात् ।

अथ करणत्रकव्यतामाह--

तिविहं च होइ करणं, अहापवत्तं तु भव्वभव्वाणं ।
भवियाण इमे अन्ने, अपुव्वकरणा नियत्ती य ॥९९॥

करणं नाम परिणामविशेषस्तत्त्रिविधं-त्रिप्रकारं भवति । तद्यथा-प्रथमं यथाप्रवृत्ताख्यं भव्यानाम् ,अभव्यानां च साधारणम् । भव्यानां पुनरिमे द्वे अन्ये करणे अपूर्वकरणमनिवृत्तिरनिवृत्तिकरणं च ।

सांप्रतमेतेषामेव त्रयाणां करणानां कालविभागमाह-

जा गंठी तप्पढमं, गंठीमसमतित्थतो भवे बीयं ।
अनियट्टी करणं पुण, सम्मत्तपुरक्खडे जीवे ॥१००॥

यावद् ग्रन्थिस्तावत् प्रथमं यथाप्रवृत्ताख्यं करणं ग्रन्थिं समतिक्रामतो भिन्दतस्येत्यर्थः पुनरपूर्वकरणम् ,अनिवृत्तिकरणं तु सम्यक्त्वपुरस्कृते यत सम्यक्त्वपुरस्कृतस्तस्मिन् जीवे सम्यक्त्वाभिमुख इत्यर्थः । अथ यावत् ग्रन्थिस्तावत्त्रिगुणस्य सतः कथं कर्मशराशेः क्षपणम् ?उच्यते गिरिसरित्प्रस्तरदृष्टान्तात् ।

ततस्तमेव दृष्टान्तं तत्प्रसङ्गतः शेषकरणयोरपि ।
दृष्टान्ताभिधित्सुर्द्वारगाथामाह—

नदिपहजरवत्थजले, पिपीलिया पुरिसकोद्दवा चेव ।
सम्मद्दंसणलंभे, एते अट्ठ उ उदाहरणा ॥१०१॥

करणत्रयात्सम्यग्दर्शनलाभे एतान्यष्टावुदाहरणानि, तद्यथा-'नदि' त्ति-गिरिनदीप्रस्तरोदाहरणं पथदृष्टान्तः ज्वरोदाहरणं वस्त्रोदाहरणं जलोदाहरणं पिपीलिकोदाहरणं पुरुषोदाहरणं कोद्रवोदाहरणम् ।

तत्र प्रथमतो गिरिसरित्प्रस्तरोदाहरणं भावयति-

गिरिसरियपत्थरेहिं, आहरणं होइ पढमए करणे ।
एवमणाभोगियकरण-सिद्धितो खवण जा गंठी॥१०२॥

गिरिसरित्प्रस्तरैरुदाहरण—दृष्टान्तः प्रथमे यथाप्रवृत्ताख्ये करणे भवति, तच्चैवम्-यथा गिरिसरित्प्रस्तरा-गिरिसरिदुपला-यतो घर्षणघोलनादिना काश्चिद्वर्तुला भवन्ति केचित्त्र्यस्रा एवमनाभोगकरणसिद्धितो यथाप्रवृत्तकरणप्रभावतः सुदीर्घाया अपि कर्मस्थितेस्तावत् क्षपणं यावत् ग्रन्थिरिति । अथानिवृत्तिकरणं सम्यक्त्वपुरस्कृते जीवे भवतीत्युक्तम् , तत्सम्यक्त्वं कथं लभते ?, उच्यते- उपदेशतः स्वयं वा ।

तथा चात्र पथदृष्टान्तः--

उवएसेण सयं वा, नट्ठपहो कोइ मग्गमोतरति ।
जरितो य ओसहेहिं, पउणइ कोई विणा तेहिं ॥१०३॥

नष्टपथः कोऽपि पुरुष उपदेशनान्यं दृष्ट्वा तस्योपदेशेन मार्गमवतरति कश्चिन्मार्गानुसारिप्रज्ञतया स्वयमेवोहापोहं कृत्वा, एवमिहापि सम्यग्दर्शनमाचार्यादीनामुपदेशतो लभते । कश्चित् स्वयमेव जातिस्मरणादिना अत्रैव ज्वरदृष्टान्तमाह-ज्वरितोऽपि कश्चिदौषधैः प्रगुणीत-प्रगुणीभवति कश्चित्पुनस्तैरौषधैर्विना एवमेव । एवमत्रापि कस्यचिद्दर्शनमोह आचार्योपदेशतोऽपगच्छति , कस्यचित्पुनरेवमेव मार्गानुसारितया तत्त्वपर्यालोचनतः । इह ज्वरस्थानीयो दर्शनमोहः औषधस्थानीय आचार्योपदेशः । इह यस्तत्प्रथमतया क्षायोपशमिकसम्यक्त्वदर्शनमुपजायते सोऽपूर्वकरणवशात् मिथ्यात्वदलिकं त्रिधा करोति, तद्यथा-मिथ्यात्वम् , सम्यग्मिथ्यात्वम् , सम्यक्त्वं च ।

अथ वस्त्रदृष्टान्तं जलदृष्टान्तं चाह—

मइलदरसुद्धसुद्धं, जह वत्थं होइ किंचि सलिलं च ।
एसेव य दिट्ठंतो, दंसणमोहम्मि तिविहम्मि ॥ १०४ ॥

यथा किञ्चिद्वस्त्रं सलिलं वा मलिनं भवति, किञ्चिद् दरशुद्धमीषद्विशुद्धं, किञ्चित् शुद्धम् , एष एव दृष्टान्तो दर्शनमोहे त्रिविधे भावनीयः । तद्व्यपूर्वकरणवशात्किञ्चित् शुद्धं सम्यक्त्वरूपं, किञ्चिदीषद्विशुद्धं सम्यग्मिथ्यात्वरूपं, किञ्चित्तथैव मलिनं मिथ्यात्वरूपं स्थितमिति भावः ।

अथाह कथमभव्यास्तस्मिन् पथि देशेऽवतिष्ठन्ते कथं वा ततः प्रतिपतन्ति, भव्या वा कथं ग्रन्थिं विभिद्य ततः परतो गच्छन्ति उच्यते । पिपीलिकादृष्टान्तात् तमेवाह—

अहभावेण पसरिया, अपुव्वकरणेण खाणुमारूढा ।
चिट्ठंति तत्थ काइ, पिवीलिया काइ उड्डेंति ॥ १०५ ॥

पक्खोरुहणट्ठा खाणु, आतो चिट्ठन्ति तत्थ एगावि ।
पक्खविहू गता पिवी-लियाउ उड्डेंति उ सपक्खा॥१०६।

काश्चित्पिपीलिका यथाभावेन अनाभोगतः प्रसरिता—बिलान्निर्गत्य इतस्ततो गन्तुं प्रवृत्ताः । काश्चित्पुनरपूर्वकरणेन स्थाणुमारूढास्तासामपि मध्ये काश्चित्तत्र स्थाने एव तिष्ठन्ति याः पक्षविहीनाः । काश्चित्संजातपक्षास्तत उड्डयन्ते ऊर्ध्वमाकाशेन गच्छन्ति । उक्तार्थस्यैव व्याख्यार्थमन्तरगाथा 'पक्खोरुहणट्ठा' इत्यादि, काश्चित्पक्षविहीनाः,

पिपीलिकाः स्थाणौ प्रत्यवरोहणार्थं तत्रैव स्थाणावेव तिष्ठन्ति, अनिष्टत्वात्प्रत्यवरोहन्ति च । वास्तु सपक्षास्ता उड्डीयन्ते । इह पिपीलिकानामितस्ततः प्रसरणं यथाप्रवृत्तकरणतः, स्थाण्वारोहणमपूर्वकरणतः, उड्डयनमनिवृत्तकरणात् । एवमत्रापि ग्रन्थिदेशगमनं यथाप्रवृत्तिकरणेन, ग्रन्थिभेदनमपूर्वकरणतः, सम्यग्दर्शनमनिवृत्तिकरणेन । यथा च काश्चित् पिपीलिकाः पक्षविहीनत्वात् स्थाणावेव स्थिताः स्थित्वा च ततः प्रत्यवतीर्णास्तथा कोऽपि मन्दाध्यवसायतया तीव्रविशोधिरहितोऽपूर्वकरणेन ग्रन्थिभेदमसाधयन्नुत्थितः समुच्छलितघनरागद्वेषपरिणामस्तत्रैव तिष्ठति स्थित्वा च पुनः पश्चात्ततः प्रतिनिवर्तते ।

अस्मिन्नेवार्थे पुरुषदृष्टान्तमाह—

जह वा तिन्नि मणूसा, सभयं पंथं भएण वचंता ।
वेलाइक्कमतुरिया, पयंति पत्ता य दो चोरा ॥ १०७ ॥
तत्थेगो उ नियत्तो, एगो गहिओ अ तिन्निवत्तो एको ।
कमगमसंगहपयत्तं, भिन्नतरं धावणं तइए ॥ १०८ ॥

वाशब्दो दृष्टान्तान्तरसमुच्चये, यथा त्रयो मनुष्याः सभयं पन्थानं भयेन पाठान्तरक्रमेण व्रजन्तो वेलातिक्रमत्वरिताः संध्यासमापतनेन गमनं वेलातिक्रमतस्त्वरमाणा व्रजन्ति । अत्रान्तरे चोभयपार्श्वतः प्राप्तौ पाणिकृपाणकरालौ द्वौ चौरौ तौ च दृष्ट्वा तावेवमालपतः क्व यास्यथ यूयं अरण्यमेव युष्माकमिदानीं समापतितमिति । तत्रैकः पुरुषस्तौ समापतन्तौ दृष्ट्वा प्रथमत एव निवृत्तः, एकः पुनर्द्वितीयो हठाद्भयेन उद्गीर्णकृपाणदर्शनतश्च भयेन शीघ्रं तत्रैव स्थितः, एकस्तृतीयः पुनः परमसाहसिकः प्रत्युद्गीर्णखड्गस्तौ द्वावपि चौरौ पश्चात्कृत्य तत्स्थानमतिक्रान्तः । इह या त्रयाणामपि पुरुषाणां प्रथमतः क्रमेण गतिः सा यथाप्रवृत्तिकरणं यत्पुनस्तद्द्वयं भिन्नं तत इतरदपूर्वकरणादपूर्वकरणम्, यत्तु तत्परतो धावनं तत् तृतीये निवृत्ताख्ये करणे द्रष्टव्यम् ।

तदेवं दृष्टान्तद्वयमपि विधाय सांप्रतमुपनयमाह—

एवं संसारीणं, जीवाणं तिन्नि करणाइं ।
भवसिद्धिसलद्धीण य, पक्खालपिवीलिया उवमा ॥१०९॥

एवम्-अमुना दृष्टान्तमनेन प्रकारेण यानि त्रीणि करणानि प्रागभिहितानि तानि सर्वाणि संसारिणां योजयितव्यानि तत्र पिपीलिकादृष्टान्तमधिकृत्य प्रागेव योजिताः, नवरं याः पक्षवत्यः पिपीलिका उक्तास्ताभिरुपमा भवसिद्धिसलब्धिकानां द्रष्टव्या । भव्यैः सिद्धिर्येषां ते भवसिद्धिकाः कतिपयभवमोक्षगामिन इत्यर्थः, तेऽपि कदाचित्प्रतिपतन्ति, तत आह-सलब्धिः-उत्तरोत्तरविशुद्ध्यध्यवसायप्राप्तिर्येषां ते सलब्धिकास्ततो विशेषणसमासस्तेषाम् । किमुक्तं भवति-सपक्षपिपीलिका इव केचित्संसारिणो भवसिद्धिकाः सलब्धिकाः स्थाणोरिव ग्रन्थिदेशादपि परतो गच्छन्ति, केचित्पुनरभव्या भव्या वा केवल पक्षविहीनपिपीलिका इव स्थाणोरिव ग्रन्थिदेशात्प्रतिपतन्ति । पुरुषदृष्टान्तमधिकृत्येयं योजना—पुरुषस्थानीयाः संसारिजीवाः, कर्मस्थितिः पन्थाः, भयस्थानीयो ग्रन्थिः, द्वौ चौरौ रागद्वेषौ, यस्तु मन्दपराक्रमो न पुरतो न मार्गतः किं तु भयेन तत्रैव स्थितस्तत्सदृशो ग्रन्थिदेशे

वर्तमानो भव्योऽभव्यो वा । स च तत्र संख्येयमसंख्येयं वा कालं तिष्ठति । तत्र स्थितस्य कः लाभ इति चेत् ? उच्यते-श्रुतलाभः ।

तथा आह—

दट्ठूण जिणवराणं, पूयं अन्नेण वावि कज्जेण ।
सुयलंभो उ अभव्वे, हविज्ज थंभेण उवणीतं ॥ ११० ॥

यस्तम्भेन उपनीतं उपनयं प्रापितस्तस्मिन् अभव्ये तु-शब्दाद्भव्ये च भवति श्रुतलाभो द्रव्यश्रुतलाभः । कथमिति चेदत आह—'दट्ठूणे' त्यादि, स हि ग्रन्थिकसत्त्वो भव्योऽभव्यो वा भगवतां जिनवराणां पूजां दृष्ट्वा अहो कीदृशं तपसः फलमिति परिभाव्य तदर्थिकतया अन्येन वा कार्येण स्वर्गसुखार्थित्वादिना प्रव्रज्यामभ्युपगच्छति, ततः सामायिकादिद्रव्यश्रुतलाभः, ग्रन्थौ चैव किमन्तं कालं स्थित्वा पुनः पश्चात्प्रतिनिवर्त्तते, यस्त्वप्यनिवृत्तिकरणतः सम्यक्त्वमासादितं तस्यापि द्वौ प्रकारौ कश्चित्परिणामतो वर्द्धन्ते कश्चित् हानिमुपगच्छन्ति । तत्र ये हानिं गच्छन्ति न प्रतिपतन्ति, इतरे श्रावकत्वादीन्यपि लभन्ते । तत्र जघन्यतः समकमेव, यत उक्तम्—"सम्मत्तचरित्ताइं जुगवं पुव्वं च सम्मत्तं" ।

उत्कर्षतः पुनरेवम्—

सम्मत्तम्मि उ लद्धे, पलियपुहत्तेण सावओ होज्जा ।
चरणोवसमखयाणं, सायरसंखंतरा होंति ॥ १११ ॥
एवं अप्पडिवडिए, सम्मत्ते देवमणुयजम्मेसु ।
अन्नयरसेढिवज्जं, एगभवेणं च सव्वाइं ॥ ११२ ॥

सम्यक्त्वे लब्धे पल्यपृथक्त्वेन-पल्योपमपृथक्त्वेन श्रावको देशविरतो भवति, ततश्चरणोपशमक्षयाणामन्तराणि संख्यातानि सागरोपमाणि भवन्ति । इयमत्र भावना—देशविरतिप्राप्त्यनन्तरं संख्यातेषु सागरोपमेषु गतेषु चरणलाभस्तदनन्तरं भूयः संख्यातेषु सागरोपमेषु गतेषूपशमश्रेणिलाभस्ततोऽपि परतः संख्येयेषु सागरोपमेष्वतिक्रान्तेषु क्षपकश्रेणिस्ततस्तद्भवे मोक्षः, एवममुना प्रकारेणाप्रतिपतितसम्यक्त्वे देवमनुजजन्मसु वर्त्तमानस्य प्रतिपत्तव्यम् । यद्वा-अन्यतरश्रेणिवर्जमुपशमश्रेणिवर्जं क्षपकश्रेणिवर्जं वा एकभवेन सर्वाणि देशविरत्यादीनि प्रतिपद्यते । श्रेणिद्वयप्रतिपत्तिस्त्वेकस्मिन् भवे न भवति, यत उक्तम् "मोहोपशम एकस्मिन्, भवे द्विः स्यादसंततः । यस्मिन् भवे तूपशमः, क्षयो मोहस्य तत्र न" ॥ १ ॥

संप्रति यदुक्तं प्राक् मिथ्यात्वमपूर्वकरणेन त्रिधा करोति तत्र कोद्रवदृष्टान्तमाह—

अप्पुव्वेण तिपुंजं, मिच्छं काऊण कोद्दवोवमया ।
तिन्नि वि अवेदयंतो, उवसासगसम्मदिट्ठीउं ॥ ११३ ॥

कोद्रवोपमया-कोद्रवदृष्टान्तेन अपूर्वकरणेन मिथ्यात्वं त्रिपुञ्जं कृत्वाऽनिवृत्तिकरणेन तत्-प्रथमतया क्षायोपशमिकं सम्यक्त्वमासादयति, ततः परिणामवशतः कालान्तरेण मिश्रं मिथ्यात्वं वा गच्छति, यत्पूर्वकरणमाकदाऽपि मन्दाध्यवसायतया मिथ्यात्वं त्रिपुञ्जीकर्तुमसमर्थः स निवृत्तिक-

णामुपगतोऽन्तरकरणं कृत्वा तत्र प्रविष्टो न किञ्चिदपि वेदयते, स च औपशमिकसम्यग्दृष्टिः त्रयाणामप्यनुदयात् वेदयमान उपशमकः । सम्यग्दृष्टिरुक्तेन कोद्रवोपमयेत्युक्तम् ।

अनस्तामेव कोद्रवोपमां भावयति—

जह मयणकोद्दवा उ, दरनिव्वलिया य निव्वलीया य ।
एमेव मिच्छ मीसं , सम्मं वा होंति जीवाणं ॥ ११४ ॥

यथा कोद्रवास्त्रिविधा भवन्ति, तद्यथा-मदनकोद्रवा दरनिर्वलिता-ईषदपगतमदनभावा निर्वलिताः-सर्वथापगतमदनभावाः, एवं जीवानां मिथ्यात्वं त्रिधा भवति-मिथ्यात्वम्, मिश्रम्-सम्यग्मिथ्यात्वं , सम्यक्त्वं वा ।

कालेणुवक्कमेण य , जह नासति कोद्दवाण मदभावो ।
अहिगमसम्मं नेस-ग्गियं च तह होइ जीवाणं ॥११५॥

यथा कोद्रवाणां मदनभावः केषांचित्कालेन एवमपगच्छति केषांचित् गोमयादिभिरुपक्रमतः , एवं केषांचित् जीवानामुपक्रमसदृशमधिगमसम्यक्त्वं भवति , केषांचित् कालेन स्वत एवापगतमदनभावे कोद्रवाणां सदृशं नैसर्गिकसम्यक्त्वम् , किमुक्तं भवति—केषांचिदधिगमतो मिथ्यात्वपुद्गलाः सम्यक्त्वीभवन्ति, केषांचित् स्वत एव तथापरिणामविशेषभावतः ।

एतदेव स्पष्टयति—

सोऊण अहिसमेच्चा, कोइ सोवट्टमाणपरिणामो ।
मिच्छे सम्मामिच्छे, मीसे वि य पोग्गले समयं ॥१२६॥

श्रुत्वा केवलिप्रभृतीनां वाक्यमभिसमेत्य वा जातिस्मरणादिना सम्यक्त्वमवगम्य सोऽपूर्वकरणे वर्तमानो वर्द्धमानपरिणामः समकम्—एककालं मिथ्यात्वपुद्गलान् त्रिधा करोति । तद्यथा—'मिच्छे' इति—मिथ्यात्वपुद्गलान् , सम्यग्मिथ्यात्वपुद्गलान्, सम्यक्त्वपुद्गलानिति । अथैषां पुद्गलानां परस्परं संक्रमो भवति किं वा नेति ? ,उच्यते--भवति इति क्रमः ।

तथा चाह—

मिच्छत्ताओ मीसो, मीसस्स उ होज संकमो दोसुं ।
सम्मे मिच्छे वासं, सम्मामिच्छं च पुण मीस ॥११७॥

मिथ्यात्वात्—मिथ्यात्वदलिकात् सम्यग्दृष्टिः प्रवर्द्धमानपरिणामः पुद्गलानाकृष्य मिश्रे उपलक्षणमेतत् सम्यक्त्वे च संक्रमयति. मिश्रस्य पुद्गलानां संक्रमो द्वयोर्भवति, तद्यथा-सम्यक्त्वे मिथ्यात्वे च । तत्र सम्यग्दृष्टिः सम्यक्त्वे संक्रमयति, मिथ्यादृष्टिर्मिथ्यात्वे सम्यक्त्वात्-सम्यक्त्वदलिकात् पुनः पुद्गलान् मिथ्यात्वे संक्रमयति । न पुनः मिश्रमिति ।

सांप्रतममुमेवार्थं प्रकारान्तरेणाह--

मिच्छत्ताओ अहवा, मीसं सम्मं च कोइ संकमति ।
मीसाओ वा सम्मं, गुणवुड्ढी हायतो मिच्छं ॥ ११८ ॥

अथवेत्युक्तस्यैवार्थस्य भंगान्तरप्रकारान्तरद्योतने मिथ्यात्वात्-मिथ्यात्वदलिकात् पुद्गलानाकृष्य कश्चिन्मिश्रं सम्यक्त्वं च संक्रमयति । यद्वा-कश्चित् गुणवृद्धिर्यस्य स गुणवृद्धिः प्रवर्द्धमानपरिणामः सम्यग्दृष्टिरित्यर्थः, मिश्रात्-मिश्रदलिकात् पुद्गलानादाय सम्यक्त्वं संक्रमयति, हायको-हीनपरिणामो मिथ्यादृष्टिरित्यर्थः, मिश्रात् पुद्गलानाकृष्य मिथ्यात्वं संक्रमयति ।

मिच्छत्ता संकंती, अविरुद्धा होंति सम्ममीसे तु ।
मीसातो वा दुण्ह वि,ण उ सम्मा परिणमे मीसं॥११९॥

मिथ्यात्वात् पुद्गलसंक्रान्तिः सम्यक्त्वमिश्रयोरविरुद्धा , मिश्रतो वा सम्यग्मिथ्यात्वतो वा पुद्गलानादाय द्वावपि संक्रमयति, तद्यथा—मिथ्यात्वं सम्यक्त्वं च यथाक्रममनन्तरं सम्यक्त्वात्सम्यक्त्वदलिकात्पुनः पुद्गलानादाय न मिश्रं मिश्रभावं परिणमति ।

हायंते परिणामे, ते पुण मीसे उ पोग्गले सम्मा ।
न य सोहिया सि विज्जति,केई ज दाणि वेएज्जा ।१२०।
सम्मत्तपोग्गलाणं, न च देउं सो य अंतिमं गासं ।
पच्छाकडसम्मत्तो, मिच्छत्तं चेव संकमति ॥ १२१ ॥

यस्य तु सम्यग्दर्शनलाभे हीयमानपरिणामः स तस्मिन् हीयमाने परिणामे न मिश्रान् पुद्गलान् तुशब्दात्-मिथ्यात्वपुद्गलांश्च सम्यक्त्वपुद्गलान् करोति, न च 'से ' तस्य शोधिताः केचिदन्ये पुद्गला विद्यन्ते यानिदानीमधिकृतसम्यक्त्वपुञ्जनिष्ठाकाले वेदयेत, ततः सम्यक्त्वपुद्गलानामन्तिमग्रासं वेदयित्वा पश्चात्कृतसम्यक्त्वोऽपि मिथ्यात्वमेव संक्रामति ।

मिच्छत्तम्मि अखीणे, ते पुंजी सम्मदिट्ठिणो नियमा ।
खीणम्मि उ मिच्छत्ते, दुएकपुंजोवखवगो वा ॥१२२॥

अक्षीणे मिथ्यात्वे ये सम्यग्दृष्टयस्ते नियमात् त्रिपुञ्जिनः क्षीणे तु मिथ्यात्वे द्विपुञ्जी मिथ्यात्वपुञ्जस्य क्षीणत्वात् , एकपुञ्जी वा मिश्रपुञ्जक्षये, यद्वा—क्षपकः सम्यक्त्वं पुञ्जस्यापि क्षयं तदेवं त्रयाणामपि पुञ्जानां दृष्टान्तेन निर्णय. स्वतः स्वरूपं च व्याख्यायताम् ।

सांप्रतं पुञ्जत्रयस्याप्यवेदकतः औपशमिकसम्यग्दृष्टिमाह-

उवसमसेढिगयस्स, होति उ उवसामियं तु सम्मत्तं ।
जो वा अकयतिपुंजो,अखवियमिच्छो लहइ सम्मं ।१२३।

उपशमकश्रेणिगतस्य भवति सम्यक्त्वमौपशमिकम् , यो वा अकृतत्रिपुञ्जः--अपूर्वकरणे पुञ्जत्रयकरणतस्तत्र क्षपकोऽपि दर्शनसप्तकस्यापूर्वकरणमारूढः पुञ्जत्रयं न करोति । ततस्तद्व्यवच्छेदार्थमाह-अक्षपितमिथ्यात्वो यल्लभते सम्यक्त्वं तदौपशमिकं सम्यक्त्वमिति । एतौ द्वावप्यौपशमिकसम्यग्दृष्टी सम्यक्त्वमौपशमिकमन्तर्मुहूर्तमनुभूय तदनन्तरमवश्यं प्रतिपततः ।

तत्र दृष्टान्तद्वयमाह-

वाही असमच्छिन्नो, कालविक्खंऽकुरु व्व दड्ढदुमो ।
उवसामगाण दोण्ह वि,एते खलु होंति दिट्ठंता॥१२४॥

यथा व्याधिरसर्वच्छिन्नः कालापेक्षं क्रियाविशेषणमेतत् कालमपेक्ष्येत्यर्थः पुनरुद्भवति । दग्धो वा द्रुमः कालापेक्षं यथा-

कुर्वं मुञ्चति । एवमुपशमितमपि मिथ्यात्वं कालमपेक्ष्य पुनरुदीर्णं भवतीति द्वयोरपि प्रतिपातः। तथा चाह—द्वयोरप्युपशमिकयोरेतौ भवतो दृष्टान्तौ, तत्रोपशमश्रेणिगत औपशमिकसम्यग्दर्शनी देशप्रतिपातेन वा प्रतिपतति सर्वप्रतिपातेन वा, इतरोऽवश्यमेव सर्वप्रतिपातेन प्रतिपतति,मिथ्यात्वं गच्छतीति इत्यर्थः ।

तत्र दृष्टान्तमाह—

आलंबणमलहंती, जह सट्ठाणं न मुंचए इलिया ।
एवं अकयतिपुंजो, मिच्छं चिय उवसमी एति ॥ १२५ ॥

इह या तृणादिषु सुखप्रदेशेन सर्वतोऽग्रतनं स्थानं परिच्ययतोऽग्रतनं स्थानं संक्रामति, अन्यथा पश्चाद्वलते, स इलिका यथा पुरत आलम्बनमलभमाना स्वस्थानं न मुञ्चति एवमकृतत्रिपुञ्जो गत्यन्तराभावात् मिथ्यात्वमेवोपशमयति । इयमत्र भावना—द्विविधस्तत्प्रथमतया सम्यग्दर्शनप्रतिपत्ता अतिविशुद्धो मन्दविशुद्धश्च । तत्र यः अतिविशुद्धः सोऽपूर्वकरणमारूढो मिथ्यात्वं त्रिपुञ्जीकरोति कृत्वा चानिवृत्तिकरणे प्रविष्टस्तत्प्रथमतया क्षायोपशमिकं सम्यग्दर्शनमासादयति सम्यक्त्वपुञ्जोदयात् । यस्तु मन्दविशुद्धः सोऽपूर्वकरणमप्यारूढस्तीव्राध्यवसायाभावात् न मिथ्यात्वं त्रिपुञ्जीकर्तुमलम्, ततो-निवृत्तिकरणमुपगतोऽन्तरकरणं कृत्वा तत्र प्रविष्टस्तत्प्रथमतया औपशमिकसम्यग्दर्शनं तु भवति, अन्तरकरणं चान्तर्मुहूर्तप्रमाणमतस्तदद्धाक्षये अन्येषां पुद्गलानामभावतो मिथ्यात्वमेति ।

एतदेवाह—

खीणम्मि उदिन्नम्मि, अणुइज्जंते य सेसमिच्छत्ते ।
अंतोमुहुत्तकालं, उवसमसम्मं लहइ जीवो ॥ १२६ ॥

अनिवृत्तिकरणं प्रविष्टस्य यत् मिथ्यात्वमुदीर्णमुदयावलिकाप्रविष्टं तस्मिन् क्षीणे शेषे च मिथ्यात्वेऽपान्तराले उत्तरकरणतोऽनुदीयमानेऽन्तर्मुहूर्तकालमौपशमिकं सम्यक्त्वं जीवो लभते मिथ्यात्वदर्शनवेदनाभावात् ।

सोऽपि कथमित्यत आह—

ऊसरदेसं दड्ढि-ल्लयं च विज्झाइ वणदवो पप्प ।
इय मिच्छत्त(स्स)अणुदए, उवसमसम्मं मुणेयव्वं ॥१२७॥

यथा वनदवः ऊषरं देशं-तृणादिरहितं प्रदेशं दग्धं वा प्राप्य विध्मापयति, इति-एवमन्तरकरणे प्रविष्टस्य मिथ्यात्वपुद्गलाभावान्मिथ्यात्वस्य-मिथ्यादर्शनस्याऽनुदयावेदने ततस्तस्मिन्नस्यौपशमिकं सम्यक्त्वं ज्ञातव्यम् ।

किञ्च—

जिण्णी(ण्ही)भवंति उदया,कम्माणं अत्थि सुत्तउवदेसो ।
उववायादी सायं, जह नरइया अणुभवंति ॥ १२८ ॥

द्विविधेऽप्यौपशमिकसम्यग्दर्शी शेषाणामपि कर्मणामुदयात् जिण्णीभवन्ति न चैतद्वचनमात्रं यतोऽस्त्येव तत्र ग्रन्थान्तररूपं साक्षादुपदेशो यथा-नैरयिका उपपातादौ सातमनुभवन्तीति ।

एतामेव दर्शयति—

उववाएण व सायं, नेरइओ देवकम्मुणा वावि ।
अज्झवसाणनिमित्तं, अहवा कम्माणुभावेणं ॥१२९॥

नैरयिक उपपातेन सातमनुभवति, किमुक्तं भवति-उपपातकाले सातं वेदयते तदानीं हि न तस्य क्षेत्रजा वेदना न परस्परोदीरिताऽपि परमाधार्मिकोदीरितेति । अथवा-देवकर्मणा-देवक्रियया सातमनुभवति, देवो हि कश्चित् महर्द्धिकः पूर्वभवस्नेहतः तत्र गत्वा कस्यापि किञ्चित्कालं वेदनामुपशमयति ततः सातं वेदयते । अथवा-अध्यवसाननिमित्तं तथाविधशुभाध्यवसायप्रवृत्तिनिमित्तं सातमासादयति यथा सम्यग्दर्शनं लभमानः, सम्यग्दर्शनलाभे हि आत्यन्धस्य चक्षुर्लाभ इव जायते महान् प्रसाद इति । 'अहवा कम्माणुभावेणं' ति, अथवा—तीर्थकरजन्माद्यधिकृत्य यः कर्मणां सातवेदनीयप्रभृतीनां शुभानामनुभवः-अनुभवनमुदयेन वेदनं तेन सातमनुभवति, तथाहि-भगवतां तीर्थकृतां जन्मनि दीक्षादिने च तत्प्रभावतो नरकेऽप्यालोको जायते, नैरयिकाणामपि शुभकर्मोदये प्रसरति सातमिति ॥ अथ मिथ्यादृष्टिर्यदा सम्यक्त्वं संक्रामति तदा स तत्समयं कति ज्ञानानि लभते-उच्यते द्वे त्रीणि वा ।

तथा चाह—

विब्भंगी उ परिणमं, सम्मत्तं लहति मतिसुतोहीणि ।
तयभावम्मि मतिसुते, सुतलंभं कइ उभयं ति ॥१३०॥

विभङ्गी-विभङ्गज्ञानी सम्यक्त्वं परिणमयन् तत्समये मतिश्रुतावधीन् लभते, तदभावे-तस्य विभङ्गस्याभावे मिथ्यादर्शनी सम्यक्त्वं परिणमयन् तत्कालं मतिश्रुते-मतिज्ञानश्रुतज्ञाने लभते, केचित्पुनः श्रुतलाभे भजन्ति-विकल्पयन्ति यस्याधीतं श्रुतं स लभते श्रुतज्ञानमितरो न लभते इत्याचक्षते इति भावः । तथाहि—ये स्वयंभूरमणसमुद्रे मत्स्यास्ते प्रतिमासं स्थितान् मत्स्यान् उत्पलानि वा दृष्ट्वेहापोहादि कुर्वन्तो जातिस्मरणतः सम्यक्त्वमासादयन्ति आभिनिबोधिकज्ञानं च, ये तु श्रुतज्ञानं तत्रासादयन्त्यनधीतश्रुतत्वात् ये त्वधीतश्रुतास्ते त्रीण्यपि युगपदासादयन्ति ।

एतद् दूषयितुमाह—

अन्नाणमती मिच्छे, जहम्मि मतिणाण तं जहा ए ति ।
एमेव य सुयलंभो, सुयअन्नाणे परिणयम्मि ॥ १३१ ॥

यथा मिथ्यात्वे त्यक्ते मत्यज्ञानस्वरूपा मतिज्ञानतामेति एवमेव श्रुतज्ञाने परिणतेऽपगते श्रुतलाभो भवति । किं च ते प्रष्टव्याः सम्यक्त्वलाभसमये श्रुतज्ञानमस्ति किं वा न ? तत्र यद्याद्यः पक्षस्तर्हि तस्याज्ञानित्वान्मिथ्यादृष्टित्वप्रसङ्गः । अथ नास्ति तर्हि श्रुताज्ञानमपि केवलमाभिनिबोधिकज्ञानं स्यात्र चैतदुपपन्नं श्रुतज्ञानमन्तरेण केवलस्याभिनिबोधिकज्ञानस्याभावात् "जत्थ मतिनाणं तत्थ सुयनाणं, जत्थ सुयनाणं तत्थ मतिणाणं । दो वि सयाइ अन्नोन्नसमणुगयाइ" इति वचनादिति । तदेवमुक्तमौपशमिकं सम्यक्त्वम् । बृ० १ उ० १ प्रक० । आ० चू० ।

सम्मद्दंसणजोग-सम्यग्दर्शनयोग-पुं० । तत्त्वार्थश्रद्धानसंबन्धे, षो० ११ विव० ।

सम्मद्दा-सम्मर्दा-स्त्री० । दुष्प्रत्युपेक्षणाभेदे, यत्र च वस्त्रस्य मध्यप्रदेशे सवलिता कोणा भवन्ति यत्र वा प्रत्युपेक्षणीयोपधिवेण्टिकायामेवोपविश्य प्रत्युपेक्षते सा सम्मर्देति । स्था० ६ ठा० ३ उ० । ध० । पं० व० । उत्त० ।

सम्मदिट्ठि-सम्यग्दृष्टि-पुं० । सम्यगिति प्रशंसार्थः दर्शनम्-दृष्टिः पदार्थपरिच्छित्तिः । सूत्र० १ श्रु० १२ अ० । स्था० । प्रज्ञा० । आव० । सम्यग्-अविपरीता दृष्टि-र्जिनप्रणीतवस्तुप्रतिपत्ति र्यस्य स सम्यग्दृष्टिः । नं० । सम्यग्दर्शनधरे, पञ्चा० ८ विव० । आतु० । प्रति० । सम्यग्दर्शनिनि, प्रश्न० ५ संव० द्वार ।

सम्यग्दृष्टिस्वरूपं लिङ्गेन आह—

सुस्सूसधम्मराओ,, गुरुदेवाणं जहासमाहीए ।
वेयावच्चे णियमो, सम्मद्दिट्ठिस्स लिंगाइं ॥ ५ ॥

श्रोतुमिच्छा शुश्रूषा धर्मशास्त्रविषया गेयरागिनरकिन्नरगेय-शुश्रूषाधिका निद्रासेवनकालभाविनी । इह च ह्रस्वता प्राकृतत्वात् । तथा धर्मरागः-कुशलानुष्ठानानुरागः सामग्री-वैकल्यात्तदकरणेऽपि चेतसोऽनुबन्धः कान्तारातीतदरिद्र-ब्राह्मणघृतपूर्णभोजनाभिलाषातिरिक्तः । तथा गुरुदेवा-नां-धर्माचार्यपरमाराध्यानाम् , यथासमाधि—स्वसमाधा-नानतिक्रमेण न पुनरसद्ग्रहेण वैयावृत्त्ये स्यात् ( च ) त-स्मिन् नकर्मणि वा नियमो नियोगोऽवश्यं मयैतद् गुरुकार्यं दे-वकार्यं वा कर्तव्यमित्यभिनिवेशलक्षणो गुणश्रद्धानु-मनुष्यचिन्तामणिवैयावृत्त्यनियमाधिकः । इह चशब्दो लुप्तो द्रष्टव्यः । किमित्याह-सम्यग्दृष्टेरविरतसम्यग्दर्शनिनो जी-वस्य लिङ्गानि—लक्षणानि भवन्ति ग्रन्थिभेदेन तस्य तीव्र-भावात् । इति गाथार्थः । पञ्चा० ३ विव० ।

संप्रति सम्यग्दृष्टेः स्वरूपमाह—

सम्मद्दिट्ठी जीवो, उवइट्ठं पवयणं तु सद्दहइ ।
सद्दहइ असब्भावं, अजाणमाणो गुरुनियोगा ॥ २४ ॥

' सम्मद्दिट्ठि ' त्ति-सम्यग्दृष्टिर्जीवो गुरुभिरुपदिष्टं प्रवचनं नियमात्-यथावत् श्रद्धत्ते, एवं तुरेवकारार्थो,भिन्नक्रमश्च। यः पुनः सम्यग्दृष्टिरपि असद्भावम्-असद्भूतं प्रवचनं श्रद्धाति सोऽवश्यमजानन् स्वयं सम्यक्परिज्ञानविकलः सन् । यद्वा-गुरोस्तथाविधसम्यक्परिज्ञानविकलस्य मिथ्यादृष्टेर्वा जमा-लिप्रभृतेः नियोगादाज्ञापारतन्त्र्यात् , नान्यथा । क० प्र० ६ प्रक० ।

अपुनर्बन्धकोत्तरं सम्यग्दृष्टिर्भवतीति तत्स्वरूपमाह—

लक्ष्यते ग्रन्थिभेदेन, सम्यग्दृष्टिः स्वतन्त्रतः ।
शुश्रूषाधर्मरागाभ्यां, गुरुदेवादिपूजया ॥ १ ॥

लक्ष्यते इति—ग्रन्थिभेदेन—अतितीव्ररागद्वेषपरिणामवि-दारणेन स्वतन्त्रतः—सिद्धान्तनीत्या सम्यग्दृष्टिः लक्ष्यते । सम्यग्दर्शनपरिणामात्मनाऽप्रत्यक्षोऽप्यनुमीयते । शुश्रूषाधर्म-रागाभ्यां तथा गुरुदेवादिपूजया अभिरतैर्लिङ्गैः, यदाह—
" शुश्रूषाधर्मरागश्च, गुरुदेवादिपूजनम् । यथाशक्ति विनि-र्दिष्टं, लिङ्गमस्य महात्मभिः ॥ १ ॥ "

भोगिकिन्नरगेयादि-विषयाधिक्यमीयुषी ।
शुश्रूषाऽस्य न सुप्तेश-कथार्थविषयोपमा ॥ २ ॥

भोगीति—भोगिनो-यौवनवैदग्ध्यकान्तासंनिधानवतः का-मिनः किन्नरादीनां गायकविशेषाणां गेयादौ—गीतवर्णप-रिवर्ताभ्यासकथाकथनादौ विषयः—श्रवणरसस्तस्मादा-धिक्यम्-अतिशयम् ईयुषी-प्राप्तवती किन्नरगेयादिश्रवणो-त्थोद्देश्यास्तुच्छत्वमहत्त्वाभ्यामतिभवोपलम्भात् । अस्य स-म्यग्दृष्टेः शुश्रूषा भवति । न तु सुप्तस्य नृपस्य कथार्थ-विषयः संमुग्धकथार्थश्रवणाभिप्रायलक्षणः तदुपमा तत्सदृशी-असंवेदनतत्त्वज्ञानलक्षणफलायोग्यत्वादिति दीर्घतरव्यवहितत्वात् ।

अप्राप्ते भगवद्वाक्ये, धावत्यस्य मनो यथा ।
विशेषदर्शिनोऽर्थेषु, प्राप्तपूर्वेषु नो तथा ॥३॥

अप्राप्त इति—अस्य-सम्यग्दृशः अप्राप्ते—पूर्वमश्रुते भ-गवद्वाक्ये—वीतरागवचने यथा मनो धावति—श्रोतुमनु-परतेच्छं भवति । यथा विशेषदर्शिनः सतः प्राप्तपूर्वेष्वर्थेषु धनकुटुम्बादिषु न धावति । विशेषदर्शिनेनापूर्वत्वभ्रमस्य दोषस्य चोच्छेदात् ।

धर्मरागोऽधिको भावा द्भोगिनः स्त्र्यादिरागतः ।
प्रवृत्तिस्त्वन्यथापि स्या- त्कर्मणो बलवत्तया ॥ ४ ॥

धर्मराग इति—धर्मरागश्चारित्रधर्मस्पृहारूपः अधिकः-प्रकर्षवान् भावतः—अन्तःकरणपरिणत्या भोगिनो-भोगशा-लिनः स्त्र्यादिरागतो भामिन्याद्यभिलाषात् । प्रवृत्तिस्तु-कायचेष्टा तु अन्यथापि—चारित्रधर्मप्रातिकूल्यतापि स्या-पारविना स्यात् । कर्मणश्चारित्रमोहनीयस्य बलवत्तया नियतप्रबलविपाकतया ।

तदलाभेऽपि तद्राग-बलवत्त्वं न दुर्वचम् ।
पूयिकाद्यपि यद्भुङ्क्ते, घृतपूर्णप्रियो द्विजः ॥ ५ ॥

तदिति—तदलाभेऽपि कथंचिदन्यथाप्रवृत्त्या चारित्राप्रा-सावपि । तद्रागबलवत्त्वं चारित्रेच्छाप्राबल्यं स्वोद्देशसिद्धम् । न-नैव दुर्वचं-दुरभिधानम् । यद्-यस्मात्तथाविधविषमप्रघट्ट-कवशात् । पूयिकाद्यपि पूयं-नाम कुथितो रसस्तद्यस्यास्तीति पूयिकम् । आदिशब्दात्-रूक्षं पर्युषितं च अन्नव्यञ्जनादि । किं पुनरितरदित्यपिशब्दार्थः । घृतपूर्णाः प्रिया-वल्लभा यस्य स तथा । द्विजो—ब्राह्मणो भुङ्क्ते—अश्नाति यद्भ द्विजग्रहणं कृतं तदस्य जातिप्रत्ययादेव अन्यत्र भोक्तुमिच्छाया अभा-वादिति । अन्यच्छाकालेऽपि अवलेच्छाया वासनात्मना न नाश इति तात्पर्यम् ।

गुरुदेवादिपूजाऽस्य, त्यागात्कार्यान्तरस्य च ।
भावसारा विनिर्दिष्टा, निजशक्त्यनतिक्रमात् ॥ ६ ॥

गुर्विति—अस्य सम्यग्दृशः गुरुदेवादिपूजा च का-र्यान्तरस्य—त्यागभोगादिकरणीयस्य त्यागात्—परिहारात् निजशक्तेः स्वसामर्थ्यस्यानति ( क्रमात् ) लङ्घनादनि-गूहनात् । भावसारा भक्तेः अरिहन्तगोचरगौरवादनन्तगु-णेन बहुमानेन प्रधाना विनिर्दिष्टा प्ररूपिता परमपुरुषैः ।

स्यादेतत्करणे क्षान्त्ये, सत्त्वानां परिणामतः ।
त्रिधा यथाप्रवृत्तं त-दपूर्वं चानिवर्ति च ॥ ७ ॥

स्यादिति—ईदृगुपदर्शितलक्षणं सम्यक्त्वं क्षान्त्ये करणे " जाते सतीति " गम्यम् । स्याद्-भवेत् तत् करणं स-त्त्वानां—प्राणिनां परिणामतः त्रिधा—त्रिप्रकारं यथाप्र-वृत्तम् अपूर्वम् अनिवर्ति चेति ।

ग्रन्थिं यावद्भवेदाद्यं, द्वितीयं तदतिक्रमे ।
भिन्नग्रन्थेस्तृतीयं तु, योगिनाथैः प्रदर्शितम् ॥८॥

ग्रन्थिमिति—आद्यं यथाप्रवृत्तकरणं ग्रन्थिं यावद्भवेत् ,

द्वितीयमपूर्वकरणं तदतिक्रमे—ग्रन्थ्युल्लङ्घने क्रियमाणे, तृतीयं त्वनिवर्तिकरणं भिन्नग्रन्थेः कृतग्रन्थिभेदस्य योगिनाथैस्तीर्थकरैः प्रदर्शितम् ।

पतितस्यापीति नामुष्य, ग्रन्थिमुल्लङ्घ्य बन्धनम् ।
स्वाशयो बन्धभेदेन, सतो मिथ्यादृशोऽपि तत् ॥ ९ ॥

पतितस्यापीति—अमुष्य-भिन्नग्रन्थेः पतितस्यापि तथाविधसंक्लेशात् सम्यक्त्वात् परिभ्रष्टस्यापि । न—नैव ग्रन्थिग्रन्थिभेदकालभाविनीं कर्मस्थितिम् उल्लङ्घ्यातिक्रम्य सप्ततिकोटीकोट्यादिप्रमाणस्थितिकतया बन्धनं—ज्ञानावरणादिपुद्गलग्रहणं ततस्मान्मिथ्यादृशोऽपि सतो भिन्नग्रन्थेः बन्धभेदेनाल्पस्थित्या कर्मबन्धविशेषेण । स्वाशयः शोभनः परिणामः बाह्यासदनुष्ठानस्य प्रायः साम्येऽपि बन्धाल्पत्वस्य सुन्दरपरिणामनिबन्धनत्वादिति भावः ।

तदुक्तम्—

" भिन्नग्रन्थेस्तृतीयं तु, सम्यग्दृष्टेरतो हि न ।
पतितस्याप्यतो बन्धो, ग्रन्थिमुल्लङ्घ्य देशितः ॥ १ ॥
एवं सामान्यतो ज्ञेयः, परिणामोऽस्य शोभनः ।
मिथ्यादृष्टेरपि सतो, महाबन्धविशेषतः ॥ २ ॥
सागरोपमकोटीनां, कोट्यो मोहस्य सप्ततिः ।
अभिन्नग्रन्थिबन्धोऽयं न त्वेकोऽपीतरस्य तु ॥ ३ ॥
तदत्र परिणामस्य, भेदकत्वं नियोगतः ।
बाह्यं त्वसदनुष्ठानं, प्रायस्तुल्यं द्वयोरपि ॥ ४ ॥ "

" बंधेण न वोलइ कयाइ " इत्यादिवचनानुसारिणां सैद्धान्तिकानां मतमेतत् । कार्मग्रन्थिकाः पुनरस्य मिथ्यात्वप्राप्तावुत्कृष्टस्थितिबन्धमपीच्छन्ति, तेषामपि मते तथाविधरसाभावात्तस्य शोभनपरिणामत्वे न विप्रतिपत्तिरिति ध्येयम् ।

एवं च यत्परैरुक्तं, बोधिसत्त्वस्य लक्षणम् ।
विचार्यमाणं सन्नीत्या, तदप्यत्रोपपद्यते ॥ १० ॥

एवं चेति—एवं च—भिन्नग्रन्थेर्मिथ्यात्वदशायामपि शोभनपरिणामत्वे च यत् परैः—सौगतैः बोधिसत्त्वस्य लक्षणमुक्तं, तदपि सन्नीत्या—मध्यस्थवृत्त्या विचार्यमाणम् अत्र सम्यग्दृष्टावुपपद्यते ।

तप्तलोहपदन्यास-तुल्या वृत्तिः क्वचिद्यदि ।
इत्युक्तेः कायपात्येव, चित्तपाती न स स्मृतः ॥ ११ ॥

तप्तेति—तप्तलोहे यः पदन्यासस्तत्तुल्याऽतिसकम्पत्वात् वृत्तिः—कायचेष्टा कथञ्चित् गृहारम्भादौ यदि परम् इत्युक्तः इत्थं वचनात्, कायपात्येव स सम्यग्दृष्टिः न चित्तपाती स्मृतः । इत्थं च ' कायपातिन एव बोधिसत्त्वा ' इति लक्षणमत्रोपपन्नं भवति । तदुक्तम्—" कायपातिन एवेह, बोधिसत्त्वाः परोदितम् । न चित्तपातिनस्ताव-देतदत्रापि युक्तिमत् ॥ १ ॥ "

परार्थरसिको धीमान्, मार्गगामी महाशयः ।
गुणरागी तथेत्यादि, सर्वं तुल्यं द्वयोरपि ॥ १२ ॥

परार्थेति-परार्थरसिकः-परोपकारचित्तः धीमान्—बुद्ध्यनुगतः मार्गगामी-कल्याणप्रापकपथयायी महाशयः-स्फीतचित्तः गुणरागी-गुणानुरागवान् तथेति—बोधिसत्त्वगुणान्तरसमुच्चयार्थः । इत्यादि शास्त्रान्तरोक्तम् सर्वं तुल्यं-समम् द्वयोरपि-सम्यग्दृष्टिबोधिसत्त्वयोः ।

अन्वर्थतोऽपि तुल्यतां दर्शयति—

बोधिप्रधानः सत्त्वो वा, सद्बोधिर्भावितीर्थकृत् ।
तथाभव्यत्वतो बोधि-सत्त्वो हन्त सतां मतः ॥ १३ ॥

बोधीति—बोधिः-सम्यग्दर्शनं तेन प्रधानः सत्त्वो वा । सताम्-साधूनाम्, हन्तेत्यामन्त्रणे, बोधिसत्त्वो मतः-इष्टः । यदुक्तम्-" यत्सम्यग्दर्शनं बोधि-स्तत्प्रधानो महोदयः । सत्त्वोऽस्तु बोधिसत्त्वस्त-त्तस्यान्वर्थोऽपि पूर्ववत् ॥ १ " वा-अथवा सद्बोधिः-तीर्थकरपदप्रायोग्यसम्यक्त्वसमेतः । तथा भव्यत्वतो-भावितीर्थकृत्-यस्तीर्थकृद्भविष्यति स बोधिसत्त्वः । तदुक्तम्-" वरबोधिसमेतो वा, तीर्थकृद्यो भविष्यति । तथा भव्यत्वतोऽसौ वा, बोधिसत्त्वः सतां मतः ॥ १ ॥ " भव्यत्वं नाम-सिद्धिगमनयोग्यत्वम् अनादिपारिणामिको भावः । तथा भव्यत्वं चैतदेव कालनैयत्यादिना प्रकारेण वैचित्र्यमापन्नं एतदेव च बीजसाध्यादि ( सिद्ध्यादि ) फलभेदोपपत्तिः । अन्यथा तुल्यायां योग्यतायां सहकारिणोऽपि तुल्या एव भवेयुः तुल्ययोग्यतासामर्थ्याक्षिप्तत्वात्सहकारिणाम् सद्बोधियोग्यताभेद एव पारम्पर्येण तीर्थकरत्वनिबन्धनमिति भावनीयम् ।

तत्कल्याणयोगेन, कुर्वन् सत्त्वार्थमेव सः ।
तीर्थकृत्त्वमवाप्नोति, परं कल्याणसाधनम् ॥ १४ ॥

तत्तदिति—तस्य तस्य कल्याणस्य परिशुद्धप्रवचनाधिगमातिशायिधर्मकथाऽविसंवादिनिमित्तादिलक्षणस्य योगतः-व्यापारेण कुर्वन्—विदधानः । सत्त्वार्थमेव मोक्षबीजाधानादिरूपं सत्त्वात्मकर्मभिरपि स सद्बोधिमान् तीर्थकृत्त्वमवाप्नोति-लभते परं-प्रकृष्टम् कल्याणसाधनं भव्यसत्त्वशुभप्रयोजनकारि स्वजनादिभवोद्धारेच्छया सद्बोधिप्रवृत्तिस्तु गणधरपदसाधनं भवतीति द्रष्टव्यम् । यत उक्तम्—" चिन्तयत्येवमेवैत—त्स्वजनादिगतं तु यः । तथाऽनुष्ठानतः सोऽपि, धीमान् गणधरो भवेत् ॥ १ ॥ "

संविग्नो भवनिर्वेदा-दात्मनिःसरणं तु यः ।
आत्मार्थसंप्रवृत्तोऽसौ, सदा स्यान्मुण्डकेवली ॥ १५ ॥

संविग्न इति—संविग्नः " तथ्ये धर्मे ध्वस्तहिंसाप्रबन्धे, देवे रागद्वेषमोहादिमुक्ते । साधौ सर्वग्रन्थसंदर्भहीने, संवेगोऽसौ निश्चलो योऽनुरागः ॥ १ ॥ " इति काव्योक्तलक्षणसंवेगभाक् । भवनैर्गुण्यात्—संसारवैरस्यात् । आत्मनिःसरणं तु—जरामरणादिदारुणदहनात्स्वनिष्कासनं पुनः योऽन्वेषयतीति गम्यते । आत्मार्थसंप्रवृत्तः स्वप्रयोजनमात्रप्रतिबद्धचित्तोऽसौ सदा—निरन्तरं स्याद्-भवेत् । मुण्डकेवली-द्रव्यभावमुण्डनप्रधानस्तथाविधबाह्यातिशयशून्यः केवली पीठमहापीठवत् । ( द्वा० ) ( सम्यग्दृष्टावेव शिष्टत्वमिति ' सिट्ठ ' शब्देऽस्मिन्नेव भागे वक्ष्यते । )

एतदेवाह—

मिथ्यादृष्टिगृहीतं हि , मिथ्यासम्यगपि श्रुतम् ।
सम्यग्दृष्टिगृहीतं तु, सम्यङ्मिथ्यापीति नः स्थितिः ॥२६॥

मिथ्यादृष्टीति-मिथ्यादृष्टिगृहीतं हि सम्यगपि श्रुतमाचाराद्रिकं मिथ्या भवति , तं प्रति तस्य विपरीतबोधनिमित्तत्वात् । सम्यग्दृष्टिगृहीतं तु मिथ्यापि श्रुतं वेदपुराणादिकं सम्यक् , तं प्रति तस्य यथार्थबोधनिमित्तत्वात् । इति नः—अस्माकं स्थितिः—सिद्धान्तमर्यादा । प्रमानिमित्तत्वमात्रमेतदभ्युपगतं न तु प्रमाकरणत्वमिति चेन्न , त्वदुक्तं प्रमाकरणत्वमेव प्रमाणत्वमिति सर्वेषां प्रमातॄणामनभ्युपगमात् ।

तात्पर्यं वः स्वसिद्धान्तो-पजीव्यमिति चेन्मतिः ।
ननु युक्त्युपजीव्यत्वं , द्वयोरप्यविशेषतः ॥ ३० ॥

तात्पर्यमिति-वो—युष्माकं स्वसिद्धान्तोपजीव्यं—स्वसिद्धान्तपुरस्कारि तात्पर्यम् , तथा चान्यागमानुपजीव्यतात्पर्ये सकलवेदप्रामाण्याभ्युपगमनिवेशात्र दोष इति चेद् यदि तव मतिः, ननु तदा द्वयोरप्यावयोरविशेषतो युक्त्युपजीव्यत्वम् , अयं भावः-अन्यागमानुपजीव्यत्वं ह्यन्यागमा-(म) संवादित्वं चेत्तत्संवादिनि स्वाभिप्रायेऽव्याप्तिरयौक्तिका तदसंवादित्वं चेदस्माकमपि तात्पर्यमयौक्तिकागमासंवाद्येव , सर्वस्यैव भगवद्वचनस्य युक्तिप्रतिष्ठितत्वात् मिथ्याश्रुततात्पर्यस्यापि स्याद्वादसंगयुक्त्यैव गृह्यमाणत्वात् ।

यतः-

उद्भावनमभिप्रायं , युक्तेरेव हि यौक्तिकं ।
प्रमाणये च न वेदत्वं , सम्यक्त्वं तु प्रयोजकम् ॥ ३१ ॥

उद्भावनमिति-यौक्तिके ह्यर्थे युक्तरेवोद्भावनमभिप्रायमभिप्रायस्यानम् अन्यथा मिथ्याभिधानात् । यदाह—" जो हेउवायपक्खम्मि हेउओ आगमे य आगमिओ । सो ससमयपन्नवओ, सिद्धन्तविराहओ अन्नो ॥१॥" इति अथ वेदत्वमेव प्रामाण्यप्रयोजकमिस्त्वभ्युपगमे यावद्वेदप्रामाण्याभ्युपगमः स्यादित्यत आह—प्रामाण्ये च वेदत्वं न प्रयोजकं किं तु सम्यक्त्वमेव, लोकशब्दस्याप्यविसंवादिनः प्रमाणत्वादिति श्रद्धामात्रमेतदिति न किंचिदेतत् ।

शिष्टत्वमुत्कर्षमेव , भेदेन प्रतियोगिनः ।
तच्चानुभविकं विश्वे, परमानन्दवत्यतः ॥ ३२ ॥

शिष्टत्वमिति-अतः परोक्तशिष्टलक्षणनिरासात् । अत्रैव सम्यग्दृष्टावेव उत्कर्षम् अंशतः क्षीणदोषत्वम् । शिष्टत्वम् । परमानन्दवति दुर्भेदमिथ्यात्वमोहग्रन्थिभेदसमुत्थनिरतिशयानन्दभाजने । शिष्टत्वलिङ्गाभिधानमेतत् । प्रतियोगिनो दोषक्षयस्य क्षीणमाणकस्य भेदेन तं भदमानुभाविकं सकलजनानुभवसिद्धं विद्धि । भवति हि अयमस्मात् शिष्टतरोऽयमस्माच्छिष्टतम इति सार्वजनीनो व्यवहारः । स चाधिकृतापेक्षयाऽ—धिकतदाधिकतमदोषक्षयविषयतयाऽनुपपद्यते । परेषां तु न कथंचित् स्वैर्वा वेदप्रामाण्याभ्युपगमादौ विशेषाभावात् । एतेन वेदविहितार्थानुष्ठातृत्वं शिष्टत्वमित्यपि निरस्तम् । यावत्तदेकदेशाविकल्पाभ्यामसंभवातिव्याप्त्योः प्रसङ्गाच्च । वेदाद्दृष्टसाधनताविषयकमिथ्याज्ञानाभाववत्त्वं शिष्टलक्षणमुच्यते तत्त्वस्मदुक्तशिष्टत्वव्यञ्जकमेव सुक्तमाभाति, न तु परनीत्या स्वतन्त्रलक्षणमेव । गङ्गाजले कूपजलत्वारोपानन्तरमिदं कूपजलं नादृष्टसाधनमिति भ्रमवतः कूपजल एव गङ्गाजलत्वारोपानन्तरमिदं गङ्गाजलमदृष्ट (ष्ट) साधनमिति भ्रमवतो गङ्गाजले उक्तकूपत्वारोपानन्तरं नादृष्टसाधनमिति भ्रमवतश्चाशिष्टत्ववारणायादृष्टसाधनताव-च्छेदकरूपपुरस्कारेण मिथ्यामुख्यादृष्टसाधनताविरोधरूपा-पुरस्कारेण चादृष्टसाधनताविषयकत्वविवक्षायामपि स्यापादिदशायां वीडादावतिव्याप्तेस्तादवस्थ्येऽपि सर्वत्र शमादिलिङ्गेन शिष्टत्वव्यवहाराच्चेति किमनया कुसृष्टया । द्वा० १५ द्वा० । यो० वि० । दर्श० ।

संप्रति सम्यग्दृष्टिस्वरूपमाविर्भावयँस्तस्य फलमाह—

एवंविहपरिणामो, सम्मद्दिट्ठी जिणेहिं पन्नत्तो ।
एसो उ भवसमुद्दं, लंघइ थोवेण कालेणा ॥ ५१ ॥

एवंविधपरिणामः—उपशमादिलिङ्गयुक्तः तथा—विशुद्धबुद्धितया सम्यग्दृष्टिर्जिनैः प्रज्ञप्तः—प्ररूपितः, एष एव च भवसमुद्रं—संसारार्णवं लङ्घयति स्तोकेनापि कालेनेति गाथार्थः ।

एवं सम्यक्त्वस्याप्येकस्य शिवसुखसाधनाबन्धवर्णनायां कस्यचिदत्यन्तप्रमाद्वत एकान्तमात्रैवास्थाबन्धो मा भवत्विति बुद्ध्या सम्यग्दृष्टेरपि तपसोऽबहुफलत्वप्रतिपादनाय गाथाद्वयमाह—

सम्मद्दिट्ठिस्स वि अवि-रयस्स न तवो बहुफलो होइ ।
हवइ हु हत्थिन्हाणं,बुंदं छियरं व तं तस्स ॥ ५२ ॥

सम्यग्दृष्टेरपि न केवलं मिथ्यादृष्टेरित्यपिशब्दार्थः , अविरतस्य—विरतिरहितस्य तनैव तपो बहुफलं भवति—जायते । हिशब्दश्चैवार्थः , ततो हस्तिस्नानमिव—चुन्दं छिन्नमिव वा । यथाहि-हस्ती प्रथमं जलेन स्नानं विधाय पुनर्धूल्यावगुण्ठति कुम्भाङ्कतं पुनरङ्केन दशनाकृष्य पुनर्हीलीयत पूर्वेण एवं सम्यग्दृष्टेरपि विरतिरहितस्यैकतकपफलापादितं शुभमस्यतोऽविरत्या सावद्यचरणरूपया हार्यते जीवापमर्दादिगुरुकर्मबन्धहेतुत्वादिति ।

तथा च—

चरणकरणेहिँ रहिओ, न सिज्झई सुद्धसम्मदिट्ठी वि ।
जेणागमम्मि सिद्धो, रहंधपंगूय दिट्ठंतो ॥ ५३ ॥

चरणकरणाभ्यां-वक्ष्यमाणस्वरूपाभ्यां रहितस्त्यक्तो न सिध्यति-न कर्माभावं करोति,सुद्ध-अतिशयेन सम्यग्दृष्टिरपि येन कारणेनागमे भगवदावश्यकनिर्युक्तौ सिद्धः-प्रतिपादितः, रथान्धपङ्ग्वादिदृष्टान्त-उदाहरणम् । दर्श० ५ तत्त्व । सम्यगिति प्रशंसायाम् ,सम्यक्-प्रशस्ता मोक्षाविरोधित्वात् दर्शनं दृष्टिरर्थानां जीवादीनामिति गम्यते सम्यग्दृष्टिः। आ० म०१ अ० । सम्यगिति प्रशंसार्थः,दर्शनं-दृष्टिः सम्यग्-अविपरीता दृष्टि सम्यग्दृष्टिः । सम्यक्त्वे, स्था० । विशे० । स्था० ।

सम्मद्दिट्ठिगुणट्ठाण-सम्यग्दृष्टिगुणस्थान-न० । द्वितीयगुणस्थाने, अविरतसम्यग्दृष्टिगुणस्थानस्थेनेदं व्याख्यातम् । आचा० १ श्रु० ३ अ० ४ उ० ।

**सम्मद्दिट्ठिदेव**--सम्यग्दृष्टिदेव--पुं० । सम्यग्दृष्टयश्च देवाश्च-देवसम्यक्त्वधारकाः । यथाऽम्बायमूर्त्तिषु आर्हतोपासकेषु देवेषु, ध० २ अधि० ।

**सम्मद्दिट्ठिय**--सम्यग्दृष्टिक--पुं० । सम्यक्--अविपरीता दृष्टिः--दर्शनं रुचिस्तत्त्वार्थान् प्रति येषां ते सम्यग्दृष्टिकाः । मिथ्यात्वमोहनीयक्षयोपशमजन्मसम्यग्दृष्टौ, स्था० १ उ० ।

**सम्मप्पणीयमग्ग**--सम्यक्प्रणीतमार्ग--पुं० । सम्यग्दर्शिभिर्गणधरादिभिः सम्यग्वा यथावस्थितवस्तुतया च निरूपणया प्रणीते सम्यग्ज्ञानं दर्शनं चारित्रं चेति त्रिविधे भावमार्गे, "तवसंजमप्पहाणा, गुणधारी जे वयंति सब्भावं । सव्वजगजीवहियं, तमाहु सम्मप्पणीयमिणं ॥१॥" सूत्र १ श्रु० ११ अ० ।

**सम्मब्भावाणुगत**--सम्यग्भावानुगत--त्रि० । अविपरीततत्त्वेदंपर्यसंगते, पञ्चा० १६ विव० ।

**सम्ममिच्छद्दिट्ठि**--सम्यग्मिथ्यादृष्टि--पुं० । सम्यक् च मिथ्या च दृष्टिर्येषां ते सम्यग्मिथ्यादृष्टयः । येषामेकस्मिन्नपि वस्तुनि तत्पर्याये वा मतिदौर्बल्यादिना एकान्तेन सम्यक्परिज्ञानमिथ्याज्ञानाभावतो न सम्यक् श्रद्धानं नाप्येकान्ततो विप्रतिपत्तिस्तेषु, नं० । शतकबृहच्चूर्णौ--" जहा नालिकेरदीववासिस्स खुहाइयस्स वि एत्थ समागयस्स ओयणाइए अणेगविहे ढोइए, तस्स उवरिं न रुई न य निंदा, जओ तेण सो ओअणाइओ आहारो न कयाइ दिट्ठो नावि सुओ एवं सम्ममिच्छद्दिट्ठिस्स वि जीवाइपयत्थाणं उवरिं न य रुई नावि निंद " त्ति । नं० । स० । स्था० । आव० ।

**सम्मय**--सम्मत--त्रि० । अप्रतिषिद्धे, आचा० १ श्रु० ८ अ० १ उ० । तेषु तेषु कार्येषु प्रयोजनेषु इष्टे, व्य० ३ उ० । तत्कुलकार्येषु सम्मतत्वात्, नि० १ श्रु० १ वर्ग १ अ० । अ० । जी० । ' पामिच्च ' शब्दे पञ्चमभागे ८२५ पृष्ठे उक्तस्य देवराजनाम्नः कुटुम्बिनो भार्यायां सारिकायाः पुत्र, पिं० ।

**सम्मयसच्चा**--सम्मतसत्या--स्त्री० । सकललोकसम्मततया प्रसिद्धे भाषाभेदे, ध० ३ अधि० । प्रज्ञा० । सम्मतसत्या या सकललोकसाम्मत्येन सत्यतया प्रसिद्धा, कुमुदकुवलयोत्पलतामरसानां समानेऽपि पङ्कसंभवत्वे आगोपालजना अरविन्दमेव पङ्कजं मन्यते न शेषामित्यरविन्दे पङ्कजमिति । प्रज्ञा० ११ पद ।

**सम्मरुइ**--सम्यग्रुचि--स्त्री० । सम्यग्ज्ञाने, संशयविपर्यासनिरासेन इदमेव तत्त्वमिति निश्चयपूर्विकायां जिनोदितजीवादिपदार्थेष्वभिप्रीतौ, जिनाज्ञानुसारितया तत्त्वार्थश्रद्धानरूपे सम्यक्त्वे, प्रव० १४९ द्वार ।

**सम्मसुद्ध**--सम्यक्शुद्ध--त्रि० । तत्त्वतो निर्मले, पञ्चा० २ विव० ।

**सम्मसुय**--सम्यक्श्रुत--न० । सम्यग्दृष्टिपरिगृहीते यथावस्थितार्थे वा श्रुतज्ञाने, विशे० ।

> अंगाणंगपविट्ठं, सम्मसुयं लोइयं तु मिच्छसुयं ।
> आसज्ज उ सामित्तं, लोइए लोउत्तरे भयणा ॥५२७॥

इहाङ्गप्रविष्टमाचारादि श्रुतम् अनङ्गप्रविष्टं चावश्यकादि श्रुतम्, एतद् द्वितयमपि स्वामिचिन्तानिरपेक्षं स्वभावेन सम्यक्श्रुतम् । लौकिकं तु भारतादि प्रकृत्या मिथ्याश्रुतम् । स्वामित्वमासाद्य स्वामित्वचिन्तायां पुनर्लौकिके भारतादौ लोकोत्तरे चाचारादौ भजना--विकल्पना ऽवसेया । सम्यग्दृष्टिपरिगृहीतं भारताद्यपि सम्यक्श्रुतं सावद्यभाषित्वप्रकटनादिना यथावस्थिततत्त्वस्वरूपबोधतो विषयविभागेन योजनात्, मिथ्यादृष्टिपरिगृहीतं त्वाचाराद्यपि मिथ्याश्रुतम् अयथावस्थितबोधतो वैपरीत्येन योजनादिति भावार्थ इति । विशे० । कर्म० । आ० चू० । वृ० । नं० ।

से किं तं सम्मसुयं ? २, जं इमं अरहंतेहिं भगवंतेहिं उप्पन्नणाणदंसणधरेहिं तेलुक्कनिरिक्खियमहियपूइएहिं तीयपडुप्पन्नमणागयजाणएहिं सव्वण्णूहिं सव्वदरिसीहिं पणीयं दुवालसंगं गणिपिडगं, तं जहा--आयारो १ सूयगडो २ ठाणं ३ समवाओ ४ विवाहपन्नत्ती ५ नायाधम्मकहाओ ६ उवासगदसाओ ७ अंतगडदसाओ ८ अणुत्तरोववाइयदसाओ ९ पण्हावागरणाइं १० विवागसुयं ११ दिट्ठिवाओ य १२ इच्चेअं दुवालसंगं गणिपिडगं चोद्दसपुव्विस्स सम्मसुयं अभिण्णदसपुव्विस्स सम्मसुयं तेण परं भिन्नेसु भयणा। सेत्तं सम्मसुयं । ( सू० ४० )

अथ किं तत्सम्यक्श्रुतम् ?, आचार्य आह--सम्यक्श्रुतं यदिदमर्हद्भिः अशोकाद्यष्टमहाप्रातिहार्यरूपां पूजामर्हन्तीत्यर्हन्तः तीर्थकराः तैरर्हद्भिः ते चार्हन्तः कैश्चित् शुद्धद्रव्यास्तिकनयमतानुसारिभिरनादिसिद्धा एव मुक्तात्मानोऽभ्युपगम्यन्ते । तथा च ते पठन्ति--" ज्ञानमप्रतिघं यस्य, वैराग्यं च जगत्पतेः। ऐश्वर्यं चैव धर्मश्च, सह सिद्धं चतुष्टयम् ॥१॥" इत्यादि एवंरूपाश्चापि ते बहव इष्यन्ते--स्थापनादिद्वारेण च विशिष्टां पूजामर्हन्ति ततोऽर्हन्तोऽप्युच्यन्ते ततस्तद्व्यवच्छेदार्थं विशेषणान्तरमाह--भगवद्भिः भगः--समग्रैश्वर्यादिरूपः । उक्तं च--"ऐश्वर्यस्य समग्रस्य रूपस्य यशसः श्रियः। धर्मस्याऽथ प्रयत्नस्य, षण्णां भग इतीङ्गना ॥ १॥ " भगो विद्यते येषां ते भगवन्तः तैर्भगवद्भिः । इहानादिसिद्धानां रूपमात्रमपि नोपपद्यते किं पुनः समग्रं रूपम् अशरीरत्वात्, शरीरस्य च रागादिकार्यतया तेषां रागादिरहितानामसंभवात्, ततो भगवद्भिरित्यनेन परपरिकल्पितानादिसिद्धार्हद्व्यवच्छेदमाह । अथ मन्येथाः अनादिशुद्धा अप्यर्हन्तो यदा स्वेच्छया समग्ररूपादिगुणोपेतं शरीरमारचयन्ति तदा तेऽपि भगवन्तो भवन्ति, ततः कथं तेषां व्युदास इत्याशङ्कापनोदनार्थं भूयोऽपि विशेषणान्तरमाह--उत्पन्नज्ञानदर्शनधरैः--उत्पन्नं ज्ञानं--केवलज्ञानं दर्शनं--केवलदर्शनं धरन्तीत्युत्पन्नज्ञानदर्शनधराः , " लिहादिभ्य " इत्यच् प्रत्ययः । न च तेऽनादिविशुद्धाः न उत्पन्नज्ञानदर्शनधरा भवन्ति, " ज्ञानमप्रतिघं यस्य " इत्यादि वचनविरोधात्, तत उत्पन्नज्ञानदर्शनधरैरितिविशेषणेन तेषां व्यवच्छेदो भवति, ननु यद्येव तर्हि उत्पन्नज्ञानदर्शनधरैरित्येतावदस्तामलं भगवद्भिरिति विशेषणोपादानेन तदयुक्तम्--उत्पन्नज्ञानदर्शनधरा हि सामान्यकेवलिनोऽपि भवन्ति, न च तेषामवश्यं समग्ररूपादिसंभवस्ततस्तत्कल्पानर्हतो मा ज्ञासिषुरमी विनेयजना इति समग्ररूपादिगुणप्रतिपत्त्यर्थं भगवद्भिरिति विशेषणोपादानम्, नन्वेवं शुद्ध-

द्रव्यास्तिकनयमतानुसारिकल्पितमुक्तव्यवच्छेदः कृतः । संप्रति पर्यायास्तिकनयमतानुसारिपरिकल्पितमुक्तव्यवच्छेदार्थं विशेषणान्तरमाह-त्रैलोक्यनिरीक्षितमहितपूजितैः त्रयो लोकाः त्रिलोकाः भवनपतिव्यन्तरविद्याधरज्योतिष्कवैमानिकाः,त्रिलोका एव त्रैलोक्यं भेषजादित्वात् स्वार्थे ष्यणप्रत्ययः, निरीक्षिताश्च ते महिताश्च ते पूजिताश्च ते निरीक्षितमहितपूजिताः,त्रैलोक्येन निरीक्षितमहितपूजिताः त्रैलोक्यनिरीक्षितमहितपूजिताः तत्र निरीक्षिता मनोरथपरंपरासंपत्तिसंभवाविनिश्चयसमुत्थसम्मदविकासिलोचनैरालोकिताः महिता यथावस्थिताऽनन्यसाधारणगुणोत्कीर्तनलक्षणेन—भावस्तवेनार्चिताः-पूजिताः सुगन्धिपुष्पप्रकरप्रक्षेपादिना द्रव्यस्तवेन, तत्र सुगमता अपि पर्यायास्तिकनयमतानुसारिभिः त्रैलोक्यनिरीक्षितमहितपूजिता इष्यन्ते, तथा चाह स्वयंभूः—" देवागमनभोयान-चामरादिविभूतयः । मायाविष्वपि दृश्यन्ते,नातस्त्वमसि नो महान् ॥ १ ॥ " इति । ततस्तद्व्यवच्छेदार्थं विशेषणान्तरमाह-अतीतप्रत्युत्पन्नानागतज्ञैश्चाऽतीतानागतज्ञाः सुगताः संभवन्ति तेषामेकान्तक्षणिकत्वाभ्युपगमेन सर्वथाऽतीतानागतयोरसत्त्वाद् , असतां च ग्रहणासंभवात् इत्यत्र बहु वक्तव्यं तच्च प्रायः प्रागेवोक्तमन्यत्र च धर्मसंग्रहणिटीकादावपि नोच्यते, इह व्यवहारनयमतानुसारिभिः कैश्चित् ऋषयोऽप्यतीतप्रत्युत्पन्नानागतज्ञा इष्यन्ते तथा च तद् ग्रन्थः-"ऋषयस्संयतात्मानः, फलमूलानिलाशनाः । तपसैव प्रपश्यन्ति,त्रैलोक्यं सचराचरम्॥१॥ अतीतानागतान्भावान् वर्त्तमानांश्च भारत ! । ज्ञानालोकन पश्यन्ति,त्यक्तसङ्गा जितेन्द्रियाः॥२॥" इत्यादि । ततः तद्व्यवच्छेदार्थमाह-सर्वज्ञैः सर्वदर्शिभिः—ते तु ऋषयः सर्वज्ञाः-सर्वदर्शिनश्च न भवन्ति,ततस्तेषां व्युदासः । तदेवं द्रव्यास्तिकपर्यायास्तिकनयमतव्यवच्छेदफलतया विशेषणसाफल्यमुक्तम् , विचित्रनयमताभिज्ञैन तु अन्यथापि विशेषणसाफल्यमुक्तम् ,न कश्चिद्विरोधः । प्रणीतम्-अर्थकथनद्वारेण प्ररूपितम् ,किं तदित्याह-द्वादशाङ्गं श्रुतरूपस्य परमपुरुषस्याङ्गानीवाङ्गानि द्वादशाङ्गान्याचारादीनि यस्मिन् तत् द्वादशाङ्गं 'गणिपिडगं' ति-गणो गच्छो गुणगणो वाऽस्यास्तीति गणी-आचार्यः तस्य पिटकमिव पिटकं सर्वस्वमित्यर्थः, गणिपिटकम् । अथवा-गणिशब्दः परिच्छेदवचनोऽप्यस्ति । तथा चोक्तम्-'आयारम्मि अहीए,जं नाओ होइ समणधम्मो उ । तम्हा आयारधरो,भन्नइ पढमं गणिट्ठाणं ।१। "ततश्च गणीनां पिटकं गणिपिटकं; परिच्छेदसमूह इत्यर्थः । तद्यथा-'आयारो' इत्यादि पाठसिद्धं यावद् दृष्टिवादः अनङ्गप्रविष्टमप्यावश्यकादि तत्त्वतोऽर्हत्प्रणीतत्वात्परमार्थतो द्वादशाङ्गातिरिक्तार्थाभावाच्च द्वादशाङ्गग्रहणेन गृहीतं द्रष्टव्यम् ,एवं च द्वादशाङ्गादि सर्वमेव द्रव्यास्तिकनयमतापेक्षया तदभिधेयपञ्चास्तिकायभाववन्नित्यं स्वाम्यसंबन्धचिन्तायां च स्वरूपेण चिन्त्यमानं सम्यक्श्रुतं,स्वामिसंबन्धचिन्तायां तु सम्यग्दृष्टेः सम्यक्श्रुतं मिथ्यादृष्टेर्मिथ्याश्रुतम् ,एतदेव श्रुतपरिमाणतो व्यक्तं दर्शयति—इत्येतद् द्वादशाङ्गं गणिपिटकम् । यश्चतुर्दशपूर्वी तस्य सकलमपि सामायिकादिबिन्दुसारपर्यवसानं नियमात्सम्यक्श्रुतम् ,ततोऽधोमुखपरिहान्या नियमतः सर्वं सम्यक्श्रुतं तावद्वक्तव्यं यावदभिन्नदशपूर्विणः संपूर्णदशपूर्वधरस्य, संपूर्णदशपूर्वधरत्वादिकं हि नियमतः सम्यग्दृष्टेरेव न मिथ्यादृष्टेः तथास्वाभाव्यात्, तथाहि-यथाऽभव्यो ग्रन्थिदेशमुपागतोऽपि तथास्वभावत्वान्न ग्रन्थिभेदमाधातुमलम् , एवं मिथ्यादृष्टिरपि श्रुतमवगाहमानः प्रकर्षतोऽपि तावदवगाहते यावत्किञ्चिन्न्यूनानि दशपूर्वाणि भवन्ति , परिपूर्णानि तु तानि नावगाढुं शक्नोति तथास्वभावत्वादिति, 'तण परं भयणा भयणा' अत्र 'तण' त्ति—व्यत्ययोऽप्यासामिति प्राकृतलक्षणवशात्पञ्चम्यर्थे तृतीया, ततोऽयमर्थः-ततः संपूर्णदशपूर्वधरत्वात्पश्चानुपूर्व्याः परं भिन्नेषु दशसु पूर्वेषु भजना—विकल्पना कदाचित्सम्यक्श्रुतं कदाचिन्मिथ्याश्रुतमित्यर्थः । इयमत्र भावना—सम्यग्दृष्टेः प्रशमादिगुणगणोपेतस्य सम्यक्श्रुतं यथावस्थितार्थतया तस्य सम्यक्परिणमनात् , मिथ्यादृष्टेस्तु मिथ्याश्रुतम् , विपरीतार्थतया तस्य परिणमनात् , 'सत्त' मिथ्यादि, निगमनं तदेतत् सम्यक्श्रुतम् । नं० ।

सम्माण—सम्मान—पुं० । स्तुत्यादिभिर्गुणोन्नतिकरणे , आव० ४ अ० । प्रति० । ध० । तथाविधे उचितप्रतिपत्तिकरणे , भ० १४ श० ३ उ० । ज्ञा० । स्था० । दशा० । वस्त्रपात्रादिपूजने , स्था० ७ ठा० ३ उ० । पञ्चा० । ध० । प्रव० । औ० ।

सम्माणइत्ता-सम्मानयित्वा-अव्य० । प्रतिविशेषेण सम्मानं कृत्वेत्यर्थे, स्था० ३ ठा० १ उ० ।

सम्माणणिज्ज-सम्माननीय-त्रि० ।जिनोचितप्रतिपत्तिविशेष, भ० १० श० ४ उ० । चं० प्र० । बहुमानविशेषे, औ० । वस्त्रादिभिर्वा पूजनीय, ज्ञा० १ श्रु० १ अ० ।

सम्माणवत्तिय-सम्मानप्रत्यय-पुं० । स्तुत्यादिगुणोन्नतिकरणं सम्मानः, तथा मनसः प्रीतिविशेष इत्यन्ये सुव्यवस्थयो निमित्तं यस्येति । सम्माननिमित्त, ल० । रा० ।

सम्माणिय-सम्मानित-त्रि० । तथाविधया वचनादिप्रतिपत्त्या पूजित , औ० । अभ्युत्थानादिभिः पूजित, कल्प० १ अधि० ३ क्षण ।

सम्माणियदोहला-सम्मानितदोहदा-स्त्री०।प्राप्तस्याभिलषितार्थस्य भोगात् (भ० ११ श० ११ उ० ।)वाञ्छितार्थसम्माननात् ( विपा० १ श्रु० २ अ० । ) सम्प्राप्ताभिलाषायामन्तर्वत्न्याम् , कल्प० १ अधि० ४ क्षण ।

सम्माणुसव्वविरइअहक्खायचारित्तघायकर-सम्यगणुसर्वविरतियथाख्यातचारित्रघातकर-पुं० । 'सम्मं'ति—सम्यक्त्वं च 'अणुसव्वविरइ'त्ति-विरतिशब्दस्य प्रत्येकं संबन्धात् अणुविरतिश्च देशविरतिः सर्वविरतिश्च, यथाख्यातचारित्रं च सम्यगणुसर्वविरतियथाख्यातचारित्राणि तेषां घातो-विनाशः सम्यगणुसर्वविरतियथाख्यातचारित्रघातस्तं कुर्वन्तीत्येवंशीलाः सम्यगणुसर्वविरतियथाख्यातचारित्रविघातकराः । कषायेषु,कर्म० १ कर्म० । (अनन्तानुबन्धिनः कषायाः सम्यक् घातकरा इति ' कसाय ' शब्दे तृतीयभागे ३९८ पृष्ठे गतम् । )

सम्मामिच्छत्त-सम्यग्मिथ्यात्व-न० । सम्यक्त्वमिथ्यात्व-

मिथ्ये, कर्म० १ कर्म० । पं० सं० । मिथ्यात्वपुद्गला एव ईषद् विशुद्धाः सम्यग्मिथ्यात्वव्यपदेशभाजः । कर्म० ६ कर्म० । यदुदयात्पुनर्जिनप्रणीतं तत्त्वं न सम्यक् श्रद्धत्ते नापि निन्दति नालिकेरद्वीपवास्यादिवत् सम्यक् असम्यक् वा एकान्तेन निश्चयाकरणतः सम्यक्श्रद्धानैकान्तविप्रतिपत्त्ययोगात् तत्सम्यग्मिथ्यात्वम् । कर्म० ६ कर्म० । प्रज्ञा० । ( दृष्टान्तोपन्यासः इहैव 'सम्मामिच्छद्दिट्ठि' शब्देऽस्ति । )

**सम्मामिच्छादंसण**—सम्यक्मिथ्यादर्शन—न० । सम्यग्मिथ्यास्वरूपे दर्शनभेदे, स्था० ७ ठा० ३ उ० ।

**सम्मामिच्छादिट्ठिगुणट्ठाण**-सम्यग्मिथ्यादृष्टिगुणस्थान-न० । सम्यक् च मिथ्या च दृष्टिर्यस्यासौ सम्यग्मिथ्यादृष्टिस्तस्य गुणस्थानं सम्यग्मिथ्यादृष्टिगुणस्थानम् । द्वितीयगुणस्थानवर्तिनि साधौ, कर्म० । इहानन्तराभिहितविधिना लब्धेनौपशमिकसम्यक्त्वेन औषधविशेषकल्पेन मदनकोद्रवस्थानीयं मिथ्यात्वमोहनीयं कर्म शोधयित्वा त्रिधा करोति, तद्यथा-शुद्धमर्द्धविशुद्धमविशुद्धं चेति । स्थापना--तत्र त्रयाणां पुञ्जानां मध्ये यदाऽर्द्धविशुद्धः पुञ्ज उदेति तदा तदुदयाज्जीवस्यार्द्धविशुद्धं जिनप्रणीततत्त्वश्रद्धानं भवति, तेन तदासौ सम्यग्मिथ्यादृष्टिगुणस्थानमन्तर्मुहूर्तं कालं स्पृशति, तत ऊर्ध्वमवश्यं सम्यक्त्वं मिथ्यात्वं वा गच्छतीति । कर्म० २ कर्म० । पं० सं० । दर्श० ।

**सम्मावाइ**-सम्यग्वादिन्—पुं० । सम्यग् वदितुं शीलं स्वभावो यस्य स सम्यग्वादी । सम्यग्वादशीले, प्रश्न० ।

**सम्मावाय**-सम्यग्वाद-पुं० । सम्यग्-रागद्वेषपरिहारेण वदनं वादः सम्यग्वादः । रागादिपरित्यागेन यथार्थवदने, आ० म० १ अ० । ध० । सामायिके, तस्य तथात्वात् । आ० चू० १ अ० । सम्यक् यथास्थितवदनात् । आव० ।

सामाइयं समइयं, सम्मावाओ समास संखेवो ।
अणवज्जं च परिन्ना, पच्चक्खाणे य ते अट्ठ ॥८६४॥

'सामायिकम्' इति—रागद्वेषान्तरालवर्ती समः—मध्यस्थ उच्यते, 'अय' गतावित्ति, अयनम् अयः—गमनमित्यर्थः, समस्य अयः समायः, स एव विनयादिपाठात् स्वार्थिकठक्प्रत्ययोपादानात् सामायिकम्, एकान्तोपशान्तिगमनमित्यर्थः, समयिकं—समिति सम्यक्शब्दार्थे उपसर्गः, सम्यगयः समयः-सम्यग्-दयापूर्वकं जीवेषु गमनमित्यर्थः, समयोऽस्यास्तीति, 'अत इनिठनौ' ( पा० ५-२-११५ ) इति ठन् समयिकं सम्यग्वादः—रागादिविरहः सम्यक् तेन तत्प्रधानं वा वदनं सम्यग्वादः, रागादिविरहेण यथावद् वदनमित्यर्थः । समासः-'असु' क्षेपणे इति, असनम् आसः-क्षेप इत्यर्थः, संशब्दः प्रशंसार्थः शोभनमसनं समासः, अपवर्गे गमनमात्मनः कर्मणो वा जीवात् पदत्रयप्रतिपत्तिरूपया क्षेपः समासः । संक्षेपः—संक्षेपणं-संक्षेपः स्तोकाऽक्षरं सामायिकं महार्थं च द्वादशाङ्गपिण्डार्थत्वात् । अनवद्यं चेति-अवद्यं-पापमुच्यते नास्मिन्नवद्यमस्तीत्यनवद्यं सामायिकमिति, परि:—समन्ताज्ज्ञानं पापपरित्यागेन परिज्ञा सामायिकमिति । परिहरणीयं वस्तु वस्तु प्रतिआख्यानं प्रत्याख्यानं च, त एते सामायिकपर्याया अष्टाविति गाथार्थः । आव० १ अ० ।

अथ सम्यग्वादे कालिकाचार्यकथा—

"पुरी तुरुमिणी तत्र, जितशत्रुर्नराधिपः ।
भद्राङ्गजो द्विजो दत्तः, कालिकाचार्ययामिजः ॥ १ ॥

दत्तश्च सप्तपो धूर्तः, प्रारेभे सेवितुं नृपम् ।
अभवद्ग्राहको राज्य-, भेदयित्वाऽथ सोऽधिपम् ॥ २ ॥

राजानं पञ्जरे क्षिप्त्वा, स्वयं राजा बभूव सः ।
अनेकानिष्टवान् यागान्, कालिकार्योऽन्यदाऽगमत् ॥ ३ ॥

प्रणन्तुं तमगाद्दत्तो-पृच्छद्यागफलं ततः ।
गुरुराख्यद्दया धर्मः, कारुण्यादपरो न हि ॥ ४ ॥

पुनः पृष्टे गुरुः स्माह, हिंसा दुर्गतिहेतवे ।
सत्यं मत्वाऽवदद्दत्तः, स्पष्टदुष्टाशयो गुरून् ॥ ५ ॥

यदि वेत्सि तदाचार्य !, प्रश्नस्य चितरोत्तरम् ।
निःशङ्कोऽथ गुरुः स्माह, यागानां नरकः फलम् ॥ ६ ॥

ततो दत्तः क्रुधाऽवादी—दाचार्य ! प्रत्ययोऽत्र कः ।
गुरुरूचे प्रत्ययोऽस्मा-दितः सप्तमवासरे ॥ ७ ॥

पक्ष्यसे शुनकुम्भ्यां त्वं, दत्तोऽथ सविशेषकृत् ।
ऊचे कः प्रत्ययोऽत्रापि, गुरुरूचे निशम्यताम् ॥ ८ ॥

कुर्वतो राजपाटीं ते, वदने सप्तमे दिने ।
तुरङ्गमखुरोत्क्षिप्तः, प्रवेक्ष्यत्यशुचिर्लवः ॥ ९ ॥

सोऽथातिकुपितोऽवादी-त्तदाचार्य ! कथं मृतिः ।
गुरुरूचे चिरं कृत्वा, व्रतं यास्याम्यहं दिवि ॥ १० ॥

अथोत्तस्थौ गुरोः पश्चा-द्दत्तश्चित्ते व्यचिन्तयत् ।
यन्ममाच्यद्भावस्य, तत्करिष्येऽमुमेऽहानि ॥ ११ ॥

ततः प्रविश्य सौधान्त—र्दत्तस्तस्थौ दिनानि षट् ।
षष्ठेऽपि दिवसस्तेन, ज्ञातः सप्तम इत्यथ ॥ १२ ॥

मार्गानशोधयन् सायं, तलारक्षैरशेषवत् ।
निशान्ते मालिकः कोऽप्या-गच्छन् संज्ञातुरोऽभवत् ॥ १३ ॥

व्युत्सृज्य राजमार्गे द्राग्, पिधाय कुसुमैस्गात् ।
दत्तोऽपि निर्ययौ राज-पाटिकां सप्तमेऽहनि ॥ १४ ॥

मार्गे चाश्वखुरोत्क्षिप्त-स्तस्यास्येऽगात्तदा शुचः ।
ततोऽभिज्ञानतो ज्ञातं, मृत्युरद्य स्फुटं मम ॥ १५ ॥

प्रधानैश्चाति संकेतः, कृतोऽग्रेऽस्तीति दुर्मदम् ।
धृत्वाऽमुं स्थापनीयोऽत्र, राजा प्राकृत एव सः ॥ १६ ॥

दत्तः सौधान्तरे नष्टुं, वदतेऽथ सपर्यपि ।
मनःसंकेतमज्ञासी-त्प्रधानैरिति शङ्कितम् ॥ १७ ॥

ततः सौधे विशंस्तैरा—धृतो मौलः कृतो नृपः ।
राज्ञा तदाथ दुष्टः स, क्षिप्तः कुम्भ्यां शुनैः सह ॥ १८ ॥

अधः प्रज्वालितो वह्नि-स्तापातैरथ स श्वभिः ।
खण्डमानोऽमयन्मृत्वा, रौद्रध्यानेन नारकः ॥ १९ ॥"

आ० क० १ अ० । ( "सम्मावाये कहइ" इत्यादिसूत्रम् 'चिक्खणी' शब्दे षष्ठभागे गतम् । ) सम्यग् आर्यपरी

को वादः सम्यग्वादः । यथावस्थितवस्तुविभावने, आचा० १ श्रु० ४ अ० १ उ० । ( एतदन्ताऽध्यारोपीयसम्यक्त्वाध्ययनं उक्तमस्माभिः ' सम्मत्त ' शब्देऽस्मिन्नेव भागे दर्शितम् । ) सम्यग्—अविपरीतो वादः सम्यग्वादः । दृष्टिवादे, स्था० १० ठा० ३ उ० ।

**सम्मिस्स—सम्मिश्र—**त्रि० । विस्फुटितत्वचि, आचा० २ श्रु० १ चू० १ अ० ८ उ० ।

**सम्मूढमण—संमूढमनस्—**त्रि० । तत्त्वान्तरं भ्रान्तचित्ते, आव० ४ अ० ।

**सम्मिस्सभाव—संमिश्रभाव—**पुं० । अस्तित्वनास्तित्वापन्ने, सूत्र० १ श्रु० १२ अ० ।

**सम्मुइ—सम्मुक्ति—**पुं० । महापद्मतीर्थकृत्समकालिकैरवतजतीर्थकृतः सिद्धार्थस्य पितरि, ति० ।

**समुच्छ—सम्मूर्छ—**पुं० । सम्मूर्छनं सम्मूर्छः । गर्भोपपातव्यतिरेकेणैवमेव प्राणिनामुत्पादे, जी० १ प्रति० ।

**सम्मुच्छय—सम्मूर्च्छज—**पुं० । सम्मूर्छनाज्जातः सम्मूर्छजाः । शलभपिपीलिकामक्षिकाशालिकादिषु , आचा० १ श्रु० १ अ० ६ उ० । त्रसेषु, दश० ४ अ० । स्था० । पद्मिनीशृङ्गाटकपाठाशैवलादिषु वनस्पतिषु, आचा० १ श्रु० १ अ० ५ उ० ।

**सम्मुच्छिम—सम्मूर्छिम—**पुं० । ' मूर्छा ' मोहसमुच्छ्राययोः , संमूर्छनं सम्मूर्छा भावे घञ्प्रत्ययः । तेन निर्वृत्ताः सम्मूर्छिमाः । नं० । संमूर्छन्ति इति संमूर्छिमाः । प्रसिद्धबीजाभावेन पृथिवीवर्षादिसमुद्भवास्तथाविधतृणादयः , नचैते न संभवन्ति दग्धभूमावपि संभवात् । दश० ४ अ० । दग्धभूमौ बीजासत्त्वेऽपि ये तृणादय उत्पद्यन्ते ते संमूर्छिमाः । स्था० ६ ठा० ३ उ० । सम्मूर्च्छन्ति तथाविधकर्मोदयाद् गर्भमन्तरेणैवोत्पद्यन्ते इति सम्मूर्छिमाः । अनु० । अगर्भव्युत्क्रान्तिजेषु , प्रज्ञा० २१ पद । सम्मूर्छिमाना स्त्र्यादिभेदो नास्ति । स्था० ३ ठा० १ उ० । अनु० । भ० । व्यजनादिजन्ये वायुकाये , स्था० ५ ठा० ३ उ० । आ० म० ।

**सम्मेदसेल—सम्मेदशैल—**पुं० । स्वनामख्याते विन्ध्यगिरिशिखरसंदे , यत्र ऋषभवासुपूज्यनेमिमहावीरवर्ज्यास्तीर्थकराः विंशतिः सिद्धाः , आ० म० १ अ० । ती० ।

**सम्मेयसेलसिहर—सम्मेदशैलशिखर—**पुं० । पर्वतविशेषकूटे , पञ्चा० १६ विव० ।

**सम्मेल—सम्मेल—**न० । परिजनसम्मानभक्ते, गोष्ठीभक्ते, आचा० २ श्रु० १ चू० १ अ० ४ उ० । गोष्ठ्यां च । नि० चू० ११ उ० ।

**सम्मोह—सम्मोह—**पुं० । मूढतायाम् , स्था० ४ ठा० । किंकर्तव्यतामूढतायाम् , अनु० । विशे० । आव० । संनिपातोपहतस्येव सर्वतोऽनध्यवसाये , द्वा० १३ द्वा० । संमुह्यतीति सम्मोहः । मूढात्मनि देवविशेषे, स्था० १ ठा० ।

**सम्मोही—साम्मोही—**स्त्री० । संमुह्यन्तीति सम्मोहाः मूढात्मानो देवविशेषास्तेषामियं साम्मोही । भावनाभेदे, ध० ३ अधि० ।

संप्रति सांमोहीमाह—

**उम्मग्गदेसणाम—ग्गदूसणामग्गविप्पडिवत्ती ।**
**मोहेण य मोहित्ता, संमोहं भावणं कुणइ ॥४६१॥**

उन्मार्गदेशना १ उन्मार्गदूषणा २ मार्गविप्रतिपत्तिकश्च भवतीति वाक्यशेषः , मोहेन च यः स्वयं मुह्यति एवं कृत्वा च परे मोहयित्वा सांमोहीं भावनां करोति । इति निर्युक्तिगाथासमासार्थः । बृ० १ उ० २ प्रक० । ग० । प्रव० ।

**चउहिं ठाणेहिं जीवा सम्मोहत्ताए कम्मं पगरेंति , तं जहा—उम्मग्गदेसणाए मग्गंतराएणं कामासंसप्पओगेणं भिज्जा नियाणकरणेणं । ( सू० ३५४ + )**

संमुह्यतीति संमोहो मूढात्मा देवविशेष एव तद्भावस्तत्ता तस्यै सम्मोहताये सम्मोहत्वाय सम्मोहतया वेति उन्मार्गदेशनया सम्यग्दर्शनादिरूपभावमार्गातिक्रान्तधर्मप्रकथनेन मार्गान्तरायेण मोक्षाध्वप्रवृत्तस्य विघ्नकरणेन कामाशंसाप्रयोगेण—शब्दादावभिलाषकरणेन ' भिज्ज ' त्ति—लोभो—गृद्धिस्तेन निदानकरणमेतस्मात्तपःप्रभृतेश्चक्रवर्त्यादित्वं मे भूयादिति निकाचनाकरणं तेनेति । स्था० ४ ठा० ४ उ० ।

**सय—शत—**न० । दशगुणदशसंख्यायाम् ,तत्संख्येये च । अनु० ।

स्वक—त्रि० । आत्मीये,विशे० । सूत्र० । ज्ञा० । आचा० । भ० । स्वकीये, विशे० । देहगृहादौ, सूत्र० १ श्रु० ८ अ० ।

**सयओवभोग—सततोपभोग—**पुं० । नैरन्तर्येणोपभोगे , नि० चू० १ उ० ।

**सयं—स्वयम्—**अव्य० । आत्मनेत्यर्थे, सूत्र० १ श्रु० १ अ० । आव० । आचा० । पञ्चा० । उत्त० । स्था० । परोपदेशमन्तरेणेत्यर्थे, सूत्र० १ श्रु० १३ अ० । स० । पा० । नि० चू० । भ० । प्रश्न० । विपा० । आचा० ।

**सयंकड—स्वयंकृत—**त्रि० । आत्मना कृते, भ० ।

जीवाः स्वयंकृतं दुःखं वेदयन्ति—

**रायगिहे नगरे समोसरणं, परिसा निग्गया० जाव एवं वयासी—जीवे णं भंते ! सयंकडं दुक्खं वेदेइ ? , गोयमा ! अत्थेगइयं वेएइ अत्थेगइयं नो वेएइ , से केणट्ठेणं भंते ! एवं वुच्चइ अत्थेगइयं वेएइ अत्थेगइयं नो वेएइ ? , गोयमा ! उदिन्नं वेएइ अणुदिन्नं नो वेएइ, से तेणट्ठेणं एवं वुच्चइ—अत्थेगइयं वेएइ अत्थेगतियं नो वेएइ, एवं चउव्वीसदंडएणं० जाव वेमाणिए ॥ जीवा णं भंते ! सयंकडं दुक्खं वेएन्ति ?, गोयमा ! अत्थेगइयं वेयन्ति अत्थेगइयं णो वेयन्ति, से केणट्ठेणं ?, गोयमा ! उदिन्नं वेयन्ति नो अणुदिन्नं वेयन्ति से तेणट्ठेणं,एवं०जाव वेमाणिया ॥ जीवे णं भंते ! सयंकडं आउयं वेएइ ? गोयमा ! अत्थेगइयं वेएइ अत्थेगइयं नो वेएइ जहा दुक्खेणं दो दंडगा तहा आउएण वि दो दंडगा एगत्तपुहुत्तिया,एगत्तेणं० जाव वेमाणिया पुहुत्तेण वि तहेव ॥ ( सू० २० )**

"कइ णं भंते ! संजय निव्वुया सव्वकम्मओ मुक्का कई सद्धम्मभेणं सिज्झस्संति।" भ० ७ श० ६ उ०।

अट्ठपयारकम्मक्खएण सिद्धा सज्जमते संति सिद्धा सिय सजायमेसमिति वा सिद्धा। सिद्धिनिट्ठिए पहीणे सयलपवयणवायकयं सव्वमेतेसिमिति वा सिद्धा। महा० ३ अ०।

शुद्धसत्त्वसाधने, "एवं परमत्थमाहणं रूवं पुण होइ सिज्झिव" इत्युक्तायां,(अष्ट० २७ अष्ट०।) क्रियासिद्धौ, सूत्र० १ श्रु० १ अ० २ उ०। निष्पत्तौ, द्वा० २१ द्वा०। ( सिद्धिलक्षणम् 'धम्म' शब्दे चतुर्थभागे २६७० पृष्ठे गतम्।) सिद्धिशब्दः सकलव्यवहारकः, तथा च लोकेऽपि सिद्धिःभवतीत्युक्ते इष्टार्थसम्बन्ध एव प्रतीयते। दश० १ अ०।

सिद्धिप्राप्त्युपायमाह-

**अतीतानागतज्ञानं, परिणामेषु संयमात्।**
**शब्दार्थधीविभागे च, सर्वभूतरुतस्य धीः॥ ५॥**

संयमो नाम धारणाध्यानसमाधित्रयमेकविषयम्। यदाह-"त्रयमेकत्र संयमः" इति ( ३-४ )। एतदभ्यासात् खलु हेयज्ञेयादिप्रज्ञाप्रसर इति पूर्वभूमिषु जातोत्तरभूमिष्वयं विनियोज्यः। तदाह—"तज्जयात्प्रज्ञालोकः ( ३-५ ) तस्य भूमिषु विनियोग इति" ( ३-६ )। ततः परिणामेषु धर्मलक्षणावस्थारूपेषु संयमाज्ञितस्य सर्वार्थग्रहणसामर्थ्यप्रतिबन्धकविक्षेपपरिहारात्। अतीतानागतज्ञानमतिक्रान्तानुत्पन्नार्थपरिच्छेदनं योगिनो भवति। तदुक्तं—"परिणामत्रयसंयमादतीतानागतज्ञानमिति"। ( ३-१६ )। शब्दः श्रोत्रेन्द्रियग्राह्यो नियतक्रमवर्णात्मा क्रमरहितः स्फोटात्मा ध्वनिसंस्कृतबुद्धिग्राह्यो वा, अर्थो जातिगुणक्रियादिः, धीर्विषयाकारा बुद्धिवृत्तिः, एता हि गौरिति शब्दो गौरित्यर्थो गौरिति च धीरित्यभेदेनैवाध्यवसीयन्ते। कोऽयं शब्द इत्यादिषु प्रश्नेषु गौरित्येकरूपस्यैवोत्तरस्य प्रदानात्। तस्य चैकरूपप्रतिपत्तिनिमित्तकत्वात्। तत एतासां विभागे चेदं शब्दस्य तत्त्वं यद्वाचकत्वं नाम, इदं चार्थस्य यद्वाच्यत्वं, इदं च धियो यत्प्रकाशत्वमित्येवंलक्षणे। संयमात् सर्वेषां भूतानां मृगपशुपक्षिसरीसृपादीनां रुतस्य शब्दस्य धीर्भवति। अनेनैवाभिप्रायेण अनेन प्राणिनाऽयं शब्दः समुच्चारित इति। तदुक्तं-"शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरस्तत्प्रति (प्रवि) भागसंयमात्सर्वभूतरुतज्ञानमिति" (३-१७)॥ ५॥

( कायरूपस्य संयमात् ६ × )

कायः-शरीरं तस्य रूपं—चक्षुर्ग्राह्यो गुणः तस्य तास्मिन् काये रूपमिति संयमाद्रूपस्य चक्षुर्ग्राह्यत्वरूपायाः शक्तेः स्तम्भे भावनावशात्प्रतिबन्धे सति तिरोधानं भवति। चक्षुषः प्रकाशरूपस्य सात्त्विकस्य धर्मस्य तद्ग्रहणव्यापाराभावात्। तथा संयमवान् योगी न केनचिद् दृश्यत इत्यर्थः। एवं शब्दादितिरोधानमपि ज्ञेयम्। तदुक्तं-"कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुः (षु.प्र) प्रकाशासं ( प्र ) योगेऽन्तर्धानम्" (३-२१)। एतेन शब्दाद्यन्तर्धानमुक्तमिति॥ ६॥ (परचित्ताभिज्ञानं 'परचित्तणाण' शब्दे पञ्चमभागे प्रतिपादितम्) (अन्तर्धानविषयतो 'अंतद्धाण' शब्दे प्रथमभागे ६३ पृष्ठे उक्ता।)

**संयमात् कर्मभेदाना-मरिष्टेभ्योऽपरान्तधीः।**
**मैत्र्यादिषु बलान्येषां, हस्त्यादीनां बलेषु च॥७॥**

एवमन्येऽपि। तेषां संयमादिदं शीघ्रविपाकमिदं च मन्दविपाकमित्याद्यवधानदार्ढ्यजनितादरिष्टेभ्य आध्यात्मिकाधिभौतिकाधिदैविकभेदभिन्नेभ्यः कर्णपिधानाकालीनकोष्ठ्यवायुघोषाश्रवणाकस्मिकविकृतपुरुषाशकयदर्शनस्वर्गादिपदार्थदर्शनलक्षणेभ्योऽपरान्तस्य करणशरीरवियोगस्य धीर्नियतदेशकालतया निश्चयः सामान्यतः संशयाविलतादृष्टयाऽरिष्टेभ्यो योगिनामपि संभवादिति ध्येयम्। तदुक्तं—"सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वेति" ( ३२२ )। मैत्र्यादिषु मैत्रीप्रमोदकारुण्यमाध्यस्थ्येषु संयमादेषां मैत्र्यादीनां बलानि भवन्ति, मैत्र्यादयस्तथा प्रकर्षं गच्छन्ति यथा सर्वस्य मित्रत्वादिकं प्रतिपद्यते योगीत्यर्थः। तदुक्तं-"मैत्र्यादिषु बलानि" (३-२३) बलेषु च हस्त्यादिसम्बन्धिषु संयमाद्धस्त्यादीनां बलान्याविर्भवन्ति सर्वसामर्थ्ययुक्तत्वात् नियतबलसंयमेन नियतबलप्रादुर्भावात्। एवं विषयवत्या ज्योतिष्मत्याश्च प्रवृत्तेः सात्त्विकप्रकाशप्रसरस्य विषयेषु संन्यासात् सूक्ष्मव्यवहितविप्रकृष्टार्थज्ञानमपि द्रष्टव्यं सान्तःकरणेन्द्रियाणां प्रशक्तितापत्तेः। तदुक्तं—"प्रवृत्त्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानमिति" ( ३-२५ )॥ ७॥

**सूर्ये च भुवनज्ञानं, ताराव्यूहे गतिर्विधौ।**
**ध्रुवे च तद्गतेर्नाभि-चक्रे व्यूहस्य वर्ष्मणः॥ ८॥**

सूर्ये इति—सूर्ये च प्रकाशमये संयमाद्भुवनानां सप्तानां लोकानां ज्ञानं भवति। तदुक्तं—"भुवनज्ञानं सूर्ये ( र्ये ) संयमात्" ( ३-२६ )। ताराव्यूहे ज्योतिषां विशिष्टसंनिवेशे संयमाद्विधौ चन्द्रे गतिज्ञानं भवति, सूर्याहततेजस्कतया ताराणां सूर्यसंयमात्तद्ज्ञानं न शक्नोति भवितुमिति पृथगयमुपायोऽभिहितः। तदुक्तं—"चन्द्रे ताराव्यूहज्ञानं" ( ३-२७ )। ध्रुवे च निश्चले ज्योतिषां प्रधाने संयमात्तासां ताराणां गतेर्नियतदेशकालगमनक्रियाया गतिर्भवति, इयं तारा इयता कालेन अमुं राशिमिदं वा क्षेत्रं यास्यतीति। तदुक्तं-"ध्रुवे तद्गतिज्ञानं" ( ३--२८। ) नाभिचक्रे शरीरमध्यवर्तिनि समस्तावयवसन्निवेशमूलभूते संयमाद्वर्ष्मणः-कायस्य व्यूहस्य रसमलनाड्यादीनां व्यवस्थानस्य गतिर्भवति। तदुक्तं-"नाभिचक्रे कायव्यूहज्ञानम्" (३-२९)॥ ८॥ ( तच्च 'सरीर' शब्देऽस्मिन्नेव भागे गतम्।) ( भुवनस्वरूपम् 'भावणा' शब्दे पञ्चमभागे गतम्।)

**क्षुत्तृड्व्ययः कण्ठकूपे, कूर्मनाड्यामचापलम्।**
**मूर्धज्योतिषि सिद्धानां, दर्शनं च प्रकीर्तितम्॥ ९॥**

क्षुदिति—कण्ठ-गले कूप इव कूपो गर्ताकारः प्रदेशस्तत्र संयमात् क्षुत्तृषोर्व्ययो भवति। घण्टिकाधस्तात्तत्कूपे क्षुत्पिपासोपशान्तिः। तदुक्तम्-"कण्ठकूपे क्षुत्पिपासानिवृत्तिः" (३-३०) कूर्मनाड्यां कण्ठकूपस्याधस्तात्वर्तमानायां संयमाच्चापलं भ-

वति, मनःस्थैर्यमित्यर्थः । तदुक्तम्—" कूर्मनाड्यां स्थैर्यमिति " ( ३—३१ ) । मूर्धज्योतिर्नाम-सुषुम्णाभ्यन्तरस्य मणेः प्रसरन्ती प्रभेव कुञ्चिकाद्वारे प्रदेशे, हृदयस्थ एव सात्त्विकः प्रकाशो ब्रह्मरन्ध्रं संपिण्डितत्वं-भजन्, तत्र संयमाच्च सिद्धानां दर्शनं प्रकीर्तितम् । द्यावापृथिव्योरन्तरालवर्तिनो ये दिव्यपुरुषास्तानितरान् पश्यति, तैश्चायं संभाष्यत इति भावः । तदुक्तम्—" मूर्धज्योतिषि सिद्धदर्शनम् " ( ३-३२ ) ॥९॥

प्रातिभात् सर्वतः संवि-च्चेतसो हृदये तथा ।
स्वार्थे संयमतः पुंसि, भिन्ने भोगात्परार्थकात् ॥१०॥

प्रातिभादिति—निमित्तानपेक्षं मनोमात्रजन्यम् अविसंवादकं झटित्युत्पद्यमानं ज्ञानं प्रतिभा । तत्र संयमे क्रियमाणे यदुत्पद्यते ज्ञानं विवेकख्यातेः पूर्वभावि तारकमुदेति, सवितुरिव पूर्वप्रभा, ततः सर्वतः संविद्भवति । संयमान्तरानपेक्षः सर्वं जानातीत्यर्थः । " प्रातिभाद्वा सर्वम् " ( ३-३३ ) इत्युक्तः । तथा हृदये—शरीरप्रदेशविशेषेऽधोमुखस्वल्पपुण्डरीकाकारे संयमात् चेतसः संवित्-स्वपरचित्तगतवासनारागादिज्ञानं भवति । तदुक्तम्-"हृदये चित्तसंवित् " (३-३४) । परार्थकात् सत्त्वस्य स्वार्थनैरपेक्ष्येण स्वामिपुरुषार्थकाद्भोगात् सत्त्वपुरुषाभेदाध्यवसायलक्षणात् सत्त्वस्यैव सुखदुःखकर्तृत्वाभिमानात्मके स्वार्थे स्वरूपमात्रालम्बने परित्यक्ताहंकारे सत्त्वे चिच्छायासंक्रान्तौ पुंसि संविद्भवति । एवंभूतं स्वालम्बनज्ञानं सत्त्वनिष्ठं पुरुषो जानाति, न पुनः पुरुषो ज्ञाता ज्ञानस्य विषयभावमापद्यते, ज्ञेयत्वापत्तेः । ज्ञातृज्ञेययोश्चात्यन्तविरोधादिति भावः । तदुक्तम्-"सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थ( र्थात् ) स्वार्थसंयमात् पुरुषज्ञानमिति"(३-३५)१०। (द्वा०।)

समानस्य जयाद्धामा-दानस्याब्वाद्यसंगता ।
दिव्यं श्रोत्रं पुनः श्रोत्र-व्योम्नोः संबन्धसंयमात् ॥१३॥

समानस्येति—समानस्याग्निमावेष्ट्य व्यवस्थितस्य सामान्यस्य वायोर्जयात् संयमेन वशीकारान्निरावरणस्याग्नेरूर्ध्वगतत्वात् धाम-तेजः तरणिप्रतापवदवभासमानमाविर्भवति, येन योगी ज्वलन्निव प्रतिभाति । यदुक्तम्—" समानजयाज्ज्वलनः ( म् ) " ( ३—४० ) । उदानस्य कृकाटिकादेशादाशिरोवृत्तेर्जयादितरेषां वायूनां निरोधादूर्ध्वगतित्वसिद्धेः । ( द्वा० ) श्रोत्रं शब्दग्राहकमाहंकारिकमिन्द्रियं व्योम, शब्दतन्मात्रजमाकाशं, तयोः पुनः संबन्धसंयमाद्देशदेशिभावसंबन्धसंयमाद्दिव्यं युगपत्सूक्ष्मव्यवहितविप्रकृष्टशब्दग्रहणसमर्थं श्रोत्रं भवति । तदुक्तम्—" श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम् " ( ३—४१ ) ॥ १३ ॥

लघुतूलसमापत्त्या, कायव्योम्नोस्ततोऽम्बरे ।
गतिर्महाविदेहातः, प्रकाशावरणक्षयः ॥ १४ ॥

लघ्विति-कायः-पाञ्चभौतिकं शरीरं, व्योम च प्रागुक्तं, तयोः । ततोऽवकाशदानसंबन्धसंयमात् । लघुनि तूले समापत्त्या तन्मयीभावलक्षणया प्राप्ताभ्यन्तरलघुभावनयाऽम्बरआकाशे गतिः स्यात् । उक्तसंयमवान् प्रथमं यथारुचि जले संचरन् क्रमेणोर्णनाभतन्तुजालेन संचरमाणः आदित्यरश्मिभिश्च विहरन् यथेष्टमाकाशे गच्छतीत्यर्थः । तदुक्तम्- " कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेश्च ( श्रा ) काशगमनम् " ( ३—४२ ) । ( द्वा० ) ( पूर्वार्धव्याख्या ' महाविदेहा ' शब्दे षष्ठभागे गता । )

स्थूलादिसंयमाद्भूत-जयोऽस्मादणिमादिकम् ।
कायसंपच्च तद्धर्मा-नभिघातश्च जायते ॥ १५ ॥

स्थूलादीति-स्थूलादीनि स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि पञ्चानां भूतानामवस्थाविशेषरूपाणि । तत्र भूतानां परिदृश्यमानं विशिष्टाकारवत्त्वं स्थूलं रूपं-स्वरूपं च पृथिव्यादीनां कार्कश्यस्नेहोष्णताप्रेरणावकाशदानलक्षणं सूक्ष्मं च यथाक्रमं भूतानां कारणत्वेन व्यवस्थितानि गन्धादितन्मात्राणि । अन्वया गुणाः प्रकाशप्रवृत्तिस्थितिरूपतया सर्वत्रैवोपलभ्यमानाः । अर्थवत्त्वं च तेष्वेव गुणेषु भोगापवर्गसंपादनशक्तिरूपम् । तेषु क्रमेण प्रत्यवस्थं संयमाद्भूतजयो भवति । कृतैतत्संयमस्य संकल्पानुविधायिन्यो वत्सानुसारिण्य इव गावो भूतप्रकृतयो भवन्तीत्यर्थः । तदुक्तम्—" स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः " इति ( ३—४४ ) अस्माद्भूतजयात् अणिमादिकं भवति । अणिमा, गरिमा, लघिमा, महिमा, प्राकाम्यम् ' ईशत्वं, वशित्वं, यत्रकामावसायित्वं चेत्यणिमादिकम् । तत्राणिमा-परमाणुरूपतापत्तिः, गरिमा-वज्रवद्गुरुत्वप्राप्तिः लघिमा-तूलपिण्डवल्लघुत्वप्राप्तिः, महिमा-महत्त्वप्राप्तिः अङ्गुल्यग्रेण चन्द्रादिस्पर्शनयोग्यता । प्राकाम्यम्-इच्छानभिघातः शरीरान्तःकरणयोः। ईशत्वम्-सर्वत्र प्रभविष्णुता । वशित्वम्-यतः सर्वाण्येव भूतानि वचनं नातिक्रामन्ति । यत्रकामावसायित्वम्-स्वाभिलषितस्य समाप्तिपर्यन्तनयनम् । कायसंपच्च उत्तमरूपादिलक्षणा । "रूपलावण्यबलवज्रसंहननत्वानि कायसंपत् " ( ३—४६ ) इत्युक्तः । तद्धर्मानभिघातश्च तस्य कायस्य धर्मा रूपादयस्तेषामभिघातो-नाशस्तदभावश्च जायते न ह्यस्य रूपमग्निर्दहति, न वा आपः क्लेदयन्ति, न वा वायुः शोषयतीति । तदिदमुक्तम्—" ततोऽणिमादिप्रादुर्भावः कायसंपत्तद्धर्मानभिघातश्चेति " ( ३—४५ ) ॥ १५ ॥ ( द्वा०१ )

मनोजवो विकरण-भावश्च प्रकृतेर्जयः ॥ १६+ ॥

तत इन्द्रियजयान्मनोजवः-शरीरस्य मनोवदनुत्तमगतिलाभः । विकरणभावश्च कायनिरपेक्षाणामिन्द्रियाणां वृत्तिलाभः प्रकृतेः-प्रधानस्य जयः सर्ववशित्वलक्षणो भवति । तदुक्तम्- " ततो मनोजवित्वं विकरणभावः प्रधानजयश्च"(३ ४८)।१६।

स्थितस्य सत्त्वपुरुषा-न्यताख्यातौ च कैवलम् ।
सार्वज्ञ्यं सर्वभावाना-मधिष्ठातृत्वमेव च ॥ १७ ॥

स्थितस्येति-केवलं सत्त्वपुरुषयोरन्यताख्यातौ गुणकर्तृत्वाभिमानशैथिल्यभावलक्षणायां शुद्धसात्त्विकपरिणामरूपायां स्थितस्य सार्वज्ञ्यं सर्वेषां शान्तोदिताव्यपदेश्यधर्मत्वेन स्थितानां यथार्हविवेकजं ज्ञानलक्षणं सर्वेषां भावानां गुणपरिणामानामधिष्ठातृत्वमेव च स्वामिवदाक्रमणलक्षणं भवति । तदुक्तम्-"सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञत्वं च" ( ३-४९ ) ॥१७॥ ( द्वा०। )

स्मृता सिद्धिर्विशोकेयं, तद्वैराग्याच्च योगिनः ।
दोषबीजक्षये नूनं, कैवल्यमुपदर्शितम् ॥ १८ ॥

सिद्धिविग्गहगइ-सिद्ध्यविग्रहगति-स्त्री०। सिद्ध्यावविग्रहेण अवक्रेण गमने सिद्ध्यविग्रहगतिः। विशिष्टसिद्धगतौ, स्था० १० ठा० ३ उ०।

सिद्धिविणिच्छय-सिद्धिविनिश्चय-पुं०। स्वनामख्याते सिद्धिप्रतिपादके ग्रन्थे, पा० १५ विव०।

सिद्धिसुगइगिहुत्तम-सिद्धिसुगतिगृहोत्तम-न०। सिद्धिलक्षणा सुगतिः सिद्धिसुगतिः। अथवा-सिद्धिश्च सुगतिश्च सुदेवत्वसुमानुषत्वलक्षणा सिद्धिसुगती, तल्लक्षणं यद् गृहाणामुत्तमं गृहोत्तमं वरप्रासादः। सिद्धिस्वरूपसुगतिगृहे, स० ८३ सम०।

सिद्धिसेहर-सिद्धिशेखर-न०। शत्रुञ्जयपर्वते, ती० १ कल्प।

सिधु-सीधु-पुं०। गुडधातकीसम्भवे मद्ये, विपा० ८ अ०।

सिनात-स्नात-त्रि०। 'ये-स्न-स्त्यां रिय-सिन-सढाः क्वचित्' ॥८।४।३१४॥ इति स्न इ यस्य स्थाने सिनादेशः स्नातम्। सिनातं। शुचीभूते, प्रा० ४ पाद।

सिन्दी-देशी-खर्जूरयाम्, दे० ना० ८ वर्ग २९ गाथा।

सिन्दुवण-देशी-अग्नौ, दे० ना० ८ वर्ग ३२ गाथा।

सिन्दू-देशी-रज्ज्वाम् दे० ना ८ वर्ग ५८ गाथा।

सिन्दूर-देशी-राज्ये, दे० ना० ८ वर्ग ३० गाथा।

सिन्दोला-देशी-खर्जूर्याम्, दे० ना० ८ वर्ग २९ गाथा।

सिन्धुओ-देशी-राहौ, दे० ना० ८ वर्ग २ गाथा।

सिन्न-सैन्य-न०। "सैन्ये वा" ॥८।१।१५०॥ इति सैन्यशब्दे एत इत्वा। सैन्यम्। सिन्नं। सैनिकं, प्रा० १ पाद।

सिप्प-शिल्प-न०। अनाचार्यके कर्मणि, नित्यव्यापारे च। स्था० ४ ठा० ४ उ०। भ०। चित्रादिविज्ञाने, स्था० ५ ठा० ३ उ०। पिं०। क्रियासु कौशले, आ० म० १ अ०। आक्रमईनादिके, औं०। कल्प०। दश०। शिल्पशतम्। शिल्पानि कुम्भकारक्रियादीनि नैपुणयानि वा लक्ष्यादिकलालक्षणानि। दश० ६ अ० २ उ०। शिल्पशतं च कालमिधौ वर्त्तते, तथा च-"घट १ लोह २ चित्र ३ वस्त्र ४ नापितशिल्पानां प्रत्येकं विंशतिभेदात्। स्था० ६ ठा० ३ उ०। चित्रादिके, प्रश्न० ६ आश्र० द्वार। क्रियाकौशले, ग०। सातिशये आचार्योपदेशजे ग्रन्थनिबद्धे व्यापारे, आ० म० १ अ०। आ०चू०। अनाचार्यकं कर्म, साचार्यकं शिल्पम्। अथवा-कादाचित्कं शिल्पम्, सार्वकालिकं कर्म। नं०। आ० म०।

सिह-धा०। प्रीतौ, "स्निह-सिचोः सिप्पः" ॥८।४।२५५॥ अनयोः कर्मभावे सिप्प इत्यादेशो भवति क्यलुक् च। सिप्पइ। स्निह्यते। प्रा० ४ पाद।

सिच्-धा०। सेचने, पूर्ववत् सिप्पादेशः। सिप्पइ। सिच्यते। प्रा०।

सिप्पसत्थ-शिल्पशास्त्र-न०। यः शिल्पानि मित्रादिशास्त्राणि ग्राहयति स इहोपचारतः शिल्पशास्त्रम्। शिल्पशास्त्रग्राहके, विशे०।

सिप्पसय-शिल्पशत-न०। भगवत आचार्योपदेशजे शिल्पमिति। तच्छते, कल्प० १ अधि० ७ क्षण।



सिप्पसिद्ध-शिल्पसिद्ध-पुं०। शिल्पभेदे, आ० म०।

सम्प्रति शिल्पसिद्धं सोदाहरणमभिधातुकाम आह-

जो सव्वसिप्पकुसले, जो वा जत्थ सुपरिनिट्ठितो होइ।
कोंकासवड्डइ विव, सातिसतो सिप्पसिद्धो त्ति ॥

यः कश्चिद् निर्दिष्टस्वरूपः सर्वेष्वपि शिल्पेषु कुशलः यो वा यत्रैकस्मिन्नपि शिल्पे सुपरिनिष्ठितः सातिशयश्च कोंकासवर्द्धकिवत् स शिल्पसिद्ध इति एष गाथाक्षरार्थः। आ० म० १ अ०। आ० क०।

कथा चेयम्-

"पुरे सोपारके तत्र, रथकारोऽभवत्सुधीः।
तद्दास्याश्च द्विजाज्जातः, कोकासो नाम दारकः ॥ १ ॥
स आसीन्मूकभावेन, समीपेऽन्यश्रवा इति।
रथकारः सुशिल्पानि, शिक्षयत्यङ्गजान् ॥ २ ॥
न तेऽगृह्णन्किमप्यज्ञा, दासेरः सर्वमग्रहीत्।
रथकारे मृते राजा, दासेरे तत्कुलं न्यधात् ॥ ३ ॥
इतश्चोज्जयिनीपुर्यां राजन् श्रावको नृपः।
चत्वारः श्रावकास्तस्य, सन्ति कर्मसु कर्मठाः ॥ ४ ॥
करोत्येको रसवतीं, तादृक् पाकवती यथा।
जीर्यत्यन्न भुक्तमात्र-मथवा याममात्रतः ॥ ५ ॥
यथा द्वित्रिचतुःपञ्च-यामैर्वा जीर्यते क्रमात्।
यथा वा कुरुते येन, सर्वथाऽपि न जीर्यति ॥ ६ ॥
अभ्यङ्गाद् द्वितीयस्तु, स तैलकुडवं प्रभोः।
प्रवेशयति देहान्त-स्तावन्निस्सारयत्यपि ॥ ७ ॥
तार्तीयीको रचयति, शय्यां तादृग्विधां यथा।
जागर्ति प्रथमे यामेऽथवा द्वित्रिचतुर्थके ॥ ८ ॥
श्रीगृहाधिकृतस्तुर्य-स्तस्मै तस्मात्स्वैभवम्।
प्रविष्टः अपरस्तत्र, न किञ्चिदपि पश्यति ॥ ९ ॥
स च क्ष्माभृत्पुत्रस्त्वा-द्राजकार्येषु शीतलः।
निर्विण्णकामभोगोऽस्ति, यावद्व्रतकृतोद्यमः ॥ १० ॥
इतश्च पाटलीपुत्रा-ज्जितशत्रुः क्षितीश्वरः।
लङ्कापुरीं राम इव, रुरोधागत्य तत्पुरीम् ॥ ११ ॥
तदाऽवन्तीपतिः शूल-मुत्पन्नं दैवयोगतः।
विधायानशनं सोऽथ, जगाम त्रिदशालयम् ॥ १२ ॥
नागरैरथ तस्यैव, पाटलीपुत्रभूभुजः।
अर्पिता नगरी तेन, श्रावकास्ते च शब्दिताः ॥ १३ ॥
चत्वारोऽप्यागताः पृष्टाः, पदोऽभूद्रोऽत्र कुत्र कः।
कार्यं कोशाधिकृतस्त्वा-दर्शयद्विक्रमैक्षत ॥ १४ ॥
शय्यापालस्तु शय्यां च, सज्जयामास तादृशीम्।
मुहूर्त्ते च मुहूर्त्ते च, यस्या उत्थीयते जवात् ॥ १५ ॥
सूदनाकं तथा राज्ञे, येन भुक्तं क्षणे क्षणे।
अभ्यङ्गोऽन्येन चैकस्मा-त्तैलमाकर्षि पादतः ॥ १६ ॥
ऊचे व्यस्तेऽस्थिमत्सुत्यः, सोऽन्यतस्तैलमाकृषत्।
प्रावृजन्नथ सर्वेऽपि, निजस्वामिवियोगतः ॥ १७ ॥
तेन तैलेन तस्यांहि-र्दह्यमानः क्रमाद्भूत्।
काकजङ्घस्ततः सोऽत्र, काकजङ्घ इति श्रुतः ॥ १८ ॥
इतश्च सोपारपुरे, दुर्भिक्षमभवत्तदा।
आजगाम ततोऽवन्त्यां, पुर्यां कोकासवर्द्धकिः ॥ १९ ॥
राज्ञः स्वज्ञापनायाथ, शालीन्काष्ठकपोतकैः।

प्रयाहरत्प्रतिदिनं, कोष्ठागारात्तरोशालुः ॥ २० ॥
नियुक्तः कथितं राज्ञा—ऽऽनाय्य कोकासवर्द्धकिः ।
रथकारपदं चक्रे, पूज्याः कुत्र गुणा न वा ॥ २१ ॥
चक्रे काष्ठमयस्तेन गरुडो भूपतेः कृते ।
यः कीलिकाप्रयोगेण, व्योमगामी सजीववत् ॥ २२ ॥
अथ राजा सराज्ञीकः, कोकासेन समं सदा ।
व्याज्ञा गरुडमारूढैः, सर्वां सञ्चरते महीम् ॥ २३ ॥
मार्गयिष्याम्यहं युष्मान्, व्योमागत्य वदन्ति ।
आपीयस्वा पराम्सर्वान्, भूपतीन् करदान् ऽयधात् ॥ २४ ॥
तां देवीमपराः प्राहु—रत्र कीलिकया कथा ।
गरुत्मान् चलति ब्रूहि, साऽऽजेयावाक्यदेतया ॥ २५ ॥
ईर्ष्ययैकाऽऽदद् राज्ञी, तन्निवर्त्तनकीलिकाम् ।
तथैवागान्नृपस्तेन, वाहितस्तु न सोऽचलत् ॥ २६ ॥
अथोद्यामे भजेस्ताद्यौ, महायानाभिमानतः ।
कलिङ्गेषु तडागान्ते, भग्नपक्षः पपात सः ॥ २७ ॥
तस्य सकूपटनाहतो—र्वाम्याधानतमुत्सुकः ।
कोकासो नगरऽयासी—त्सम्रान्त्यो रथकृत्तदा ॥ २८ ॥
काष्ठकर्मालये राज्ञो, रथं कुर्वन्नस्ति सः ।
तेनैकं निर्मितं चक्र—मन्यदस्त्यर्द्धनिर्मितम् ॥ २९ ॥
कोकासनार्थि तत्रैत्य, तत्पोपकरणानि सः ।
सोऽभ्यर्थयद्यपिष्यामि, गृहादानीय तान्यहम् ॥ ३० ॥
इतो नैतानि लभ्यन्ते, नेतुमित्यगमद् गृहं ।
कोकासेनार्द्धनिष्पन्नं, तच्चक्रं घटितं क्षणात् ॥ ३१ ॥
प्रक्षिप्तं याति वेगेन, स्खलितं ऽपि पतेच्च तत् ।
किं तु पश्चान्मुखं याति, स्खलिते त्वितरत्पतत् ॥ ३२ ॥
आगतः सोऽथ तच्चक्रं, दृष्ट्वा गत्वा सपद्यपि ।
राज्ञो विज्ञापयामास, यथा कोकासे आययौ ॥ ३३ ॥
यद्बलात्कालकाञ्चेन, नृपाः सर्वे वशीकृताः ।
धृतोऽसौ ताडनाद्यैश्च—त्कृतो राजाऽथ सप्रियः ॥ ३४ ॥
दण्डलताः स्मो वयमिति, तयोर्भक्तं निवारितम् ।
नागरैरयशोभीतैः, काकपिण्डी प्रवर्तिता ॥ ३५ ॥
कोकासं च स राजोचे, प्रासादं शतभूमिकम् ।
मम पुत्रशतस्य त्वं, कुरु मध्ये च मत्कृते ॥ ३६ ॥
पश्चाद्राज्ञापयिष्यामि, राजकं सर्वमप्यहम् ।
कोकासो ज्ञापयामास, काकजङ्घनृपात्मजम् ॥ ३७ ॥
सपुत्रं संहरिष्यामि, नृपमेनं दिनेऽमुक ।
आगन्तव्यं त्वयाऽवश्य—मत्र नहित्सत्योऽपरि ॥ ३८ ॥
कृत्वा प्रासादं कोकासो, नृपमाहूय सात्मजम् ।
संजहं कीलिकापातात्, संपुटीकृत्य तं क्षणात् ॥ ३९ ॥
काकजङ्घसुतोऽजन, तत्र तत्कालमीयुषा ।
नगरं जगृहेऽमोचि, पिता माता च वर्द्धकिः ॥ ४० ॥
विधायाथ महोत्सवं, सर्वेऽपि स्वपुरं ययुः ।
शिल्पसिद्ध इति ख्याति, प्राप कोकासवर्द्धकिः ॥ ४१ ॥"
आ० क० १ अ० ।

सिप्पं-देशी—पलाले, दे० ना० ८ वर्ग २८ गाथा ।

सिप्पा-शिप्रा-स्त्री० । स्वनामख्यातायामुज्जयिन्यां महानद्या-म्, आ० म० १ अ० । आ० क० ।

सिप्पाजीव-शिल्पाजीव-पुं० । शिल्पं तूर्णनादि साचार्यकं वा कर्म्म तेन जीवति जीविकां करोति कल्पयतीत्यर्थः । शिल्पेनोप-जीविनि, स्था० ५ ठा० १ उ० । प्रज्ञा० ।

सिप्पायरिय-शिल्पाचार्य-पुं० । तुन्नकारादिषु शिल्पिषु, प्रज्ञा० १ पद । ('आयरिय' शब्दे द्वितीयभागे ३०२ पृष्ठे गतमेतत् ।)

सिप्पि-शिल्पिन्-पुं० । चित्रकारसूत्रधारलोहकारस्वर्णकार-स्थपतिप्रभृतिषु, उत्त० १५ अ० । औ० । रा० । ज्ञा० ।

शुक्ति-स्त्री० । द्वीन्द्रियजीवविशेषे, प्रज्ञा० १ पद । "सिप्पिपु-डगमट्ठाणसंठिय" उत्त० २ अ० ।

सिप्पिय-शिल्पिज-न० । तृणविशेषे, प्रज्ञा० १ पद ।

सिप्पिसंपुड-शुक्तिसंपुट-त्रि० । संपुटरूपासु शुक्तिषु, प्रज्ञा० १ पद । जी० । नि० चू० १ उ० ।

सिप्पोवगय-शिल्पोपगत-त्रि० । शिल्पं क्रियासु कौशलमुपग-तः प्राप्तः । रा० । शिल्पसमन्विते, 'सिउयासिप्पोवगए' अनु० ।

सिप्पोवदेसमइ-शिल्पोपदेशमति-स्त्री० । आचार्यस्य शि-ल्पोपदेशदातुरुपदेशाज्जायमानायां बुद्धौ, औ० ।

सिफा-शिफा-स्त्री० "फो भ-हौ" ॥ ८ । १ । २३६ ॥ इति फस्य भहौ । सिफा । सिभा । वृक्षाणां जटाकारे मूले, प्रा० १ पाद ।

सिमिण-स्वप्न-पुं० । "स्वप्न—नीव्योर्वा" ॥ ८ । १ । २५९ ॥ इति वस्य मो वा । सिमिणो । सिविणो । स्वापावस्थायाम्, प्रा० ।

सिमिमञ्ज-देशी-भूतगृहीते, दे० ना० ८ वर्ग ४० गाथा ।

सिम्बाडी-देशी—नासिकानादे, दे० ना० ८ वर्ग २१ गाथा ।

सिम्बीर-देशी—पलाले, दे० ना० ८ वर्ग २८ गाथा ।

सिम्भ-श्लेष्मन्-पुं० । "सर्वत्र लवरामचन्द्रे" ॥ ८ । २ । ७९ ॥ इति ललुक् । ह्रस्वः संयोगे दीर्घस्य ॥ ८ । १ । ८४ ॥ इत्येकारस्येकारः । "शषोः सः" ॥ ८ । १ । २६० ॥ इति शस्य सः । "पक्ष्म-श्म-ष्म-स्म-ह्मां म्हः" ॥ ८ । २ । ७४ ॥ इति क्वाचित्कत्वादत्र म्भः । सि-म्भो । कफे, प्रा० । अपभ्रंशे तु-पक्ष्म-श्मेति म्हादेशे-"म्भो वा" प्रा० ढुं० १ पाद । इति म्हेत्यस्य स्थाने मकाराक्रान्तो भकारः । प्रा० ।

सिय-शित-त्रि० । आतेजिते, रा० । बद्धे परिग्रहेच्छारम्भे-ष्वासक्ते, सूत्र० १ श्रु० १ अ० ४ उ० । विशे० । कल्प० । पुत्रकलत्रादिभिर्बद्धे, आचा० १ श्रु० १ अ० । ('क-म्मसेसियमकु' इति 'सिअ' शब्दे सितशब्दार्थो उक्तः ।) चामरे, दश० ४ अ० । आचा० । सूत्र० ।

सित-त्रि० । शुक्ले, पं० व० १ द्वार । सूत्र० । स्था० । आचा० । सितवर्णे, 'सिय' शब्दोत इति वचनात् । सितपटे, प्रश्न० ३ आश्र० द्वार । आ० म० । आ० चू० । स० ।

श्रित-त्रि० । सम्बद्धे, सूत्र० १ श्रु० १ अ० २ उ० । आश्रिते, स० १३ सम० ।

स्यात्-अव्य० । प्रशंसास्तित्वविवादविचारणानेकान्तसंशय-प्रश्नादिषु, प्रज्ञा० ५ पद । अनेकान्तद्योतने, स्था० । भ० । रत्ना० ।

सियंबर-श्वेताम्बर-पुं० । जैने, आव० ६ अ० ।

सियंबुज-श्वेताम्बुज-न० । पुण्डरीके, आ० म० १ अ० ।

सियकमल-सितकमल-न० । पुण्डरीके, औ० ।

स्सकलादेश इत्युच्यते, प्रमाणप्रतिपन्नसम्पूर्णार्थकथनमिति यावदित्यादि तस्मात्सदुक्तैव प्रमाणनयत्रयकथा समीचीना, यथा यो नाम नयो नयान्तरसापेक्षः परमार्थतः स्यात्पदप्रयोगमभिलषन् सम्पूर्णं वस्तु गृह्णातीति प्रमाणान्तर्भावनीयम्, नयान्तरनिरपेक्षस्तु यो नयः स च नियमान्मिथ्यादृष्टिरेव सम्पूर्णवस्तुग्राहकत्वाभावादिति। आ० म० १ अ०। "स्याद्वादाय नमस्तस्मै, यं विना सकलाः क्रियाः। लोकद्वितयभाविन्यो, नैव साङ्गत्यमासते ॥ १ ॥" स्था० ६ ठा०। सकलनयसमूहात्मकवचने, द्वा० ६ द्वा०। "नयास्तव स्यात्पदलाञ्छना इमे, रसोपविद्धा इव लोहधातवः। भवन्त्यभिप्रेतफला यतस्ततो, भवन्तमार्याः प्रणता हितैषिणः ॥२॥" आ० म० १ अ०। अनु०। सूत्र०।

सियवायमंजरी–स्याद्वादमञ्जरी–स्त्री०। हेमचन्द्रसूरिविरचितायाः वर्द्धमानजिनस्तुतिलक्षणाया अन्ययोगव्यवच्छेदद्वात्रिंशिकाया व्याख्यानरूपे मल्लिषेणसूरिविरचिते ग्रन्थविशेषे, स्या०।

"येषामुज्ज्वलहेतुहेतिरुचिरः प्रामाणिकाध्वस्पृशां,
हेमाचार्यसमुद्भवस्तवनभूरर्थः समर्थः सखा।
तेषां दुर्नयदस्युसम्भवभयाऽस्पृष्टात्मनां संभव–
त्यायासेन विना जिनागमपुरप्राप्तिः शिवश्रीप्रदा ॥ १ ॥
चातुर्विध्यमहोदधेर्भगवतः श्रीहेमसूरेर्गिरां,
गम्भीरार्थविलोकने यदभवद् दृष्टिः प्रकृष्टा मम।
द्राघीयः समयाद्दराग्रहपराभूतप्रभूतादरं,
तन्नूनं गुरुपादरेणुकणिकासिद्धाञ्जनस्योर्जितम् ॥ २ ॥
अन्यान्यशास्त्रतरुमञ्जरितोच्चहारि,
पुण्योपमेयकलितामलितप्रमेयैः।
इत्थं मयाऽन्तिमजिनस्तुतिवृत्तिमेतां,
मालामिवामलहृदो हृदये वहन्तु ॥ ३ ॥
प्रमाणसिद्धान्तविरुद्धमत्र,
यत्किञ्चिदुक्तं मतिमान्द्यदोषात्।
मात्सर्यमुत्सार्य तदार्यचित्ताः,
प्रसादमाधाय विशोधयन्तु ॥ ४ ॥
उर्वीमिव सुधाभुजां गुरुगिरिं त्रैलोक्यविस्तारिणो,
यत्रेयं प्रतिभाभरादनुमितिर्निर्दम्भमुज्जृम्भते।
किं चामी विबुधाः सुधांशि वचनोद्गारे यदीये मुदा,
शंसन्तः प्रथयन्ति तामतितमां संवादमेदस्विनीम् ॥ ५ ॥
नागेन्द्रगच्छगोविन्द–वक्षोऽलङ्कारकौस्तुभाः।
ते विश्ववन्द्या नन्द्यासु–रुदयप्रभसूरयः ॥ ६ ॥ युग्मम्।
श्रीमल्लिषेणसूरिभि–रकारि तत्पदगगनदिनमणिभिः।
वृत्तिरियं मनुरविमित–शाकाब्दे दीपमहसि शनौ ॥७॥
श्रीजिनप्रभसूरीणां, साहाय्योद्भिन्नसौरभा।
श्रुतावुत्तंसतु सतां, वृत्तिः स्याद्वादमञ्जरी ॥ ८ ॥
बिभ्राणा किल निर्जयाजिततुलां श्रीहेमचन्द्रप्रभो,
तद्दृब्धस्तुतिवृत्तिनिर्मितिमिषाद्धीक्रमेया त्रिस्तृता।
निर्णेतुं गुणदूषणे निजगिरां नत्वाऽर्थये सज्जनान्,
तस्यास्तत्त्वमकृत्रिमं बहुमतिः साऽस्त्यत्र सम्यग् यतः ॥९॥"
स्या०।

सियवायमुद्दानइभेइ–स्याद्वादमुद्रानतिभेदिन्–त्रि०। स्याद्वादः–अनेकान्तवादो नित्यानित्याद्यनेकधर्मशबलैकवस्त्वभ्युपगम इति यावत्। तस्य मुद्रा–मर्यादा तां नाऽतिभिनत्ति–नातिक्रामति स्याद्वादमुद्रानतिभेदी। अनेकान्तवादमर्यादाव्यवस्थिते, स्या० ( 'अणेगंतवाय' शब्दे प्रथमभागे ४२३ पृष्ठे विस्तरो गतः। )

सियवायरयणागर–स्याद्वादरत्नाकर–पुं०। देवसूरिभिर्विरचिते प्रमाणनयतत्त्वालोकालङ्कारटीकाग्रन्थे, रत्ना०।

"सिद्धये वर्धमानः स्तात्, ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोषे, दीप्रदीपाङ्कुरायते ॥ १ ॥
वैरत्र स्वप्रभया, दिगम्बरस्यार्पिता पराभूतिः।
प्रत्यक्षं विबुधानां, जयन्तु ते देवसूरयो नव्याः ॥ २ ॥
स्याद्वादमुद्रामपनिद्रभक्त्या,
समाश्रितां स्तौमि जिनेश्वराणाम्।
सन्न्यायमार्गानुगतस्य यस्यां,
सा श्रीस्तदन्यस्य पुनः स दण्डः ॥ ३ ॥"

इह हि लक्ष्यमाणाऽक्षोदीयोऽर्थाक्षुणाक्षरश्रीरनिरन्तरं, तत्रत्ता दृश्यमानस्याद्वादमहामुद्रामुद्रितानिरुद्धप्रमेयसहस्रोत्तुङ्गतरङ्गभङ्गिमङ्गसौभाग्यभाजने, अतुलफलभरभ्राजिष्णुभूयिष्ठागमाऽभिरामातुच्छपरिच्छेदमन्दारशाखासङ्कुलाननतिकुञ्जे, निरुपममनीषामहायानपात्रव्यापारपरायणपुरुषप्राप्यमाणाप्राप्तपूर्वरत्नविशेषे, क्वचन वचनरचनाऽनवद्यगद्यपरम्पराप्रवालजालजटिले, क्वचन सुकुमारकान्तालोकनीयाश्लोकश्लोकमौक्तिकप्रकरकरम्बिते, क्वचिदनेकान्तवादोपक्षिप्यमानतर्पितकल्पकल्लोलोल्लासितोद्दामदूषणोद्विग्नाद्भ्रायमाणानेकतीर्थिकनक्रचक्रचक्रवाले, क्वचिदपगतावशेषदोषानुमानाभिधानोद्वर्तमानासमानपाठीनपुच्छच्छटाऽऽच्छोटनोच्छलदतुच्छशीकरश्रेणिसञ्जायमानमार्तण्डमण्डलप्रचण्डचमत्कारे, क्वापि तीर्थिकग्रन्थग्रन्थिसार्थसमर्थकदर्थनोपस्थापितार्थानवस्थितप्रदीप्यमानसञ्चमानज्वलन्मणिफणीन्द्रभीषणे, सहृदयसंख्यावत्तार्किकवैयाकरणकविचक्रचक्रवर्तिसुविहितसुगृहीतनामधेयास्मद्गुरुश्रीदेवसूरिभिर्विरचिते स्याद्वादरत्नाकरे न खलु कतिपयतर्कभाषार्थमजानन्तोऽपाठीना अधीयराश्च प्रवेष्टुं प्रभविष्णवः, इत्यतस्तेषामवतारदर्शनं कर्तुमनुरूपम्। तच्च संक्षेपतः शास्त्रशरीरपरामर्शमन्तरेण नोपपद्यते। सोऽपि समासतः सूत्राभिधेयावधारणं विना न इति, प्रमाणनयतत्त्वालोकाख्यं तत्सूत्रार्थमात्रप्रकाशनपरा रत्नाकरावतारिकानाम्नी लघीयसी टीका प्रकटीक्रियते। तत्र चेह यत्र क्वचिदपि प्रवर्तमानस्य पुरुषस्याभिमानिनोऽनेकप्रकारतत्तद्गुणदोषदर्शनाऽऽहितसंस्कारस्याऽऽत्रयद्वये स्मृतिकोटिमुपढौकनीया भवन्त्युपकारिणः, अपकारिणश्च, विशेषतो ये यत्र तदभिमततत्त्वावधारणमाऽऽरिराधयिषिताः, तदुपहितदोषापसारणेन परीचिकीर्षिताश्च द्वयेऽपि चामी द्वेधा–परापरभेदात्, बाह्यान्तरङ्गभेदाच्च इत्यस्मिन् प्रमाणनयतत्त्वपरीक्षाप्रवणे प्रक्रमे कृतज्ञास्तत्र भवन्तस्तेषां प्राणेव स्मृतये श्लोकमेकमनमत् चिकीर्तत्। रत्ना० १ परि०।

सिया–स्यात्–अव्य०। आशङ्कायाम्, आशङ्का नाम विभाषा, स्यादिति कोऽर्थः–कदाचिद्भवेत्, कदाचिन्न भवेत्। व्य० १ उ०।

प्रक० । दश० । अवधारणे, अनु० चू० १ क० । भयत्यर्थे, आशङ्कायां भजनायां वा । तत्र भयत्यर्थे सुधर्मस्तुः आशङ्कायां यथा "दव्वट्ठाए आयट्ठाए, दव्वट्ठाए बहुगुणे ति बुद्धि सिया" भजनायां यथा—"सिय तिभागे सिय विभाग भागे" इत्यादि । सू० १ उ० २ प्रक० ।

सिता—स्त्री० । सुद्धिकाशिनां संस्पर्धे, आचा० १ श्रु० २ अ० ५ उ० ।

सियाणकरण—श्मशानकरण—न० । श्मशानस्थापनायोग्यप्रत्युपेक्षणा, बृ० १ उ० २ प्रक० ।

सियाल—शृगाल—पुं० । गोमायौ, प्रज्ञा० ११ पद । बृ० । जम्बुके, प्रश्न० १ आश्र० द्वार । बृ० । शृगाला वै पर जायेत यस्सपुरीषा कृता । आ० म० १ अ० । नरकपालविकुर्वितजम्बुके, सूत्र० १ श्रु० ५ अ० २ उ० । प्रज्ञा० ।

सियालखाइता—शृगालखादिता—स्त्री० । शृगालस्तु स्वमृत्योपात्तस्याभ्यान्यस्यानन्तगुणेन वा खादिता तत्स्वभावो यति । प्रव्रज्याभेदे, स्था० ४ ठा० ४ उ० ।

सियालता—शृगालता—स्त्री० । ईर्ष्यवृत्ती , स्था० ४ ठा० ३ उ० ।

सियाली—शृगाली—स्त्री० । शृगालभार्यायाम् , प्रज्ञा० ६ पद २ द्वार ।

सिर—सृज—धा० । सृष्टौ, " सृजो रः " ॥ ८ । ४ । २२९ ॥ इत्यन्तस्य रः । सिरइ । सृजति । प्रा० ४ पाद ।

शिरस्—न० । उत्तमाङ्गे, तं० । सूत्र० । दश० । औ० । " क्षमदामशिरोनभः " । ८ । १ । ३२ । इत्यत्र शिरःपर्युदासात् शिरसः पुंस्त्वं न । प्रा० । उपचारात्शिरोबन्धने, औ० । मस्तके, "सिरसावत्तमंजलि" शिरसि—मस्तके अभितो भ्रमितः करतलयोर्हस्तयोरञ्जलिर्हस्तविन्यासविशेषो यत्र करणे तत्तथा कर्मविशेषणमित्यात्क्रियाविशेषणमिदमिति । पञ्चा० ४ विव० । " सीसं सिरं उत्तमंगं च " पाइ० ना० १११ गाथा ।

सिरपरिरय—शिरःपरिरय—पुं० । करभ्रमणाभिमन्त्रणे , पं० व० ५ द्वार ।

सिरपाल—शिरःपाल—पुं० । विमलवंशीयविमलनगरराजे , ती० ४१ कल्प । ( 'अंतरिक्खपासणाह' शब्दे प्रथमभागे ६६ पृष्ठे कथा । )

सिरमुंड—शिरोमुण्ड—पुं० । शिरसा मुण्डे, स्था० १० ठा० ३ उ० ।

सिरय—शिरोज—पुं० । मस्तककेशे , प्रज्ञा० १ पद ।

सिररुह—शिरोरुह—पुं० । केशे, प्रज्ञा० १ पद ।

सिरवेयणा—शिरोवेदना—स्त्री० । "ओतोऽद्वाऽन्योन्य-प्रकोष्ठातोद्यशिरोवेदना-मनोहर-सरोरुहे क्तोश्च वः" । ८ । १ । १५६ । एषु ओत्त्वं वा भवति । तत्संनियोगे च यथासम्भवं ककारतकारयोर्वः । अन्नुन्नं । सिरविअणा । सिरवेअणा । शिरःपीडायाम्, प्रा० ।

सिरसंभूया—श्रीसम्भूता—स्त्री० । पक्षस्य षष्ठ्यां रात्रौ, ज्यो० ४ पाहु० ।

सिरसावत्त—शिरसा(स्या)वर्त—पुं० । शिरसा आवर्त आवृत्तिरावर्तनं परिभ्रमणं यस्यासौ । सप्तम्यलोपाच्छिरस्यावर्त्तः । भ० २ श० १ उ० । शिरसि—मस्तके आवर्तः प्रदक्षिणभ्रमणं यस्येति । कृतिकर्मणि क्रियमाणे आवृत्तेऽञ्जलौ, कर्म० १ कर्म० । जी० । औ० । रा० ।

सिरा—शिरा—स्त्री० । धमन्याम् , जी० १ प्रति० । तं० ।



सिरि—श्री—स्त्री० । "र्ह-श्री-ह्री-कृत्स्न-क्रिया-दिष्ट्यास्वित्" ॥ ८ । २ । १०४ ॥ इति संयुक्तस्यान्त्यव्यञ्जनात्पूर्व इकारः । प्रा० । लक्ष्म्याम् , ज्ञा० १ श्रु० १ अ० । उपा० । ज्ञा० । सम्पदि, ज्ञा० १ श्रु० ६ अ० । शोभायाम् , ज्ञा० १ श्रु० १ अ० । कल्प० । नि० । जम्बूद्वीपे पद्महृदाधिष्ठातृदेव्याम् , स्था० ६ ठा० ३ उ० । अन्तर्रञ्जिकानगरीराज्ञे, यत्र त्रैराशिकनाम्नोऽर्धस्य रोहगुप्तस्य परिव्राजकेन सह शास्त्रार्थोऽभवत् । विशे० । सौधर्मकल्पे स्वनामख्याते विमाने, तद्देव्याञ्च । नि० ।

एवं खलु जंबू तेणं कालेणं तेणं समएणं रायगिहे नगरे गुणसिलए चेइए सेणिए राया सामी समोसढे परिसा निग्गया । तेणं कालेणं तेणं समएणं सिरिदेवी सोहम्मे कप्पे सिरिवडिंसए विमाणे सभाए सुहम्माए सिरिंसि सीहासणंसि चउहिं सामाणियसाहस्सीहिं चउहिं महत्तरियाहिं सपरिवाराहिं जहा बहुपुत्तिया ० जाव नट्टविहिं उवदंसित्ता पडिगता, नवरं दारियाओ नत्थि पुव्वभवपुच्छा, एवं खलु जंबू ! तेणं कालेणं तेणं समएणं रायगिहे नयरे गुणसिलए चेइए जियसत्तू राया । तत्थ णं रायगिहे नगरे सुदंसणो नामं गाहावई परिवसति, अड्ढे० । तस्स णं सुदंसणस्स गाहावइस्स पिया नामं भारिया होत्था सुमाला । तस्स णं सुदंसणस्स गाहावइस्स धूया पियाए गाहावतिणीए अत्तिया भूया नामं दारिया होत्था वुड्ढा वुड्ढकुमारी जुण्णा जुण्णकुमारी पडितपुतत्थणी वरपरिवज्जिया यावि होत्था । तेणं कालेणं तेणं समएणं पासे अरहा पुरिसादाणीए० जाव नवरयणीए वण्णओ सो चेव समोसरणं परिसा निग्गया । तते णं सा धूया दारिया इमीसे कहाए लद्धट्ठा समाणी हट्ठतुट्ठा जेणेव अम्मापियरो तेणेव उवागच्छइ उवागच्छित्ता एवं वदासी—एवं खलु अम्मताओ पासे अरहा पुरिसादाणीए पुव्वाणुपुव्विं चरमाणे० जाव देवगणपरिवुडे विहरति, तं इच्छामि णं अम्मताओ तुब्भेहिं अब्भणुण्णाया समाणी पासस्स अरहओ पुरिसादाणीयस्स पादवंदिया गमित्तए । अहासुहं देवाणुप्पिया ! मा पडिबंधं करेह । तते णं सा भूया दारिया ण्हाया० जाव सरीरा चेडीचक्कवालपरिकिण्णा साओ गिहाओ पडिनिक्खमति पडिनिक्खमित्ता जेणेव बाहिरिया उवट्ठाणसाला तेणेव उवागच्छइ उवागच्छित्ता धम्मियं जाणप्पवरं दुरूढा । तते णं सा भूया दारिया नियगपरिवारपरिवुडा रायगिहं नगरं मज्झंमज्झेणं निग्गच्छति० त्ता जेणेव गुणसिलए चेइए तेणेव उवागच्छइ उवागच्छित्ता छत्तादीए तित्थकरातिसए पासति पासित्ता धम्मियाओ जाणप्पवराओ पच्चोरुभिति० २ त्ता चेडीचक्कवालपरिकिण्णा जेणेव पासे अरहा पुरिसादाणीए-

तेणेव उवागच्छइ उवागच्छित्ता तिक्खुत्तो वंदति वंदित्ता० जाव पज्जुवासति पज्जुवासित्ता तते णं पासे अरहा पुरिसदाणीए भूयाए दारियाए तीसे महति महालियाए धम्मकहाए धम्मं सोच्चा णिसम्म हट्ठतुट्ठा वंदति वंदित्ता एवं वयासी–सद्दहामि णं भंते ! निग्गंथं पावयणं० जाव अब्भुट्ठेमि णं भंते ! णिग्गंथं पावयणं । से जहे तं तुब्भे वदह जं नवरं देवाणुप्पिया! अम्मापियरो आपुच्छामि तते णं अहं० जाव व(प)व्वइत्तए अहासुहं देवाणुप्पिया ! तते णं सा भूया दारिया तमेव धम्मियं जाणप्पवरं०जाव दुरुहति दुरुहित्ता जेणेव रायगिहे नगरे तेणेव उवागता, रायगिहं नगरं मज्झं मज्झेणं जेणेव सए गिहे तेणेव उवागता , रहाओ पच्चोरुहित्ता जेणेव अम्मापितरो तेणेव उवागता , करतल० जहा जमाली आपुच्छति । अहासुहं देवाणुप्पिए ! तते णं से सुदंसणे गाहावई विउलं असणं पाणं खाइमं साइमं उवक्खडावेति , मित्तनाति आमंतेति ०जाव जिमियभुत्तुत्तरकाले सुईभूते निक्खमणमाणित्ता कोडुंबियपुरिसे सद्दावेति कोडुंबियपुरिसे सद्दावित्ता एवं वदासि–खिप्पामेव भो देवाणुप्पिया ! भूयादारियाए पुरिससहस्सवाहिणीयं सीयं उवट्ठवेह ०जाव पच्चप्पिणह । तते णं ते ०जाव पच्चप्पिणंति। तते णं से सुदंसणे गाहावई भूयं दारियं ण्हायं०जाव विभूसियसरीरं पुरिससहस्सवाहिणिं सीयं दुरुहति दुरुहित्ता मित्तनाति० जाव रवेणं रायगिहं नगरं मज्झं मज्झेणं जेणेव गुणसिलए चेइए तेणेव उवागते, छत्ताईए तित्थकरातिसए पासति सीयं ठावेति ठावित्ता भूयं दारियं सीयाओ पच्चोरुहति पच्चोरुहित्ता, तते णं तं भूयं दारियं अम्मापियरो पुरतो काउं जेणेव पासे अरहा पुरिसादाणीए तेणेव उवागते , तिक्खुत्तो वंदति नमंसति वंदित्ता नमंसित्ता एवं वदासी–एवं खलु देवाणुप्पिया ! भूया दारिया अम्हं एगा धूया इट्ठा, एस णं देवाणुप्पिया ! संसारभउव्विग्गा भीया ०जाव देवाणुप्पियाणं अंतिए मुंडा ०जाव पव्वयति पव्वयित्ता तं एयं णं देवाणुप्पिया ! सिस्सिणी भिक्खं दलयति , पडिच्छंतु णं देवाणुप्पिया । सिस्सिणीभिक्खं । अहासुहं देवाणुप्पिया ! तते णं सा भूता दारिया पासेणं अरहा० एवं वुत्ता समाणी हट्ठा उत्तरपुरच्छिमं सयमेव आभरणमल्लालंकारं उम्मुयइ , जहा देवाणंदा पुप्फचूलाणं अंतिए ०जाव गुत्तबंभयारिणी । तते णं सा भूता अज्जा अण्णदा कदाइ सरीरपाओसिया जाया यावि होत्था, अभिक्खणं अभिक्खणं हत्थे धोवति, पादे धोवति, एवं सीसं धोवति, मुहं धोवति, थणगंतराइं धोवति, कक्खंतराइं धोवति, गुज्झंतराइं जत्थ जत्थ वि य णं ठाणं वा सिज्जं वा निसीहियं वा चेतेति तत्थ तत्थ वि णं पुव्वामेव पाणएणं अब्भुक्खेति । ततो पच्छा ठाणं वा सिज्जं वा निसीहियं वा चेतेति । तते णं ताओ पुप्फचूलाओ अज्जाओ भूयं अज्जं एवं वदासी–अम्हे णं देवाणुप्पिए !समणीओ निग्गंथीओ इरियासमियाओ ०जाव गुत्तबंभचारिणीओ, नो खलु कप्पति अम्हं सरीरपाओसियाणं होत्तए, तुमं च णं देवाणुप्पिए !सरीरपाओसिया अभिक्खणं अभिक्खणं हत्थे धोवसि ०जाव निसीहियं चेतेहि, तं णं तुमं देवाणुप्पिए एयस्स ठाणस्स आलोएहि त्ति, सेसं जहा सुभद्दाए ०जाव पाडियक्कं उवस्सयं उवसंपज्जित्ता णं विहरति। तते णं सा भूता अज्जा अणोहट्टिया अणिवारिया सच्छंदमई अभिक्खणं अभिक्खणं हत्थे धोवति ०जाव चेतेति । तते णं सा भूया अज्जा बहूहिं चउत्थछट्ठ० बहूहिं वासाइं सामण्णपरियागं पाउणित्ता तस्स ठाणस्स अणालोइयपडिक्कंता कालमासे कालं किच्चा सोहम्मे कप्पे सिरिवडिंसए विमाणे उववायसभाए देवसयणिज्जंसि ०जाव ओगाहणाए सिरिदेवित्ताए उववण्णा पंचविहाए पज्जत्तीए भासामणपज्जत्तीए पज्जत्ता । एवं खलु गोयमा ! सिरीए देवीए एसा । दिव्वा देविड्ढी लद्धा पत्ता, ठिई एगं पलिओवमं सिरी णं भंते ! देवी ०जाव कहिं गच्छिहिति ? महाविदेहे वासे सिज्झिहिति एवं खलु जंबू ! निक्खेवओ। नि० १ श्रु० ४ वर्ग १ अ० ।

कुन्थुनाथस्य मातरि, प्रव० ११ द्वार । स० । वणिग्ग्राम मित्रनामकस्य राज्ञो भार्यायाम् ,विपा० १ श्रु० २ अ० । क्षुद्रहिमवद्देव्याम् ,आ० म० १ अ० । उत्तररुचकवास्तव्यायां दिक्कुमार्याम् , आ० चू० १ अ० । वाराणस्यां भद्रश्रेष्ठिजीर्णश्रेष्ठिनो भार्यायाः सुनन्दाया दुहितरि, आ० चू० ४ अ० । वचनार्पितमात्रिशेषे. ज्ञा० १ श्रु० १ अ० । हिमवद्वर्षधरपर्वते स्वनामख्याते षष्ठ कूटे, स्था० २ ठा० ३ उ० ।

सिरिअ श्रीक–पुं० । सूर्यभद्रस्य भ्रातरि, ही० ३ प्रका० ।

सिरिअभिसेय–श्र्यभिषेक–पुं० । लक्ष्म्या अभिषेके,जं० २ वक्ष० ।

सिरिउववेय श्र्युपपेत–त्रि० । लक्ष्म्योपगते,दश० १ चू० ।

सिरिंग–देशी–विटे, दे० ना० ८ वर्ग ३२ गाथा ।

सिरिकंत–श्रीकान्त–पुं० । अयोध्यानगरीराजस्य मिथ्यादृष्टेः श्रीवीरस्य पुत्र, अष्ट० २५ अष्ट० । ( 'राग' शब्दे षष्ठ भाग कथा । ) षष्ठ देवलोके विमाने , स० १४ सम० । श्रीकान्तानगरीवास्तव्ये व्यवहारिणि, कल्प० १ अधि० १ १ क्षण ।

सिरिकंता श्रीकान्ता–स्त्री० । भोगपुरवास्तव्यस्य वरुणश्रेष्ठि-

नो भार्यायां सुलसकुमारमातरि, ध० र० २ अधि०। मरुदेवस्य षष्ठकुलकरस्य भार्यायाम्, आ० म० १ अ०। स्था०। स०। स्वनामख्यातायां सार्थवाह्याम्, आव० ४ अ०। आ० म०। आ० क०। ('अलोभया' शब्दे प्रथमभागे ७८५ पृष्ठे कथोक्ता।) स्वनामख्यातायां नगर्याम्, यत्र विजयसेनो नाम राजा श्रीकान्ताख्यश्च व्यवहार्यासीत्। कल्प० १ अधि० १क्षण। जम्ब्वाः सुदर्शनाया अपरस्यां दिशि नन्दापुष्करिण्याम्, जी० ३ प्रति० ४ अधि०। जं०। पुरिमतालनगरराजस्य उदितोदयस्य भार्यायाम्, नं०। आ० म०। आ० चू०। चम्पायां नगर्यां दत्तराजस्य पुत्रमहाचन्द्रराजभार्यायाम्, विपा० २ श्रु० ६ अ०।

सिरिकंदल–श्रीकन्दल–पुं०। एकखुरजीवविशेषे, प्रज्ञा०१पद।

सिरिकूड–श्रीकूट–पुं०। न०। श्रीदेवतानिवासभूते हिमवद्वर्षधरस्य षष्ठे कूटे, स्था० २ ठा० ४ उ०। जं०।

सिरिखंड–श्रीखण्ड–न०। मलयजे, आ० म० १ अ०। स्था०।

सिरिगुत्त–श्रीगुप्त–पुं०। आर्यसुहस्तिनः शिष्ये अन्तरञ्जिकायां नगर्यां त्रैराशिकाचार्यस्य रोहगुप्तस्य गुरौ दशपूर्विगणाचार्ये, विशे०। उत्त०। आ० म०। आ० चू०। कल्प०। विन्ध्याद्रौ पार्श्वनाथे, ती० ४३ कल्प।

सिरिघर–श्रीगृह–न०। भाण्डागारे, ज्ञा०२श्रु०२ अ०। विशे०। ज्ञा०। भ०। आ० म०। पार्श्वनाथस्य षष्ठे गणधरे, स्था० ८ ठा० ३ उ०।

सिरिघरपडिरूवय–श्रीगृहप्रतिरूपक–त्रि०। रत्नमयत्वाद्भाण्डागारतुल्ये, भ० ११ श० ११ उ०।

सिरिघरिय–श्रीगृहिक–पुं०।श्रीगृहं भाण्डागारं तदस्यास्तीति ताऽनेकस्वरादीर्मत्वर्थीयकप्रत्ययः। आ० म० १ अ०। भाण्डागारिके, विशे०। भाण्डागारनियुक्ते, व्य० ३ उ०। आ० म०।

सिरिचंद–श्रीचन्द्र–पुं०। ऐरवते वर्षे उत्सर्पिण्यां भविष्यति षष्ठे तीर्थकरे, स०। ति०। प्रव०। भारते वर्षे भविष्यति तृतीयचक्रवर्त्तिनि, ती० २० कल्प। मलधारिश्रीहेमचन्द्रसूरिशिष्ये, विक्रम ११२१ वर्षे भृगुकच्छनगरश्रेष्ठिनो धवलशाहनाम्नः प्रार्थनया मुनिसुव्रतस्वामिस्वामिप्रकारके आचार्ये च। जै० इ०।

सिरिचंदा–श्रीचन्द्रा–स्त्री०। जम्ब्वाः सुदर्शनाया अपरोत्तरस्यां दिशि नन्दापुष्करिण्याम्, जी० ३ प्रति० ४ अधि०।

सिरिजगसूरि–श्रीजगत्सूरि–पुं०। सत्यपुरनगरे नाहडकारितश्रीवीरप्रतिमाप्रतिष्ठापके स्वनामख्याते सूरौ, ती० १५ कल्प।

सिरिज्ज–श्रीयक–पुं०। स्थविरस्यार्यमहागिरेरेलापत्यसगोत्रस्य स्वनामख्याते शिष्ये, कल्प० २ अधि० ८ क्षण।

सिरिणाभिजजिण–श्रीनाभेयजिन–पुं०। नाभेरपत्यं नाभेयः। श्रीयुतो नाभेयः श्रीनाभेयः स चासौ जिनश्च श्रीनाभेयजिनः। ऋषभदेवे, द्व्या० १० अध्या०।

सिरिणिलया–श्रीनिलया–स्त्री०। जम्ब्वाः सुदर्शनाया अपरोत्तरस्यां दिशि नन्दापुष्करिण्याम्, जी० ३ प्रति० ४ अधि०। जं०। स्था०।

सिरिदत्त–श्रीदत्त–पुं०। कुम्भकारसर्पावशदृष्टान्तस्वनामख्याते श्रेष्ठिपुत्रे, ध० र० २ अधि०। (श्रीदत्तवार्तति तद्दृष्टान्तश्च 'समार' शब्देऽस्मिन्नेव भागे उक्तः।) ऐरवतेऽस्यामवसर्पिण्यां जातेऽष्टमे तीर्थकरे, प्रव० ७ द्वार।

सिरिदाम–श्रीदामन्–न०। शोभावन्मालायाम्, ज्ञा० १ श्रु० ८ अ०। अनेकरत्नखचिते दर्शनसुभगे आभरणविशेषे, आ० म० १ अ०। मथुरायां नन्दिवर्द्धनस्य नन्दिषेणस्य विपाकश्रुताङ्गस्य पितरि, स्था० १० ठा० ३ उ०। विपा०। एकादशदेवलोकविमाने, स० २१ सम०।

सिरिदामगंड–श्रीदाम(गण्ड)काण्ड–पुं०। श्रीदाम्नां शोभावद्रत्नमालानां गण्डं गोलवृत्ताकारत्वात्, काण्डं वा समूहः श्रीदामगण्डम्। श्रीदामकाण्डं वा। अथवा-गण्डो दण्डस्तद् यत्र गण्डपर्यायोऽयं श्रीदाम्नां गण्डः श्रीदामगण्डः। श्रीदामसमूहे, जं० ५ वक्ष०। स्था०। ज्ञा०।

सिरिदेवी–श्रीदेवी–स्त्री०। दीर्घदशानां चतुर्थेऽध्ययनेऽक्तायां सौधर्मकल्पदेव्याम्, स्था० १० ठा० ३ उ०। (अस्याः कथा 'सिरि' शब्देऽस्मिन्नेव भागे उक्ता।)

सिरिद्दही–देशी-पक्षिपानपात्रे, दे० ना० ८ वर्ग ३२ गाथा।

सिरिधम्म–श्रीधर्म–पुं०। स्थविरस्यार्यसुहस्तिनः काश्यपगोत्रस्य शिष्ये दशपूर्विणि स्थविरे, कल्प० २ अधि० ८ क्षण। उज्जयिन्यां मुनिसुव्रतस्वामिशिष्यसुव्रताचार्यस्य बन्धनकर्त्तरि राजनि, ती० २० कल्प।

सिरिधर–श्रीधर–पुं०। स्वनामख्याते नैयायिके, स्या०।

सिरिपभ–श्रीप्रभ–पुं०। स्वनामख्याते राज्ञि, ध० र०।

श्रीप्रभमहाराजकथा चेयम्-

"सौधोज्ज्वलप्रभाभि-र्निरन्तरप्रसृतधूपधूम्याभिः।
जितसुरसरिदर्कसुता-सङ्गाऽस्ति पुरी विशालेति ॥ १ ॥
सुरलोकार्वाधिवदल-द्विचकिलकलिकामलं यशो यस्य।
प्रबलबलशत्रुसंहति-कुलक्षयावधि सदा शौर्यम् ॥ २ ॥
त्यागस्तर्ककजनता-च्छिन्नतावधिः सागरावधिर्वसुधा।
श्रीजिनपतिपदकमल-द्वयप्रमाणावधिर्भक्तिः ॥ ३ ॥
शेषः पुनर्गुणगणो, निरवधिरवधीरितान्यदोषभरः।
स श्रीचन्द्रनरेन्द्र-स्तां नगरीं पालयामास ॥ ४ ॥
क्षितिपतिहृदयकुशेशय-शया सदाचरणरागपरिकलिता।
शुद्धोभयपक्षाऽजनि, हंसी हंसीव तस्य जनी ॥ ५ ॥
तनयौ तयोरभूतां, परिभूताखिलविपक्षसंदोहौ।
ज्येष्ठः श्रीप्रभसंज्ञ-स्तथा कनिष्ठः प्रभाचन्द्रः ॥ ६ ॥
तत्र ज्येष्ठो गम्भी-र्यसागरो रूपविजितरतिकान्तः।
सौम्याकृतिः प्रकृत्या, लोकप्रियगुणमणीकरण्डः ॥ ७ ॥
अकृत्रिमतपरिणति-निर्जरजम्बालिनीहिमाभ्भृत्।
शिवसुखघातकपातक-भीरुत्वमरोऽविनाथः ॥ ८ ॥
शठतालतालवित्रं, दाक्षिण्यहिरण्यमेरुगिरिसदृशः।
सततमकार्यलज्जा-स्फुरदलिनीकमलिनीतुल्यः ॥ ९ ॥
अविद्याकैरविणी-शशभृन् माध्यस्थ्यहस्तिविन्ध्याद्रिः।
गुणरत्नजनवर्त्मः, साधुकथाकथनपथपान्थः ॥ १० ॥
जिनधर्मदत्तमनुप-सकलसंयतपयोधरप्रतिमः।
स्फूर्जद्बुद्धीधदर्शी-स्वतारकाताराकामार्गः ॥ ११ ॥
जिनपरिवृढदर्शितागम-विशेषविचक्षणोऽर्कांबधामसमः।

तौ तदनु विप्ररूपं—कृत्वा भूपकमनवलोकनसतृष्णौ ।
द्वारसमीपेऽस्थातां, प्रासादद्वारि भूमिभुजः ॥ ५९ ॥
आसीत् तदा स्नानार्थी, मुक्तालंकारसारनेपथ्यः ।
प्रारब्धमज्जनोऽस्य-ङ्गलक्षणानि वदन्नुच्चैः ॥ ६० ॥
दौवारिकेण तौ वि—प्रयुक्तौ द्वारसंस्थितौ कथितौ ।
प्रावीविशत्तदाप्ये-ष चक्रवर्ती स नयवर्ती ॥ ६१ ॥
अप्रतिरूपं रूपं, तौ दृष्ट्वा तस्य राजराजस्य ।
मौलिं विधूनयन्तौ, दध्यतुरिति विस्मितौ मनसि ॥ ६२ ॥
एतस्य भालपट्टा-यमस्तशस्ताष्टमीरजनिजानिः ।
नीलोत्पलजयपत्रं, नेत्रं कर्णान्तविश्रान्ते ॥ ६३ ॥
दन्तच्छदयुगमभिभू—तपक्वबिम्बीफलच्छविर्विवेकाग्रम् ।
जितशुक्तिः श्रुतयुगली, कण्ठोऽयं पाञ्चजन्यजयी ॥ ६४ ॥
स्तम्बेरमराजकरा-कारतिरस्कारकारिणौ बाहू ।
वक्षःस्थलममराचल-पृथुलशिलार्धाविलुण्ठाकम् ॥ ६५ ॥
कटिर करचरणतलं, तर्जितकान्तिकिसलयप्रचयम् ।
किमपरममुष्य सर्वा-प्यर्थानिह गोचरो वाचाम् ॥ ६६ ॥
कोऽप्यस्याहो लाव-ण्यसरित्पूरो निरगलो येन ।
आनीयेत नाम्यङ्ग, भविमामिव वाक्चन्द्रिकया ॥ ६७ ॥
वर्णयति स्म यथेन्द्र-स्तथममाभाति समधिकं चापि ।
न कदाचनापि मिथ्या, वदन्ति वाचं महात्मानः ॥ ६८ ॥
किमिहागतौ भवन्ता-विति पृष्टौ चक्रिणाऽथ तौ जगतुः ।
अप्रतिमं तव रूपं, त्रिजगत्यां गीयते भूप ! ॥ ६९ ॥
दूरादपि तत् श्रुत्वा, तदाकृतामुग्रकौतुकसमुद्रौ ।
अवलोकयितुमिहाऽऽवा-मायाव नरेन्द्रशार्दूल ! ॥ ७० ॥
व्यावर्ण्यमानमतुलं, तव रूपं शुश्रुवे यथा लोके ।
नरवर ! ततोऽपि सविशे-षमेतदालोकयतेऽस्माभिः ॥ ७१ ॥
श्रुत्वेति विप्रवचनं, स्मितविच्छुरिताधरो नृपः प्रोचे ।
कान्तिरियं किल कियती, परितोऽप्यङ्ग कृताभ्यङ्ग ॥ ७२ ॥
क्षणमात्रमितो भूत्वा, भो भो द्विजसत्तमौ प्रतीक्षेथाम् ।
मज्जनकलशं एषो-ऽस्माभिर्निर्वर्त्यते यावत् ॥ ७३ ॥
रचितविविचित्राकल्पं, विभूषितं भूरिभूषणगणेन ।
रूपं मम पश्यतं, सरत्नमिव काञ्चनं भूयः ॥ ७४ ॥
तदनु स्नातविलिप्तो—लंकृतिनेपथ्यभूषितो भूपः ।
अध्यासामास सदः-सदनं गगने गगनमणिवत् ॥ ७५ ॥
समनुज्ञातौ भूयो—ऽपि भूपरूपं द्विजौ प्रपश्यन्तौ ।
दवदग्धकीचकाविव, विच्छायौ झगिति तौ जातौ ॥ ७६ ॥
किमेतदिति सर्वेऽपि, सभ्याः साकूतं परस्परमुदीक्षामासुः ।
अनलंकृतेऽपि पूर्व-मपि दृष्टे हर्षितौ युवां विप्रौ ।
समलंकृतेऽपि संप्रति, दृश्येथ किमिति सविषादौ ? ॥ ७७ ॥
इति चक्रभृता पृष्टौ—भूदेवौ तौ जजल्पतुर्भूप ! ।
अधुना तावकदेहे, संक्रान्ता व्याधयः सप्त ॥ ७८ ॥
तद्वशविनश्यदतुला—कृरूपलावण्यवर्णकान्तिगुणः ।
त्वं वर्तसे इत्यावां, प्रतिपन्नौ शोकसंभारम् ॥ ७९ ॥
कथमेतद्विज्ञायत, इत्येव प्रश्नितौ भरतपतिना ।
तौ शिष्टयथास्थितस-त्वपूर्वसुरराजवृत्तान्तौ ॥ ८० ॥
प्रकटितनिजस्वरूपौ, गीर्वाणौ प्रतिगतौ यथास्थानम् ।
वैराग्योपगतमति-श्चक्रधरोऽचिन्तयदथैवम् ॥ ८१ ॥
भवनजनयुवतिचतुर-ङ्गसंग्रहो यस्य कारणात् क्रियते ।
सहारु दारुणघुणै-रिव रोगैर्लुप्यते गात्रम् ॥ ८२ ॥
येन विमोहितमतयो, हितमहितं चिन्तयन्ति नहि जीवाः ।
तद्यौवनमिह सर्वमिव, जरा दवानलशिखा दहति ॥ ८३ ॥
अवलिप्ता येन जनः, कृत्याकृत्यं न वेत्ति तद्रूपम् ।
मङ्क्षु विनश्यति धातु-क्षोभे हिमपात इव कमलम् ॥ ८४ ॥
अय भोऽथ विनाशिन, एतस्य शरीरकस्य सांप्रतमिम् ।
गृह्णाम्यविनश्वरफल-मिति नृपतिश्चेतसि विभाव्य ॥ ८५ ॥
प्राज्यं साम्राज्यमिदं, विहाय लोका अहो निरीक्षध्वम् ।
आदत्त जिनदीक्षां, तारतरीमिव भवाम्भोधौ ॥ ८६ ॥
सागरमिव दशमद्वा-रलोचनं विकुर्वनिकरमखिलकविम् ।
पश्यत पश्यत पुरतः, समूलमुन्मूलयत्येषः ॥ ८७ ॥
पुरतोऽवलोकयध्वं, मणिरत्नोत्कटकिरीटहारादिः ।
आभरणसमूहोऽयं, निर्माल्यमिवामुनाऽत्याजि ॥ ८८ ॥
निध्यात नाथमुक्तं, कम्प्रस्यन्तःपुरं स्फुरद्दुःखम् ।
खतरसमीरलहरी-प्रकम्पितं खगकुलमिवाग्रे ॥ ८९ ॥
हा नाथ! नाथ! किं वय-मेकपदेऽप्यशरणास्त्वया त्यक्ताः ।
एवं विलपन्ति जना, द्रुतसर्वस्वा इवेक्षध्वम् ॥ ९० ॥
इति तेन भरतभर्तु-र्निष्क्रमणव्यतिकरस्तथाऽदर्शि ।
श्रीचन्द्रनृपोऽपि यथा, तत्कालं जातवैराग्यः ॥ ९१ ॥
स्मृतपूर्वभवश्रुतश्रु-तसंयमः पञ्चमुष्टिकृतलोचः ।
सुरदत्तसाधुवेषो—विनिर्ययौ राजमन्दिरतः ॥ ९२ ॥
नटविलसितमिदमखिलं, नितान्तनाथ ! मा स्म तत्त्याक्षीः ।
एवं रुदत्यपि जने, विहृतः स स्वर्षिर्यथाभिमतम् ॥ ९३ ॥
अथ पितृवियोगविह्वल-चित्तमतिच्छन्नमश्रुपूर्णाक्षम् ।
श्रीप्रभमुच्चै राज्ये, कौमारे च प्रभाचन्द्रः ॥ ९४ ॥
विनिवेश्य विनयनम्रैः, सामन्तैः सचिवपुङ्गवैश्चाक्रम् ।
अस्तोकशोकशङ्कु—द्धरणप्रवणैरिदं वचनैः ॥ ९५ ॥
मा देव ! कृथाः स्वपितुः, शोकमशोच्यो ह्यसौ महाभागः ।
खलमहिलेव विमुक्ता, येन समग्राऽपि राज्यश्रीः ॥ ९६ ॥
को नाम प्रारभते, दुष्करमेवंविधं श्रमणधर्मम् ।
प्रायो वैराग्यमतिः, क्षणमेकं मतिमतामपि यत् ॥ ९७ ॥
शोच्यास्त एव ये का-लधर्मतामुपगता अकृतसुकृताः ।
येरुद्यतमतिधर्मे, ते भुवने पञ्चषाः पुरुषाः ॥ ९८ ॥
निशमयति को न समयं ?, कः सत्त्वे नरते क्षणविनाशि ? ।
प्रतिसमयभाविमरणं, शरीरिणां को न भावयति ? ॥ ९९ ॥
को वा हृदि नहि धत्ते, गुरूपदेशं सदा सुखनिवेशम् ? ।
कस्य न वा प्रियमक्षय-मनन्तमस्पृशममृतसौख्यम् ? ॥ १०० ॥
किंतु चलचित्तभावा-त्कदनुष्ठाने भृशं गतोत्साहाः ।
गिरिगुरुका अपि पुरुषा, अवसपन्तो विलोकयन्ते ॥ १०१ ॥
देवेन पुनस्तात्किम-पि साहसं व्यवसितं महामतिना ।
यदसमसाहसिकाना-मपि चेतः खलु चमत्कुरुते ॥ १०२ ॥
एवोऽपि देव ! परमो—पकारिभावेन नाटकविधाता ।
सद्धर्मसूरिरिव वो, विशेषतश्चार्चितु युक्तः ॥ १०३ ॥
एवं निशम्य राजा, रङ्गाचार्यं प्रपूज्य विससर्ज ।
किंचिदुपशान्तशोको, नीतिलतासजलजलवाहः ॥ १०४ ॥
नीहारहारधवलान्, नव्यविहारान् विधापयन् बहुशः ।
गुरुगौरवेण कुर्वन्, साधर्मिकलोकवात्सल्यम् ॥ १०५ ॥
मुग्धजनं सद्धर्मे, स्थिरयन् जिनशासनोन्नतिं तन्वन् ।
सामायिकपौषधमु—ख्यधर्मनिरतोऽजनि प्रायः ॥ १०६ ॥
अथ सततं धर्मोद्यत-मजितीषु श्रीप्रभं नृपं ज्ञात्वा ।

अरिदमनक्षितिपस्त-द्देशमुपद्रोतुमारभत ॥ १०७ ॥
ज्ञात्वेदं चरमुखतः, स भाणितः श्रीप्रभेण दूतेन ।
किं ननु कतिपयसीम-ग्रामकुटीरकविलुण्टनतः ॥ १०८ ॥
पूर्वजार्जितप्रणय-प्राग्भारमसाम्मारचय्य भृशम् ।
आहत्य दुर्जनत्वं, विप्रियमेवं मम विधत्से ? ॥ १०९ ॥

यतः—

ते धन्याः सत्पुरुषा, येषां स्नेहो ह्यभिन्नमुखरागः ।
वृद्धिं गच्छत्यनुदिन-मृणामिव पुत्रपु संचरति ॥ ११० ॥
तस्मादितोऽपराधा-दुपाप्युपरम मयाऽऽग एतत्त ।
क्षान्तं, तदीयगु-र्भवाम्यहं स्नेहतरुभेदे ॥ १११ ॥
श्रुत्वेत्यरिदमननृप-स्तं दूतं प्रतिहसन्निति जजल्प ।
भो भो त्वया निजप्रभु-रेवं वाच्यो मर्यादागर ॥ ११२ ॥

यथा—

तव पार्थिव ! धर्मार्थे, सविस्तरारब्धकुशलकृत्यस्य ।
पृथ्व्याः परिपन्थनया, कृतमनयाऽनर्थकारिण्या ॥ ११३ ॥
अथ बाल्यस्येनापि तद् दूरं मुञ्च धर्मकर्मेदम् ।
एकत्र कथं संभव-ति खजाति सीमन्तसंघटनम् ? ॥ ११४ ॥
अथ लोकरञ्जनामा-श्रमेण आरभ्यत त्वया धर्मः ।
तद् भव निश्चिन्तमना,न हन्मि तव देशमहमधुना ॥ ११५ ॥
पूर्वप्रणयप्रकटन-मवनीशानां परं जिगीषूणाम् ।
तृणमिव गरिष्ठं, गाढमसामर्थ्यमथवाऽपि ॥ ११६ ॥
श्रुत्वेति दूतमुखतः, श्रीप्रभराजः प्रदीप्तकोपाग्निः ।
किंकरगणेन सहसा, रणभेरीं ताडयामास ॥ ११७ ॥
तच्छब्दाकर्णनभाग-ति मिलितचतुरङ्गसैन्यपरिकलितः ।
शत्रुं प्रति प्रतस्थे, प्रदेशसीमान्यगात् क्रमशः ॥ ११८ ॥
अरिदमननृपोऽप्यस्या-शु संमुखं समजनिष्ट रणरसिकः ।
अलसा न युधि शूरा, विप्रा इव भोजनायेह ॥ ११९ ॥
अथ सैन्ययोर्द्वयोरपि, सुभटानां तत्र चित्रशस्त्रभृताम् ।
संस्फोटोऽजनि गगने, मयिघुनामिव पयोदानाम् ॥ १२० ॥
अत्यद्भुतभटवादे-रथ मालवभूभुजः सुभटसंघैः ।
परबलमभज्यताद्भुत-मुद्यानमिव द्विपैर्मत्तैः ॥ १२१ ॥
अथ रथमध्यारूढो, भग्नं संधारयन्ननीकं स्वम् ।
उदतिष्ठदरिदमनः, समरायास्फालयंश्चापम् ॥ १२२ ॥
युगपद्विमुक्ताशनिविशि-खनिचयैः सोऽप्यघात रिपुसैन्यम् ।
तटपर्वतमिव जलधेः, प्रसरद्वेलासलिलपूरैः ॥ १२३ ॥
क्षणमात्रादरिदमनः, परसैन्यमदैन्यभुजबलोऽभाङ्क्षीत् ।
कुटकोटिं लकुट इव, प्रभञ्जनो वृक्षलतामिव ॥ १२४ ॥
निजसैनिकभङ्गेन, क्रुद्धः श्रीप्रभनृपो विपक्षबलम् ।
उत्तस्थे संहर्तुं, कीनाशस्यानुजन्मेव ॥ १२५ ॥
नैव मनागपि सेहे, मालवपतिराननं परानीकैः ।
भुजगैरिव विनतायाः, सूनुर्हरिणैरिव व्याघ्र. ॥ १२६ ॥
विद्रुतसैन्यं पुरतः, स्थितमरिदमनं नृप रणायाथ ।
आक्रान्त मालवेशो, बलानुजन्मेव भूरिबलः ॥ १२७ ॥
तदनु विचित्रैः शस्त्रै-रस्त्रैरपि तौ नृपावयुध्येताम् ।
वन्येभयोरिव दशनै-रन्योन्यवधाभिलाषमतौ ॥ १२८ ॥
युद्धा चिरमरिदमनं, गुरुशक्तिर्मालवाधिपश्चक्रे ।
गतवीर्यं गतशक्तिं, भुजगं निर्विषमिव मंत्रज्ञः ॥ १२९ ॥
अरिदमननृपः श्रीप्रभ-नृपेण कलभो महागजेनेव ।
परिभूतः पश्चात्मुख-मवलमानाः पलायिष्ट ॥ १३० ॥
अथ तस्य श्रियमखिलां,रथकरितुरगादिहस्तिकप्रमुखाम् ।
जगृहे श्रीप्रभराज-स्तस्य श्रीर्विक्रमो यस्य ॥ १३१ ॥
आपूर्ण इवाम्बुधरो, निवृत्य रणमागरादवन्तीशः ।
कृतसकललोकतोषो, निजनगरीमाजगाम ततः ॥ १३२ ॥
तत्र त्रिवर्गसारं, राज्यश्रियमनुभवन्नसौ नृपतिः ।
भूयांसमनेहांसं, सुखसुरपालवदतिचक्राम ॥ १३३ ॥
तत्र प्रभासगुरवः, समवसृता अन्यदा सुमुनिसहिताः ।
बन्धुपरिवारयुक्त-स्तान्नन्तुं निर्ययौ राजा ॥ १३४ ॥
सम्यक् विनम्य मुनिपति-मिलातलाश्लिष्टमस्तको नृपतिः ।
निषसाद यथास्थानक-मथ गुरुरपि देशनां विदधे ॥१३५॥

इह हि भवसमुद्रे संसरन् भूरिकालं-
कथमपि मनुजत्वं प्राप्नुयात् कोऽपि जीवः ।
तदपि कथमपीह प्राप्य सद्धर्मकर्म-
क्षममनुपलमायुर्दीर्घकालाश्रमेत ॥ १३६ ॥
इदमपि समवाप्य प्रौढमिथ्यात्वलुप्त-
स्फुटविशदविवेकः पापतापातिरेकः ।
पुनरपि च भवेऽत्राऽनन्तशोऽनन्तदुःख-
व्यतिकरविधुरो यं संभ्रमी बम्भ्रमीति ॥ १३७ ॥
इति भवजलराशौ मज्जनोन्मज्जनानि,
प्रविदधदिह दैवादाप्य भूयोऽपि नृत्वम् ।
दृढगुणगणलब्धां जैनदीक्षां तरीव-
च्छ्रयत भविकलोकाः ! क्लेशविच्छेददक्षाम् ॥१३८॥

किञ्च—

अत्युत्कटभटकोटी-रथहरिकरिनिकरबलभरसमृद्धाः ।
यैर्जीयन्त रिपवः, परः शता जगति ते पुरुषाः ॥ १३९ ॥
येन पुनः स्वात्माऽसा-वनल्पकुविकल्पकल्पनाकलितः ।
जीयेत तेन विजितं, त्रिजगदिदं परमशूरोऽसौ ॥ १४० ॥

तथा चार्षम्—

जो सहस्सं सहस्साणं, संगामे दुज्जए जिणे ।
एगं जिणेज्ज अप्पाणं, एस से परमो जओ ॥ १४१ ॥
एगे जिए जिया पंच, पंच जिए जिया दस ।
दसहा उ जिणित्ताणं, सव्वसत्तू जिणामि ते ॥ १४२ ॥
इत्याकर्ण्य श्रीप्रभ, आनम्य गुरूनुवाच वः पार्श्वे ।
प्रव्रज्यामादास्ये, राज्यं न्यस्य प्रभाचन्द्रे ॥ १४३ ॥
देवानुप्रिय !, माऽस्य, व्यधाः प्रमादमिति सूरिणा गदिते ।
राजा च सपरिवारो,निजधाम जगाम मुदितमनाः ॥१४४॥
अथ सकलराजलोक-प्रत्यक्षं भ्रातरं प्रभाचन्द्रम् ।
संस्थाप्य राज्यभारे,प्रददावित्ति नरपतिः शिक्षाम्॥१४५॥
वत्सान्तरङ्गशत्रून्-सदा जयरपि जेय यतस्त्वमेषाम् ।
विजिता अप्यजिताः खलु, बलवन्तः शत्रवो बाह्याः ॥१४६॥
परिपालयेः प्रजास्त्वं, मालिक इव सुमनसः प्रयत्नेन ।
सर्वत्राप्यौचित्यं, हृदये दध्या जिनेन्द्रमिव ॥ १४७ ॥
इतरेतराविघाते-न वत्स ! धर्मार्थकामपुरुषार्थान् ।
प्रतिलेखनादिदक्षाः, सुसाधुरिव साधयेः सततम् ॥ १४८॥
स्निग्धामिवामलदृष्टिम-मुत्कर्णिजमपि नयेन परिहीणम् ।
दुर्दमामिन्द्रियवर्गं दमयेस्तुरगादिमिवहमिव ॥१४९॥
परिवर्जयेः कुसङ्गं, हिदतात्ते मांसभोजनमिवार्थे. ॥

सेवेथा आर्यजनं, घनं यथा चातकस्समूहः ॥ १५० ॥
धन्या वन्धुरभक्त्या, बन्धुमिव आद्रलोकमश्रेयाः ।
रक्षन्नेव वसुधां, सुधां यथा भोगिनां भर्ता ॥ १५१ ॥
आधारस्त्वमसि भुवां, नाधारस्तव समस्ति कश्चिदपि ।
आत्मानमात्मनैव हि, तत्सततं धारयेर्वत्स ! ॥ १५२ ॥
इत्युक्त्वा तूष्णीकी—भूते श्रीप्रभनृप प्रभाचन्द्रः ।
एवमिति प्रतिपद्ये, सर्वे भक्त्या नमन्मूर्धा ॥ १५३ ॥
अथ सुस्नातविलिप्तो, रत्नालंकारभूषितशरीरः ।
सदृशांशुकसित्रयधरो, ददर्थिभ्यो महादानम् ॥ १५४ ॥
कृतसकलसंघपूजो, आतूर्यविधापितसकलजनरवाणाम् ।
शिबिकामध्यासामा-स पुष्पकं यक्षराज इव ॥ १५५ ॥
अनुगम्यमानसूयुक्के-न बन्धुभूपेन विनयनम्रेण ।
अनुगम्यमान उच्चै-र्मागधैः कृतजयजयारावः ॥ १५६ ॥
पुर्या मध्यं मध्ये-न निर्ययौ नरपतिर्महाभूत्या ।
गुरुपदपावितमुद्या—समाप्य शिबिकात उदतारीत् ॥१५७॥
अथ भूषणसंभारं क्षिप्रं विश्वम्भरापतिर्म्लिगिति ।
उदतारयदङ्गाद् भुज—दण्डादिव वसुमतीभारम् ॥ १५८ ॥
सिद्धान्तगदितविधिना, गुरुणाऽथ श्रीप्रभः परिव्राज्य ।
परमां मुदं दधत्या, भारत्या समनुशिष्ट इति ॥ १५९ ॥
कमठन्दुर्दर्शमिव , प्राप्य दुरापां जिनाधिपतिदीक्षाम् ।
शयनासनादिचेष्टा, सकलाऽपि हि यतनया कार्या ॥१६०॥

यतः—

यतना सुधर्मजननी , यतना धर्मस्य पालनी नित्यम् ।
तद्वृद्धिकरी यतना, सर्वत्र सुखावहा यतना ॥ १६१ ॥
एकामेव हि यतनां, संसेव्य विलीनकर्ममलपटलाः ।
प्रापुरनन्ताः सत्त्वाः, शिवमक्षयमव्ययं स्थानम् ॥ १६२ ॥
एवं शिक्षां दत्त्वा, प्रभासगुरवो विजहुरन्यत्र ।
शारदिकवारिदा इव, तिष्ठन्त्येकत्र न हि मुनयः ॥ १६३ ॥
श्रीप्रभराजर्षिरपि, प्रतिसमयविशुध्यदमलपरिणामः ।
यूथपतिनेव कलभः, सततं विजहार सह गुरुणा ॥ १६४ ॥
जिनपरिवृढगदितागम-सूत्रार्थसुधां पिबन्नमर्त्य इव ।
पञ्चमहाव्रतभारं, दधदवनीभारमिव शेषः ॥ १६५ ॥
पञ्च निशाताः समिती—र्हस्तशरानिव धनुर्धरो बिभ्रत् ।
तिस्रो गुप्तीः शङ्की-नरपतिरिव धारयन् मुद्राः ॥ १६६ ॥
मार्गानुसारिणीमिह, कुर्वन् सकलां क्रियां सुपान्थ इव ।
श्रद्धां प्रवरां धर्मे, तन्वन् मकरन्द इव भृङ्गः ॥ १६७ ॥
प्रज्ञापनीयभाव-न संयुतो भद्रवारण इवाचैः ।
साधक इव विद्यासु , प्रमादमुक्तः क्रियासु सदा ॥ १६८ ॥
आद्रियमाणः शक्त्या-नुष्ठाने योग्यमन्द इव वैद्यः ।
दृष्यन् गुणाढ्यसङ्गे, सरउत्सङ्गे मराल इव ॥ १६९ ॥
आराधयन् गुरुजनं, परमात्मानं यथा परमयोगी ।
सुचिरं निरतिचारं , चरणं परिपालयामास ॥ १७० ॥
अथ वर्गत्रयपालन-परायणस्य प्रभन्दुराजस्य ॥
तनयावुभावभूतां, हरिषेणः पद्मसेनश्च ॥ १७१ ॥
तौ सकलकलापूर्णौ, पूर्णेन्दू इव समस्तजनसुखदौ ।
अर्गलाविव भुजदण्डौ-रेजाते तस्य भूपस्य ॥ १७२ ॥
अपरेद्युरवनिजाने--र्ज्येष्ठाङ्गजाश्विकत्यमजानी ।
मकानिपतितहंस इव, प्रतिदिनमक्षीयत ततोऽसौ ॥ १७३ ॥
आहूता वरवैद्याः, क्रिया विचित्राश्च तैः समारब्धाः ।
न च जज्ञे कोऽपि गुणो, व्यमिन्नयतत इति नरन्द्रः ॥१७४॥
दृष्टौषधैः किमेभि—र्ज्येष्ठं पुत्रं निवेश्य राज्यभरं ।
कौमारं च कनिष्ठं, अयामि धर्मौषधमिदानीम् ॥ १७५ ॥
अत्रान्तरे च सहसा, संजातप्रबलशूलरोगेण ।
अपि वैद्यैः क्रियमाणो-पचार आपन्मृति पद्मः ॥ १७६ ॥
अथ तनयमरणमाक—र्ण्य नृपतिरस्तोकशोकसंतप्तः ।
दम्भोलिनिहतगिरिरिव, मूर्च्छाविवशः पपात भुवि ॥१७७॥
पवनाद्युपचारवशा—दवाप्य चैतन्यमिति नृपो व्यलपत् ।
हा पुत्र ! क्वासि गतः ?, प्रतिवचनं किं न मम दत्से ? ॥१७८॥
उदियाय पूर्णचन्द्रो, हा ग्रस्यत मङ्क्षु सैंहिकेयेन ।
अहह फलग्रहिरभवत् , तरुरुन्मूल्यत महाकरिणा ॥१७९॥
पोतः प्राप पयोनिधि-पारं नष्टाशस्त्वरिणा हहाऽभाङ्क्षि ! ।
हृष्टौ निधिर्विशालो, हा हा हाऽह्रियत हतविधिना ? ॥१८०॥
उद्गमदङ्कुरोत्साहो, नभस्वताऽक्षिप्यत क्षणेनाहो ! ।
राज्योचितोऽजनि हहा, तनयः समहारि दैवेन ! ॥ १८१ ॥
एवं प्रलपन् साचिवै—र्व्यबोधि कथमपि नृपोऽकरोत् सूनोः ।
मृतकृत्यमल्पशोकः, कालेनैवं मनसि दध्यौ ॥ १८२ ॥
ये दण्डसात् सुमेरुं, पृथिवीं वा छत्रसात् क्षमाः कर्तुम् ।
तेऽपि स्वमन्यमवितु, नालं किं हन्त पुनरितरे ! ॥ १८३ ॥
पीयूषपोषपुष्टः, पविभीषणपाणिरमरकोटिवृतः ।
सुरपतिरपि सुरलोका-च्च्यवते पक्वं फलमिव द्रोः ॥१८४॥
षष्टिं पुत्रसहस्रान् , सगरश्चक्र्यपि न रक्षितुमधीशः ।
ज्वलनप्रभाद्यमोदिव, ततोऽपि किं त्वं बालिश वदः ? ॥१८५॥
कृत्वा पालकमपि यान् , पुष्यत्युत्पश्यतामपि हि तेषाम् ।
रङ्क इव यमेन भवी, गतशरणो नीयते क्रुद्धः ॥ १८६ ॥
नीतस्तमश्च नरकं, सहते खलु वेदनाः परमघोराः ।
जन्मान्तरानुधावी-नि दधीहनामहह कर्माणि ! ॥ १८७ ॥
जननी मे जनको मे, भ्राता मे सुतकलत्रवर्गो मे ।
मिथ्यैव बुद्धिरेषा, न देहमपि वस्तुतः स्वीयम् ॥१८८॥
पुत्रादीनामेषां, भिन्नस्थानागमयुषां स्थाने ।
एकत्र निवासः खलु, विहगानामिव तरौ सायम् ॥१८९॥
गच्छन्ति ततोऽपि पुनः, पृथक् पृथक् स्थानकेषु देहभृतः ।
एकत्र निशि सुप्ता, निशावसाने यथा पान्थाः ॥१९०॥
अरघट्टघटीन्याया-दर्थैर्हिरियाहिरां (र्वी) क्रियां सततम् ।
इह कुर्वतां तनुभृतां, को हन्त स्वः परः को वा ? ॥१९१॥
एवं यावत् संवे-गसंगतोऽचिन्तयत्स्यवनिनाथः ।
तावत् तत्रोद्याने, कुमारनन्दी गुरुः प्राप ॥ १९२ ॥
गुर्वागमनं ज्ञात्वा, गत्वा तत्र प्रणम्य मुनिनाथम् ।
उचितस्थाने निषसा—द देशनामथ गुरुर्विदधे ॥ १९३ ॥
निरयः सर्वेभ्योऽपि, दुःखोऽन्यतनुआपतन्तिपरिग्रहाः ।
यमदन्तयन्त्रसंस्थाः, कष्टं जीवन्ति तनुभाजः ॥१९४॥
जीवातुभिरगदगणै—रायुर्वेदेन सप्रभेदेन ।
मृत्युंजयादिभिर्वरमन्त्रैर्नाहि रक्षते मृत्योः ॥ १९५ ॥
अहह खलमार्यमधनं, महाधनं मन्दमधन्यं प्राज्ञम् ।
कवलयति सततमशरण-मविशेषेणैव समवर्ती ॥१९६॥
तापापहमजरामर-पदमन्दममपुधर्मममृतसमम् ।
मुक्त्वा तदत्र भुवने, कोऽपि नान्यच्छरणमस्ति ॥१९७॥
इत्याकर्ण्य नरेशो, विनश्य यतिपतिपदौ जगादेति ।

सूचनाद्वा सूत्रं, सुष्ठु उक्तमिति वा सूक्तम्। प्राकृतशैल्या तु सुत्तमिति।

सम्प्रति सूत्रशब्दस्यैव निरुक्तान्याह—

नेरुत्तियाइँ तस्स उ, सूयइ सिव्वइ तहेव सुवइ त्ति।
अणुसरति त्ति य भेया, तस्स य नामा इमा हुंति॥ ३१३॥

तस्य सूत्रस्य निरुक्तान्यमूनि—सूचयतीति सूत्रम्। अथवा—सीव्यतीति सूत्रम्। यद्वा—स्वपितीति सूत्रम्। अथवा-अनुसरतीति सूत्रमिति निरुक्तस्य भेदाः, नामानि पुनस्तस्यैतानि सुप्तादीनि भवन्ति।

तान्येवार्थतो व्याख्यानयति—

पासुत्तसमं सुत्तं, अत्थेणाबोहियं ण तं जाणे।
लेससरिसेण तेणं, अत्था संघाइया बहवे॥ ३१४॥

यथा ह्यनेककलापण्डितो मनुष्यः प्रसुप्तः सन् न किञ्चित्तासां कलानां जानाति एवमर्थेनाबोधितं न किञ्चिदर्थविशेषं जानाति, यदा त्वर्थेन प्रबोधितं भवति तदा सर्वेषां तदन्तर्गतानां भावानां ज्ञायकमुपजायते। यथा स एव पुरुषः प्रबोधितस्तासां कलानामतः प्रसुप्तसमं सूत्रम्। अथवा-श्लेषसदृशं तत् सूत्रम्, तथाहि-तेन श्लेषसदृशेन-तत्सदृशेन बहवोऽर्थाः संघातितास्तेन श्लेषसदृशम्।

सम्प्रति अर्थस्य सूचनादिति व्याख्यानयति—

सूइज्जइ सुत्तेणं, सूई नट्ठा वि तह सुएणऽत्थो।
सिव्वइ अत्थपयाणि व, जह सुत्तं कंचुगाईणि॥ ३१५॥

यथा सूची नष्टा सूत्रेण सूच्यते सूत्रेणोपलक्ष्यते, तथा श्रुतेनार्थः सूच्यते इति अर्थस्य सूचनात् सूत्रम्, एतेन सूचयतीति निरुक्तं व्याख्यातम्। अधुना सीव्यतीति व्याख्यानयति-यथा सूत्रं कञ्चुकादीनि सीव्यति एवमर्थः पदान्यनेकानि सीव्यतीत्यर्थः, सीवनात् सूत्रम्।

अत्र (अनुस)रतीति अस्य व्याख्यानमाह—

सूरमणि जलकंतो, व अत्थमेव तु पसवई सुत्तं।
वणियसुयअंधकयवर-तदणुसरंतो सुयं एवं॥ ३१६॥

यथा सूर्यकान्तोऽग्निं, जलकान्तो जलं, दीप्तिं स्रवति एवं सूत्रम् अर्थं प्रस्रवतीति सूत्रम्। अनुसरणं द्विधा द्रव्यतो भावतश्च। तत्र द्रव्यतो वणिक्सुतोऽन्धः कचवरे दृष्टान्तः। एकस्य वणिजः पुत्रोऽन्धः, वणिजा चिन्तितम्-एष वराको नाहिण्डते भुक्तं भुक्त्वा परिभवस्थाने गाढतरं भविष्यतीति द्वौ स्तम्भौ निहत्य तत्र रज्जुर्बद्धा। ततः सोऽन्धः पुत्रो रज्ज्वनुसारेण कचवरं बहिस्त्यजति, एष दृष्टान्तः। अयमर्थोपनयः-वणिक्स्थानीय आचार्यः, अन्धस्थानीयाः साधवः, रज्जुस्थानीयं सूत्रं, कचवरस्थानीयमष्टप्रकारं कर्म। तथा चाह-एवं वणिक्सुतान्धदृष्टान्तप्रकारेण तत्सूत्रमनुसरन् अष्टप्रकारं कर्म कचवरस्थानीयमपनयति। ततः स्मरणात् सूत्रं, सुष्ठु उक्तं सूक्तमिति नाम तु प्रतीतमिति न व्याख्यातम्। बृ० १ उ० १ प्र०। स्था०। सूत्र०। प्रव०। गणधरादिकृते पञ्चमाङ्गिकधर्मप्रतिपादनप्रधानागमसूत्रादौ, संथा० १ अधि० १ प्रस्ता०। सुत्तं ति वा पवयणं ति वा एगट्ठा। आ० चू० १ अ०। जिनागमे, दर्श० ३ तत्त्व।

सूत्रपदनिक्षेपमाह—

दव्वं तु पोंडयादी, भावे सुत्तमिह सूयगं नाणं।
सण्णासंगहवित्ते, जातिणिबद्धे य कत्थादी॥ ३॥

नामस्थापने अनादृत्य द्रव्यसूत्रं दर्शयति-'पोंडयाइ' त्ति—पोण्डजं च वमनीफलादुत्पन्नं कार्पासिकम् आदिग्रहणाद् अण्डजवालजादिपरिग्रहः, भावसूत्रं तु इह-अस्मिन्नधिकारे सूचकं ज्ञानं-श्रुतज्ञानमित्यर्थः, तस्यैव स्वपरार्थसूचकत्वादिति। तच्च श्रुतज्ञानसूत्रं चतुर्धा भवति, तद्यथा-संज्ञासूत्रम्, संग्रहसूत्रम्, वृत्तनिबद्धम्, जातिनिबद्धं च। तत्र संज्ञासूत्रं यत् स्वसंकेतपूर्वकं निबद्धम्, तद्यथा—"जे छेए सागारियं न सेवे, सव्वामगंधं परिन्नाय णिरामगंधो परिव्वए" इत्यादि, तथा लोकेऽपि पुद्गलाः संस्काराः क्षेत्रज्ञा इत्यादि, संग्रहसूत्रं तु यत्प्रभूतार्थसंग्राहकम्, तद्यथा-द्रव्यमित्युक्ते सकलधर्माधर्मादिद्रव्यसंग्रह इति। यद्वा-'उत्पादव्ययध्रौव्ययुक्तं सदिति, वृत्तनिबद्धसूत्रं पुनर्यदनेकप्रकारया वृत्तजात्या निबद्धम्, तद्यथा-'बुज्झिज्ज त्ति तिउट्टिज्जा' इत्यादि, जातिनिबद्धं तु चतुर्धा, तद्यथा—कथनीयं-कथ्यमुत्तराध्ययनज्ञाताधर्मकथादि, पूर्वर्षिचरितकथानकत्वात्तस्य, तथा गद्यम्-ब्रह्मचर्याध्ययनादि, तथा-पद्यम्-छन्दोनिबद्धम्, तथा-गेयम्-यत् स्वरसंचारेण गीतिकाप्रायनिबद्धम्, तद्यथा-कापिलीयमध्ययनम्, 'अधुवे असासयंमि संसारंमि दुक्खपउराए' इत्यादि। सूत्र० १ श्रु० १ अ० १ उ०। "अत्थं भासइ अरिहा, सुत्तं गुंफति गणहरा निउणं। सासणस्स हियट्ठाए, तओ सुत्तं पवत्तइ॥" दशा० ४ अ०। तत्र गणधरा विशेष्यन्ते निपुणाः सूक्ष्मार्थदर्शित्वात् नियतगुणा निगुणा वा साक्षाद्धितसमस्तगुणत्वात्, आह—तत्पुनः सूत्रं किमादिकं किंपर्यवसानं कियत्परिमाणं को वाऽस्य सार इत्यत आह—

सामाइयमाईयं, सुयनाणं जाव बिंदुसाराओ।
तस्स वि सारो चरणं, सारो चरणस्स निव्वाणं॥

तत् श्रुतज्ञानं सामायिकमादिर्यस्य तत्सामायिकादि यावत् बिन्दुसारात् बिन्दुसारं यावत् बिन्दुसाराख्यचतुर्दशपूर्वमित्यर्थः। तच्च मूलभेदापेक्षया द्विभेदम्, तद्यथा—अङ्गप्रविष्टम्, अनङ्गप्रविष्टं च। अङ्गप्रविष्टं द्वादशभेदमाचारादिभेदाद्। अनङ्गप्रविष्टमनेकभेदमावश्यकं तद्व्यतिरिक्तं कालिकोत्कालिकादिभेदात्। उक्तं च—द्व्यनेकद्वादशभेदं श्रुतमिति। आ० म० १ अ०। अनु०।

से किं तं जाणयसरीरभवियसरीरवइरित्तं दव्वसुत्तं?, जाणयसरीरभवियसरीरवइरित्तं पत्तयपोत्थयलिहिअं, अहवा-जाणयसरीरभवियसरीरवइरित्तं दव्वसुत्तं पंचविहं पण्णत्तं, तं जहा-अंडयं, बोंडयं, कीडयं, वालयं, वागयं। अंडयं हंसगब्भादि, बोंडयं-कप्पासमाइ, कीडयं पंचविहं पण्णत्तं, तं जहा-पट्टे, मलए, अंसुए, चीणंसुए, किमिरागे, (अनु०) वागयं सणमाइ, से तं जाणयसरीरभवियसरीरवइरित्तं दव्वसुत्तं। से तं नोआगमतो दव्वसुत्तं, से तं दव्वसुत्तं। (सू० ३७।)

अत्र निर्वचनम्—' जाणयसरीरभवियसरीरवइरित्तं दव्वसुअं ' मित्यादि. यत्र ज्ञशरीरभव्यशरीरयोः सर्वथाऽप्यनन्तराङ्गस्वरूपं न घटते तत् ताभ्यां व्यतिरिक्तं-भिन्नं द्रव्यश्रुतम्. किं पुनस्तदित्याह-' पत्तयपोत्थयलिहियं ' ति पत्रकाणि-तालतल्याद्यादिसम्बन्धीनि तत्संघातनिष्पन्नास्तु पुस्तकाः, ततश्च पत्रकाणि च पुस्तकाश्च तेषु लिखितं पत्रकपुस्तकलिखितम्. अथवा— पोत्थय ' त्ति-पोतं-वस्त्रं पत्रकाणि च पोतं च तेषु लिखितं पत्रकपोतलिखितं ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यश्रुतम्, अत्र च पत्रकादिलिखितस्य श्रुतस्य भावश्रुतकारणत्वात् द्रव्यत्वमवसेयम्. नोआगमत्वं तु आगमतो द्रव्यश्रुत इव आगमकारणस्यात्मदेहशब्दस्वरूपस्याभावाद् भावनीयम्। तदेवमेकेन प्रकारेण ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यश्रुतमुक्तम्। साम्प्रतं तदेव प्रकारान्तरेण निरूपयितुमाह—'अहवा' त्यादि. अथ वा-श्रुतं पञ्चविधं प्रज्ञप्तम्, तद्यथा-' अंडयाइ ' त्यादि, अत्राऽऽह-ननु श्रुते प्रक्रान्ते सूत्रस्य प्ररूपणमप्रस्तुतम्. सत्यम्, किन्तु-प्राकृतशैलीमङ्गीकृत्य श्रुतस्याण्डजादिसूत्रस्य च सूत्रलक्षणेनैकेन शब्देनाभिधीयमानत्वात्तस्य इदमपि प्ररूपयतीत्यदोषः। प्रसङ्गतोऽण्डजादिसूत्रस्वरूपज्ञापनेन शिष्यव्युत्पत्तिश्चैवं कृता भवति. अत एव भावश्रुते प्रक्रान्ते नामश्रुतादिप्ररूपणमप्रस्तुतमित्याद्यपि प्रेरणमपास्तं, तस्यापि शिष्यव्युत्पादनादिफलत्वात्। न च भावश्रुतप्रतिपक्षस्य नामश्रुतादेः प्ररूपणमन्तरेण भावश्रुतस्य निर्दोषत्वादिस्वरूपनिश्चयः कर्तुं पार्यते, ' जे एगं जाणइ से सव्वं जाणइ ' त्ति वचनाद् इत्यलं विस्तरेण। अत्राण्डजज्ञापनार्थमाह—' से किं तं ' मित्यादि. अत्रोत्तरम्-' अंडयं हंसगब्भाइ ' त्ति-अण्डाज्जातमण्डजम्, हंस-पतङ्गश्चतुरिन्द्रियो जीवविशेषः, गर्भस्तु तन्निर्वर्तितः कोशिकाकारः, हंसस्य गर्भो हंसगर्भः, तदुत्पन्नं सूत्रमण्डजमुच्यते, आदिशब्दः स्वभेदप्रख्यापनपरः। ननु यदि हंसगर्भोत्पन्नसूत्रमण्डजमुच्यते तर्हि सूत्रे 'अंडयं हंसगब्भाइ ' त्ति सामानाधिकरण्यं विरुध्यते. हंसगर्भस्य प्रस्तुतसूत्रकारणत्वादिव, सत्यम्। कारणे कार्योपचारात् तदविरोधः. कोशिकाकारमेवं सूत्रं चटकसूत्रमिति लोके प्रतीतमण्डजमुच्यत इति हृदयम्. पञ्चेन्द्रियहंसगर्भसम्भवासम्भवात्। ' से त्तं '-त्यादि निगमनम्। अथ द्वितीयभेद उच्यते—' से किं तं ' मित्यादि. अत्र निर्वचनम्- ' बोंडयं फलिहमाइ ' त्ति-बोण्डं वमनीफलं तस्माज्जातं बोण्डजं, फलिही-वमनी तस्याः फलमपि फलिहं कर्पासाश्रयं कोशकरूपं तदिहापि कारणे कार्योपचाराद्बोण्डजं सूत्रमुच्यत इति भावः। 'से त्तं' मित्यादि निगमनम्। अथ तृतीयभेद उच्यते—' से किं तं ' मित्यादि अत्रोत्तरम्—' कीडयं पंचविहं ' मित्यादि, कीटाज्जातं कीटजं सूत्रं तत् पञ्चविधं प्रज्ञप्तम्, तद्यथा—'पट्टे' त्ति पट्टसूत्रं मलयम् अंशुकम्, चीनांशुकं कृमिरागम्। अत्र वृद्धव्याख्या किल यत्र विषये पट्टसूत्रमुत्पद्यते, तत्रारण्ये वननिकुञ्जस्थाने मांसचीडादिरूपस्याऽऽमिषस्य पुञ्जाः क्रियन्ते, तेषां च पुञ्जानां पार्श्वतो निम्ना उन्नताश्च सान्तरा बहवः कीलिका भूमौ निखाय्यन्ते, तत्र वनान्तरेषु सञ्चरन्तः पतङ्गकीटाः समागत्य मांसाद्यभिलाषेणोपभोगलुब्धाः कीलिकान्तरेषितस्ततः परिभ्रमन्तो लालाः प्रमुञ्चन्ति. ताश्च कीलिकासु लग्नाः परिगृह्यन्ते. इत्येतत् पट्टसूत्रमभिधीयते। अनेनैव क्रमेण मलयविषयोत्पन्नं तदेव मलयम्. इत्थमेव चीनविषयाद् बहिरुत्पन्नं तदेवांशुकम् इत्थमेव चीनविषयोत्पन्नं तदेव चीनांशुकमभिधीयते. तत्र-विशेषाख्य कीटविशेषस्याविशेषात् तु पट्टसूत्रादिव्यपदेश इति भावः। एवं क्वचिद्वक्ष्य मनुष्यादिशोणितं गृहीत्वा केनापि योगेन युक्तं भाजनसम्पुटे स्थाप्यते. तत्र च प्रभूताः कृमयः समुत्पद्यन्ते. ते च वाताभिलाषिणो भाजनच्छिद्रैर्निर्गत्य आसन्न पर्यटन्तो यल्लालाजालमभिमुञ्चन्ति तत् कृमिरागं पट्टसूत्रमुच्यते, तच्च रक्तवर्णकृमिसमुत्पन्नत्वात् स्वपरिणामत एव रक्तं भवति। अन्ये त्वभिदधति—यदा तत्र शोणिते कृमयः समुत्पन्ना भवन्ति तदा सच्छिद्रकमेव तन्मध्ये किट्टं परित्यज्य रसो गृह्यते, तत्र च कश्चिद् योगः प्रक्षिप्यते, ततस्तेन यद् रज्यते पट्टसूत्रं तत् कृमिरागमुच्यते। तच्च धौताद्यवस्थासु मनागपि कथञ्चिद्रागं न मुञ्चति, 'से त्तं' मित्यादि निगमनम्। अथ चतुर्थो भेद उच्यते-'से किं तं ' मित्यादि, अत्रोत्तरम्—(अनु०।) ('वालय' पदव्याख्या 'वालय' शब्दे षष्ठभागे गता।)

अथ पञ्चमो भेदोऽभिधीयते—'से किं तं' मित्यादि. वल्ककाज्जातं वल्कजं, तच्च सणात्मकम्, क्वचित् पुनरस्यातसीति पाठ, तत्रातसीसूत्रं मालव्यादिदेशप्रसिद्धम्, ' से त्तं ' त्यादि निगमनम्। उक्तं पञ्चविधमण्डजादिसूत्रं, तदुक्तौ चोक्तं ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यश्रुतम्, अतस्तदपि निगमयति—'से तं जाणग' त्यादि. एतदुक्तौ च समर्थितं नोआगमतो द्रव्यश्रुतमतस्तदपि निगमयति—' से तं नोआगमओ ' इत्यादि, एतत्समर्थने च समर्थितं द्विविधमपि द्रव्यश्रुतमतस्तदपि निगमयति—' से तं दव्वसुअमि ' त्यादि। अनु०।

विध्युद्यमादिसूत्राणि—

विहि १ उज्जम २ वन्नय- ३ भय ४
उस्सग्ग ५ ऽववाय ६ तदुभयगयाइं ७।
सुत्ताइँ बहुविहाइं—
समए गंभीरभावाइं ॥ १०६ ॥

ध० र० ३ अधि० ३ लक्ष०। ( अस्या व्याख्या ' सज्झ ' शब्देऽस्मिन्नेव भागे गता। )

अस्खलितादिगुणोपेतं सूत्रमुच्चारणीयम्। किं तत् इत्याह-

अप्पग्गन्थमहत्थं, बत्तीसदोसविरहियं जं च।
लक्खणजुत्तं सुत्तं, अट्ठहि य गुणेहि उववेयं ॥८८६॥

अल्पग्रन्थं महार्थं च सूत्रं विज्ञेयम्, "उत्पादव्यय-ध्रौव्ययुक्तं सत्" इत्यादिवत् सूत्रमल्पग्रन्थं महार्थं च भवतीत्यर्थः, यच्च द्वात्रिंशद्दोषविरहितम्, लक्षणयुक्तं सूत्रमुच्यते। ते चैतेऽन्यत्रोक्ता द्वात्रिंशद् दोषा—

"अलियमुवघायजणयं, निरत्थयमवत्थयं छलं दुहिलं।
निस्सारमहियमूणं, पुणरुत्तं वाहयमजुत्तं ॥ १ ॥
कमभिन्नवयणभिन्नं, विभत्तिभिन्नं च लिंगभिन्नं च।
अणभिहियमपयमेव य, सहावहीणं ववहियं च ॥ २ ॥
कालजइच्छविदोसो, समयविरुद्धं च वयणमित्तं च।

सुत्ते अलंकारा " इति परिग्रहः । उपनीतं खलु यदस्ति सोपनयं सोपसंहारम् , अनुपचारं नाम—यत्काहलं फल्गुप्रायं तद्विपरीतं सोपचारम् , मितं पदैः श्लोकादिभिर्वा अमितं दण्डकैः.मधुरं त्रिधा सूत्रमधुरम् . अर्थमधुरम् .उभयमधुरम् , एतैरष्टभिर्गुणैरुपेतम् . बृ० । ( अल्पाक्षरादिशब्देषु तत्तत्पदानामर्थः । )

साम्प्रतमेतेषु हीनाक्षरादिषु प्रायश्चित्तमाह—

खलियमिलियवाइद्धं , हीणं अच्चक्खरं वयंतस्स ।
विच्चामेलियअप्पडि–पुन्नघोसे य मासलहुं ॥ २०१ ॥

स्खलितं मिलितं व्याविद्धं हीनाक्षरमत्यक्षरं व्यत्याम्रेडितम् अपरिपूर्णघोषं च वदतः प्रत्येकं प्रायश्चित्तं मासलघु । स्वामिनः आज्ञाभङ्गे चतुर्गुरु । स तथाऽन्येऽपि करिष्यन्तीति गुरु । यथोक्तकारी न भवतीति मिथ्यात्वे चतुर्लघु । विराधना द्विविधा–आत्मविराधना च.संयमविराधना च।आत्मविराधना देवतया छलनम् , संयमविराधना काऽपि साधुर्वारयेत् मा स्खलितादीनि कुरुत ततः कलहतोऽस्थिभङ्गादिः आत्मविराधनायां परितापः महाग्लानाद्यारोपणा संयमविराधना सूत्रस्यान्यथोच्चारणादर्थे विसंवादः , अर्थविसंवादे चरणाभावश्चरणाभावे मोक्षाभाव इति दीक्षा निरर्थिका । लघुग्रहणात् गुरुकमपि—सूचितम् . ह्रस्वोक्त्या यथा दीर्घस्य सूचनम् । तत्र गुरुकमिति वा अनुद्घातमिति वा कालकमिति वा गुरुकस्य नामानि । लघुकमिति वा उद्घातमिति वा शुक्लमिति वा लघुकस्य नामानि । अत्र गुरुलघुविशेषविस्तरपरिज्ञानार्थमाचार्याश्चतुर्विधं प्रायश्चित्तं दर्शयन्ति–तथा दानप्रायश्चित्तं तपःप्रायश्चित्तं कालप्रायश्चित्तं वा । तत्र दानप्रायश्चित्तं गुरुकं लघुकं च । एवं तपःकालप्रायश्चित्ते अपि गुरुलघुके प्रत्येकं वक्तव्ये ।

तत्र दानप्रायश्चित्तं गुरुकमाह—

जं तु निरंतरदाणं,जस्स व तस्स व तवस्स तं गुरुकं ।
जं पुण संतरदाणं, गुरू वि सो खलु भवे लहुओ ।२०२।

यस्य वा तस्य वा तपसो गुरुकस्याष्टमादेरगुरुकस्य निर्विकृतिकादेर्यन्निरन्तरं दानं तद्भवति दानप्रायश्चित्तं गुरु । यत्पुनः सान्तरमष्टमादेर्गुरुकस्य तपसो दानं तत् गुर्वपि खलु भवति–लघु,यथा आपत्तिश्चतुर्लघुकस्य षड्लघुकस्य वा. तत्राष्टमदशमानि सान्तराणि दीयन्ते । एष दानप्रायश्चित्ते गुरुलघुकयोर्विशेषः ।

सम्प्रति तपःकालयोराह–

कालतवे आसज्ज, गुरु वि होई लहुउ लहुगुरुगो ।
कालो गिम्हो उ गुरू , अट्ठाइतवो लहू सेसो ॥ २०४ ॥

कालं तपश्चासाद्य गुर्वपि लघु भवति, लघ्वपि च गुरु । तत्र कालो ग्रीष्मो गुरुः,तपोऽष्टमादि शेषः कालस्तपश्च लघु । इयमत्र भावना, लघ्वपि यदष्टमादिना तपसा उह्यते तत्तपो गुरु । यन्निर्विकृतिकादिना षष्ठपर्यन्तेनोह्यते तत्तपो लघु । तथा यद् ग्रीष्मे काले उह्यते तत्कालगुरु,वर्षारात्रे हेमन्ते वोह्यमानं काललघु । तदेवं यतः स्खलिताद्युच्चारणे प्रायश्चित्तमज्ञानमिथ्यात्वविराधनाश्च दोषास्तस्मात् सूत्रमस्खलितादिदोषरहितमुच्चारणीयम्–पठनीयं च । एवं पठितस्य सूत्रव्याख्या कर्तव्या । बृ० १ उ० १ प्रक० । अनु० । आ० म० ।



अथ वेदं सर्वज्ञभाषितसूत्रलक्षणम्—

अप्पक्खरमसंदिद्धं, सारवं विस्सतोमुहं ।
अत्थोभमणवज्जं च, सुत्तं सव्वण्णुभासियं ॥ २८६ ॥

अल्पाक्षरं नाम–मिताक्षरं यथा सामायिकसूत्रम् . असंदिग्धं यत्सैन्धवशब्दवत् लवणपटघोटकाद्यनेकार्थसंशयकारि न भवति. सारवत्–बहुपर्यायं प्रतिसूत्रमनेकार्थाभिधायकं वा. विश्वतो मुखम्–अनेकमुखं प्रतिसूत्रमनुयोगचतुष्टयाभिधानात् . अस्तोभं च वाहिहकारादिपदच्छिद्रपूरणस्तोभकशून्यम् स्तोभका निपाता इति पूर्ववैयाकरणेषु प्रसिद्धः.अनवद्यम् अगर्ह्यम्–न हिंसाप्रतिपादकं"षट् शतानि नियुज्यन्ते,पशूनां मध्यमेऽहनि । अश्वमेधस्य वचनात् , न्यूनानि पशुभिस्त्रिभिः ॥ १ ॥" इत्यादिवचनमिव न हिंसाविधायकम् । एवंभूतं सूत्रं सर्वज्ञभाषितमिति । आ० म० १ अ० ।

एकस्मात् सूत्राद् बहवोऽर्थाः प्रतीयन्ते उत्सर्गापवादादयः सूत्रभेदाः—

एयारिसम्मि वासो, ण कप्पती जति वि सुत्तणुण्णातो ।
अव्वागडो व भणितो,आयरिओ उवेहती अत्थं ॥२५॥

एतादृशे उपाश्रये वासो यद्यपि सूत्रे अनुज्ञातः तथापि न कल्पते यतः अव्याकृतोऽविशेषित एवासौ सूत्रे भणितः परम् आचार्यस्तमर्थमुत्प्रेक्षितविषयविभागप्रकटनेनोन्मीलयति,यथा। किलैकस्मात् मृत्पिण्डात् कुलालोऽनेकानि घटशरावादिरूपाणि निष्पादयति एवमाचार्योऽप्येकस्मात् सूत्रपदादभ्यूह्यानेकानामर्थविकल्पानामुपदर्शनं करोति । यथा वा सान्धकारगृहादौ विद्यमाना अपि घटादयः पदार्थाः प्रदीपं विना न विलोक्यन्ते तथा सूत्रेऽप्यर्थविशेषाः आचार्यैरप्रकाशिताः सन्तोऽपि नोपलभ्यन्ते ।

किं च—

जं जह सुत्ते भणियं, तहेव तं जइ वियालणा नत्थि ।
किं कालियाणुओगो, दिट्ठो दिट्ठिप्पहाणेहिं ॥ २६ ॥

यद्–वस्तु यदात्मकेन विधिरूपेण वा प्रकारेण सूत्रे भणितं तत्तथैव यदि प्रतिपत्तव्यं विचारणा–विषयविभागव्यवस्थापनायुक्तः विमर्शो वा नास्ति–न क्रियते. ततः किं केन हेतुना कालिकश्रुतस्यानुयोगो दृष्टो—विधयतयोपलब्धो दृष्टिप्रधानैः , केवलज्ञानश्रुतज्ञानरूपालोचनप्रवरैस्तीर्थकरगणधरैः । अथवा—प्रधानैर्नैगमादिनयमार्गविशारदैः श्रीभद्रबाहुस्वामिभिः , किमिति निर्युक्तिकरणद्वारेण कालिकश्रुतानुयोगो दृष्टः–प्रतिपादितः ।

अपि च—

उस्सग्गसुत्तं किंचि य,किंचि य अववातियं भवे सुत्तं ।
तदुभयसुत्तं किंचि य,सुत्तस्स गमा मुणेयव्वा ॥ २७ ॥

किञ्चिदुत्सर्गसूत्रं, किञ्चित्पुनरपवादिकं सूत्रं, किञ्चित्तदुभयसूत्रम् । तच्च द्विधा–औत्सर्गापवादिकम् अपवादौत्सर्गिकम् । एते सूत्रस्य गमाः प्रकाराश्चत्वारो ज्ञातव्याः । अथवा–गमा नाम–द्विरुच्चारणीयानि पदानि.तद्यथा–उत्सर्गौत्सर्गिकम् अपवादापवादिकम् । एवमेते द्वौ भेदौ चत्वारश्च प्रागुक्ता इत्येवं सूत्रस्य षड् भेदाः संजाताः, एते च पुरस्तादुदाहरिष्यन्ते ।

अन्येऽपि सूत्रस्य भेदा भवन्तीत्याह—

**णेगेसु एगगहणं, सलोमणिल्लोमअकसिणं अइणे ।**
**विहितभिन्नस्स गहणं, अववाउस्सग्गियं सुत्तं ॥ २८ ॥**

अनेकेषु कषायेन्द्रियाश्रवादिष्वर्थेषु यदेकतरेषु क्वापि सूत्रे एकस्यान्यतरस्य ग्रहणं भवेत् , यथा यत्र सूत्रे क्रोधनिग्रह-मात्रादुपदिष्टस्तत्र मानादिनिग्रहादयोऽप्यर्थेन उक्ता द्रष्टव्याः । एवमिन्द्रियाश्रवादिष्वपि भावनीयम् । कानिचित् तु सूत्राणि साधूनां साध्वीनां च प्रत्येकविषयाणि यथैव कल्पाध्ययने सलोमसूत्र वा ।

तद्यथा—

**नो कप्पइ निग्गंथीणं सलोमाइं चम्माइं धारित्तए वा परिहरित्तए वा ॥ ३ ॥ कप्पइ निग्गंथाणं सलोमाइं चम्माइं धारित्तए वा परिहरित्तए वा । से वि याइं परिहारिए नो चेव णं अपरिहारिए । से वि याइं परिभुत्ते नो चेव णं अपरिभुत्ते । से वि याइं एगराइए नो चेव णं अणेगराइए ॥४॥ नो कप्पइ निग्गंथाणं वा निग्गन्थीण वा कसिणाइं चम्माइं धारित्तए वा परिहरित्तए वा ॥५॥**

कानिचित्तु सामान्यसूत्राणि भवन्ति, यथा अकृत्स्नाजिन-विषयं सूत्रम् ।

तच्चेदम्—

**कप्पइ निग्गंथाण वा णिग्गंथीण वा अकसिणाइं चम्माइं धारित्तए वा परिहरित्तए वा ॥ ६ ॥**

अथानानुपूर्व्याऽपि व्याख्यानांगमिति तत्पदयोर्दर्शनार्थं प्रागुक्त-सूत्रपद्धमध्याच्चतुर्थमिदमुदाहरति ' विहिभिन्नस्स य ' इत्यादि, इहैव ग्रन्थे यद् विधिभिन्नस्य ग्रहणमुक्तं तदपवादौत्सर्गिकं सूत्रम् । तच्चेदम्—

**कप्पइ निग्गंथीणं पक्के तालपलंबे भिन्ने पडिगाहित्तए, से वि य विहिभिन्ने नो चेव णं अविहिभिन्ने ॥५॥ (बृ० १ उ० )**

आह-यद्यपवादेनानुज्ञातं तर्हि भूयः कथं प्रतिषिध्यते इ-त्याह—

**उस्सग्गठिइसुद्धं, जम्हा दव्वं विवज्जयं लभति ।**
**ण य तं होइ विरुद्धं, एमेव इमं पि पासामो ॥ २९ ॥**

उत्सर्गस्थित्यानुत्सर्गपदेषु शुद्धमुद्गमादिदोषरहितं यद्भक्त-पानादि द्रव्यं ग्रहीतुं कल्पते तदेवापवादपदे यस्माद्विप-र्यय वैपरीत्यं लभते इत्यर्थः , न च—नैव तथा गृह्यमाणं वि-रुद्धं भवति । ज्ञानादिगुणोपकारकत्वादविरुद्धमेवेति भावः । एवमेवानुमतमपि प्रकृतमथ कल्पते—निर्ग्रन्थीनाम् पक्वं तालप्रलम्बं भिन्नं प्रतिग्रहीतुमित्यपवादेनानुज्ञातस्यापर्यवि-धिभिन्नप्रतिषेधरूपमविरुद्धमेव पश्याम ।

अथात्सर्गापवादिकमाह—

**उस्सग्गोयरम्मि य, निसिज्जकप्पाववादए तिण्हं ।**
**मा संदल मा अट्ठी, अववादुस्सग्गियं सुत्तं ॥ ३० ॥**

औत्सर्गिकं सूत्रं गोचरे प्रविष्टेन गाथागृहद्वयापान्तरा-ले वा निषद्या—निषदनं तद्विषयम् । तच्चेदम्—

**नो कप्पइ निग्गन्थाण वा निग्गन्थीण वा अनन्तरा गि-हंसि वा अ.सइत्तए वा० जाव काउस्सग्गं वा ठाणं ठाइ-त्तए ति ॥**

यत्तु त्रयाणां जराभिभूतादीनां निषद्या कल्पते इत्येवं लक्ष-णं सूत्रं तदपवादिकं सूत्रम् ।

तच्चेदम्—

**अह पुण एवं जाणिज्जा जराजुण्णो वाहिए वाहिओ तव-स्सी मुच्छिज्ज वा एवं एहं कप्पइ अंतरगिहंसि आसइत्तए ।**

इदं पुनरपवादौत्सर्गिकम्-' मसे दल मा अट्ठि ' त्ति-पुद्गलं प्रयच्छ मा अस्थीनि ।

**नो कप्पति य अभिन्नं, अववाएणं तु कप्पती भिन्नं ।**
**कप्पति पक्कं भिन्नं, विधी य अववायउस्सग्गं ॥३१॥**

नो कल्पते अभिन्नं तालप्रलम्बं प्रतिग्रहीतुम् । एतद् वा उ त्सर्गसूत्रम् , यत्पुनरपवादपदेनाध्वादावमौदर्यादिषु भिन्नं प्रतिग्रहीतुं कल्पते इत्येवरूपं तदपवादिकम् । यत्पुनर्निर्ग्र-न्थीनां कल्पते पक्वं तालप्रलम्बं विधिभिन्नं विधिभिन्नमिति सूत्रं तदपवादौत्सर्गिकम् । एतत्प्रागुक्तमपि स्पष्टीकरणार्थ-मिहाभिहितम् ।

इदं त्वौत्सर्गापवादिकम्—

**नो कप्पइ राओ वा वियाले वा सेज्जासंथारयं पडिगा-हित्तए नन्नत्थ एगेणं पुव्वपडिलेहिएणं सिज्जासंथारएणं ।**

इदं पुनरौत्सर्गिकम्—

**नो कप्पइ असणं वा पाणं वा खाइमं वा साइमं वा पढमाए पोरिसीए पडिगाहित्तए पत्थम्मि पोरिसिं उवाइ-णावित्तए से य आहच्च उवाइणाविते सिया जं तं भुंजइ भुंजंतं वा साइज्जइ से आवज्जइ चाउम्मासियं परिहारट्ठाणं उग्घाइयं ।**

तथा येषु सूत्रेष्वपवादो भणितस्तेष्वेवार्थतः पुनरनुज्ञा प्रव-र्त्तते तान्यपवादापवादिकानि ।

किं चान्यत्—

**कत्थइ देसग्गहणं, कत्थति भस्संति णिरवसेसाइं ।**
**उक्कमकमजुत्ताइं, कारणविसओ निउत्ताइं ॥ ३२ ॥**

क्वचित् सूत्रे अभिधेयपदानां देशतो ग्रहणं क्रियते, कुत्रापि च निरवशेषाण्यभिधेयपदानि भण्यन्ते, तथा कानिचित्सूत्रा-ण्युत्क्रमयुक्तानि कानिचित्तु क्रमयुक्तानि कारणवशेन - कारणविशेषमाश्रित्य नियुक्तानि गणधरादिभिः श्रुतधरैर्वि-रचितानि ।

एतदेव विवृणोति—

**देसग्गहणे बीएहिं, सूयिया मूलमादिणो हुंति ।**
**कोहादिअणिग्गहिया, सिंचंति भवं निरवसेसं ॥३३॥**

देशग्रहणे कृते सति तज्जातीयानां सर्वेषामपि ग्रहणं भवति यथा 'सालीणि वा वीहीणि वा' इत्यादावाचारसूत्रे च सूत्रे बी-जग्रहणेन मूलादयोऽपि सदा सूचिता भवन्ति कुत्रापि च सूत्रे निरवशेषाण्यभिधेयपदानि गृह्यन्ते, यथा दशवैकालिके क्रो-धादयोऽनिगृहीताः सन्तो भवं—संसारं निरवशेषं चतु-र्गतिकमपि सिञ्चन्तीत्युक्तम् , तथा च तत्सूत्रम् " कोहो य माणो य अणिग्गहीया,माया य लोभो य पवड्ढमाणा। चत्ता-

रि एए कसिणा कसाया, सिंचंति मूलाइँ पुणब्भवस्स ॥१॥"

अथोत्क्रमक्रमयुक्तानि सूत्राणि दर्शयति--

सत्थपरिण्णा दुक्कम्मं, गोयरपिंडेसणा कमेणं तु ।
जं पि य उक्कमकरणं, तमभिणवधम्ममादिट्ठा ॥३४॥

शस्त्रपरिज्ञाध्ययने तेजःकायोद्देशकानन्तरं वायुकायोद्देशकः क्रमप्राप्तोऽपि नोक्तः; किंतु वनस्पतित्रसकायोद्देशकौ प्ररूप्य पर्यन्ते स भणितः, एवमादिकमुत्क्रमयुक्तं सूत्रमुच्यते । क्वचित् सूत्रे क्रमेणैवार्थपदानि भवन्ति । यथाष्टौ गोचरभूमयः, तद्यथा-"पडाआ अद्धपडा-गोमुत्तिया पतंगवीहिया। संबुक्कावट्टा... बाहिं संबुक्का उज्जगीयं तु पच्चागं।" तथा समापिण्डैषणासूत्रमपि क्रमनिबद्धं मन्तव्यम्; तद्यथा-"संसट्ठा असंसट्ठा उद्धडा अप्पलेवा उग्गहिता पग्गहिता उज्झितधम्मिया।" अथवा पिण्डैषणानि प्रथमं पिण्डपदं ततः पानैषणापदं यथौघनिर्युक्त्यादौ सूत्रे यथाक्रमं प्ररूप्यते ततः क्रमनिबद्धम् । यदपि चोत्क्रमकरणं शस्त्रपरिज्ञाध्ययने तदभिनवधर्माद्यर्थम् । किमुक्तं भवति-अभिनवधर्मा शैक्षः स्वाध्यायपरिणतजिनवचनतया वायुकायस्य परिस्फुटमनुपलभ्यमानतया प्रथमतः प्ररूप्यमाणं न सम्यक् प्रतिपद्यते, अतो वनस्पतित्रसान् प्ररूप्य यदा तेषु सम्यग् जीवत्वं प्रतिपन्नस्तदा वायुकायं जीवत्वेन प्ररूप्यमाणं सुखेनैव श्रद्धत्ते, एवमादिभिः कारणैरुत्क्रमकरणं मन्तव्यम् ।

अथ 'बीएहिँ सूइया मूलमाइणो' त्ति पदं व्याचष्टे--

बीएहिँ कंदमादी, निसूइया तेहिँ सव्ववणकाओ ।
भोम्मादिणा वणाओ, सभेदमारोवणा भणिता ॥३५॥

इहैव सूत्रे बीजग्रहणेन कन्दमूलादयोऽपि भेदाः सूचिताः तेष्वपि निघ्नतः प्रायश्चित्तं भवतीति भावः । तैश्च कन्दादिभिः सर्वोऽपि वनस्पतिकायः पर्याप्तानन्तभेदभिन्नः सूचितः, अनेन तु वनस्पतिना भौमादयः कायाः सूचिताः एवं सभेदाः--भेदसहिताः षडपि कायाः सारोपणाः सप्रायश्चित्ता भणिता अवसातव्याः ।

जत्थ उ देसग्गहणं, तत्थ ऽवसेसाइं सूइयरसेणं ।
मोत्तूणं अहिगारं, अणुयोगधरा पभासंति ॥३६॥

एवमत्रापि यत्र देशग्रहणं तत्रावशेषाण्यर्थपदानि, सूचितस्वभावत्वप्रत्ययः तादृशेनावगन्तव्यानि, तथा कुत्रापि सूत्रे अनुयोगधरा अधिकारं-प्रस्तुतार्थं मुक्त्वा सूत्रानुपातिप्रसङ्गागतमर्थं प्रथमतः प्रभाषन्ते । यथा पिण्डाधिकारप्रस्तुते " पुढवीआउक्काए, तेऊवाऊवणस्सई चेव । बिइय तिइय चउरो, पंचि--दिया य लेवो दसमओ अ ॥१॥" इत्यादिनौघनिर्युक्तौ सविस्तरं कायप्ररूपणा कृता । एवं विचित्राणि सूत्राणि भवन्ति; अत एव यावदर्थोपायमर्थः सूरिणा न व्यक्तीकृतस्तावच्च सम्यगवगममुपगच्छति ।

अथौत्सर्गिकापवादिकसूत्रयोर्विषयविभागमाह--

उस्सग्गेणं भणिया-णि जाणि अववादतो य जाणि भवे ।
कारणजातेन मुणी, सव्वाणि वि जाणितव्वाणि ॥३७॥

उत्सर्गेण यानि सूत्राणि भणितानि यानि चापवादतः सूत्राणि तानि हे मुने ! कारणजातेन सर्वाण्यपि ज्ञातव्यानि । किमुक्तं भवति--प्रतिपिद्धस्याचरणहेतु-कारणं, तच्च ज्ञानादि । तत्र चोत्सर्गसूत्रेषु साक्षादुत्सर्गविषयो निबन्धः, अर्थतस्तु कारणजाते तत्राप्यनुज्ञा मन्तव्या । अपवादसूत्रेषु पुनः कारणजातमुद्दिश्य साक्षादपवादविषयो निबन्धः, अर्थतस्तु तत्राप्युत्सर्गो द्रष्टव्यः । एवं सर्वसूत्रेषु तत्त्वत उत्सर्गापवादावुभावपि निबद्धावधगन्तव्यौ ।

अत्र किं पुनस्तयोः स्वस्थानमित्याह—

उस्सग्गेण निसिद्धा-इँ जाइ दव्वाइँ संथरे मुणिणो ।
कारणजात जाते, सव्वाणि वि ताणि कप्पंति ॥ ३८ ॥

उत्सर्गेण संस्तरणमाश्रित्य यानि द्रव्याणि प्रलम्बादीनि मुनेः-संयतस्य प्रतिषिद्धानि तान्येव कारणजाते-विशुद्धालम्बनप्रकारे जाते-समुत्पन्ने सति सर्वाण्यपि कल्पन्ते ।

अत्र परः प्रश्नयति—

जं चिय पयं णिसिद्धं, तं चिय जति भूयो कप्पती तस्स ।
एवं होइ अणवत्था, ण य तित्थं णेव सच्चं तु ॥ ३९ ॥

यदेव प्रलम्बादिकं प्राक्पूर्वं निषिद्धं तदेव यदि भूयः—पुनरपि तस्य—साधोः कल्पते तत एवं सूत्रार्थस्य यदृच्छाप्रवृत्तौ चरणाकरणस्यानवस्था भवति, ततश्च न तीर्थमनुसज्जति, नैव च प्रतिषिद्धं समाचरतस्तस्य असंयमो भवति, तदभावे दीक्षा निरर्थिका, तन्निरर्थकतायां मोक्षस्याप्यभावः प्राप्नोति ।

अपि च—

उम्मत्तवायसरिसं, खु दंसणं ण वि य कप्पऽकप्पं तु ।
अह ते एवं सिद्धी,ण होज्ज सिद्धी उ कस्सेवं ॥ ४० ॥

आचार्यः पूर्वमेकत्र सूत्रे प्रतिषिध्य पुनस्तदेवानुज्ञायते एवं भवतो दर्शनमुन्मत्तवाक्यसदृशं प्राप्नोति, तथा नापि चेदं कल्प्यमिदमकल्प्यमिति व्यवस्था भवति । यदि चैवमपि प्रवचनः सूत्रानिभिप्रेतार्थसिद्धिर्भवति तर्हि कस्य न सा भवति चरकपरिव्राजकादीनामप्यसमञ्जसप्रलापिनां सा भविष्यतीति भावः ।

सूरिराह—

ण वि किंचि अणुण्णायं, पडिसिद्धं वा वि जिणवरिंदेहिं ।
एसा तेसिं आणा, कज्जे सच्चेण होतव्वं ॥ ४१ ॥

हे नोदक ! यदेतद् भवता प्रलपितं तत्प्रवचनरहस्यानभिज्ञतासूचकम्, यतो जिनवरेन्द्रैस्तीर्थाधिपैः कारणाभावे नापि किंचिदकल्पनीयमनुज्ञातम्, कारणे च समुत्पन्ने नापि किंचित्प्रतिषिद्धं; किंतु एषा तेषां तीर्थकृताम् निश्चयव्यवहारनयद्वयाश्रिता सम्यगाज्ञा मन्तव्या । यदुत कार्ये ज्ञानाद्यालम्बने सत्येन-सद्भावानुसारेण साधुना भवितव्यं न मातृस्थानतो यत्किंचिदालम्बनीयमित्यर्थः । अथवा—सत्यं नाम संयमः तेन कार्ये समुत्पन्ने भवितव्यं यथा यथा संयम उत्सर्पति तथा तथा कर्तव्यमिति भावः ।

आह च बृहद्भाष्यकार —

कज्जं नाणादीयं, सच्चं पुण होइ संजमो नियमा ।
जह जह सो होइ थिरो, तह तह कायव्वयं होइ ॥४२॥

इदमेव भावयति—

दोसा जेण निरुंभं-ति जेण खिज्जंति पुव्वकम्माइं ।
सो सो मोक्खोवाओ, रोगावत्थासु समणं वा ॥ ४३ ॥

येनानुष्ठानवशादशेषा दोषा रागादयो निरुध्यन्ते पूर्वोपार्जितानि कर्माणि येन क्षीयन्ते सोऽनुष्ठानविशेषो मोक्षोपायो ज्ञातव्यः । रोगावस्थासु—ज्वरादिरोगप्रकारेषूपशमनमिवोचितौषधप्रदानाय-व्याधिपरिहारायानुष्ठानमिव, यथा तेन विधीयमानेन ज्वरादिरोगः क्षयमुपगच्छति ; एवमुत्सर्गे उत्सर्गम् ; अपवादे अपवादं समाचरता रागादयो दोषा निरुध्यन्ते पूर्वकर्माणि च क्षीयन्ते । अथवा-यथा कस्यापि रोगिणः पथ्यौषधादिकं प्रतिषिध्यते , कस्यापि पुनः तदेवानुज्ञायते, एवमत्रापि यः समर्थस्तस्याकल्प्यं प्रतिषिध्यते असमर्थस्य तु तदेवानुज्ञायते । उक्तं च भिषग्वरशास्त्रे-"उत्पद्यते हि सावस्था,देशकालामयान् प्रति । यस्यामकार्यं च, कार्यं चापि विवर्जयेत् ॥१॥" एवंविधं चोत्सर्गापवादविभागमगीतार्थो न जानाति । बृ० २ उ० । नि०चू० । उत्सर्गेऽपवादमपवादे वा-उत्सर्गं कुर्यात् इति 'कप्प' शब्दे तृतीयभागे २२३ पृष्ठे गतम् । ) ( पञ्चप्रकारैः सूत्रं वाचयेदिति 'वायणा' शब्दे षष्ठभागे उक्तम् । ) पञ्चभिः स्थानैः सूत्रं शिक्षेदिति 'सिक्खा' शब्देऽस्मिन्नेव भागे गतम् । ) ( दृष्टिवादस्य अष्टाविंशतिसूत्राणि 'दिट्ठिवाय' शब्दे चतुर्थभागे २५१४ पृष्ठे उक्तानि । ) ( पूर्वं सूत्रमर्थो वा इति 'अणुओग' शब्दे प्रथमभागे ३४४ पृष्ठे गतम् । ) इदानीं सुत्तं भण्णति , तथा च-"नंदिमणुओगदारं, विहिवादुवघातियं च णाऊण । काऊण पंचमंगल-मारंभो होति सुत्तस्स ॥१॥ कतपंचनमोक्कारो,करेति सामाइयं ति सोऽभिहितो । सामाइयंगमेव य, जं सो सेसं तु तं वत्थं ॥२॥" प्रागुपदिष्टं च-एत्थ य सुत्ताणुगमे सुत्तालावगणं निप्फण्णो निक्खेवो सुत्तफासियनिज्जुत्ती समकं गमिस्संति । आ० चू० २ अ० । उत्त०। "सुत्तं सुत्ताणुगमो, सुत्तालावगकओ य निक्खेवो । सुत्तप्फासियनिज्जु-त्तिनया समगं तु वच्चंति ॥१॥" कदाचिदपि सूत्रं विषमं न भवति । व्य० १ उ० । नि० चू० ।

सूत्रस्यान्यथा व्याख्याने प्रायश्चित्तम्—

से भयवं ! जं णं केइ आयरिएइ वा गणहरेइ वा अमइ कहिं वि कयाइ तहा संविहाणगमामज इणमो निग्गन्थं पवयणमन्नहा पन्नवेज्ज से णं किं पावेज्जा ? गोयमा! जं सावज्जारिएणं पावियं । महा० ४ अ० ।

यथासूत्रमर्थः करणीयः-

आयरियपरंपरए-ण आगयं जो उ छेयबुद्धीए ।
कोवेइ छेयवाई , जमालिनामं स णासिहिति ॥१२५॥

आचार्याः— सुधर्मस्वामिजम्बूनामप्रभवार्यरक्षिताद्यास्तेषां प्रणालिका-पारम्पर्यं तेनागतं यद् व्याख्यानं—सूत्राभिप्रायः, तद्यथा—व्यवहारनयाभिप्रायेण क्रियमाणमपि कृतं भवति । यस्तु कुतर्कदर्पाध्मातमानसो मिथ्यात्वोपहतदृष्टितया छेकबुद्ध्या-निपुणबुद्ध्या कुशाग्रीयशेमुषीकोऽहमिति कृत्वा कोपयति—दूषयति—अन्यथा तमर्थं सर्वज्ञप्रणीतमपि व्याचष्टे कृतं कृत्यमित्येवं ब्रूयाद् , यस्मात् न हि मृत्पिण्डक्रियाकाल एव घटो निष्पद्यते , कर्मगुणव्यपदेशानामनुपलब्धेः , स एवं छेकवादी—निपुणोऽहमित्येवंवादी—पण्डिताभिमानी जमालिनाश—जमालिनिह्नववत् सर्वज्ञमतविकोपको विनङ्क्ष्यति-अरहट्टघटीयन्त्रन्यायेन संसारचक्रवाले बंभ्रमिष्यतीति । स चामीं जानाति वराकः, यथा अयं लोको घटार्थी क्रिया मृत्खननाद्या घट पर्यायस्योक्ति, (तस्यतः) तासां च क्रियाणां क्रियाकालनिष्ठाकालयोरेककालत्वात् क्रियमाणमेव कृतं भवति । इत्थं चायं व्यवहारो लोके, तद्यथा—अद्यैव देवदत्ते निर्गते कान्यकुब्जं देवदत्तो गत इति व्यपदेशः, ( लोकोक्त्या ) तथा दारुणि छिद्यमाने प्रस्थकोऽयम् ( इति ) व्यपदेश इत्यादि ।

साम्प्रतमन्यथावादिनोऽपायदर्शनद्वारेणोपदेशं दातुकाम आह—

ण करेंति दुक्खमोक्खं, उज्जममाणोऽवि संजमतवेसुं ।
तम्हा अत्तुक्करिसो, वज्जेअव्वो जतिजणेणं ॥ १२६ ॥

यो हि दुर्गृहीतविद्यालवदर्पाध्मातः सर्वज्ञवचनैकदेशमप्यन्यथा व्याचष्टे स एवंभूतः सन् संयमतपस्सूद्यमं कुर्वाणोऽपि शारीरमानसानां दुःखानामसातादयजनितानां मोक्षं-विनाशं न करोति आत्मगर्वाध्मातमानसः, यत एवं तस्मादात्मोत्कर्षः अहमेव सिद्धान्तार्थवेदी, नाऽपरः कश्चित् मत्तुल्योऽस्तीत्येवंरूपोऽभिमानो वर्जनीयः-त्याज्यो यतिजनेन—साधुलोकेन । अपरोऽपि ज्ञानिना जात्यादिको मदो न विधेयः, किं पुनर्ज्ञानमदः ?, तथा चोक्तम्-"ज्ञानं मददर्पहरं, माद्यति यस्तेन तस्य को वैद्यः ? । अगदो यस्य विषायति, तस्य चिकित्सा कथं क्रियते ?॥१॥" सूत्र०१ श्रु०१३अ० । (सूत्रं दयनया ऽर्धाष्टमासिति 'सज्झाय' शब्दे) (सूत्रार्थयोः को महान् इति ' अइसेस ' शब्दे प्रथमभागे २४ पृष्ठे गतम् । ) ( सूत्रमर्थो वा बलवान् इति 'बल' शब्दे तृतीयभागे ७६६ पृष्ठे उक्तम् । ) यस्य सूत्रस्य कर्त्ता नोपलभ्यते तस्य गणधरः । प्रति० । सूत्रं पञ्चविधं संज्ञासूत्रादि । बृ० ।

प्रथमतः संज्ञासूत्रमाह—

उवयारअनिट्ठुरया, कज्जित्थीदाण मा हु निच्छुक्का ।
जं छए आमगंधा-दिआरं सण्णासुयं तणं ॥ ३१६ ॥

यत्सामायिकसंज्ञया सूत्रं भण्यते तत् संज्ञासूत्रम् , यथा 'जे छए से सागारियं परिहरे' तथा 'आमगंधा' इति.'सव्वामगंधं परिन्नाय निरामगंधो परिव्वए' तथा 'आरं' ति-आरं दुगुणेणं पारं एगगुणेणमिति'यः छेकः स सागारिकं मिथुनं 'परिहरे' परिवर्जयति, तथा आमशब्दः अविशोधिकोटिः गन्धं-विशोधिकोटिः, परिज्ञा द्विविधा-ज्ञपरिज्ञा, प्रत्याख्यानपरिज्ञा च । तत्र ज्ञपरिज्ञया सर्वमामगन्धं परिज्ञाय, प्रत्याख्यानपरिज्ञया च प्रत्याख्याय निरामगन्धः सन् परि-समन्तात् परिव्रजेत् अप्रतिबद्धो विहरेदित्यर्थः। आरः-संसारस्तद् द्विगुणेन रागेण द्वेषेण च परिवर्जयति । पारं-मोक्षस्तमेकेन गुणेन रागद्वेषपरिहारलक्षणेन साधयति । अथ कः संज्ञासूत्रेण गुण इत्यत आह—'उवयार' त्यादि पूर्वोक्ते संज्ञावचने हि कचिज्जुगुप्सितेऽर्थे प्रयुज्यमाने तद्विषयमुपचारवचनं भवति । उपचारवचनेन च भण्यमाने तस्मिन् जुगुप्सितेऽर्थे न निष्ठुरतेति अनिष्ठुरता, तथा कार्ये समापतिते स्त्रियाः सा सूत्रदानमाहुः पूर्वसूरयः, ततस्तस्याः साधुसमीपे पठन्त्याः सुखेनालापको दीयते । अन्यथा व्यक्तमभिधीयमाने कथं भि-

ज्ञा भवति । ततः सा निश्छिका-निर्लज्जा जायते । यादृशं च कार्ये साध्वीसमीपे पठति तदुपरिष्टाद्वक्ष्यते तत्र संज्ञा-सूत्रमिष्यते । कारकसूत्रं नाम यथा आह-" कम्मं न भुञ्जमाणे से समणे णिग्गंथे कइ कम्मपगडीओ बंधति, गोयमा ! आउयवज्जाओ सत्त कम्मपगडीओ बंधति । से केणट्ठेणं भंते ! एवं वुच्चइ" इत्यादि,प्रश्नसंगालापकः । ननु सर्वज्ञप्रामाण्यादेवैतत् श्रद्धीयते यथाऽऽधाकर्मभुञ्जान आयुर्वर्जानां सप्तानां कर्मप्रकृतीनां बन्धकस्ततः कस्मादुच्यते केनार्थेन भदन्त ! एवमुच्यते इत्यादि ।

तत्र आह—

सव्वण्णुप्पामण्णा, जइ वि य उस्सग्गतो सुयपसिद्धी ।
वित्थरओऽपायाण य, दरिसणमिइ कारगं तम्हा ।३२०।

यद्यपि सर्वज्ञप्रामाण्यादुत्सर्गेण एकान्तेन श्रुतस्य सर्वस्यापि प्रसिद्धिः तथापि विस्तरतोऽपायानां दर्शनं स्यादिति, तस्मादधिकृतार्थप्रसिद्धिकारकम् ' से केणट्ठेणं ' इत्यादिसूत्रमुपन्यस्यते ।

इदानीं प्रकरणसूत्रमाह—

पगरणओ पुण सुत्तं, जत्थ उ अक्खेवनिण्णयपसिद्धी ।
नमि गोयमकेसिज्जा, अद्दगनालंदइज्जाय ॥ ३२१ ॥

प्रकरणात् सूत्रं नाम यत्र—स्वसमय एवाक्षेपनिर्णयप्रसिद्धिरुपवर्ण्यते, यथा नमिप्रव्रज्या गौतमकेशीयम्, आर्द्रकीयनालन्दीयमिति । तदेवमुक्तं संज्ञादिभेदतश्चतुःप्रकारं सूत्रम् । बृ० १ उ० १ प्रक० । ( उत्सर्गापवादभेदतो द्विविधसूत्राणि ' उस्सग्ग ' शब्दे द्वितीयभागे ११६७ पृष्ठे गतानि । )

सन्नाईं सुत्तसमय, परसमओसग्गमेव अववाए ।
हीणाहियजिणथेरे, अज्जाकाले य वयणाई ॥४२१॥

इह मौनीन्द्रे प्रवचने अनेकधा सूत्राणि भवन्ति तत्र किञ्चित् संज्ञासूत्रं यथा " जे छेए से सागारियं न सेवे " यश्छेकः-पण्डितः स सागारिकं मैथुनं न सेवेत । अथवा- ' सव्वामगंधं परिन्नाय निरामगंधो परिव्वए ' आमम्-अविशोधिकोटिः गन्धं-विशोधिकोटिः, तथा " आरं दुगुणेणं पारं एगगुणेणं " आरं संसारस्तं द्विगुणेन रागद्वेषयुगलेन पारं निर्वाणं तदेकगुणेन रागद्वेषपरिहारलक्षणेन जीवः प्राप्नोतीति गम्यते,आदिग्रहणाद्दृष्टिभावाभिनयतं सूत्रं गृह्यते,यथा "दिगिंछा परीसहे" दिगिंछेति-बुभुक्षा स्वसमयसूत्रं यथा "करेमि भंते! सामाइयमि"त्यादि परसमयसूत्रं यथा"पंचखंधे वयंतेगे,बालाउ खणजोइणो।"उत्सर्गसूत्रं यथा"अभिक्खणं निव्विगयं गया य"इत्यादि अपवादसूत्रं यथा-'तिण्ह सन्नवरागस्स, निसिज्जा जस्स कप्पई । जराए अभिभूयस्स,वाहियस्स तवस्सिणो"हीनमिति-हीनाक्षरं यैरक्षरैर्विना सूत्रस्यार्थो न पूर्यते।अधिकमित्यधिकाक्षरम् ,एवंविधं यत्पूर्वमज्ञानतः सूत्रमधीतं तस्यार्थं सम्यगवगम्य हीनं प्रतिपूरयति अधिकं परित्यजति । जिनकल्पिकसूत्रं यथा-" तिगिच्छं न भिसं दिज्जा, संचिक्खत्तगवेसए । एवं खु तस्स सामण्णं, जं न कुज्जा न कारवे।"स्थविरकल्पसूत्रं यथा-'भिक्खू इच्छिज्जा अन्नयरं तेगिच्छं आउं दित्तए"अथवा-जिनकल्पस्थविरकल्पयोः सामान्यसूत्रमिदम्-' संसट्ठकप्पेण चरिज्ज भिक्खू' आर्यासूत्रं यथा-'कप्पइ निग्गंथीणं अंतोलित्तं घडिमत्तयं धारित्तए"काले' त्ति--कालविषयं किमपि सूत्रं यथा--अनागतं कालमङ्गीकृत्य ।"नयालभेज्जा निउणं सहायं,गुणाहियं वा गुणओ समं वा ।" इत्यादि । 'वयणाइं'ति-वचनमेकद्विबहुवचनादिकं षोडशधा यथा--पीठिकायां तथा तत्प्रतिपादकं सूत्रं-यथा आचाराङ्गे भाषाध्ययने 'एगवयणं वयमाणे एगवयणं वएज्जा दुवयणं वयमाणे दुवयणं वएज्जा बहुवयणं वयमाणे बहुवयणं वइज्जा इत्थीवयणं वयमाणे इत्थीवयणं' "इत्थी" इत्यादि आदिशब्दाद्भूयः सूत्रादिपरिग्रहः । इत्थमनेकधा सूत्राणां संभवे तदर्थश्रवणमन्तरेण न शक्यते कीदृशमिति विवेकः कर्तुमिति कर्तव्यमर्थग्रहणम् । अथ ते शिष्या ब्रूयुः । यः कण्ठतः सूत्रे निबद्धोऽर्थस्तेनैव वयं तुष्टाः किमस्माकं दुरधिगमत्वाद्बहुपरिक्लेश 'मज्जणनिसणअक्खा ' इत्यादि प्रक्रियापुरस्सरमर्थग्रहणप्रयासेनेति ते इत्थं ब्रुवाणाः प्रज्ञापयितव्याः ।

कथमित्याह—

जे सुत्तगुणा खलु ल-क्खणम्मि कहिया उ सुत्तमाई य ।
अत्थग्गहणमराला, तेहिं चिय पन्नविज्जंति ।४२२॥

पीठिकायां लक्षणद्वारे ये सूत्रस्य गुणाः " निद्दोसं—सारवंतं च " इत्यादिना कथिताः । यद्वा--' सुत्तमाई य ' त्ति--" सुत्तं तु सुत्तमेव उ" इत्यादिना प्रतिपादिताः तैरेव हेतुभिरर्थग्रहणे मरालाः अलसाः शिष्याः प्रज्ञाप्यन्ते । यथा भो भद्रा ! निर्दोषसारवद्धेत्वलङ्कारादयः सूत्रस्य गुणा भवन्ति । ते च यथाविधं गुरुमुखाच्छ्रूयमाणा एव प्रकटीभवन्ति। किञ्च यथा-द्वासप्ततिकलापण्डितो मनुष्यः प्रसुप्तः सन् किञ्चित् तासां कलानां जानीते एवं सूत्रमप्यर्थेनाबोधितं सुप्तमिव द्रष्टव्य विचित्रार्थनिबद्धानि सोपस्काराणि च सूत्राणि भवन्ति, अतो गुरुसम्प्रदायादेव यथावदवसीयन्ते यतः, तत इत्थं युक्तियुक्तैर्वचोभिः प्रज्ञापितास्ते विनेयाः प्रतिपद्यन्ते गुरूणामुपदेशं गृह्णन्ति द्वादश वर्षाणि विविधमर्थमिति । गतमर्थग्रहणद्वारम् । बृ० १ उ० २ प्रक० । लक्षण, स० २६ सम० । धर्मार्थकामार्जनोपायप्रतिपादनपरे ग्रन्थे, आ० म० १ अ० । सूक्त-न० । सुभाषिते, अष्ट० ६ अष्ट० ।

**सुत्तक**--सूत्रक--न० । कटीसूत्रके,प्रश्न० ४ आश्र० द्वार ।

**सुत्तकड**--सूत्रकृत--न०।सूत्रानुसारेण तत्त्वावबोधः क्रियते अस्मिन्निति ।स्थानाङ्गव्याख्याने द्वितीयेऽङ्के,सूत्र०१श्रु०१ अ० १ उ० ।

**सुत्तकप्प**--सूत्रकल्प--पुं०। सूत्राध्ययनसामाचार्याम् ,पं० भा०।

... ... ... अधुणा,सुत्तकप्पं तु वोच्छामि ।
जे तस्स होंति विधयो, अहिज्जए जेण वा विधिणा ॥
दुविहम्मि आगमम्मि, सुत्ते अत्थे य जे जहिं भावा ।
सुत्तमसुत्तकडाणं, पवित्थरं ताण अत्थेणं ॥
वित्थरो णाम सुत्तम्मि, गहिए अत्थो तु दिज्जती ।
सुत्ते अहिज्जियव्वे य, मज्जादा तु इमा भवे ॥
पडिलेहणं काऊणं, सज्झायं पट्ठवे तुवड्ढादि ।
आयरियादि णिसेज्जं, करेति पच्छा य सज्झायं ॥
पोरुसि सातुं सातुं, चरमाए पुडियपत्तपडिलेहे ।
ताहे तु अत्थपोरुसि, इमिणा विहिणा करेंती तु ॥

काउस्सग्गोवक्खे-वणा य विकहा विमोत्तिया पयतो ।
अब्भुट्ठाणे वा कां-लणा य अक्खेवमाहरणा ॥
अण्णो वि य सुत्तकप्पो, मो इब्भगमंडलीयराइणिए ।
अणुओगधम्मताए, किंतिकम्मं होति कायव्वं ॥
पं० भा० ४ कल्प ।

इयाणिं सुत्तकप्पगाहा—दुविहंमि एय सुत्ते, अत्थे य । दुविहे यागमे जहिं भावणत्तिया सुत्तं सुत्तकप्पस्स दिजइ । पविसित्थरओ नाम-सुत्ते गाहिए ताहे अत्थो दिजइ अंजण अहिज्जियं । गाहा—काउस्सग्गं सुत्त पढियव्वं । मज्झाया भणइ—पडिलेहेऊण गुरुपरिणामाईयं उवट्ठिओ सज्झायं पट्ठवेउं निसज्जं आयरियाणं काऊणं पच्छा सज्झायपट्ठवणियाए काउस्सग्गं कए समाणे वक्खेवो न कायव्वो । विकहाओ य इत्थीकहाइयाओ । विमोत्तिया नाम—जं मोत्ताहीणंति, अब्भुट्ठाणं वाउलणा जइ अब्भुट्ठेइ सुत्तपोरुसीए मासलहुं, अत्थपोरुसीए मासगुरु । आयरिओ उवउत्तो आलावयं देइ अंगा वा उवदिसइ, पच्छा वाउलणादोसेण भंगयागाहणातो फिट्टइ । अणुओगमंडलीए वि पट्ठवियाए जस्स सकासे सुयं तं मा लूण स पव्वावणायरियस्स वि न उट्ठइ, दिट्ठंतो तित्थकरो । आयरिओ तित्थकरट्ठाणे इयरे गणहरट्ठाणे निसामेंतया किंचि अब्भुट्ठाणं वाउलणाए दोसा । आयरिओ अक्खेवा आहरणा वा उस्सग्गेण वा अववाएण वा आरोवणाओ वा दंसिउ काउं तओ वा गेण्हिउकामा वाउलणादोसेणं न गिण्हंति दिट्ठंतो अत्थारियाए । जहा एगस्स कुडुंबियस्स धणं जाए अत्थारियाओ पारियावेण य सयं च सेयहत्थी दिट्ठो । भणियं च णेण—अहो सेयहत्थी दरिसणिज्जो ते लायया तओ वुत्ता य, जोइया दिवसो हत्थिकहाए चेव गओ । तं पि छेत्तं न लूणं । एवमत्थमंडलीए वि विसोत्तियादोसेण आहारेंतो वि न आहारेइ भणंतस्स वा पराहुस्सइ । विइयपए जहा पलंबसुत्ते समत्ते ववहारस्स वा पढमसुत्ते समत्ते आरोवणासु वा समत्तासु कालवेलासु वा जस्स वा पासे अणुओगो सुओ एवमाइकज्जेसु अब्भुट्ठाणं । अण्णो वि य सुयकप्पो गाहा-अण्णो वि य सुयकप्पो सो य रायणियाए जो य उट्ठियाण अणुओगमंडलीओ अणुभासइ तस्स किइकम्मं कायव्वं । एत सुयकप्पो । पं० चू० ४ कल्प ।

सुत्तकप्पिय-सूत्रकल्पिक-पुं० । सूत्रसामाचारीज्ञातरि , बृ० ।

सूत्रकल्पिकमाह—

सुत्तस्स कप्पितो खलु, आवस्सगमादि जाव आयारो ।
तेण परं चरिमादी, पकप्पमादीणि भावेणं ॥ ४०८ ॥

आवश्यकमादिं कृत्वा यावदाचारस्तावत्सर्वोऽपि सूत्रस्य कल्पिको भवति न खल्वेतावत् सूत्रं यावत्कोऽपि पठन् विनिवार्यते , ततः परं त्रिवर्षप्रव्राजितमादिं कृत्वा यत् यत् व्यवहारं दशमोद्देशकपर्यन्तं यथा भणितं तथा उपदिश्यते यावद्विंशतिवर्षपर्याय सर्वश्रुतानुपाती भवति । न चरमाचारप्रकल्पमादिं कृत्वा यान्यपवादबहुलान्यध्ययनानि यानि चातिशायीन्यरुणोपपातप्रभृतीनि, यदा भावे परिणतो भवति तदोपदिश्यन्ते ।

त्रिषु वर्षेष्वपरिपूर्णेष्वाचारं पठिते किं कुर्यादत आह-

सुत्तं कुणति परिणतं, तदत्थगहणं पइण्णगाइं वा ।
इति अंगज्झयणेसुं, होति कमो जाइणो नायं ॥ ४०९ ॥

यत्पठितं सूत्रं तत्परिचितं कुर्यात् । अथवा—तस्य सूत्रस्यार्थग्रहणं विदध्यात्प्रकीर्णकानि वा सूत्रतोऽर्थतश्चाधीते एवमङ्गानामध्ययनानां चातिशायिनां यावत् कल्पिको भवति तावदेव क्रमो ज्ञातव्यः । जाहकज्ञातं चात्र—पूर्वोपन्यस्तमुपन्यसनीयम् । जाहक इव परिजितौ सूत्रार्थौ कुर्यादिति भावार्थः । बृ० १ उ० १ प्रक० ।

सुत्तणिवकहाणग-सुप्तनृपकथानक-न० । शय्यापालकशिक्षितनृपतिश्रव्याऽऽख्यायिकायाम् , पो० ६ विव० । ( 'सुस्सूसा' शब्देऽस्मिन्नेव भागे कथनकं वक्ष्यामि । )

सुत्तणिबद्ध-सूत्रनिबद्ध-न० । शासनोक्ते, पञ्चा० १८ विव० ।

सुत्तणिवाय-सूत्रनिपात-पुं० । सूत्राधितारे , बृ० १ उ० २ प्रक० ।

सुत्तणीइ-सूत्रनीति-स्त्री० । आगमन्याये , पञ्चा० १ विव० ।

सुत्तत्थ-सूत्रार्थ-पुं० । सूत्रं च अर्थश्च निर्युक्तिभाष्यसंग्रहवृत्तिचूर्णिपर्यायकादिरूप इति सूत्रार्थौ । शब्दार्थयोः, स० ६ सम० । दश० ।

सुत्तत्थकप्पिय—सूत्रार्थकल्पिक-पुं० । सूत्रार्थतदुभयसामाचारीज्ञातरि, बृ० ।

अधुना तदुभयकल्पिकमाह—

तदुभयकप्पियजुत्तो, तिगम्मि एगाहिएसु ठाणेसुं ।
पियधम्मवज्जभीरू, आवस्सं अज्झाइएहिं ॥ ४११ ॥

तदुभयं सूत्रमर्थं च तस्मिन् कल्पिको युक्तः । किमुक्तं भवति-यो द्वावपि सूत्रार्थौ युगपद् ग्रहीतुं समर्थः स तदुभयकल्पिकः । अथवा-तदुभयकल्पिकः-त्रिके एकाधिकयोः स्थापनयोर्युक्तः । त्रिकं नाम-सूत्रमर्थस्तदुभयं च । तत्र सूत्रादर्थोऽधिकः , अर्थादधिकमुभयम् । एवमेकस्मादर्थाधिके ये उभे स्थाने सूत्रार्थरूपे तत्र युक्तो योग्यः तदुभयकल्पिकः । अथवा—प्रियधर्मा इति अत्रापि भङ्गाः सूचिताः । प्रियधर्मा नाम एको न दृढधर्मा । दृढधर्मा नामैको न प्रियधर्मा । एकः प्रियधर्माऽपि दृढधर्माऽपि । एको न प्रियधर्मा नापि दृढधर्मा । अत्र चतुर्भङ्गा यस्तु शेषभङ्गत्रिके यत एकस्मादेकैकगुणयुक्तात् स्थानात् प्रथमभङ्गरूपात् द्वितीयभङ्गरूपाद्वा ये अधिके स्थाने प्रियधर्मत्वदृढधर्मत्वलक्षणे तयोर्युक्तः स च निसमादवद्यभीरुर्भवति । अवद्यं-कर्म तस्माद्भीरुस्तत आह 'वज्जभीरू " स तदुभयकल्पिकः । अत्रौपम्यमार्यवज्रैर्बालभावे कर्णाभ्याहतं सर्वं कृतवान् , पश्चात्तस्य उद्दिष्टसमुद्दिष्टमनुज्ञानमर्थश्च तदैव द्वितीयायां पौरुष्यां कथितं एवमन्यस्यापि द्रष्टव्यम् ।

तथा चाह—

पुव्वभवेऽपि अहीयं, कण्णाहडगं च बालभावम्मि ।
उत्तममेहाविस्स वि, दिज्जति सुत्तं पि अत्थो वि ॥४१२॥

यस्य पूर्वभवेऽधीतमागच्छति, बालभावे वा कर्णाहृतं कृतं तस्य उत्तममेधाविनो वा युगपत्सूत्रमपि अर्थोऽपि च दी-

यत्र एष उभयकल्पिकः । बृ० १ उ० १ प्रक० । सं० ।

सुत्तत्थकहणा-सूत्रार्थकथना-स्त्री० । व्याख्याने, ध० ३ अधि० ।

सुत्तत्थकोसल-सूत्रार्थकौशल-न० । सूत्रार्थतदुभयपरीक्षणे, दर्श० । सूत्रम्-जिनागमः तत्र कौशल्यं कुशलतां जानाति यथेदं पूर्वापराव्याहतत्वेन जिनशासनमेव । यत्पुनरन्यादृशं स्मृतिवेदवाक्यादिवत् पूर्वापरव्याहतियुक्तं न तदागम इति । कुशलविषयविभागदर्शिनि उत्सर्गापवादज्ञातरि, दर्श० ३ तत्त्व ।

सुत्तत्थगहियपेयाल-सूत्रार्थगृहीतपेयाल-त्रि० । सूत्रार्थयोर्गृहीतं पेयालं-परिमाणं येन स सूत्रार्थगृहीतपेयालः । सम्यग्विनिश्चितसूत्रार्थे, व्य० ३ उ० ।

सुत्तत्थतदुभयविउ-सूत्रार्थतदुभयविद्-पुं० । सूत्रं च अर्थश्च तदुभयं चेति तच्च तत्सूत्रार्थलक्षणम्, उभयं च सूत्रार्थतदुभयानि विदन्तीति सूत्रार्थतदुभयविदः । सूत्र चिन्तायां सूत्रस्यार्थचिन्तायाम् अर्थस्य तदुभयचिन्तायां तदुभयस्य ज्ञातरि, व्य १ उ० ।

सुत्तत्थपडिबद्ध-सूत्रार्थप्रतिबद्ध-त्रि० सूत्रार्थयोः प्रतिबद्धः सूत्रार्थप्रतिबद्धः । गृहीतसूत्रार्थे, नि० चू० १० उ० ।

सुत्तत्थपरूवणा-सूत्रार्थप्ररूपणा-स्त्री० । सूत्रार्थतदुभयानां कथने, सुत्तं वा अत्थं वा तदुभयं वा परूवेज्जा कुलगणसंघवज्झो' । महा० १ चू० ।

सुत्तत्थविय-सूत्रार्थविद्-पुं० । उचितसूत्रार्थज्ञातरि, ध० ३ अधि० ।

सुत्तत्थभासय-सूत्रार्थभाषक-पुं० । सूत्रार्थं प्रवचनार्थं भाषते वक्ति इति सूत्रार्थभाषकः । यथावस्थितागमार्थप्रज्ञापके सूत्रस्यार्थस्य तदुभयस्य च ज्ञापके, ध० ३ अधि० । पं० चू० ।

सुत्तत्थविसारय-सूत्रार्थविशारद-पुं० । सूत्रार्थयोर्विशारदः सूत्रार्थविशारदः । व्य० ३ उ० । सम्यक्सूत्रार्थतदुभयकुशले, व्य० २ उ० । पं० भा० । पं० चू० । सूत्रस्यार्थस्य तदुभयस्य च ज्ञापके, नि० चू० १ उ० ।

सुत्तत्थाणुसरण-सूत्रार्थानुस्मरण-न० । सूत्रार्थयोरनुचिन्तने, पञ्चा० १८ विव० ।

सुत्तदोस-सूत्रदोष-पुं० । द्वात्रिंशत्सूत्रदोषे, विशे० । अनु० ।

सुत्तधर-सूत्रधर-पुं० । सूत्रमात्रपाठके, स्था० ४ ठा० १ उ० ।

सुत्तपरिकुट्ठ-सूत्रपरिकुष्ट-त्रि० । आगमनिषिद्धे, प्रश्न० ३ संव० द्वार ।

सुत्तपेढिया-सूत्रपीठिका-स्त्री० । निशीथकल्पव्यवहारप्रथमपीठिकागाथारूपायां पीठिकायाम्, व्य० १ उ० । नि० चू० ।

सुत्तपोरिसी-सूत्रपौरुषी-स्त्री० । सिद्धान्तोक्तविधिना स्वाध्यायप्रस्थापने, इयं च मण्डली सूत्रमण्डलीत्युच्यते सा चार्धपौरुषीप्रमाणेति । आद्या पौरुष्यपि सूत्रपौरुषीत्युच्यते । ध० ३ अधि० । प्रव० ।

सुत्तफासियणिज्जुत्ति-सूत्रस्पर्शिकनिर्युक्ति-स्त्री० । सूत्रं स्पृशतीति सूत्रस्पर्शिका, सा च निर्युक्तिश्चेति सूत्रस्पर्शिकनिर्युक्तिः । सूत्रव्याख्याने, "अहुणा सुत्तफासियणिज्जुत्ती सुत्तवक्खाणं" विशे० । आ० म० । ( 'णिज्जुत्ति' शब्दे चतुर्थभागे २०६१ पृष्ठे दर्शितैषा । )

सुत्तफा(प्फा)सियणिज्जुत्तिअणुगम-सूत्रस्पर्शिकनिर्युक्त्यनुगम-पुं० । सूत्रावयवानां नयैः साक्षेपपरिहारमर्थकथने, आ० चू० १ अ० । अनु० ।)

से किं तं सुत्तप्फासियनिज्जुत्तिअणुगमे ?, सुत्तप्फासियणिज्जुत्तिअणुगमे सुत्तं उच्चारेअव्वं अक्खलिअं अमिलिअं अव्वच्चामेलिअं पडिपुण्णं पडिपुण्णघोसं कंठोट्ठविप्पमुक्कं गुरुवायणोवगयं, तओ तत्थ णज्जिहिति ससमयपयं वा परसमयपयं वा बंधपयं वा मोक्खपयं वा सामाइअपयं वा णोसामाइअपयं वा । तओ तम्मि उच्चारिए समाणे केसिं च णं भगवंताणं केइ अत्थाहिगारा अहिगया भवन्ति, केइ अत्थाहिगारा अणहिगया भवन्ति, ततो तेसिं अणहिगयाणं अहिगमणट्ठाए पयं पएणं वण्णइस्सामि- "संहिया य पदं चेव, पयत्थो पयविग्गहो । चालणा य पसिद्धी अ, छव्विहं विद्धि लक्खणं ॥ १ ॥" से तं सुत्तप्फासियनिज्जुत्तिअणुगमे । ( सू० १५५ + )

आह—ननु यदि यथोक्तनीत्या सूत्रानुगमे सत्येव सूत्रस्पर्शिकनिर्युक्त्या प्रयोजनं, तर्हि किमित्यसावुपोद्घातनिर्युक्त्यनन्तरमुपन्यस्ता ?, यावता सूत्रानुगमं निर्दिश्य पश्चात्किमिति नोच्यते ?, सत्यं किन्तु-निर्युक्तिसाम्यात्प्रस्ताव एव निर्दिष्टेत्यदोषः । प्रकृतमुच्यते—तत्रास्खलितादिपदानां व्याख्या यथैव प्राग्द्रव्यावश्यकविचारे कृता तथैव द्रष्टव्या, अयं च सूत्रदोषपरिहारः शेषसूत्रलक्षणस्योपलक्षणम्, तच्चेदम्--

"अप्पग्गंथमहत्थं, बत्तीसदोसविरहियं जं च ।
लक्खणजुत्तं सुत्तं, अट्ठहि य गुणेहि उववेयं ॥ १ ॥"

अस्या व्याख्या--अल्पग्रन्थं च तत् महार्थं चेति समाहारद्वन्द्वः 'उत्पादव्ययध्रौव्ययुक्तं सदि' त्यादिवत्सूत्रमल्पग्रन्थं महार्थं च भवतीत्यर्थः, यच्च द्वात्रिंशद्दोषविरहितं तत्सूत्रं भवति, के पुनस्ते द्वात्रिंशद्दोषाः ये सूत्रे वर्जनीयाः ?, उच्यते--

"अलियमुवघायजणयं, निरत्थयमवत्थयं छलं दुहिलं ।
निस्सारमहियमूणं, पुणरुत्तं वाहयमजुत्तं ॥ १ ॥
कमभिन्नवयणभिन्नं, विभत्तिभिन्नं च लिंगभिन्नं च ।
अणभिहियमपयमेव य, सहावहीणं ववहियं च ॥ २ ॥
कालजतिच्छविदोसो, समयविरुद्धं च वयणमित्तं च ।
अत्थावत्तीदोसो, नेओ असमासदोसो य ॥ ३ ॥
उवमारूवगदोसो, निद्देसपयत्थसंधिदोसो य ।
एए अ सुत्तदोसा, बत्तीसा हुंति नायव्वा ॥ ४ ॥"

तत्रानृतमभूतोद्भावनं भूतनिह्नवश्च, यथा 'ईश्वरकर्तृकं

जगदि' त्याद्यभूतोद्भावनं, नास्त्यात्मेत्यादिकस्तु भूतनिह्नव १, उपघातः-सत्त्वघातादिः, तज्जनकं यथा वेदविहिता हिंसा धर्मायेत्यादि २, निरर्थकं यत्र वर्णानां क्रमनिर्देशमात्रमुपलभ्यते न त्वर्थो, यथा अ आ इ ई इत्यादि डित्थादिवद्वा ३, असम्बद्धार्थकमपार्थकं यथा दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डस्त्वरकीटके दिशमुदीचीमित्यादि ४, यत्राभिष्टस्यार्थान्तरस्य सम्भवतो विवक्षितार्थोपघातः कर्तुं शक्यते तच्छलं यथा—नवकम्बलो देवदत्त इत्यादि ५, अस्तुनामहितोपदेशकत्वेन पापव्यापारपोषकं द्रुहिलं यथा "एतावानेव लोकोऽयं, यावानिन्द्रियगोचरः। भद्रे! वृकपदं पश्य, यद्वदन्त्यबहुश्रुताः ॥ १ ॥ पिब खाद च चारुलोचने!, यदतीतं वरगात्रि! तन्न ते। न हि भीरु! गतं निवर्तते, समुदयमात्रमिदं कलेवरम् ॥ २ ॥" इत्यादि ६. घटवचनादिवत् तथाविधयुक्तिरहितं परिफल्गु निःसारम् ७, अक्षरपदादिभिरतिमात्रमधिकम् ८, तैरेव हीनम्-ऊनम्, अथवा हेतो-, दृष्टान्तस्य वाऽऽधिक्ये सत्यधिकं, यथा—अनित्यः शब्दः कृतकत्वप्रयत्नानन्तरीयकत्वाभ्यां घटपटवदित्यादि, एकस्मिन् साध्ये एक एव हेतुर्दृष्टान्तश्च वक्तव्यः, अत्र च प्रत्येक द्वयाभिधानादाधिक्यमिति भावः। हेतुदृष्टान्ताभ्यामेव हीनम्—ऊनं, यथा अनित्यः शब्दो घटवदिति, यथा अनित्यः शब्दः कृतकत्वादित्यादि ९, पुनरुक्तं द्विधा—शब्दतोऽर्थतश्च, तथाऽर्थादापन्नस्य पुनर्वचनं पुनरुक्तं, तत्र शब्दतः पुनरुक्तं यथा घटो घट इत्यादि, अर्थतः पुनरुक्तं यथा घटः कुटः कुम्भ इत्यादि, अर्थादापन्नस्य पुनर्वचनं यथा-पीनो देवदत्तो दिवा न भुङ्क्ते इत्युक्ते अर्थादापन्नं रात्रौ भुङ्क्ते इति, तत्रार्थापन्नमपि य एतत्साक्षाद् ब्रूयात्तस्य पुनरुक्तता १०, व्याहतं यत्र पूर्वेण परं विहन्यते यथा- 'कर्म चास्ति फलं चास्ति, कर्ता न त्वस्ति कर्मणा' मित्यादि ११, अयुक्तमनुपपत्तिक्षमं यथा—'तेषां कटतटभ्रष्टैर्गजानां मदबिन्दुभि' रित्यादि १२, क्रमभिन्नं यत्र क्रमो नाराध्यते यथा--स्पर्शनरसनघ्राणचक्षुःश्रोत्राणामर्थाः स्पर्शरसगन्धरूपशब्दा इति वक्तव्ये स्पर्शरूपशब्दगन्धरसा इति ब्रूयात् इत्यादि १३, वचनभिन्नं यत्र वचनव्यत्ययो यथा वृक्षाः ऋतौ पुष्पित इत्यादि १४, विभक्तिभिन्नं यत्र विभक्तिव्यत्ययो यथा वृक्षं पश्य इति वक्तव्ये वृक्षः पश्य इति ब्रूयादित्यादि १५, लिङ्गभिन्नं यत्र लिङ्गव्यत्ययो यथा अयं स्त्रीत्यादि १६, अनभिहितं स्वसिद्धान्तानुपदिष्टं यथा सप्तमः पदार्थो वैशेषिकस्य, प्रकृतिपुरुषाभ्यधिकं साङ्ख्यस्य, दुःखसमुदायमार्गनिरोधलक्षणाच्चतुरार्यसत्यातिरिक्तं वा बौद्धस्येत्यादि १७, यत्रान्यच्छन्दोऽधिकारेऽन्यच्छन्दोऽभिधानं तदपदम्, यथाऽऽर्यापदेऽभिधातव्ये वैतालीयपदमभिदध्यादित्यादि १८, यत्र वस्तुस्वभावोऽन्यथा स्थितोऽन्यथाऽभिधीयते तत्स्वभावहीनं, यथा शीतो वह्निः मूर्तिमदाकाशमित्यादि १९, यत्र प्रकृतं मुक्त्वाऽप्रकृतं व्यासतोऽभिधाय पुनः प्रकृतमुच्यते तद्व्यवहितम् २०, कालदोषो यत्रातीतादिकालव्यत्ययो यथा रामो वनं प्रविवेशेति वक्तव्ये रामो वनं प्रविशतीत्याह २१, यतिदोषोऽस्थानविरतिः सर्वथाऽविरतिर्वा २२, छविः-अलङ्कारविशेषस्तेन शून्यं छविदोषः २३, समयविरुद्धं स्वसिद्धान्तविरुद्धं यथा साङ्ख्यस्यासत् कारणे कार्यम्, वैशेषिकस्य वा सदिति २४, वचनमात्रं निर्हेतुकं, यथा कश्चिद्यथेच्छया कञ्चित्प्रदेशं लोकमध्यतो जनेभ्यः प्ररूपयति २५, यत्रार्थापत्त्याऽनिष्टमापतति तत्रार्थापत्तिदोषो यथा गृहकुक्कुटो न हन्तव्य इत्युक्तेऽर्थापत्त्या शेषघातोऽदुष्ट इत्यापतति २६, यत्र समासविधिप्राप्तौ समासं न करोति व्यत्ययेन वा करोति तत्रासमासदोषः २७, उपमादोषो यत्र हीनोपमा क्रियते, यथा मेरुः सर्षपोपमः अधिकोपमा वा क्रियते, यथा सर्षपो मेरुसन्निभः, अनुपमा वा यथा मेरुः समुद्रोपम इत्यादि २८, रूपकदोषः स्वरूपभूतानामवयवानां व्यत्ययो यथा पर्वतं निरूपयितव्ये शिखरादीन्तदवयवानिरूपयति, अन्यस्य वा समुद्रादेः सम्बन्धिनोऽवयवांस्तत्र निरूपयतीति २९, निर्देशदोषस्तत्र यत्र निर्दिष्टपदानामेकवाक्यता न क्रियते, यथेह देवदत्तः स्थाल्यामोदनं पचतीत्यभिधातव्ये पचतिशब्दं नाभिधत्ते ३०, पदार्थदोषो यत्र वस्तुनि पर्यायोऽपि सन् पदार्थान्तरत्वेन कल्प्यते यथा सतो भावः सत्तेति कृत्वा वस्तुपर्याय एव सत्ता, सा च वैशेषिकैः षट्सु पदार्थेषु मध्ये पदार्थान्तरत्वेन कल्प्यते, तच्चायुक्तम्, वस्तुनामनन्तपर्यायत्वेन पदार्थानन्त्यप्रसक्तादिति ३१ यत्र सन्धिप्राप्तौ तं न करोति दुष्टं वा करोति तत्र सन्धिदोषः ३२, एते द्वात्रिंशत्सूत्रदोषाः, एतैर्विरहितं यत्सल्लक्षणयुक्तं सूत्रम्। अष्टाभिश्च गुणैरुपेतं यत्सल्लक्षणयुक्तमिति वर्तते। ते चेमे गुणाः—"निद्दोसं सारवंतं च, हेउजुत्तमलंकियं। उवणीयं सोवयारं च, मियं महुरमेव य ॥ १ ॥" तत्र निर्दोषं सर्वदोषविप्रमुक्तं १, सारवद्गोशब्दवद्बहुपर्यायम् २, हेतवः-अन्वयव्यतिरेकलक्षणास्तैर्युक्तम् ३, उपमोत्प्रेक्षाद्यलङ्कारैरलङ्कृतम् ४, उपनयोपसंहृतमुपनीतम् ५, ग्राम्याभणितिरहितं सोपचारम् ६, वर्णादिनियतपरिमाणं मितम् ७, श्रवणमनोहरं मधुरम् ८। अन्यैश्च कैश्चित्षड्गुणाः सूत्रस्य पठ्यन्ते।

तद्यथा—" अप्पक्खरमसंदिद्धं, सारवं विस्सओमुहं।
अत्थोभमणवज्जं च, सुत्तं सव्वण्णुभासियं ॥ १ ॥

यत्राल्पाक्षरम्--मिताक्षरं यथा सामायिकसूत्रम्, असन्दिग्धं—सैन्धवशब्दवल्लवणवसनतुरगाद्यनेकार्थसंशयकारि न भवति, सारवत्त्वं च पूर्ववत्, विश्वतोमुखं प्रतिसूत्रं चरणानुयोगाद्यनुयोगचतुष्टयव्याख्याक्षमम्, यथा--'धम्मो मंगलमुक्किट्ठ' मित्यादिश्लोके चत्वारोऽप्यनुयोगा व्याख्यायन्ते। अथवा-अनन्तार्थत्वाद् यतो विश्वतोमुखं ततः सारवदित्येवं सारवत्त्वस्यैव हेतुभावेनेदं योज्यते, अस्मिंश्च व्याख्याने षडेवैते गुणा भवन्ति, स्तोभकाः--वकारवाशब्दादयो निपातास्तैर्वियुक्तमस्तोभकम्। अनवद्यं कामादिपापव्यापाराप्ररूपकम्, एवंभूतं सूत्रं सर्वज्ञभाषितमिति। यैस्तु पूर्वे अष्ट सूत्रगुणाः प्रोक्तास्तेऽनन्तरश्लोकोक्तगुणांस्तेष्वथाष्टसु गुणेष्वन्तर्भावयन्ति, ये त्वनन्तरश्लोकोक्तानेव सूत्रगुणानिच्छन्ति ते अमीभिरेव पूर्वोक्तानामष्टानामपि संग्रहं प्रतिपादयन्ति। एवं सूत्रानुगमे समस्तदोषविप्रमुक्ते लक्षणयुक्ते सूत्रे उच्चारिते ततो ज्ञास्यते यदुतैतत्स्वसमयगतजीवाद्यर्थप्रतिपादकं पदं स्वसमयपदं, परसमयगतप्रधानेश्वराद्यर्थप्रतिपादकं पदं परसमयपदम्, अनयोरेव मध्ये परसमयपदं देहिनां कुवासनाहेतुत्वाद्बन्धपदम्, इतरत्तु सद्बोधकारणत्वान्मोक्षपदमिति तावदेकं, अन्ये तु

व्याख्यानं-प्रकृतिस्थित्यनुभावप्रदेशलक्षणभेदभिन्नस्य बन्धस्य प्रतिपादकं पदं बन्धपदम् , सम्ञानकारणत्वात् कृत्स्नकर्मक्षयलक्षणस्य मोक्षस्य प्रतिपादकं पदं मोक्षपदमिति । आह—अन्यत्र व्याख्याने बन्धमोक्षप्रतिपादकं पदद्वयं स्वसमयपदादभिन्नमिति कथं न तदन्यस्मिन् भेदेनोपन्यासः ?, सत्यम् किन्तु स्वसमयपदस्याप्यभिधेयविशेषदर्शनार्थो भेदेनोपन्यासः , अत एव सामायिकप्रतिपादकं पदं सामायिकपदमित्यादावपि भेदेनोपादानं सार्थकमिति . सामायिकव्यतिरिक्तानां नारकतिर्यगादिपदानां प्रतिपादकं पदं नोसामायिकपदमित्येतच्च सूत्रोच्चारणस्य फलं दर्शितम् । इदमुक्तं भवति-यतः सूत्रे समुच्चारिते स्वसमयपदादिपरिज्ञानं भवति ततस्तदुच्चारणीयमेव , ततस्तस्मिन् सूत्रे उच्चारितमात्र एव सति केषांचिद्भगवतां साधूनां यथोक्तनीत्या केचिदर्थाधिकारा अधिगता—परिज्ञाता भवन्ति , केचित्तु क्षयोपशमवैचित्र्यादनधिगता भवन्ति , ततस्तेषामनधिगतानामर्थाधिकाराणामधिगमार्थं पदेन पदं वर्णयिष्यामि , एकैकं पदं व्याख्यास्यामीत्यर्थः । तत्र व्याख्यालक्षणमेव तावदाह—'संहिता य' त्यादि , तत्रास्खलितपदोच्चारणं संहिता , यथा 'करोमि भयान्त ! सामायिक' मित्यादि , पदं तु करोमीत्येकं पदम् भयान्त इति द्वितीयम् सामायिकमिति तृतीयम् इत्यादि , पदार्थस्तु करोमीत्यभ्युपगमो भयान्त इति गुर्वामन्त्रणं समस्यायः सामायिकमित्यादिकः , पदविग्रहः समासः , स चानेकपदात्मकत्पदविषयो यथा भयस्यान्तो भयान्त इत्यादि , सूत्रस्यार्थस्य वा अनुपपद्यमानत्वोद्भावनं , चालना-तस्यैवानेकोपपत्तिभिस्तथैव स्थापनं प्रत्यवस्थानं , एतं च चालनाप्रत्यवस्थाने आवश्यकं सामायिकव्याख्यानावसरे स्वस्थान एव विस्तरतो द्रष्टव्ये , एवं षड्विधं विद्धि--जानीहि लक्षणं व्याख्याया इति प्रक्रमादुच्यते इति श्लोकार्थः । अत्राह नन्वस्याः षड्विधव्याख्याया मध्ये कियान् सूत्रानुगमस्य विषयः ? को वा सूत्रालापकनिक्षेपस्य ? कश्च सूत्रस्पर्शिकानियुक्तेः ? किं वा नयैर्विधीयते ? , उच्यते--सूत्रं सपदच्छेदं तावदभिधाय सूत्रानुगमः कृतप्रयोजनो भवति । सूत्रानुगमेन च सूत्रे समुच्चारिते पदच्छेदे च कृते सूत्रालापकानामेव नामस्थापनादिनिक्षेपमात्रमभिधाय सूत्रालापकनिक्षेपः कृतार्थो भवति । शेषस्तु पदार्थपदविग्रहादिविनियोगः सर्वोऽपि सूत्रस्पर्शिकनियुक्तेः , वक्ष्यमाणनैगमादिनयानामपि प्रायः स एव पदार्थादिविचारो विषयः , ततो वस्तुवृत्त्या सूत्रस्पर्शिकानियुक्त्यन्तर्भाविन एव नयाः । आह च भाष्यकारः "होइ कयत्थो वोत्तुं, सपयच्छेयं सुयं सुयाणुगमो । सुत्तालावगनासो, नामाइन्नासविणिओगं ॥ १ ॥ सुत्तप्फासियनिज्जुत्ति-विणिओगो सेसओ पयत्थाइ। पायं सो च्चिय नेगम-नयाइमयगोयरो होइ ॥ २ ॥" अनेन च विधिना सूत्रे व्याख्यायमाने सूत्रं सूत्रानुगमादयश्च युगपत्समाप्यन्ते , यत आह भाष्यसुधाम्भोनिधिः—"सुत्तं सुत्ताणुगमो, सुत्तालावयकओ य निक्खेवो । सुत्तप्फासियनिज्जुत्ति, नया य समगं तु वच्चंति ॥ १ ॥" इत्यलं विस्तरेण । अनु० ।

सुत्तबंधन-सूत्रबन्धन-न० सूत्रमये मत्स्यादिबन्धने , विपा० १ श्रु० ८ अ० ।

सुत्तभणिय-सूत्रभणित-न० । आगमोक्त, पञ्चा० ४ विव० ।

सुत्तभावणा-सूत्रभावना-स्त्री० सूत्रतत्त्वपर्यालोचने बृ० ।

अथ सूत्रभावनामाह—

जइ वि य सनामामिव परि-
चियं सुअं अणहिअमहीणवक्खाई ।
कालपरिमाणहेओ,
तहा वि खलु तक्कयं कुणइ ॥५१०॥

यद्यपि स्वनाम एव तस्य श्रुतं परिचितम् अनधिकाहीनवर्णादि अनत्यक्षरम् अहीनाक्षरम् आदिशब्दाद्व्याविद्धाक्षरादिगुणोपेतं च तथापि कालपरिमाणहेतोस्तज्जयं श्रुताभ्यासं करोति ।

कथमिति चेदुच्यते--

उस्सासाओ पाणू, तओ उ थोवो तओ वि य मुहुत्तो ।
मुहुत्तेहिँ पोरिसीओ, जाणइ निसा य दिवसा य । ५११॥

श्रुतपरावर्त्तनानुसारेणैव सम्यगुच्छ्वासमानं कलयति तत उच्छ्वासात् प्राण उच्छ्वासनिःश्वासात्मकः ततश्च प्राणात् स्तोकः सप्तप्राणमानस्ततोऽपि च स्तोकात् मुहूर्तो घटिकाद्वयमानो मुहूर्तैश्च पौरुष्यस्तम भगवता ज्ञायन्ते ताभिश्च पौरुषीभिर्निशाश्च दिवसाश्च जानाति ।

तथा--

मेहाइच्छन्नेसु वि, उभओ कालसहवा उवस्सग्गे ।
पेहाइभिक्खपंथे, नाहिइ कालं विणा छायं ॥ ५१२ ॥

मेघादिना छन्नेष्वप्युपलक्षेषु विभागेषु उभयकाले क्रियायां प्रारम्भपरिसमाप्तिरूपम् । अथवा-उपसर्गे दिव्यादौ दिवसरजन्यादिव्यत्ययकरणलक्षणे प्रत्युपेक्षणकरणप्रत्युपेक्षाया-आदिशब्दादावश्यककरणादेः , 'भिक्ख' त्ति—भिक्षायाः 'पंथ' त्ति--मार्गस्य विहारस्येत्यर्थः एतेषां सर्वेषामपि यः कालस्तं छायां विना स्वयमेव ज्ञास्यति ।

अथ सूत्रभावनाया एव गुणानाह--

एगग्गया सुमहानि-ज्जरा य नेव्वाणमि पलिमंथो ।
न पराहीणं नाणं , काले जह मंसचक्खूणं ॥५१३॥

श्रुतपरावर्त्तनया चित्तस्यैकाग्रता भवति,सुमहती च निर्जरा भवति । स्वाध्यायविधानप्रत्ययाच्चैव छायामापने पलिमन्थः सूत्रार्थव्याघातलक्षणोनैव कालपौरुष्यादिकालविषयं पराधीनं सूर्यच्छायायत्तज्ञानम् । यथा अन्येषां मांसचक्षुषां छद्मस्थानां साधूनाम् ।

उपसंहरन्नाह--

सुयभावणाएँ नाणं, दंसणतवसंजमं च परिणमइ ।
तो उवओगपरिण्णो, सुयमव्वहितो समाणेइ ॥ ५१४ ॥

श्रुतभावनया आत्मानं भावयन् ज्ञानं दर्शनं तपः प्रधानं च संयमं सम्यक् परिणमयति । तत उपयोगपरिज्ञः श्रुतोपयोगमात्रेणैव कालपरिज्ञाता 'सुत्तं' ति--श्रुतभावनामव्यथितः सन् समापयतीति, गता सूत्रभावना । बृ० १ उ० २ प्रक० ।

सुत्तमभणिय-सूत्राभणित-न० । मकारस्यालाक्षणिकत्वात्

ध० र० २ अधि० १ लक्ष० । ('अज्जणग' शब्द प्रथमभागे २२५ पृष्ठे अन्तकृद्दशाङ्गोक्तस्यास्य कथा।) सौगन्धिकाया नगर्या नगरश्रेष्ठिनि, ज्ञा० १ श्रु० ५ अ० । [ यत्र शुकपरिव्राजकेन सह विवादः कृत स्तत्र 'थावच्चापुत्त' शब्दे चतुर्थभागे २४०१ पृष्ठे ।] धरणस्य नागकुमारेन्द्रस्य नागकुमारराजस्य कुञ्जरानीकाधिपतौ हस्तिराज, स्था० ५ ठा० १ उ० । पुरुषीनामिकाया ब्रह्मदत्तचक्रिभार्यायाः पितरि, उत्त० १३ अ० । अरस्वामिन. पितरि, प्रव० १३ द्वार । आव० । स० । ति० । भारतवर्षेऽस्यामवसर्पिण्यां जाते पञ्चमे बलदेवे, प्रव० २०६ द्वार । भाविबलदेवे, ती० २० कल्प । आव० । आ० चू० । आ० म० । धातकीखण्डस्य पूर्वाधिपतौ देवे, जी० ३ प्रति० ४ अधि० । स्था० । स्वयंभुवस्तृतीयवासुदेवस्य पूर्वभवजीवे, स० । कुन्थुनाथस्य पूर्वभवजीवे, स० । भरतचक्रिणःशक्रे, आ० चू० १ अ० । त्रिपृष्ठवासुदेवस्य चक्र, ति० । आ० चू० । अन्तकृद्दशाङ्गप्रथमवर्गपञ्चमाध्ययनोक्तवक्तव्यताके अन्तकृत्साधौ, स्था० १० ठा० ३ उ० । सौधर्मकल्पवासिन्याः श्रीदेव्याः पितरि, नि० १ श्रु० ३ वर्ग १० अ० । वाणिजग्रामवास्तव्ये स्वनामख्याते श्रेष्ठिनि, भ० ।

तत्कथा चैवम्—

तेणं कालेणं तेणं समएणं वाणियगामे नामं नगरे होत्था, वण्णओ, दूतिपलासे चेइए, वण्णओ ०जाव पुढविसिलापट्टओ । तत्थ णं वाणियगामे नगरे सुदंसणे नामं सेट्ठी परिवसइ अड्ढे ० जाव अपरिभूए समणोवासए अभिगयजीवाजीवे ०जाव विहरइ, सामी समोसढे०जाव परिसा पज्जुवासइ । तए णं से सुदंसणे सेट्ठी इमीसे कहाए लद्धट्ठे समाणे हट्ठतुट्ठे ण्हाए कय ०जाव पायच्छित्ते सव्वालंकारविभूसिए साओ गिहाओ पडिणिक्खमइ साओ गिहाओ पडिनिक्खमित्ता सकोरेंटमल्लदामेणं छत्तेणं धरिज्जमाणेणं पायविहारचारेणं महया पुरिसवग्गुरापरिक्खित्ते वाणियगामं नगरं मज्झंमज्झेणं निग्गच्छइ, निग्गच्छित्ता जेणेव दूतिपलासे चेइए जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ तेणेव उवागच्छित्ता समणं भगवं महावीरं पंचविहेणं अभिगमेणं अभिगच्छति । तं०-सचित्ताणं दव्वाणं जहा उसभदत्तो ०जाव तिविहाए पज्जुवासणाए पज्जुवासइ । तए णं समणे भगवं महावीरे सुदंसणस्स सेट्ठिस्स तीसे य महतिमहालयाए ०जाव आराहए भवइ । तए णं से सुदंसणे सेट्ठी समणस्स भगवओ महावीरस्स अंतियं धम्मं सोच्चा निसम्म हट्ठतुट्ठ० उट्ठाए उट्ठेइ उट्ठित्ता समणं भगवं महावीरं तिक्खुत्तो ०जाव नमंसित्ता एवं वयासी—कइविहे णं भंते ! काले पण्णत्ते ?, सुदंसणा ! चउव्विहे काले पण्णत्ते, तं जहा-पमाणकाले १ अहाउनिव्वत्तिकाले २ मरणकाले ३ अद्धाकाले ४ । से किं तं पमाणकाले ?, पमाणकाले दुविहे पण्णत्ते, तं जहा—दिवसप्पमाणकाले १, राइप्पमाणकाले य २ । चउपोरिसिए दिवसे, चउपोरिसिया राई भवइ । ( सू० ४२४ )

'तेण'मित्यादि, 'पमाणकाले'त्ति-प्रमीयते-परिच्छिद्यते येन वर्षशतादि तत् प्रमाणं स चासौ कालश्चेति प्रमाणकाल प्रमाणं वा-परिच्छेदनं वर्षादेस्तत्प्रधानस्तदर्थो वा, कालः प्रमाणकालः—अद्धाकालस्य विशेषो दिवसादिलक्षणः, आह च—"दुविहो पमाणकालो, दिवसपमाणं च होइ राई य । चउपोरिसिओ दिवसो, राई चउपोरिसी चेव ॥ १ ॥" 'अहाउनिव्वत्तिकाले' त्ति-यथा-येन प्रकारेणायुषो निर्वृत्ति—र्बन्धनं तथा यः कालः—अवस्थानमसौ यथायुर्निर्वृत्तिकालो—नारकाद्यायुष्कलक्षणः, अयं चाद्धाकाल एवायुःकर्मानुभवविशिष्टः सर्वेषामेव संसारिजीवानां स्यात्, आह च—" नेरइयतिरियमणुया, देवाण अहाउयं तु जं जेणं । निव्वत्तियमन्नभवे, पालेंति अहाउकालो सो ॥ १ ॥" 'मरणकाले'त्ति-मरणेन विशिष्टः कालः मरणकालः-अद्धाकाल एव, मरणमेव वा कालो मरणस्य कालपर्यायत्वान्मरणकालः, ' अद्धाकाले ' त्ति—समयादयो विशेषास्तद्रूपः कालोऽद्धाकालः—चन्द्रसूर्यादिक्रियाविशिष्टोऽर्द्धतृतीयद्वीपसमुद्रान्तर्वर्ती समयादिः, आह च—"समयावलियमुहुत्ता, दिवसअहोरत्तपक्खमासा य । संवच्छरजुगपलिया, सागरओसप्पिपरियट्टा ॥ १ ॥" भ० ११ श० ११ उ० ।

एएहि णं भंते ! पलिओवमसागरोवमेहिं किं पयोयणं ? सुदंसणा ! एएहिं पलिओवमसागरोवमेहिं नेरइयतिरिक्खजोणियमणुस्सदेवाणं आउयाइं मविज्जंति । ( सू० ४२६× )

( एतत्कथा ' महब्बल ' शब्दे षष्ठ भागे उक्ता । )

**सुदंसणकूड-सुदर्शनकूट**-न० । धातकीखण्डस्थवक्षस्कारपर्वतस्य अपूर्वे कूटे, स्था० १० ठा० ३ उ० ।

**सुदंसणपुर-सुदर्शनपुर**-न० । भारतवर्षीये स्वनामख्याते नगरे, उत्त० ६ अ० । सुदर्शनपुरे शिशुनागो नाम गृहपतिः । आव० ४ अ० । ( 'समाहाण' शब्देऽस्मिन्नेव भागे कथा गता । )

**सुदंसणा-सुदर्शना**-स्त्री० । शोभनं दर्शनं दृश्यमानतया यस्याः नयनमनोहारित्वात् सा सुदर्शना । जम्ब्वां सुदर्शनायाम् , कल्प० २ अधि० ७ क्षण । जी० । स्था० । जं० । प्रश्न० । पृथ्वीपरिणामे उत्तरकुरुषु जम्बूवृक्षे, स० ।

जंबू णं सुदंसणा अट्ठजोयणाइं उड्ढं उच्चत्तेणं पण्णत्ता । स० ८ सम० ।

('जंबू' शब्दे चतुर्थभागोक्ता धातकीखण्डपर्वतस्य उत्तरदिक्कूलनन्दापुष्करिण्याम् , स्था० ४ ठा० २ उ० । जी० । सी० । ऋषभजिनस्य निष्क्रमणशिबिकायाम् , आ० चू० १ अ० । स० । आ० म० । धरणस्य नागकुमारेन्द्रस्य लोकपालानामग्रमहिष्याम् , स्था० ४ ठा० १ उ० । कालमहाकालयोः पिशाचेन्द्रयोरग्रमहिष्याम् , स्था० ४ ठा० १ उ० । शकटकुमारस्य गणिकायाम् , स्था० १० ठा० ३ उ० । ( 'सगड' शब्दे कथा ) चतुर्थबलदेवमातरि, स० । आव० । जमालीभार्याया वीरदुहितरि, श्रीमहावीरस्वामिनो दुहितुः ज्येष्ठेति वा

सुदर्शनेति वा अनवद्याङ्गीति वा नामेति । विशे० । "जेट्ठा सुदंसणा जमालिणो व त्ति" ज्येष्ठा सुदर्शना अनवद्याङ्गीति जमालिगृहिणीनामानि । अन्ये तु व्याचक्षते-ज्येष्ठा महती सुदर्शना नाम भगवतः श्रीमन्महावीरस्य भगिनी तस्याः पुत्रो जमाली अनवद्याङ्गी नाम भगवतो दुहिता जमालिगृहिणीति । विशे० । स्था० । उत्त० । कल्प० । आ० क० । आ० म० । आ० चू० । आचा० । सामिस्स जेट्ठा भगिणी सुदंसणा तीसे पुत्तो जमाली । आ० चू० १ अ० । सिंहलद्वीपराजस्य चन्द्रगुप्तस्य दुहितरि, ती० ६ कल्प । साकेतनगरराजस्य चन्द्रावतंसकस्य भार्यायां सागरचन्द्रमुनिचन्द्रयोर्मातरि, आ० म० १ अ० । धर्मगिरिदुहितरि, आ० चू० १ अ० ।

सुदक्खिण-सुदक्षिण-पुं० । प्रार्थनाभङ्गभीरौ श्रावके, ध० र० । १ अधि० १ गुण ।

सुदक्खिण्ण-सुदाक्षिण्य न० । गम्भीरधीरचेतसः प्रकृत्यैव प्रकृत्याभियोगपरदयालुत्वनिरुपधिपरदु अपहारगच्छायाम्, द्वा० १२ द्वा० ।

सुदाक्षिण्य इत्यष्टमं गुणं व्याचष्टे—

उपयरइ सुदक्खिन्नो, परेसिमुज्झियसकज्जवावारो ।
तो होइ गज्झवक्को, ऽणुवत्तणीओ य सव्वस्स ॥१५॥

उपकरोत्युपकारतया प्रवर्त्ततेऽभ्यर्थितसारतया सुदाक्षिण्यः-शोभनदाक्षिण्ययुक्तः । का(ऽ)र्थः-यदिह परलोकोपकारि प्रयोजनं तस्मिन्नेव दाक्षिण्यवश पुनः पापहेतावपीति सुशब्देन दाक्षिण्यं विशेषितम् । परेषामन्येषां कथमित्याह-उज्झितस्वकार्यव्यापारः—परित्यक्तात्मप्रयोजनप्रवृत्तिः ततः कारणाद्भवति ग्राह्यवाक्योऽनुल्लङ्घनीयादेशः, तथाऽनुवर्त्तनीयश्चाभिमुख्येप्सितश्च सर्वस्य धार्मिकलोकस्य । स हि किल सुदाक्षिण्यगुणेनाकामोऽपि धर्ममासेवते क्षुल्लककुमारवत् । ध० र० १ अधि० ८ गुण ।

सुदाढ-सुदंष्ट्र-पुं० । स्वनामख्याते नागकुमारे, यः पूर्वभवे सिंहत्वे मारितः वीरजिनेन्द्रं गङ्गां नावा तरन्तमुपसृष्टवान् कम्बलशम्बलाभ्यां निवारितः । आ० चू० १ अ० । नागो-नागकुमारः सुदंष्ट्रनामा सिंहजीवो भगवत उपसर्गं कर्त्तुमारब्धवानिति । आ० म० १ अ० । आ० क० । नि० चू० ।

सुदाम-सुदाम-पुं० । जम्बूद्वीपे भरतक्षेत्रे अतीतायामुत्सर्पिण्यां जाते कुलकरभेदे, स्था० ७ ठा० ३ उ० । स० । ति० ।

सुदिट्ठ-सुदृष्ट-त्रि० । सम्यग्दृष्टे, उत्त० १२ अ० । स्था० । द्वा० । अतीन्द्रियार्थदर्शिभिः इहमपवर्गादिहेतुतयोपलब्धे, प्रश्न० २ संव० द्वार ।

सुदिट्ठि-सुदृष्टि-स्त्री० । सुशब्दः प्रशंसायाम् । शोभना दृष्टिः सुदृष्टिः । आ० म० १ अ० । सम्यग्दृष्टौ, द्वा० १७ द्वा० । सम्यक्त्वे, विशे० ।

सुदीहनीहारी-सुदीर्घनिर्हादिन्-त्रि० । अहस्वप्रतिरवे, प्रश्न० ३ आश्र० द्वार ।

सुदीहदंसी-सुदीर्घदर्शिन्-पुं० । सुपर्यालोचितपरिणामसुन्दरकार्यकारिणि, ध० र० १ अधि० १ गुण । स किल पारिणामिक्या बुद्ध्या सुन्दरपरिणामत्वैहिकमपि कार्यमारभते (प्रव० २३६ द्वार) इति पञ्चदशः श्रावकगुणः, ध० र० १ अधि० १ गुण । दर्श० ।

साम्प्रतं पञ्चदशं दीर्घदर्शित्वगुणमाह—

आढवइ दीहदंसी, सयलं परिणामसुंदरं कज्जं ।
बहुलाभमप्पकेसं, सिलाहणिज्जं बहुजणाणं ॥ १२ ॥

आरभते—प्रतिजानीते दीर्घं परिणामसुन्दरं कार्यमिति गम्यते, क्रियाविशेषणं वा । द्रष्टुमवलोकयितुं शीलमस्येति दीर्घदर्शी सकलं—समस्तं परिणामसुन्दरम् आयतिसुखावहं कार्यम्—कृत्यं तथा बहुलाभं-प्रचुराभीष्टसिद्धिकमल्पक्लेशं-स्तोकायासं श्लाघनीयं-प्रशंसनीयं बहुजनानां-स्वजनपरजनानां शिष्टानामिति भावः स हि किल पारिणामिक्या बुद्ध्या सुन्दरपरिणाममैहिकमपि कार्यं करोति धनश्रेष्ठिवत् । ततो धर्मस्यापि स एवाधिकारीति । ध० र० १ अधि १५ गुण ।

सुदुक्कर-सुदुष्कर-त्रि० । सुतरां दुष्करे, उत्त० १६ अ० ।

सुदुत्तर-सुदुस्तर-त्रि० । दुःखोत्तार्ये, स० १४५ सम० ।

सुदुल्लह-सुदुर्लभ-त्रि० । अतिशयदुरापे, उत्त० १ अ० । विपा० ।

सुदेसिय-सुदेशित-त्रि० । पर्षदि नानाविधप्रमाणैरभिहिते, प्रश्न० १ संव० द्वार ।

सुद्दार-सुद्वार-पुं० । उज्जयन्तशैले जिनायतनद्वारवामे, ती० ३ कल्प । (यो हि द्वारमुद्घाटयन्नपि न लभ्यते विचित्रकार्यकृत्येति 'उज्जयन्त' शब्दे द्वितीयभागे ७३६ पृष्ठे उक्तम् । )

सुदेउं-सूदयितुम्-अव्य० । विनाशयितुमित्यर्थे, नि० चू० १० उ० ।

सुधी-सुधी-पुं० । सुष्ठु धीर्यस्य । पण्डिते, सुन्दरबुद्धौ, स्त्री० । सुष्ठु ध्यायति सु-ध्यै क्विप् । सुबुद्धियुक्ते, त्रि० । वाच० । प्रशस्तबुद्धौ, ध० १ अधि० "क्लिश्यन्ते केवलं स्थूलाः, सुधीस्तु फलमश्नुते । दन्ता दलन्ति कष्टेन, जिह्वा गिलति लीलया ॥ १ ॥" कल्प० १ अधि० ७ क्षण ।

सुधोयतर-सुधौततर-त्रि० । सुविशोधिते, भ० ६ श० १ उ० ।

सुद्ध-शुद्ध-त्रि० । "शषोः सः" ॥ ८।१।२६० ॥ इत्यनेन शकारस्य सकारः । प्रा० । अवदाते, सूत्र० १ श्रु० १४ अ० । निष्कलङ्के, आव० ६ अ० । सूत्र० । शुक्लादिना उज्ज्वले, कल्प० १ अधि० ३ क्षण । निर्दोषे, सूत्र० १ श्रु० ११ अ० । द्वा० । पञ्चा० । कषायकालुष्यरहिते, उत्त० ३ अ० । केवले, विशे० । उद्गमादिदोषशुद्धे निरुपाधौ, सूत्र० १६ अ० । अलङ्कृते, स्था० ३ ठा० ३ उ० । अवदाते, सूत्र० १ श्रु० ११ अ० । आत्यादिना निर्मलज्ञानादिगुणतया कालापेक्षया वा शुद्धे, स्था० ४ ठा० १ उ० । पापानुबन्धरहिते, आचा० १ श्रु० ४ अ० १ उ० । विमले, जी० ३ प्रति० १ अधि० २ उ० । भक्तदोषवर्जिते, सू० प्र० २० पाहु० । पूर्वोक्तवचनदोषरहिते, प्रश्न० १ संव० द्वार ।

सुद्धगंधारा-शुद्धगन्धारा-स्त्री० । गान्धारग्रामस्य चतुर्थ्यां मूर्छनायाम्, स्था० ७ ठा० ३ उ० ।

सुद्धचरणजोग-शुद्धचरणयोग-पुं० । मोक्षे संयतव्यापारेषु मुखवस्त्रिकादिप्रत्युपेक्षणादिषु, पं० व० १ द्वार ।

सुद्धजाइकुलन्निय-शुद्धजातिकुलान्वित-त्रि० । शुभा विशुद्धवैवाह्यचतुर्वर्णान्तर्गता जातिः मातृपक्षः, कुलं पितृपक्षस्ताभ्यामन्वितस्संपन्नः । मातापितृसम्पन्ने, ध० ३ अधि० ।

सुद्धणय-शुद्धनय-पुं० । निश्चयनये, पं० चू० ५ कल्प ।

सुद्धाआदि-शुद्धाआदि-न० । चरणकरणानुयोगाख्ये शुद्धा-हारग्रहणे, द्रव्या० १ अध्या० ।

सुद्धता-शुद्धता-स्त्री० । शुद्धस्वभावे , द्रव्या० १२ अध्या० ।

सुद्धदंत-शुद्धदन्त-पुं० । स्वनामख्याते अन्तर्द्वीपे, तत्स्थे मनुष्ये च । स्था०३ ठा०३ उ० । ('अंतरदीव' शब्दे प्रथमभागे ९७ पृष्ठे तद्वक्तव्यता उक्ता ।) राजगृहे श्रेणिकस्य राज्ञो धारिणीनाम्न्यां भार्यायां जाते पुत्रे, अणु०२वर्ग५अ० । (स च वीरान्तिके प्रव्रज्य षोडशवर्षाणि प्रव्रज्यापर्यायं परिपाल्य अयन्ते कल्पे उपपद्य महाविदेहे सेत्स्यतीत्यनुत्तरोपपातिकदशानां द्वितीयवर्गस्य पञ्चमे अध्ययने सूत्रितम् ।)

सुद्धदंतीपासणाह-शुद्धदन्तीपार्श्वनाथ-पुं० । शुद्धदन्तीनगरीस्थिते पार्श्वनाथे, ती० ३१ कल्प ।

सुद्धधम्मरयणत्थि-शुद्धधर्मरत्नार्थिन्-त्रि० । रत्नानि वैडूर्यादीनि तानि अर्थयन्तीत्येवं शीला ये ते, यद्वा—तैरर्थः प्रयोजनं विद्यते येषान्ते रत्नार्थिनः । शुद्धधर्म एव रत्नं महामूल्यमाणिक्यं शुद्धधर्मरत्नं तस्यार्थिनो-वाञ्छावन्तः । शुद्धधर्मरूपमहामूल्यमाणिक्यस्य वाञ्छावत्सु, दर्श० २ तत्त्व ।

सुद्धधम्मसंपत्ति-शुद्धधर्मसम्प्राप्ति-स्त्री० । शुद्धधर्मभावप्राप्तौ, पं० सू० ।

शुद्धधर्मसंप्राप्तिः कुत इत्याह—

सुद्धधम्मसम्पत्ती पावकम्मविगमाओ ।

शुद्धधर्मो-यथोदितः तस्य सम्यक्प्राप्तिः सम्प्राप्तिः-भावप्राप्तिरित्यर्थः,पापकर्म-मिथ्यात्वमोहनीयादि तस्य विगमः-विशिष्टो गमः अपुनर्बन्धकत्वेन पृथग्भाव इति यावत्तस्मात्पापकर्मविगमात् । पं० सू० १ सू० ।

सुद्धधी-शुद्धधी-स्त्री० । निर्मलबुद्धौ, द्रव्या० ७ अध्या० ।

सुद्धपउम-शुद्धपद्म-न० । कुसुमान्तरावियुक्ते पुण्डरीके, उपा० १ अ० ।

सुद्धपज्जवट्ठियणयमत-शुद्धपर्यायार्थिकनयमत-न । शुद्धपर्यायार्थिकनयसिद्धान्ते, नयो० ।

सुद्धपरिणाम-शुद्धपरिणाम-त्रि० । सम्यग्मार्गोपदेशके, पं० व० २ द्वार ।

सुद्धपरिहार-शुद्धपरिहार-पुं० । यत् विशुद्धस्सन् पञ्चयाममनुत्तरं धर्मं परिहरति परिहारशब्दस्य परिभोगेऽपि वर्त्तमानत्वात्स शुद्धपरिहारः । शुद्धस्य सतः परिहारः पञ्चयामानुत्तरधर्मकरणं शुद्धपरिहार इति व्युत्पत्तेः । यदि वा-यो विशुद्धकल्पव्यवहारः क्रियते स शुद्धपरिहारः शुद्धश्चासौ परिहारश्च शुद्धपरिहारः । परिहारभेदे , व्य० १ उ० । ('परिहारट्ठ' शब्दे पञ्चमभागे ६६० पृष्ठे एतद्वक्तव्यतोक्ता ।)

सुद्धपरूवग-शुद्धप्ररूपक-त्रि० । सम्यग्मार्गोपदेशके , दर्श० ३ तत्त्व ।

सुद्धप्प-शुद्धात्मन्-त्रि०।शुद्ध आत्मा—अन्तरात्मा यस्य सः। निर्मलान्तःकरणे, सूत्र० १ श्रु० १४ अ० ।

सुद्धप्पदव्व-शुद्धात्मद्रव्य-न० । निर्मले सकलपुद्गलास्पर्शरहिते ज्ञानदर्शनचारित्रवीर्याव्याबाधामूर्त्याद्यनन्तगुणपर्यायनित्यानित्याद्यनन्तस्वभावमये असंख्यप्रदेशस्वभावपरिणामिनि स्वरूपकर्तृत्वभोक्तृत्वादिधर्मोपेते, अष्ट० ४ अष्ट० ।

सुद्धप्पवित्ति-शुद्धात्मवृत्ति-स्त्री० । निरवद्यक्रियायाम् ,पञ्चा० ७ विव० ।

सुद्धप्पवेस-शुद्धप्रवेश्य-त्रि० । शुद्धानि च तानि प्रवेश्यानि च शुद्धप्रवेश्यानि । राजसभाप्रवेशोचितेषु, औ० ।

सुद्धबुद्धसहाव-शुद्धबुद्धस्वभाव-त्रि० । शुद्धः-सर्वपुद्गलाश्लेषरहितः, बुद्धः-ज्ञानमयः स्वभावो यस्य सः शुद्धबुद्धस्वभावः । विशुद्धज्ञानमयस्वभावोपेते, अष्ट० ११ अष्ट० ।

सुद्धबोहप्पसर-शुद्धबोधप्रसर-पुं० । प्रधानमत्यवकाशे,जीवा० ११ अधि० ।

सुद्धभाव-शुद्धभाव-पुं० । सदनुष्ठाने, पञ्चा० १४ विव० । सुस्वभावे, प्रश्न० ५ संव० द्वार ।

सुद्धमइ-शुद्धमति-पुं० । एकविंशतितमे भारतातीते जिने, प्रव० ७ द्वार ।

सुद्धवत्थ-शुद्धवस्त्र-न० । शुचिवसने, उत्तरीयवाससि, सितवाससि च । पञ्चा० ४ विव० ।

सुद्धवाय-शुद्धवात-पुं० । वायुजीवभेदे, शुद्धा वायवः स्तोकं स्तोकं प्रयान्ति । उत्त० ३६ अ० । मन्दस्तिमितवायौ, भ० १५ श० । वस्त्यादिगत इत्यन्ये । जी० १ प्रति० । शीतकालादिषु शुद्धः वातः । आचा० १ श्रु० १ अ० ७ उ० ।

सुद्धवाय(या)णुयोग-शुद्धवागनुयोग-पुं० । शुद्धा अनपेक्षितवाक्यार्थतया वाक्—वचनं सूत्रमित्यर्थस्तस्या अनुयोगो—विचारः शुद्धवागनुयोगः । सूत्रविचारे , अनु० । ('अणुओग' शब्दे प्रथमभागे ३४३ पृष्ठेऽस्य स्वरूपमुक्तम् ।)

सुद्धवियड-शुद्धविकट-न० । उष्णोदके, कल्प० ३ अधि० ९ क्षण । स्था० । वर्णान्तरादिप्राप्ते शुद्धजले, ग० २ अधि० ।

सुद्धबुद्धिजोग-शुद्धबुद्धियोग-पुं० । निर्मलबोधसंबन्धे, तद्वति, त्रि० । पञ्चा० ८ विव० ।

सुद्धचेय-शुद्धचेतस्-त्रि० । विगलन्महामोहलम्पटमानसे , हा० ३१ अष्ट० ।

सुद्धसज्जा-शुद्धशय्या-स्त्री० । षड्जग्रामस्य सप्तम्यां मूर्च्छनायाम् , स्था० ७ ठा० ३ उ० ।

सुद्धसभाव-शुद्धस्वभाव-त्रि० । उपाधिभावरहितान्तर्भावपरिणते, द्रव्या० १२ अध्या० ।

सुद्धसुत्त-शुद्धसूत्र-त्रि० । शुद्धमवदातं यथावस्थितवस्तुप्ररूपणतोऽध्ययनतश्च सूत्रं-प्रवचनं यस्यासौ शुद्धसूत्रः । यथावस्थितसूत्रप्ररूपके, सूत्र० २ श्रु० १४ अ० ।

सुद्धागणि-शुद्धाग्नि-पुं० । अयःपिण्डानुगतेऽग्नौ, विद्युतादिरूपे वा । जी० ३ प्रति० १ अधि० २ उ० ।

सुद्धादाण-शुद्धादान-त्रि० । शुद्धमवदातमादानं चारित्रं यस्य सः । निर्मलचारित्रे, सूत्र० १ श्रु० १६ अ० ।

सुद्धापाणय-शुद्धापानक-न० । हस्तस्पर्शरूपे अपानकभेदे, भ० १५ श० ।

सुद्धासय-शुद्धाशय-पुं० । निर्मलाध्यवसाये,पञ्चा० १० विव० ।

**सुद्धासयजोग-शुद्धाशययोग**-पुं० । शुभाध्यवसायसंबन्धे , शुभाध्यवसायादेव बोधिबीजं स्यात् । पञ्चा० ११ विव० ।

**सुद्धि-शुद्धि**-स्त्री० । " शषोः सः " ॥८।१।२६०॥ इत्यनेन शकारस्य सकारः । प्रा० । पापक्षयेण निर्मलतायाम् , पापं ज्ञानावरणीयादि सम्यग्ज्ञानादिगुणविघातहेतुघातिकर्मोच्यते । तत्क्षयेण यावती काचिदंशतोऽपि निर्मलता संभवति सा शुद्धिरुच्यते । षो० ३ विव० ।

अधुना शुद्धिमाह—

णामं ठवणा सुद्धी, दव्वसुद्धी अ भावसुद्धी अ ।
एएसिं पत्तेअं, परूवणा होइ कायव्वा ॥२८३॥

नामशुद्धिः स्थापनाशुद्धिर्द्रव्यशुद्धिश्च भावशुद्धिश्च । एतेषां नामशुद्ध्यादीनां प्रत्येकं प्ररूपणा भवति—कर्त्तव्येति गाथार्थः ।

तत्र नामस्थापने क्षुण्णत्वादनादृत्य द्रव्यशुद्धिमाह—

तिविहा उ दव्वसुद्धी, तद्दव्वादेसओ पहाणे अ ।
तद्दव्वगमाएसो, अणण्णमीसा हवइ सुद्धी ॥२८४॥

त्रिविधा तु द्रव्यशुद्धिर्भवति तद्द्रव्यत इति तद्द्रव्यशुद्धिः, आदेशत इति आदेशद्रव्यशुद्धिः, प्राधान्यतश्चेति प्राधान्यद्रव्यशुद्धिश्च । तत्र तद्द्रव्यशुद्धिः अनन्येति अनन्यद्रव्यशुद्धिः, यद् द्रव्यमनेन द्रव्येण सहासंयुक्तं स्वच्छकं भवति क्षीरं दधि वा असौ तद्द्रव्यशुद्धिः, आदेशे मिश्रा भवति शुद्धिरन्यानन्यविषया । एतदुक्तं भवति—आदेशतो द्रव्यशुद्धिर्द्विविधा अन्यत्वेनानन्यत्वेन च । अन्यत्वे यथा शुद्धवासा देवदत्तः , अनन्यत्वे शुद्धदन्त इति गाथार्थः ।

प्राधान्यद्रव्यशुद्धिमाह—

वण्णरसगंधफासे, समणुण्णा सा पहाणओ सुद्धी ।
तत्थ उ सुक्किलमहुरा, उ संमया चेव उक्कोसा ॥२८५॥

वर्णरसगन्धस्पर्शेषु या मनोज्ञता — सामान्येन कमनीयता, अथवा—मनोज्ञता यथाभिप्रायमनुकूलता सा प्राधान्यतः शुद्धिरुच्यते । तत्र चैवंभूतचिन्तायामतिकरं शुक्लमधुरौ वर्णरसौ । तुशब्दात्—सुरभिमृदू गन्धस्पर्शौ च समतौ, यथाभिप्रायमपि प्रायो मनोज्ञौ , बहूनामित्थं प्रवृत्तिसिद्धेः, उत्कृष्टौ च कमनीयौ च । चशब्दस्य व्यवहित उपन्यास इति गाथार्थः । उक्ता द्रव्यशुद्धिः ।

अधुना भावशुद्धिमाह—

एमेव भावसुद्धी, तब्भावाएसओ पहाणे अ ।
तब्भावगमाएसो, अणण्णमीसा हवइ सुद्धी ॥ २८६ ॥

'एमेव' त्ति—यथा द्रव्यशुद्धिस्तथा भावशुद्धिरपि, त्रिविधेत्यर्थः, तद्भाव इति—तद्भावशुद्धिः आदेशत इति—आदेशभावशुद्धिः'प्राधान्यतश्च' ति—प्राधान्यभावशुद्धिश्च । तत्र तद्भावशुद्धिः अनन्येति—अनन्यभावशुद्धिस्तद्भावशुद्धिः, यो भावोऽन्येन भावेन सहासंयुक्तः सन् शुद्धो भवति बुभुक्षितादेराहाराभिलाषवदसौ तद्भावशुद्धिः । आदेशे मिश्रा भवति शुद्धिस्तदन्यानन्यविषयेत्यर्थः । एतदुक्तं भवति—आदेशभावशुद्धिर्द्विविधा—अन्यत्वे, अनन्यत्वे च । अन्यत्वे यथा शुद्धभावस्य साधोर्गुरुः, अनन्यत्वे शुद्धभाव इति गाथार्थः ।

प्रधानभावशुद्धिमाह—

दंसणनाणचरित्ते, तवोविसुद्धी पहाणमाएसो ।
जम्हा उ विसुद्धमलो, तेण विसुद्धो हवइ सुद्धो ॥२८७॥

दर्शनज्ञानचारित्रेषु दर्शनज्ञानचारित्रविषया तथा तपोविशुद्धिः प्राधान्यादेश इति—यद्दर्शनादीनामादिश्यमानानां प्रधानं सा प्रधानभावशुद्धिः, यथा दर्शनादिषु क्षायिकाणि ज्ञानदर्शनचारित्राणि , तपःप्रधानभावशुद्धिः—आन्तरतपोऽनुष्ठानादाधनमिति । कथं पुनरियं प्रधानभावशुद्धिरिति ?, उच्यते—एभिर्दर्शनादिभिः शुद्धैर्यस्माद्विशुद्धमलो भवति साधुः; कर्ममलरहित इत्यर्थः । तेन च मलेन विशुद्धो—मुक्तो भवति सिद्ध इत्यतः प्रधानभावशुद्धिरियमेतान्येव दर्शनादीनीति गाथार्थः । दश० ७ अ० । सथा० । वाक्यशुद्धिस्वरूपम् 'वक्कसुद्धि' शब्दे षष्ठभागे गतम् । ) शोधने शुद्धिः तत्र द्रव्यशुद्धिः , भावशुद्धिश्च । द्रव्यशुद्धिर्जलाग्न्यादिका , उक्तं च—" अंबरलोहमहीणं , कमसो जह मलकलंकपंकाणं । सुज्झावणयणसमा , दाहिंति जलाणलाइच्चा ॥ १ ॥ " भावशुद्धिस्तु सत्यमस्य कुन्दारित्राणि इति , जलाग्न्यादिशुद्धीनां मध्ये यथादर्शनं यथाख्यातसम्यक्त्वं पुनर्मिथ्यात्वाऽगमनात् , तन्महती शुद्धिस्तथैयमपीति भावः । संथा० ।

शुद्धौ सश्रावकाभ्यां दृष्टान्तः—

"पुरं राजगृहं नाम, श्रेणिकस्तत्र भूपतिः ।
रजकस्यार्पयत्तस्य—युगलं क्षालनाय सः ॥ १ ॥
तेन तद्भार्ययोर्दत्तं, वर्षिण्यो कौमुदीमह ।
अभयश्रेणिकौ तत्र, पश्यन्तौ छन्नमुत्सवम् ॥ २ ॥
तत्ताम्बूलाद्रेणैलिप्ते, रजकस्ते गृहागते ।
दृष्ट्वा क्षौमे संतप्तः , स द्राक् क्षारैरशोधयत् ॥ ३ ॥
प्रातरानीतवान् पृष्टः, सद्भावं रजकोऽब्रवीत् ।
द्रव्यशुद्धिर्भावशुद्धि-स्तत्कालालोचने यतः ॥ ४ ॥ " आ० क० ४ अ० ।

**सुद्धिपत्त-शुद्धिप्राप्त**-त्रि० । अवाप्तक्लिष्टकर्मक्षयोपशमे, पञ्चा० ४ विव० ।

**सुद्धेसण-शुद्धैषण**-त्रि० । दशैषणादोषरहिते आहारादौ, आचा० १ श्रु० ६ अ० २ उ० ।

**सुद्धेसणिय-शुद्धैषणिक**-त्रि० । शुद्धैषणा-शङ्कादिदोषपरिहारतः पिण्डग्रहणं तद्वांश्च शुद्धैषणिकः । भ० २५ श० ७ उ० । शुद्धस्य वा निर्व्यञ्जनस्य कूरादेरेषणा यथाऽस्ति स तथा । सूत्र० २ श्रु० २ अ० । तथाविधाभिग्रहात् एषणाशुद्धग्राहके; औ० । स्था० ।

**सुद्धोदण-शुद्धोदन**-न० । सूपशाकादिवर्जिते ओदने , भ० ३ श०१ उ०। शाक्यसिंहस्य बुद्धस्य पितरि,पुं०।सम्म०३ काण्ड।

**सुद्धोदय-शुद्धोदक**-न० । अन्तरिक्षसमुद्भवे नद्यादिगते च

जले, प्रश्न० १ पद । स्वभावनिर्मलोदके, कल्प० १ अधि० ३ क्षण । स्वाभाविके जले, आ० १ श्रु० १ अ० । तडागसमुद्रनदीहृदावटादिगते जले, आचा० १ श्रु० १ अ० ३ उ० ।

सुद्धोयणि-शौद्धोदनि-पुं० । " उत्सौन्दर्यादौ " ॥८।१।१६०॥ इत्यनेन औकारस्य उकारः । प्रा० । शाक्यसिंहनामके गौतमगोत्रोत्पन्ने बौद्धे, आचा० १ श्रु० २ अ० ५ उ० । सूत्र० ।

सुधीरधम्म-सुधीरधर्मन्-त्रि० । धीः-बुद्धिस्तया राजते इति धीरः, धीरः सुष्ठुनिश्चितो धर्मः श्रुतचारित्राख्यो येषां ते सुधीरधर्माणः । श्रुतचारित्राख्यधर्मवत्सु । सूत्र० १ श्रु० १३ अ० ।

सुपइट्ठ-सुप्रतिष्ठ-न० । लोकोत्तरे भाद्रपदे मासे, कल्प० १ अधि० ६ क्षण । सू० प्र० । स्वनामख्याते नगरे, यत्र सिंहसेनकुमारपिता महासेननामा राजा अभूत् । विपा० १ श्रु० ६ अ० । ( तत्कथा ' देवदत्ता ' शब्दे चतुर्थभागे २८१८ पृष्ठे गता । ) श्रावस्त्यां नगर्यां जाते गृहपतौ, अन्त० ६ वर्ग १० अ० । ( स च वीरान्तिके प्रव्रज्य सप्तविंशतिवर्षाणि श्रामण्यं परिपाल्य विपुले पर्वते सिद्ध इत्यन्तकृद्दशानां षष्ठवर्गस्य पञ्चमऽध्ययने सूचितम् । ) पुष्पपात्रविशेषे, जं० २ वक्ष० ।

सुपइट्ठग-सुप्रतिष्ठक-न० । आधारविशेषे, रा० ।

तेसि णं तोरणाणं पुरतो दो दो सुपतिट्ठगा पण्णत्ता, तेणं सुपतिट्ठगा णाणाविहपसाहणमंडविरइया इव चिट्ठंति सव्वोसहिपडिपुण्णा सव्वरयणामया अच्छा० जाव पडिरूवा ।

' तसि णमि' त्यादि, तेषां तोरणानां पुरतो द्वौ द्वौ सुप्रतिष्ठकौ-आधारविशेषौ प्रज्ञप्तौ, ते च सुप्रतिष्ठकाः सुसर्वौषधिप्रतिपूर्णा नानाविधैः पञ्चवर्णैः प्रसाधनभाण्डैश्च बहुपरिपूर्णा इव तिष्ठन्ति, उपमाभावना प्राग्वत् । ' सव्वरयणामया ' इत्यादि, तथैव । रा० । स्थापनके, जं० २ वक्ष० । " सुपइट्ठा वा संठिए लोए " तत्त्वेहारोपितजबारकादिश्च्छिन्ने । भ० ११ श० १० उ० । शरावयन्त्रके, तत्त्वेह उपरि स्थापितकलशादिकं ग्राह्यम् । भ० ७ श० १ उ० ।

सुपइट्ठाभ-सुप्रतिष्ठाभ-न० । उत्तरयोः कृष्णराज्योर्मध्ये लोकान्तिकविमाने, यत्र आज्ञया देवता निवसन्ति । स्था० ८ ठा० ३ उ० । भ० । स० ।

सुपइट्ठिय-सुप्रतिष्ठित-त्रि० । सुष्ठु मनोज्ञतया प्रतिष्ठिताः सुप्रतिष्ठिताः । जी० ३ प्रति० ४ अधि० । जं० । सत्प्रतिष्ठानवत्सु, तं० । रा० ।

सुपइट्ठियजस-सुप्रतिष्ठितयशस्-त्रि० । अव्याहतख्यातिके, प्रश्न० २ संव० द्वार ।

सुपइय-सुपतित-पुं० । सूर्यस्य ज्योतिष्केन्द्रस्य पूर्वभवजीवे श्रावस्तीवास्तव्ये स्वनामख्याते गृहपतौ, नि० १ श्रु० ३ वर्ग १ अ० । ( ' सूर ' शब्दे कथा वक्ष्यते । )

सुप्रतीत-पुं० । अहोरात्रस्य पञ्चमे मुहूर्ते, कल्प० १ अधि० ६ क्षण ।

सुपक्क-सुपक्व-त्रि० । सुष्ठु पक्वं सुपक्वम् । सुष्ठुपरिकर्मिते, दश० ७ अ० ।

सुपक्कक्खोयरस-सुपक्वक्षोदरस-पुं० । सुपक्वः सुपरिपाकागतो यः क्षोदरसः इक्षुरसः तन्निष्पन्न आसवोऽपि सुपक्वक्षुरसः । मद्यभेदे, जी० ३ प्रति० ४ अधि० ।

सुपक्कक्खोदरसवरसुरा-सुपक्वक्षोदरसवरसुरा-स्त्री० । सुपरिपाकागतो यः क्षोदरसः-इक्षुरसस्तन्निष्पन्ना वरसुरा सुपक्वक्षोदरसवरसुरा । सुपरिपाकागतक्षुरसनिष्पन्नायां श्रेष्ठसुरायाम्, जी० ३ प्रति० ४ अधि० ।

सुपक्कल-सुपक्व-त्रि० । शोभनपरिपाके, आव० ४ अ० ।

सुपक्केक्खुरस-सुपक्वेक्षुरस-पुं० । सुपक्वेक्षुमूलदलनिष्पन्ने रसे. प्रज्ञा० १७ पद ४ उ० ।

सुपक्खजुत्त-सुपक्षयुक्त-पुं० । सुशीलानुकूलपरिवारोपेते, ध० र० ।

स च चतुर्दशो गुणः—

अणुकूलधम्मसीलो, सुसमायारो य परियणो जस्स ।
एस सुपक्खो धम्मं, निरंतरायं तरइ काउं ॥ २१ ॥

इह पक्षः परिवारः परिकर इत्येकोऽर्थः, शोभनः पक्षो यस्य स सुपक्षः । तमेव विशेषणाह—अनुकूलो धर्माविघ्नकारी धर्मशीलो धार्मिकः सुसमाचारः सदाचारचारी परिजनः-परिवारो यस्य एष सुपक्षोऽभिधीयते । स च धर्मं निरन्तरायं निष्प्रत्यूहं 'तरइ' त्ति शक्नोति कर्तुमनुष्ठातुं भद्रनन्दिकुमारवदिति । ध० र० १ अधि० १४ गुण ।

सुपडिबद्ध-सुप्रतिबुद्ध-त्रि० । सुष्ठु प्रतिबुद्धः सुप्रतिबुद्धः । आचा० १ श्रु०५ अ० २ उ० । सुज्ञाततत्त्वे काकन्दिकापरनामके आर्यसुहस्तिशिष्ये, कल्प० २ अधि० ८ क्षण ।

सुपणिहि-सुप्रणिधि-पुं० । प्रणिधानं प्रणिधिः शोभनः प्रणिधिः सुप्रणिधिः । शोभनप्रणिधाने, दशा० ४ अ० ।

सुपणिहिइंदिय-सुप्रणिहितेन्द्रिय-त्रि० । श्रोत्रादिभिः स्वविषये गाढमुपयुक्ते, दश० ५ अ० २ उ० ।

सुपण्ण-सुप्रज्ञ-त्रि० । सुष्ठु शोभना वा प्रज्ञाऽस्येति सुप्रज्ञः । स्वसमयपरसमयवेदिनि गीतार्थे, सूत्र० १ श्रु० ६ अ० । शोभनप्रज्ञे भाषाद्युपेते, सूत्र० १ श्रु० १४ अ० ।

सुपण्णत्त-सुप्रज्ञप्त-त्रि० । सुष्ठु प्रकारेण कथिते, आचा० १ श्रु० ८ अ० १ उ० । सुष्ठु प्रज्ञप्ता यथाचारे ख्याता तथैव सुष्ठु सूक्ष्मपरिहारासेवनेन प्रकर्षेण सम्यगासेवितेत्यर्थः, अनेकार्थत्वाद्धातूनां ज्ञपिरासेवनार्थः । दश० ४ अ० ।

सुपत्था-सुप्रस्था-स्त्री० । अधोवास्तव्यायां दिक्कुमारिकायाम्, ति० ।

सुपभकंत-सुप्रभकान्त-पुं० । हरिकान्तेन्द्रलोकपाले, हरिसहेन्द्रस्यापि लोकपाले, स्था० ४ ठा० १ उ० ।

सुपम्ह--सपक्ष--पुं० । अश्वपुरराजधानीयुक्ते विजयक्षेत्रे,स्था० २ ठा० ३ उ० । जम्बूद्वीपे मेरोः पश्चिमभागस्थे सीतोदाया महानद्या दक्षिणभागस्थे चक्रवर्त्तिविजयक्षेत्रे, स्था० ८ ठा० ३ उ० । स्वनामख्याते ब्रह्मलोकविमाने, नपुं० । स० ६ सम० ।

दो सुपम्हा । स्था० २ ठा० ३ उ० ।

सुपरक्कंत--सुपराक्रान्त--त्रि० । सुष्ठु पराक्रान्तं पराक्रमः तपःप्रभृतिकं येषु तानि । शोभनपराक्रमवत्सु, भ० ३ श० १ उ० ।

सुपरिउड--सुपरिवृत--त्रि० । निरुपद्रवस्थाननिवेशित, वृद्द-स्थानस्थास्यशालिभद्रवपुर्यत् । तं० ।

सुपरिच्चाइ--सुपरित्यागिन्-त्रि० । सुष्ठु शोभनेन प्रकारेण राज्यादि परित्यजतीत्येवंशीलः सुपरित्यागी । शोभनप्रकारेण परित्यागवति , उत्त० १८ अ० ।

सुपरिच्छियकारग--सुपरीक्षितकारक--त्रि० । सुष्ठु देशकाल-पुरुषौचित्येन श्रुतेन च परीक्षितं तस्य कारकः सद्यः न यथाकथंचनकारी । तस्मिन् , व्य० ३ उ० । ( तत्स्वरूपम् ' ववहार ' शब्दे षष्ठभागे उक्तम् । )

सुपरिट्ठिय--सुपरिस्थित--त्रि० । शोभनतया परिस्थिते , नि० चू० १ उ० ।

सुपरिणिट्ठिय--सुपरिनिष्ठित--त्रि० । अतिनिपुणे , कल्प० १ अधि० १ क्षण ।

सुपरिसुद्धि--सुपरिशुद्धि-स्त्री०।सुष्ठु विशुद्धौ,पञ्चा०११विव० ।

सुपसत्थ-सुप्रशस्त--त्रि० । अतिशयशुभे, पञ्चा० १६ विव० । आव० ।

सुपावय--सुपापक--त्रि० । पापयुते,उत्त०१२ अ०।"कोहो य माणो य वहो य जेसिं,मोसं अदत्तं च परिग्गहं च । ते माहणा जाइविज्जाविहूणा,ताइं तु खेत्ताइँ सुपावयाइं ॥१॥" उत्त०१२अ०।

सुपास--सुपार्श्व--पुं० । स्वनामख्याते तीर्थकरे, आ० म० ।

सम्प्रति सुपार्श्वः तस्यायमोघतो नामान्वर्थः--शोभनानि पार्श्वाणि यस्यासौ सुपार्श्वः । तत्र सर्व एव भगवन्त एवंभूतास्ततो विशिष्टं नामान्वर्थमभिधित्सुराह--

गब्भगए जं जणणी, जायसुपासा ततो सुपासजिणो ।

यतो गर्भगते भगवति तत्प्रभावतो जननी जाता सुपार्श्वा शोभनपार्श्वा ततो जिनः सुपार्श्व इति नाम विवर्यीकृत एवं सामान्याभिधानं विशेषाभिधानं वाऽधिकृत्यान्वर्थाभिधानविस्तरो भावनीयः।आ०म०१अ०।आ० चू० । ध० । जम्बूद्वीपे भरतक्षेत्रे अस्यामवसर्पिण्यां जाते सप्तमे तीर्थकरे,अनु० प्रव० ।जम्बूद्वीपे भरतक्षेत्रे आगामिन्यामुत्सर्पिण्यां जाते भविष्यत्तृतीयतीर्थकरे, स० । प्रव० । ति०। जम्बूद्वीपे भरतक्षेत्रे तृतीयायामुत्सर्पिण्यां जाते तृतीये कुलकरे, स० । स्था० । महावीरस्य पितृव्ये,आचा०२श्रु० ३ चू०।कल्प०। (सुपार्श्वस्य सर्वो वक्तव्यता 'तित्थयर' शब्दे चतुर्थभागे २२४७पृष्ठे उक्ता ।) "महओ उदाइजीवो सुपासो" तृतीय उदायिजीवः सुपार्श्वः भविष्यति । ती० २० कल्प । स्था० । सुपार्श्वस्य पञ्चनवतिर्गणाः, पञ्चनवतिर्गणधराश्च । ति० ।

सुपासस्स णं अरहओ पंचाणउइ गणा पंचाणउइ गणहरा होत्था । स० ९४ सम० ।

सुपासे णं अरहा दो धणुसयाइं उड्डुं उच्चत्तेणं होत्था । स० १५० सम० ।

सुपासस्स णं अरहओ छलसीइ वाइसया होत्था । स० ८६ सम० ।

सुपासा--सुपार्श्वा--स्त्री० । पार्श्वापत्यीयायां पार्श्वनाथशिष्यशिष्यायाम् , स्था० ।

अज्जा वि णं सुपासा पासावच्चिज्जा आगमेस्साए उस्सप्पिणीए चाउज्जामं धम्मं पण्णवित्ता सिज्झिहिंति ०जाव अंतं काहिंति । ( सू० ६९२ × )

आर्याऽपि-आर्यिकापि सुपार्श्वा सुपार्श्वाभिधाना-पार्श्वापत्याया पार्श्वनाथशिष्यशिष्याः चत्वारो यामा महाव्रतानि यत्र स चातुर्यामस्तं प्रज्ञाप्य सेत्स्यन्ति । एतेषु च सप्तमतीर्थंकरत्वमेतेष्वन्ये केचित्केचित्च कथयन्ति "भवसिद्धिओ उ भयवं सिज्झिस्सइ कण्हतित्थम्मि" इति वचनादिति भावः । स्था० ९ ठा० ३ उ० ।

सुपिवासिय--सुपिपासित--त्रि० । सुतरामतिशयेन पिपासितः । अत्यन्तं तृषिते, उत्त० २ अ० ।

सुपीढ--सुपीठ--पुं० । पञ्चमेऽहोरात्रमुहूर्ते , जं० ७ वक्ष० ।

सुपुत्त-सुपुत्र--पुं० । सुशिक्षितत्वात् शोभनसूनौ , स्था० ६ ठा० ३ उ० ।

सुपुरिस--सुपुरुष--पुं० । दाक्षिणात्यानां किंपुरुषाणामिन्द्रे , स्था० ४ ठा० १ उ० । उत्तमनरे, पञ्चा० १२ विव० ।

सुपुरिसपुर--सुपुरुषपुर--न० । स्वनामख्याते नगरे, यत्र मग्नजिद्राजा निवसति । आ० चू० ४ अ० ।

सुपेसल--सुपेशल--त्रि० । सुतरामतिशयेन पेशलानि मनोहराणि । अत्यन्तमनोहरे, उत्त० १२ अ० ।

सुप्प--सूर्प--न० । धान्यशोधकभाजनविशेषे , आ० १ श्रु० ८ अ० । सूत्र० । नि० चू० । प्रश्न० । आचा० ।

सुप्पअ--सूर्पक--त्रि० । सूर्पे कृत्वा त्यज्यमाने बालके , यः शूर्पे कृत्वा त्यज्यते तस्य सूर्पक एव नाम स्थाप्यते । अनु० ।

सुप्पइट्ठ--सुप्रतिष्ठ--पुं० । सुर्यदेवस्य पूर्वभवे जीवे, स्था० १० ठा० ३ उ० ।

सुप्पइट्ठग--सुप्रतिष्ठक--न० । आधारविशेषे , जी० ३ प्रति० ४ अधि० ।

सुप्पइट्ठिय--सुप्रतिष्ठित--त्रि० । शोभनतया श्रेष्ठे, ' सुपइट्ठियकुम्म व्व चारुचरणा " सुष्ठु शोभनं यथा भवति एवं प्रतिष्ठिताः कूर्मवत् उन्नतत्वेन चारवश्चरणाः पादा येषां ते तथा । जी० ३ प्रति० ४ अधि० ।

सुप्पइण्णा--सुप्रतिज्ञा--स्त्री० । दक्षिणरुचकसंबन्धिकाञ्चनकूटवास्तव्यायां महर्द्धिकदिक्कुमारिकायाम् , स्था० ८ ठा० ३ उ० । जं० ।

सुप्पउत्त--सुप्रयुक्त--त्रि० । सुष्ठु प्रयुक्तः प्रयोगो व्यापारो यस्य स तथा । शोभनव्यापारवति , आ० १ श्रु० १ अ० ।

सुप्पगय--सूर्पगत--न० । सूर्पाकारे व्यजने , " सुप्पगयकत्ताकारं भक्खंति । मव्यजणवयप्पासिद्धं तेण वायं करेति " । नि० चू० १ उ० ।

**सुप्पडिबुद्ध-सुप्रतिबुद्ध**-पुं० । आर्यसुहस्तिनः शिष्ये , कल्प० २ अधि० ८ क्षण । "तदनु च सुहस्तिशिष्यौ, कौटिककाकन्दिकाववजायेताम् । सुस्थितसुप्रतिबुद्धौ, कौटकगच्छस्ततः समभूत् ॥१॥" ग० ३ अधि० ।

**सुप्पडियाणंद-सुप्रत्यानन्द**-त्रि० । उपकृतेन कृतोपकारस्य मन्तरि , स्था० ४ ठा० ३ उ० ।

**सुप्पडियार-सुप्रतिकार**-न० । सुखेन प्रतिक्रियते-प्रत्युपक्रियते इति सुप्रतीकारम् , भावसाधनोऽयं तद्भवति । प्रत्युपकारकरणे , स्था० ।

अहे णं से तं अम्मापियरं केवलिपन्नत्ते धम्मे आघवइत्ता पन्नवित्ता परूवित्ता ठावइत्ता भवति । तेणामेव तस्स अम्मापिउस्स सुप्पडियारं भवति समणाउसो ! ।, ( सू १३५× )

'अहे णं से' त्ति-अथ केन गाम्यलङ्कारे स पुरुषस्तम्-अम्बापितरं धर्मे स्थापयिता-स्थापनशीलो भवति , अनुष्ठानतः स्थापयतीत्यर्थः । किं कृत्वेत्याह-' आघवइत्ता ' धर्ममाख्याय-प्रज्ञाप्य बोधयित्वा-प्ररूप्य प्रभेदत इति । अथवा-आख्याय सामान्यतो यथा कार्यो धर्मः, प्रज्ञाप्य विशेषतो यथाऽसावहिंसादिलक्षणः प्ररूप्य प्रभेदतो यथा अष्टादशशीलाङ्गसहस्ररूप इति, शीलार्थसूत्रस्थानि चैतानीति । 'तेणामेव' त्ति-ततस्तेनैव धर्मस्थापनेनैव न परिवहनेन । अथवा-तेनैव धर्मस्थापकपुरुषेण न परिवाहिना तस्य-प्रत्युपकरणीयस्याम्बापितुः 'सुप्पडियारं' ति-सुखेन प्रतिक्रियते प्रत्युपक्रियत इति सुप्रतिकारं , भावसाधनोऽयं, तद्भवति प्रत्युपकारः कृतो भवतीत्यर्थः , धर्मस्थापनस्य महोपकारत्वात् । आह च-" संमत्तदायगाणं, दुप्पडियारं भवेसु बहुएसुं । सव्वगुणमेलिया वि य, उवगारसहस्सकोडीहिं॥१॥" इति १ । स्था० ।

अहे णं से तं भट्टिं केवलिपन्नत्ते धम्मे आघवइत्ता पन्नवइत्ता परूवइत्ता ठावइत्ता भवति । तेणामेव तस्स भट्टिस्स सुप्पडियारं भवति, २ ( स्था० ) अहे णं से तं धम्मायरियं केवलिपन्नत्ताओ धम्माओ भट्टं समाणं भुज्जो वि केवलिपन्नत्ते धम्मे आघवतित्ता ०जाव ठावतित्ता भवति तेणामेव तस्स धम्मायरियस्स सुप्पडियारं भवति ३ । ( सू० १३५ + )

धर्मस्थापनेन तु भवति कृतोपकारः । यदाह-"जो जेण जम्मि ठाणम्मि ठाविओ दंसणे व चरणे वा । सो तं तओ चुयं तम्मि चेव काउं भवे निरिणो ॥ १ ॥ " त्ति, शेषं सुगमत्वान्न स्पृष्टमिति धर्मस्थापनेन चास्य मयच्छेदलक्षणः प्रत्युपकारः कृतः स्यादिति । स्था० ३ ठा० १ उ० ।

**सुप्पडिलेहिय-सुप्रत्युपेक्षित**-त्रि० । सुष्ठु प्रत्युपेक्षणं दृष्ट्यादिगतया नैर्मिकवाद् सवत्र्यादि.आचा० १ श्रु० ५ अ० ६ उ० । सुष्ठु शङ्कादिव्युदासेन प्रत्युपेक्षितम् । सुष्ठु सामीप्येन ज्ञाते युक्तप्रत्युपेक्षणया प्रत्युपेक्षित , आचा० २ श्रु० १ चू० १ अ० १ उ० ।

**सुप्पडिवेसिय-सुप्रतिवेशित**-त्रि० । शोभना-शीलादिसम्पन्ना प्रातिवेश्मिका यत्र । शोभनप्रातिवेश्मिके , ध० १ अधि० ।

**सुप्पणहा-सूर्पणखा**-स्त्री० । सूर्पमिव धान्यशोधकभाजनवि शेषवन्नखा यस्याः सा सूर्पणखा । स्वनामख्यातायां रावणभगिन्याम् , ती० २७ कल्प ।

**सुप्पणिहाण-सुप्रणिधान**-न० । सुष्ठु-शोभनं प्रणिधानं सुप्रणिधानम् । पं० सू० १ सू० । प्रणिधानविशेषे, स्था० ।

तिविहे सुप्पणिहाणे पन्नत्ते, तं जहा-मणसुप्पणिहाणे, वयसुप्पणिहाणे कायसुप्पणिहाणे । संजयमणुस्साणं तिविहे सुप्पणिहाणे पन्नत्ते , तं जहा मणसुप्पणिहाणे , वयसुप्पणिहाणे , कायसुप्पणिहाणे ( १२६ × ) स्था० ३ ठा० १ उ० ।

चउव्विहे सुप्पणिहाणे पन्नत्ते, तं जहा-मणसुप्पणिहाणे०जाव उवगरणसुप्पणिहाणे । एवं संजयमणुस्साण वि । सू० २५४ × ।

शोभनं संयमार्थत्वात्प्रणिधानं मनःप्रभृतीनां प्रयोजनं सुप्रणिधानमिति । इदञ्च सुप्रणिधानं समृविशेषनिरूपणाय मनुष्याणां तत्रापि संयतानामेव भवति चारित्रपरिणामनिरूपत्वात् सुप्रणिधानमेवेत्याह एवं संजयेत्यादि । स्था० ४ ठा० १ उ० ।

कइविहे णं भंते ! सुप्पणिहाणे पन्नत्ते? , गोयमा ! तिविहे सुप्पणिहाणे पन्नत्ते, तं जहा-मणसुप्पणिहाणे, वयसुप्पणिहाणे, कायसुप्पणिहाणे । मणुस्साणं भंते ! कइविहे सुप्पणिहाणे पन्नत्ते ? , एवं चेव ० जाव वेमाणियाणं । ( सू० ६३३ × ) भ० ८ श० ७ उ० ।

सुप्रणिधानं शोभनेन प्रणिधानेन नात्र कालो नियम्यते किंतु सुप्रणिधानमिति यदा यदा क्रियते तदा तदा सुप्रणिधानं कर्तव्यमित्यर्थः । सुप्रणिधानस्य फलमिदं प्रधानाङ्गत्वात् । उक्तं च-' प्रणिधानकृतं कर्म, मतं तीव्रविपाकवत् । साऽनुबन्धनियमा-च्छुभांशादेतदेव तत् ॥१॥ " । इत्थं चैतदेकं कर्तव्यम् १ इत्याह-कर्तव्यमिदं' भूयो भूयः,—पुनः पुनः संक्लेशे सति तीव्ररागादिसंवेदनरूपे असतावुत्पन्नायामिति यावत् । तथा त्रिकालं—त्रिसन्ध्यं कर्तव्यमिदम् । पं० सू० १ सू० ।

**सुप्पणिहियजोगि-सुप्रणिहितयोगिन्**-त्रि० । सुप्रणिहितप्रयोजने, दश० ६ अ० १ उ० ।

**सुप्पतिट्ठ-सुप्रतिष्ठ**-त्रि० । शोभनावस्थाने , पञ्चा० ८ विव० ।

**सुप्पदंत-सूर्पदन्त**-पुं० । क्षीरवरद्वीपस्य देवे, सू०प्र० १६ पाहु० ।

**सुप्पदत्ता-सुप्रदत्ता**-स्त्री० । दक्षिणरुचककवास्तव्यायां दिक्कुमार्याम् , आ० क० १ अ० । आ० म० । द्वी० । आ० चू० ।

**सुप्पबुद्ध-सुप्रबुद्ध**-न० । उपरितनमध्यमग्रैवेयकविमाने, स्था० ६ ठा० ३ उ० ।

**सुप्पबुद्धा-सुप्रबुद्धा**-स्त्री० । दक्षिणरुचकपर्वतस्य सिद्धायतनकूटवास्तव्याया दिक्कुमारीमहत्तरिकायाम् , जं० ५ वक्ष० । आ० म० । द्वी० । आ० क० । सुष्ठु अतिशयेन प्रबुद्धा उत्फुल्लयोगादिव्यपस्थत्फुल्ला । जम्ब्वां सुदर्शनायाम्, जं० ।

सुप्पभ-सुप्रभ-पुं० । भरतक्षेत्रे आगामिन्यामुत्सर्पिण्यां भाविष्याति तृतीये कुलकरे, स्था० ७ ठा० ३ उ० । विद्युत्कुमारेन्द्रयोः हरिकान्तहरिशिखयोर्दक्षिणात्यलोकपाले, भ० ३ श० ८ उ० । उत्सर्पिण्यां जाते चतुर्थबलदेवे. ति० ।

सुप्पभे णं बलदेवे एकावणवाससयसहस्साइं परमाउं पालइत्ता सिद्धे बुद्धे ०जाव सव्वदुक्खप्पहीणे जाए । ( सू० ५१ × )

'सुप्पभे' त्ति-चतुर्थो बलदेवः अवसर्पिण्यामनागतकालभावी स-ङ्ग्रहैकपञ्चाशल्लक्षायुरुक्तः, आवश्यके तु पञ्चपञ्चाश-द्वर्षलक्षाणि सन्तीति मताऽन्तरमिति । स० । उत्सर्पिण्यां भावस्य चतुर्थबलदेवे. स० । ती० । ति० । इक्षुवरद्वीपस्य देवे, सू० प्र० १६ पाहु० । द्वी० । शिखरिनलपर्वतकूटदेवे, द्वी० । आ० चू० ।

सुप्पभकंत-सुप्रभकान्त-पुं० । विद्युत्कुमाराणां देवे, भ० ३ श० ८ उ० । हरिसहहरिकान्तयोरिन्द्रस्य लोकपाले, स्था० ४ ठा० १ उ० ।

सुप्पभा-सुप्रभा-स्त्री० । धरणेन्द्रस्य नागकुमारेन्द्रस्य काल-महाकाल०शङ्खपालशैलपालानां लोकपालानामग्रमहिष्याम्, स्था० ४ ठा० १ उ० । तृतीयबलदेवमा० ना० ति० । आव० । अजितस्वामिनः शिबिकायाम्, स० ।

सुप्पमज्जिय-सुप्रमार्जित-त्रि० । सुष्ठु प्रमार्जिते, आचा० २ श्रु० १ चू० ५ अ० १ उ० ।

सुप्पबुद्ध-सुप्रबुद्ध-पुं० । उपरितनमध्यमग्रैवेयकविमानप्रस्तटे, स्था० ९ ठा० ३ उ० । सुष्ठु-अतिशयेन प्रबुद्धैव प्रबुद्धा मणिकनकरत्नानां निरन्तरं सर्वतश्चाकान्तकरणेन सर्वकाल-मुज्ज्वले त्रि० । जी० ३ प्रति० २ उ० ।

सुप्पबुद्धा-सुप्रबुद्धा-स्त्री० । दक्षिणरुचकसमवर्त्तिकाञ्चनकूटवास्तव्यायां महत्तरिकादिक्कुमारिकायाम्, स्था०८ ठा० ३ उ० ।

सुप्पसारय-सुप्रसारक-त्रि० । सुखेन प्रसार्यते पिण्डादिग्रहणार्थं प्रवर्त्यते इति सुप्रसारः । सुप्रसार एव सुप्रसारकः । उत्त० २ अ० । सुखेन प्रसार्ये, उत्त० २ अ० ।

सुप्रसार्य—त्रि० । सुखेन प्रसारितुं योग्ये, उत्त० २ अ० ।

सुप्पसिद्धा-सुप्रसिद्धा-स्त्री० । अभिनन्दनस्वामिनः शिबिकायाम्, स० ।

सुप्पाव-सुप्राप-त्रि० । सुलभे, सूत्र० १ श्रु० २ अ० १ उ० । कृच्छ्रलभ्ये, स्था० ६ ठा० ३ उ० ।

सुप्पिय-सुप्रिय-पुं०। अहोरात्रस्य पञ्चमे मुहूर्त्ते,स० ३० सम०।

सुफणि-सुफणिन्-न० । सुष्ठु सुखेन वा फण्यते-क्वाथ्यते तक्रादिकं यत्र तत्सुफणि । स्थालीपिठरादिके भाजने, सूत्र० १ श्रु० ४ अ० २ उ० ।

सुबन्धु-सुबन्धु-पुं० । द्वितीयबलदेवस्य पूर्वभवधर्माचार्ये, ति० । बिन्दुसारराजस्यामात्ये, दश० ३ अ० ।

सुबद्ध-सुबद्ध-त्रि० । सुतरां बद्धे, सुबद्धसन्धिः सुबद्धा आयुभिः संधी यस्य स सुबद्धसन्धिः । प्रश्न० ४ आश्र० द्वार ।

सुबलि-सुबलिन्-पुं० । सुष्ठु बलवति, सूत्र०१श्रु०४अ०१ उ० ।

सुबहुत्तरगुणफंसी-सुबहुत्तरगुणस्पर्शिन्-त्रि० । सुबहुत्तरगुणान् पिण्डविशुद्ध्यादीन् स्पर्शति—विनाशयतीत्येवंशीलः सुबहुत्तरगुणभंशी । पिण्डादिविशुद्ध्यादिविनाशके, जीत० १

सुबहुस्सुय-सबहुश्रुत-त्रि० । आनिशीथागमज्ञे, जीवा० २० अधि० ।

सुबाहु-सुबाहु-पुं० । ऋषभपूर्वभवजीवस्य वज्रनाभस्य भ्रातरि, आ० चू०१ अ० । बाहुबलिपूर्वभवजीवे. पञ्चा०१६ विव० । ('उसह' शब्दे द्वितीयभागे ११२५ पृष्ठेऽस्य कथा गता ।) "वज्रनाभं सुबाहुञ्च, साधुविश्रामणात् ऽपभात् ।" आ०क०१ अ० । भरतपूर्वभवजीवे, आ० चू० १ अ० । महापीठेन सह जातायामृषभदेवस्य कन्यायाम्, आ० चू० १ अ० । रुक्मिकुणालराजस्य दुहितरि च । स्त्री० । ज्ञा० १ श्रु० ८ अ० ।

सुबाहुकुमार सुबाहुकुमार-पुं० । धारिण्यां देव्यां जाते अदीनशत्रोः सुते, विपा० २ श्रु० १ अ० ।

सुबुद्ध-सुबुद्ध-त्रि० । सम्यक्ज्ञाते, पं० व० ४ द्वार ।

सुबुद्धि-सुबुद्धि-पुं० । इक्ष्वाकुवंशोत्पन्नस्य प्रतिबुद्धिनामराजस्यामात्ये, ज्ञा० १ श्रु० ८ अ० । सागरचक्रवर्तिनो महामात्ये, न० । ऋषभप्रपौत्रस्य यो नगरानितहस्तिनापुरवास्तव्य श्रेष्ठिनि, कल्प०१ अधि०७ क्षण । ध० र० ।

सुबोहिया-सुबोधिका-स्त्री० । विनयविजयनिर्मितायां कल्पसूत्रटीकायाम्, कल्प०१ अधि०१ क्षण । "प्रणम्य परमश्रेयस्करं श्रीजगदीश्वरम् । कल्पे सुबोधिकां कुर्वे वृत्तिं बालोपकारिणीम् ॥१॥" कल्प० १ अधि० १ क्षण ।

सुब्भि-सुरभि-त्रि० । सुरभिगन्धपरिणते, यथा श्रीखण्डादय, । प्रज्ञा० १ पद । आचा० ।

सुब्भिगंध-सुरभिगन्ध-पुं० । सौमुख्यकारके गन्धभेदे, स्था० १ ठा० । आचा० ।

सुरभिगन्धि-त्रि० । सुरभिगन्धपरिणते, प्रज्ञा०१पद । स्था० ।

सुब्भिसद्द-सुरभिशब्द-पुं० । मनोज्ञशब्दे, शुभशब्दे, स्था० १ ठा० । प्रज्ञा० ।

सुभ-सुख-न० । पुण्यप्रकृतिरूपे, स्था० ४ ठा० ४ उ० । कथं सुखदुःख कारणस्य स्वपर्यायः?,उच्यते-जीवपुण्यसंयोगः सुखस्य कारणं तस्य च सुखपर्याय एव । विशे० ।

शुभ-त्रि० । मङ्गलभूते, जी० ३ प्रति० ४ अधि० । शोभमाने, कल्प० १ अधि० ३ क्षण । पार्श्वस्वामिनः प्रथमगणधरे, पुं० । कर्म० ५ कर्म० । नमिनाथस्य प्रथमगणधरे, स० ।

सुभंकर-शुभंकर-न० । दक्षिणयोः कृष्णराज्योर्मध्ये वरुणलोकान्तिकदेवानामाश्रयीभूते विमाने, स्था० ८ ठा० ३ उ० ।

सुभकम्म-शुभकर्मन्-न० । शुभवेद्यकर्मणि , सू० प्र० १६ पाहु० ।

सुभक्खण-सुभक्षण-पुं० । षष्ठे ऋषभदेवसुते, कल्प० १ अधि० ७ क्षण ।

सुभखेत्त-शुभक्षेत्र-न० । शुभस्थाने, सू० प्र० १६ पाहु० ।

सुभग-सुभग-न० । पर्यायविशेषे, जी० ३ प्रति०४ अधि० । आ० म० । प्रज्ञा० । रा० । जं० । वरधनुःमित्रमित्र परिव्राजके, पुं० । उत्त० १३ अ० । सौभाग्ययुक्ते, त्रि० । चं० प्र० २० पाहु० । सू० प्र० । अनपाये, स० ।

सुभगचउक्क-सुभगचतुष्क-न० । सुभगसुस्वरादेययशःकीर्ति रूपे चतुष्के, कर्म० ५ कर्म० ।

सुभगजालुज्जाल--सुभगजालोज्ज्वाल--पुं० । सुभगानि-दृष्टिकराणि यानि जालानि मुक्तागुच्छास्तैरुज्ज्वालः । नवसुखकारिमुक्तागुच्छोज्ज्वाले,कल्प० १ अधि० २ क्षण ।

सुभगजोग-सुभगयोग-पुं० । सद्व्यापारे, प्रश्न० ५ संव० द्वार ।

सुभगणाम-सुभगनामन्--न० । सुभगात् सुभगनामोदयेन सर्वजनेष्टो भवति, यदुदयादनुपकार्यपि सर्वस्य मनःप्रियो भवति तत्सुभगनामेत्यर्थः । तदभ्यधायि "अणुवकए वि बहूणं, होइ पिओ तस्स सुभगनामुदओ" त्ति "सुभगुदए वि हु कोइ, कंची आसज्ज दूभगो जइ वि । जायइ तद्दोसाओ,जहा अभव्वाण तित्थयरो ॥ १ ॥" "सुभगाओ सव्वजणइट्ठो" कर्म० १ कर्म० । नामकर्मोत्तरभेदादिषु । आ० । प्रव० ।

सुभगतिग--सुभगत्रिक--न० । सुभगसुस्वरादेयस्वरूपे त्रिके, कर्म० ५ कर्म० ।

सुभगा--सुभगा--स्त्री० । लताभेदे, प्रज्ञा० १ पद । सुरूपनाम्नो भूतेन्द्रस्याग्रमहिष्याम् , स्था० ४ ठा० १ उ० ।

सुभगाकारा--सुभगाकारा--स्त्री० । सुभगमाकरोतीति सुभगाकारा । दुर्भगवस्तुनः सुभगकारिकायां विद्यायाम् , सूत्र० २ श्रु० २ अ० ।

सुभगुरुजोग--शुभगुरुयोग--पुं० । सुन्दरधर्माचार्यसम्बन्धे, पञ्चा० ४ विव० । विशिष्टचारित्रयुक्ताचार्यसम्बन्धे, ल० ।

सुभघोस--शुभघोष--पुं० । पार्श्वनाथस्य द्वितीये गणधरे, स० ८ समः ।

सुभजोग--शुभयोग--पुं० । कुशलव्यापारे, पं० व० २ द्वार ।

सुभड--सुभट--पुं० । शोभनयोद्धरि,सूत्र० १ श्रु० ३ अ० १ उ० ।

सुभडपाल -सुभटपाल--पुं० । त्रिशतीजिनभवनचतुःशतलौकिकप्रासादाष्टादशशतीप्रमुखदपद्वत्रिशच्छतनर्तणिम्बहनचशताराममसशतवापीद्विशतकूपसप्तशतसत्रागारविराजमानस्य अजमेरुनिकटवर्तिनो हर्षपुरस्याधिपतौ, यत्र पुरे श्रीप्रियग्रन्थसूरयोऽभ्युपयुः । कल्प० २ अधि० ८ क्षण ।

सुभणाम--शुभनामन्--न० । तीर्थङ्करादौ पूज्ये च । स्था० । नामकर्मभेदे, यदुदयान्नाभेरुपर्यवयवाः शुभा भवन्ति तच्छुभनाम । यच्छिरःप्रभृतिभिः स्पृष्टः परो हृष्यतीति तेषां शुभत्वम् । कर्म० ५ कर्म० । नामकर्मोत्तरभेदादिषु, स्था०२ठा० ४ उ० । आ० ।

सुभत्ति---सुभक्ति-स्त्री० । आन्तरप्रीतौ , जीवा० ६ अधि० ।

सुभदीहाउत्ता-शुभदीर्घायुष्कता--स्त्री० । दीर्घायुष्कतायाम् , स्था० ३ ठा० १ उ० । ( व्याख्या 'आउ' शब्दे द्वितीयभागे १२ पृष्ठे गता । )

सुभद्द-सुभद्र---पुं० । अधस्तनमध्यमग्रैवेयकविमानप्रस्तटे , स्था० ६ ठा०३ उ० । चतुष्पदजातिकाये, प्रज्ञा०१ पद । शाखाञ्जनीनगरीवास्तव्ये स्वनामख्याते सार्थवाहे शकटपितरि,स्था० १० ठा० ३ उ० । विपा० । शिखरितलकूटविशेषदेवे, द्वी० । भद्रबाहुस्वामिनि,पं०चू०१कल्प० । कूणिकपुत्रस्य कृष्णकुमारस्य पुत्रे,(स च वीरान्तिके प्रव्रज्य वर्षचतुष्टयं व्रतपर्यायं परिपाल्य उत्कृष्टमायुरनुपाल्य ततश्च्युतो महाविदेहे सेत्स्यति इति कल्पावतंसिकानां चतुर्थेऽध्ययने सूचितम् )। नि०१ श्रु०२ वर्ग ४ अ० स्वनामख्याते विमाने, नपुं० । स० १७ सम० ।

सुभद्दा-सुभद्रा-स्त्री० । कोणिकस्य राज्ञ्याम् , औ० । भद्रो रात्रद्वयेन समाप्यमाने प्रतिमाविशेषे, स्था०४ ठा०१ उ० । सौर्यपुरे धनञ्जयश्रेष्ठिनो भार्याम् ,आव०४अ० । वसन्तपुरवास्तव्यस्य जिनदत्तश्रेष्ठिनस्सुतायाम् ,आव०४अ० । पूर्वादिदिक्चतुष्टय प्रत्येकं प्रहरचतुष्टयं कायोत्सर्गकरणरूपायामहोरात्रद्वयमानायां प्रतिमायाम् , स्था० २ ठा० ३ उ० । चम्पानगरीवास्तव्यजिनदत्तस्य दुहितरि,आ०चू०४ अ० । (सदुदाहरणं च 'काउस्सग्ग' शब्दे तृतीयभागे ४२७ पृष्ठे गतम् । ) ऋषभदेवस्य प्रथमश्राविकायाम् , आ० म० १ अ० । कल्प० । आ० चू० । वाराणसीनगरीवास्तव्यस्य भद्राभिधानसार्थवाहस्य भार्यायाम् , सा च वन्ध्या पुत्रार्थिनी भिक्षार्थमागतमार्यासंघाटकं पुत्रलाभं पप्रच्छ । स च धर्ममचीकथत् प्राव्राजीच्च सा । स्था० १० ठा० ३ उ० । गोशालकमातरि , स्था० १० ठा० ३ उ० । भूतानन्दस्य नागकुमारेन्द्रस्य चित्रनामलोकपालकस्य स्वनामख्यातायामग्रमहिष्याम् ,भ०१० श० ५ उ० । भद्रसार्थपुत्रस्य कोणिकस्य भार्यायाम् , आ० । चम्पायां स्वनामख्यातायां देव्याम् , ती० ३४ कल्प । सुदर्शनायां जम्ब्वाम , सुभद्रा शोभनकल्याणभागिनी , नह्यस्याः कदाचिदुपद्रव संभवो महर्द्धिकेनाधिष्ठितत्वात् । जं० ४ वक्ष० । नन्दाया पुष्करिण्याम , द्वी० । अवन्तिवास्तव्यायामवन्तिसुकुमालमातरि, आ० क० ४ अ० । सौर्यपुरे वास्तव्यस्य , धनञ्जयश्रेष्ठिनः पत्न्याम , आ० क०४ अ० । दक्षिणाञ्जनाद्रेर्दक्षिणभागस्थायां स्वनामख्यातायां पुष्करिण्याम् , द्वी० । वैरोचनेन्द्रस्य बले राक्षसनामस्य महाराजस्य स्वनामख्यातायामग्रमहिष्याम् , स्था० ४ ठा० । द्वितीयबलदेवमातरि, आव० १ अ० । बहुपुत्रिकायाः पूर्वभवजीवे सार्थवाहस्य भार्याम् , नि० १ श्रु० ३ वर्ग ३ अ० । ( तत्कथा च ' बहुपुत्तिया ' शब्दे पञ्चमभागे उक्ता । ) भरतचक्रवर्तिनो भार्यायाम् , स० । भूतानन्दस्य नागकुमारेन्द्रस्य नागकुमारराजस्य कालवालमहाराजस्याग्रमहिष्याम् , स्था०४ ठा०१ उ० ।

सुभमइ-शुभमति-पुं० । ऋषभदेवस्य नवाशीतितमे पुत्रे , कल्प० १ अधि० ७ क्षण ।

सुभमग्ग-शुभमार्ग-पुं० । ज्ञानस्य प्राधान्यं व्यवहारस्य च गौणता यत्र भवति स शुभमार्गः । उत्तममार्गे, द्रव्या० १ अध्या० ।

सुभय-सुभग-त्रि० । सौभाग्ययुक्ते , भ० १२ श० ६ उ० ।

सुभल-सुभल-पुं० । शेखरके मस्तकाभरणविशेषे , आ० १ श्रु० ८ अ० ।

सुभवेयणतर-सुखवेदनतर-त्रि० । अतिशयितः सुखेन मोहजन्योन्मादोपक्षया अक्लेशेन वेदनमनुभवनं यस्यासौ सुखवेदनतरः । मोहजनितमहोपक्षया अकृच्छ्रानुभवनीयतरे, भ० १ श० ७ उ० ।

सुभसीलगणि-शुभशीलगणिन्-पुं० । तपागच्छीयमुनिसुन्दरसूरिशिष्ये,येन स्नात्रपञ्चाशिका पञ्चास्तिकायप्रबोधो भक्तामरस्तोत्रवृत्तिश्चेत्यादयो ग्रन्था रचिताः । विक्रम १५२१ संवत्सरे अयं वर्तमान आसीत् । जै० इ० ।

सुभा–शुभा–स्त्री० । रमणीयक्षिजयसजधान्याम् , जं०१ वक्ष० ।

दो सुभाओ । स्था० २ ठा० ३ उ० ।

सुभाविय–सुभावित–त्रि० । तत्त्वभणनात्सुष्ठु भाविते , औ० ।

सुभावियचित्त–सुभावितचित्त–त्रि० । सुभावितान्तःकरणे , दशा० ४ लक्ष० ।

सुभासिय–सुभाषित–न० । सुष्ठु–कलिमलेन भाषितम्—प्रतिपादितं सुभाषितम् । आतु० । शोभनवचनप्रयोगे , प्रश्न० २ संव० द्वार । "तोसे सो वयणं सोच्चा , संजयाएं सुभासियं ।" उत्त० २८ अ० ।

सुभाश्रित–त्रि० । कल्याणयुक्ते, प्रश्न० २ संव० द्वार ।

सुखाश्रित–त्रि० । सुखसंयुते, प्रश्न० २ संव० द्वार ।

सुधाश्रित–त्रि० । अमृतमाश्रिते , प्रश्न० २ संव० द्वार ।

सुभासुभ–शुभाशुभ–त्रि० । शुभवर्णगन्धादिषु अशुभवर्णगन्धादिषु च । भ० ६ श० ३२ उ० ।

सुभिक्ख–सुभिक्ष–त्रि० । शोभना शुभा भिक्षा दार्शनिकानां यत्र तत् । रा० । ज्ञा० । अन्नादीनां सम्भवे, व्य० ३ उ० । सुकाले , स्था० १ ठा० । सुभिक्षसंयुते , ज्ञा० १ श्रु० १ अ० । स्था० । औ० । सुलभे, सू० १ उ० ३ प्रक० । धार्यते वा सुभिक्षमिति वा वराडा । नि० चू० ५ उ० ।

सुभूम–सुभूम–पुं० । भरते वर्षे अस्यामवसर्पिण्यां जाते कौरव्यगोत्रोत्पन्ने अष्टमचक्रवर्तिनि तारायां जनिते कार्तवीर्यपुत्रे, प्रव०२०८ द्वार। दशा० । ('माग' शब्दे षष्ठभागे कथोक्ता । )

सन्ती कुन्थू य अरो , हवइ सुभूमो य कोरव्वो । स० ।
सिज्जंसे सत्ततरी, पढमो सिस्सो य गोत्थुभो होइ ।
छावट्ठी य सुभूमो , बांधव्वा वासुपुजस्स ॥ ति० ।

सुभूमो मृत्वा नरकं गतः । स्था० २ ठा० ४ उ० ।

सुभूमिभाग–सुभूमिभाग–न० । पृष्ठचम्पाया बहिरुद्याने, सू० १ श्रु० ८ अ० । ज्ञा० ।

सुभेरव–सुभैरव–त्रि० । अत्यन्तभयानके, उत्त० १९ अ० ।

सुभोग–सुभोग–न० । शतद्वारस्य नगरस्य बहिस्तात्पौरस्त्ये दिग्भागे स्वनामख्याते उद्याने , भ० १५ श० ।

सुभोगा–सुभोगा–स्त्री० । अधोलोकवासिन्यां दिक्कुमार्याम् , आ० म० १ अ० । आ० क० । आ० चू० । ति० । महाविदेहवर्षे माल्यवतो वक्षस्कारपर्वतस्य सागरकूटवासिन्यां दिक्कुमारीदेव्याम् , जं० ४ वक्ष० ।

सुभोदय–शुभोदक–न० । तीर्थजले, कल्प० १ अधि० ३ क्षण ।

सुभोम–सुभौम–पुं० । जम्बूद्वीपे भरते वर्षे आगामिन्यामुत्सर्पिण्यां भविष्यति स्वनामख्याते द्वितीयकुलकरे,स्था० ७ ठा० ३ उ० । यत्र ग्रामे छद्मस्थत्वेन विहरन् महावीरस्वामी स्त्रीलाम्पटो उञ्जलिकरणरूपेण गोशालकदोषेण ताडितः । आ० म० १ अ० ।

सुब्भि–सुरभि–पुं० । सुभे, प्रश्न० ५ संव० द्वार ।

सुब्भिगंध–सुरभिगन्ध–पुं० । मनोज्ञगन्धे, स्था० १ ठा० ।

सुब्भिसद्द–सुरभिशब्द–पुं० । सौभाग्यकुलसंकुले, स्था० ३ ठा० १ उ० ।

सुमइ–सुमति–पुं० । शोभना मतिरस्येति सुमतिः। तथा गर्भस्थे जनन्याः सुनिश्चिता मतिरभूदिति सुमतिः। ध० २ अधि० । आ० म० ।

शोभना मतिरस्येति सुमतिः । सर्व एव च भगवन्तः सुमतय इति विशेषाभिधानप्रतिपादनार्थमाह—

जणणी सव्वत्थ विणि–च्छएसु सुमइ त्ति तेण सुमइजिणो ।

येन कारणेन गर्भगते भगवति सर्वेषु विनिश्चयेषु कर्तव्येषु सुमतिरतीव मतिसंपन्ना जाता तेन कारणेन भगवान् सुमतिजिनः,जननीसुमतिहेतुत्वात् सुमतिरिति भावः।शोभना मतिरस्माद्भवतीति व्युत्पत्तेः । तथा च वृद्धसम्प्रदायः—"जणणी गब्भगए सव्वत्थ विणिच्छएसु अतीव मतिसंपन्ना जाया,दोण्हं सवत्तीणं मयपइयाणं ववहारो छिन्नो । जहा मम पुत्तो भविस्सइ सो जोव्वणत्थो एयस्स असोगवरपायवस्स अहे ववहारं तुब्भं छिंदिहति ताव एगाइया उ भणइ एवं भवतु, पुत्तमाया नेच्छइ, भणइ–ववहारो छिज्जउ । ततो भावं नाऊण छिन्नो ववहारो दिन्नो तीसे पुत्तो, एवमादी गब्भगुणेणं जणणी सुमती जाय त्ति सुमतिनामं कयं ।" आ०म०२अ०।अस्यामवसर्पिण्यां भरतक्षेत्रे जाते पञ्चमतीर्थकरे,पञ्चा०१९विव०।स०। नं०। आ०चू०। कल्प०। अनु०।प्रव०। स्था०। स्वनामख्याते राज्ञि,गोशालको देवलोकाच्च्युतः सन्निन्ध्यगिरिपादमूले पुण्ड्रकेषु शतद्वारे नगरे सुमते राज्ञो भद्राया भार्यायाः कुक्षौ पुत्रतयोत्पत्स्यति । भ० १५ श० । स्वनामख्यातेऽनगारे, महा० ।

से भयवं! जे णं से सुमती से भव्वे उयाहु अभव्वे?, गोयमा ! भव्वे । से भयवं ! जइ ते णं भव्वे ता णं मए समाणे कहिं समुप्पन्ने?. गोयमा!परमाहम्मियासुरेसु । से भयवं ! किं भव्वे परमाहम्मियासुरेसु समुप्पज्जइ ?, गोयमा ! जे केइ घणरागदोसमोहमिच्छत्तोदएणं सुवासियं पि परमहिअंव एसं अवमन्नेत्ता णं दुवालसंगं च सुयअनाणी मइअन्नाणी किरियं अयाणित्ता य समयसब्भावं अणायारं पसंमियाणं तमेव उत्थपेज्जा , जहा सुमइणा उत्थप्पियं भवति । एए कुसीले साहुणो । अहा णं एए वि कुसीले तो एत्थ जगे न कोइ सुसीलो अत्थि, निच्छियं मए एतेहिं समं पव्वज्जा न कायव्वा,तहा जारिसो यं निब्बुद्धिओ तारिसो सो वि तित्थयरो त्ति एवमुच्चारेमाणेणं गोयमा ! सहंतं पि तवमणुट्ठमाणे परमाहम्मियासुरेसु उववज्जेज्जा । कहं उववज्जे ? । से भयवं ! परमाहम्मियासुरदेवाणं उव्वट्टे समाणे से सुमती कहं उववज्जेज्जा?, गोयमा ! तेणं मंदभागेणं अणायारपसंसुच्छपणं करेमाणेणं सम्मग्गपणासणं अभिणंदिय तकम्मदोसेणं अणंतसंसारियत्तणमहिज्जियं, तो किंचिय उववाए तस्स साहेज्जा, जस्स णं अणेगबोम्मलपरियट्टेसु वि नत्थि चउगइसंसाराओ अवयाणं ति ।

तहा वि संखेवओ सुणसु गोयमा ! इणमेव जंबुद्दीवं दीवं परिक्खिविऊण ठिए जे एस लवणजलही एयस्स णं जत्था स सिंधू महानदी पविट्ठा तप्पएसाओ दाहिणेणं दिसाभागेणं पणपन्नाए जोयणेसु वेइयाए गब्भंतरं अत्थि परिसं ताव दायगं नाम अद्धतेरसजोयणपमाणं हत्थिकुंभायारं छलं--तस्स य लवणजलोवरि णं अद्धट्ठजोयणाणि उस्सेहो। तहिं च णं अच्चंतघोरतिमिरंधयाराओ घडियालगसंठाणाओ सीयालीसं गुहाओ । तासु च णं जुगलं निरंतरं जलयारिणो मणुया परिवसंति। ते च वज्जरिसभनारायसंघयणा महाबलपरक्कमे अद्धतेरसरयणीपमाणेणं संखेज्जवासाओ महुमज्जमंसप्पिए महावहो इत्थिलोले परमदुव्वन्नसुउमालअणिट्ठखररूसियतणू मायंगवइकयमुह सीहघोरदिट्ठी कयंतभीसणे अनामियपिट्ठी असणिव्व निठ्ठुरपहारा दप्पुद्धुर य भवंति। तेसिं ति जाओ अंतरंडगगोलियाओ ताओ गहाय चमरीणं संतिएहिं सेयपुच्छवालेहिं गुंथिऊणं जे कइ उभयकन्नेसु निबंधिऊण महग्घुत्तमजच्चरयणत्थी सागरमणुपविसेज्जा से णं जलहत्थिमहिसगोहिगसयरमहामच्छतंतुसुंसुमारपभितिहिं दुट्ठसावतेहिं अभीए चेव सव्वं पि सागरजलं आहिंडिऊण जहिच्छाए जच्चरयणसंगहकरी य अहयसरीरे आगच्छइ । ताणं च अंतरंडगगोलियाणं संबंधेणं ते चरए गोयमा ! अणोवमं सुघोर—दारुणं दुक्खं पुव्वज्जियरोद्दकम्मवसगा अणुभवंति। से भयवं ! केणं अट्ठेणं?, गोयमा ! तेसिं जीवमाणाणं को समत्थो ताओ गोलियाओ गहेउं । जे जया उण ते घेप्पंति तया बहुविहाहिं नियंतणाहिं महया साहसेणं सन्नद्धबद्धकरवालकुंतचक्काइपहरणड्ढोवेहिं बहुसूरधीरपुरिसेहिं बुद्धिपुव्वगेण सजीवियडोलाए घेप्पंति। तेसिं च घिप्पमाणाणं जाइं सारीरमाणसाइं दुक्खाइं भवंति ताइं सव्वेसु नारयदुक्खेसु जइ परं उवमेज्जा। से भयवं ! को उण ताओ अंतरंडगगोलियाओ गण्हेज्जा, गोयमा ! तत्थेव लवणसमुद्दे अत्थि रयणदीवं नाम अंतरदीवं तस्सेव पडिसं ताव दावणाओ थलाओ एगतीसाए जोयणसएहिं तन्निवासिणो मणुया य भवंति। से भयवं ! कयरेणं पओगेणं खेत्तसभावसिद्धपुव्वपुरिसेणं च सिद्धेणं च विहाणेणं। से भयवं ! कयरे उण से पुव्वपुरिससिद्ध विही तेसिं ति ?, गोयमा ! तहियं ति रयणदीवे अत्थि वीसं एगूणवीसं अट्ठारससतधणूपमाणाइं घरट्टसंठाणाइं वरवइरसिलासंपुडाइं ताइं च विघाडेऊणं ते रयणदीवनिवासिणो मणुया पुव्वसिद्धखेत्तसहावसिद्धेणं चेव जोगेणं पभूयमच्छियासहुए अब्भंतरे उ अबंतलेवाडाइ काऊण तओ तेसिं पक्कमंसखंडाणि बहूणि जच्चमहुमज्जभंडगाणि पक्खिवंति। तओ एयाइं करिय सुरुंददीहमहद्दुमकट्ठेहिं आरुभित्ता णं सुसाओ पोराणमज्जअत्थिगामहुओ य पडिपुन्ने बहुए लाउगे गहाय पडिसं ताव दायगत्थलमागच्छंति जाव णं तत्थागए समाणे ते गुहावासिणो मणुया पेच्छंति ताव णं तेसिं रयणदीवगणिवासिमणुयाणं वहाय पडिधावंति। तओ ते तेसिं महुपडिपुन्नं लाउगं पयच्छिऊणं अब्भत्थपओगेणं तं कट्ठजाणं जइणयरवेगं दुयं खेविउं रयणदीवाभिमुह वच्चंति। इयरे य तं महुमंसादी य पुणो सुट्ठुयरं तेसिं पिट्ठिए धावंति, ताव गोयमा ! जाव णं अवासन्ने भवंति ताव णं सुसाओ महुगंधदव्वसक्कारियपोराणमज्जं लाबुगमेगं पमोत्तूणं पुणो वि जइणयरवेगेणं रयणदीवाभिमुहा वच्चंति। इयरे य तं सुसाओ बहुगंधदव्वसंसक्कारियपोराणमज्जसंसाइ य पुणो सुदक्खयरं तेसिं पिट्ठिए धावंति। पुणो वि तेसिं बहुपडिपुन्नं लाउगमेगं मुंचंति। एवं ते गोयमा ! महुमज्जलोलीए संपलग्गेत्ता वा णयंति जाव णं ते घरट्टसंठाणे वइरसिलासंपुडे, तो जाव णं तावइयं भूभागं संपसरयंति ताव णं जमेवासन्नं वइरसिलासंपुडं जंभायमाणपुरिसमुहागारं ( विडाडियं ) विहाडियं चिट्ठइ तत्थेव जाइं महुमज्जपडिपुन्नाइं ससुद्धरियाइं सेसलाउगाइं ताइं तेसिं पेच्छमाणाणं तत्थ मोत्तूणं नियनिलएसु वच्चंति । इयरे य महुमज्जलोलीए जाव णं तत्थ पविसंति ताव णं गोयमा ! जे ते पुव्वमुक्के पक्कमंसखंडे जे य ते महुमज्जपडिपुन्ने भंडगे जं च महुए चेवालित्तं सव्वं तं सिलासंपुडं पक्खंति ताव णं तेसिं महंतं परिओसं महंतं तुट्ठी महंतं पमोदं भवइ । एवं तेसिं महुमज्जपक्कमंसं परिभुंजमाणाणं जाव णं गच्छंति सत्तट्ठ दस पंचव वा दिणाणि ताव णं ते रयणदीवनिवासिणो मणुया एगे सन्नद्धबद्धसाउहकरगतं वइरसिलं वेढिऊणं सन्नद्धपंतीहिं गच्छंति। अन्ने तं घरट्टसिलासंपुडं मायालितोणं एगट्ठं मेलंति । तम्मि य मेलेज्जमाणे गोयमा ! जइ णं कहं वि तुडिविभागओ तेहिं एक्कस्स दोण्हं वि वा णिप्फेडं भवेज्जा तओ तेसिं रयणदीवनिवासिमणुयाणं संविडविपासायमंदिरसव्वयाणं तक्खणा चेव तेसिं हत्था संथारकालं भवेज्जा । एवं तु गोयमा ! तेसिं तेणं वज्जसिलाघरट्टसंपुडेणं गिलियाणं पि तहियं चेव जाव णं सव्वट्ठिए दलिऊणं ण सपीसिए सुकुमालिया य ताव णं तेसिं णो पाणाइक्कमं भवेज्जा। ते य अट्ठी वइरमिव दुद्दले।

तेसिं तु तत्थ य वइरसिलासंपुडे कणहंगगोणगेहिं आउत्तमादरेणं अरहट्टघरट्टघरसरिहगचक्कमिव परिमंडलं भमालिय तात्र णं खंडंति जाव णं संवच्छरं । ताहं तं तारिसं अच्चंतघोरदारुणं सारीरमाणसं महदुक्खसन्निवायं समणुभवमाणाणं पाणाइक्कमं भवइ, तहा वि णं तेसिं अट्ठिगणो फुडति, णो दो फलं भवंति, णो संदलिज्जंति णो विदलिज्जंति णो पहरिसंति णवरं जाइं कायविसंधिसंघाणबंधणाइं ताइं सव्वाइं निच्छुडे ता णं वि जज्जरी भवंति । तओ पुण इयरुवलघरट्टस्सेव परमत्तियं चुण्णमिव किंचि अंगुलाइयं अट्ठिखंडं दट्ठूणं ते रयणदीवगे परिओ सम्मुव्वहंते सिलासंपुडाइं उव्विघाडिऊणं ताओ अंतरंडगोलियाओ गहाय जे तत्थ हणं ते अणेगरित्थंसधाणग विक्किणंति । एतेणं विहाणेणं गोयमा ! ते रयणदीवनिवासिणो मणुया ताओ अंतरंडगोलियाओ गण्हंति । से भयवं ! कहं ते तं सतारिसं अच्चंतघोरदारुणसुदुस्सहं दुक्खनियरं विसहमाणे निराहारपाणगे संवच्छरं जाव पाणे वि धारयंति । गोयमा ! सकयकम्माणुभावाओ ।

( शेषं तु प्रश्नव्याकरणवृत्तिविवरणादवसेयम् । )

से भयवं ! तओ वि से मए समाणे से सुमतिजीवे कहं उववायं लभेज्जा ?, गोयमा ! तत्थेव परिसं ताव दायगत्थलंभिणेव कमेणं सत्तभवंतरं । तओ वि दुट्ठमाणे तओ वि कण्हे तओ वि वाणमंरे तओ वि लिंबत्ताए वणस्सइए तओ वि मणुएसु इत्थित्ताए तओ वि छट्ठीए तओ वि मणुयत्ताए कुट्ठी तओ वि महकाए जुहाहिवती गए । तओ वि मरिऊण मेहुणासत्ते अणंतवणप्फतीए तओ वि अणंतकालाओ मणुएसु संजए तओ वि मणुए महानेमित्तिए तओ वि सत्तमाए तओ वि महामच्छे चरिमोयहिम्मि तओ सत्तमाए तओ वि गोणे तओ वि मणुए तओ वि विडवकोइलियं तओ वि जलोयं तओ वि महामच्छे तओ वि तंदुलमच्छं तओ वि सत्तमाए तओ वि रासहे तओ वि साणे तओ वि किमी तओ वि दद्दुरे तओ वि तेउकाए तओ वि कुंथू तओ वि महुयरे तओ वि चडए तओ वि उद्देहिगं तओ वि वणप्फईए तओ वि अणंतकालाओ मणुएसु इत्थीरयणं तओ वि छट्ठीए तओ वि कणेरू तणो वि सामंतियं नामपट्टणं, तत्थोवज्झायगेहासन्ने लिंबपत्तेणं वणस्सई । तओ वि मणुएसुं खुज्जित्थी तओ वि मणुयत्ताए पंडगत्ते तओ वि मणुयत्तेणं दुग्गए तओ वि दुमए तओ वि पुढवादीसु भवकायट्ठिए पत्तेयं । तओ वि मणुए तओ वि बालतवस्सी तओ वि वाणमंतरे तओ वि पुरोहिए तओ वि मच्छे तओ वि समाए तओ वि गोणे तओ वि मणुए महासम्मद्दिट्ठी अविरए चक्कहरे तओ वि पढमाए तओ वि इब्भे तओ समणे अणगारे तओ वि अणुत्तरसुरे तओ वि चक्कहरे महासंघयणी भवित्ता णं निव्विण्णकामभोगे णं जहोवइट्ठं संपुण्णं संजमं काऊण गोयमा ! से णं सुमइजीवे परिनिव्वुडेज्जा । तहा य जे भिक्खू वा भिक्खुणी वा पासंडीणं पसंसं करेज्जा जे यावि णं निण्हगाणं पसंसं करेज्जा जे णं निण्हयाणं अणुकूलं भासेज्जा जे णं निण्हयाणं आययणं पविसेज्जा जे णं निण्हगाणं गंथं सत्थपयक्खरं वा परूवेज्जा जे णं निण्हगाणं संतिए कायकिलेसाइए तवइ वा संजमेइ वा जाणेइ वा विन्नाणेइ वा सुएइ वा पंडिच्चेइ वा अभिमुहमुद्धपरिसामज्झगए सिलाहेज्जा से वि णं परमाहम्मिएसु उववज्जेज्जा । जंहा सुमती । से भयवं ! तेणं सुमइजीवे णं तक्कालं समणत्तं अणुपालियं तहा वि एवंविहेहिं नारयतिरियनरामरविचित्तोवाएहिं एवइयं संसाराहिंडणं । गोयमा ! णं जमागमबाहाए लिंगग्गहणं कीरइ तं डंभमेव केवलं सुदीहसंसारहेउभूयं । णो णं तं परियायं लिक्खइ, तेणेव य संजमं दुक्करं मन्न अन्नं च समणत्ताए से य पढमे संजमे संजमपए जं कुसीलसंसग्गणिरिहरणं । अहा णं णो णिरिहरेत्ता संजममेव ण ठाएज्जा ता तेणं सुमइणा तमेवायरियं तमेव पसंसियं तमेव उस्सप्पियमलाहियं तमेव अणुट्ठियं ति । एयं च सुत्तमइक्कमित्ता णं पच्छा एए जहा सुमती तहा अन्नेसिमवि सुंदरविउरसुदंसणासेहरणीलभद्दसुभोमयखग्गधारिअणंगसमणदुहंतदयरक्खियमुणिणादीणं को संखाणं करेज्जा, ता एयमट्ठं वियत्ताणं कुसीलसंजोगे सव्वहा वज्जणीए। से भयवं ! किं ते साहुणो तस्स णं णाइलसड्ढगस्स छंदेणं कुसीले उयाहु आगमजुत्तीए?, गोयमा ! कहं सड्ढगस्स वराय[1]स्सेरिसो सामत्थो जेणं सच्छंदत्ताए महाणुभावाणं सुसाहूणं अवन्नवायं भासे । तेणं सड्ढयेणं हरिवंसतिलयमरगयच्छविणा वावीसमयधम्मतित्थयरअरिट्ठनेमिनाहस्स सयासे वंदणवत्तियाए गएणं आयारंगं अणंतगमपज्जवेहिं पन्नविज्जमाणं समवधारियं । तत्थ य छत्तीसआयारे पन्नविज्जति । तेसिं च णं जे केइ साहू वा साहुणी वा अन्नयरमायारमइक्कमेज्जा से णं गारत्थिहिं उवम्मेयं अहन्नहा समणुट्ठ वायरेज्जा, पन्नविज्जा वा तओ णं अणंतसंसारी भवेज्जा ?, गोयमा । जेणं तु मुहणंतगं अहिगं परिग्गहियं तस्स ताव पंचमहव्वयस्स भंगो। जेणं तु इत्थीए अंगोवंगाइं णिज्झाइऊणं णालोइयं तेणं तु बंभचेरगुत्ती विराहिया । तव्विराहणेणं जहा एगदेसदड्ढो पडो दड्ढो भन्नइ तहा चउत्थमहव्वयं भग्गं । जेण य सहत्थेणं उ-

[1] १-कुशीलसंसर्ग, प्रमत्तधाम वा इत्यत्र ' वराय ' पदेन सूचितम् ।

ण्णाविऊण दिन्नं भूयं पडिलाहिया तेण तु तइयमहव्वयं भग्गं, जेणं अणुग्गओ वि सूरिओ उग्गओ भणिओ तस्स य चिइयवयं भग्गं, जेणं उण अफासुओदगेणं अच्छीणि पधोयाणि तहा अविहिए य थंडिलाणं संकमणं कयं वीयं कायं वा अक्कंतं वासाकप्पस्स अंचलग्गेणं हरियं संघट्टियं विज्जूए फुसिओ मुहणंतगेणं अजयणाए फडफडस्स वाउक्कायमुदीरियं तेणं तु पढमं महव्वयं भग्गं। तब्भंगे पंचण्हं पि महव्वयाणं भंगो कओ। तो गोयमा! आगमजुत्तीए एते कुसीले साहुणो। जओ णं उत्तरगुणाणं पि भंगं ण इट्ठं किं पुण जं मूलगुणाणं। से भयवं! ताए जयणाए णं वियारिऊणं महव्वए घत्तव्वे?। गोयमा! इमे अट्ठ समट्ठे। से भयवं! केणं अट्ठेणं? गोयमा! सुममणेइ वा सुमावएइ वा ण तइयं भयंतरं। अहवा जहोवइट्ठं सुममणुत्तमणुपालिया अहवा जहोवइट्ठं सुमावगत्तमणुपालिया णो समणो समणत्तमणुमइयेज्जा। णो सावगो सावगत्तमइयेज्जा निरइयारं वयं पसंमंते वयं समणुट्ठे, णवरं जे समणधम्मे से णं अच्चंतघोरदुच्चरे तेणं असंसकम्मक्खयं जहन्नेणं पि अट्ठभवंतरे मोक्खो। इयरेणं तु सुट्ठेणं देवत्ताई सुमासुमत्तं वा सो य परंपरेण मोक्खो। नवरं पुणो वि त संजमाउत्ता जे से समणधम्मे से अवियारे सुवियारे पणवियारे तह त्ति समणुपालिया, उत्तामयाण पुण महस्साणि विधाणं जो जं परिवाले तस्साइयारं च स भवं तमेव निसइ। से भयवं! सो पुण णाइलसड्ढगो कहिं समुप्पन्नो?, गोयमा! सिद्धीए। से भयवं! कहं?, गोयमा! तेणं महाणुभागेणं तंमि कुसीलाणं सितुट्टेऊणं तीए चेव बहुसावयतरुसंडसंकुलाए घोरकंतारगडईए सव्वपावकलिमलकलंकविप्पमुक्कं तित्थयरवयणं परमाहियं सुदुल्लहं भवसएसु पि त्ति कलिऊणं अच्चंतविसुद्धासएणं फासुदेसंमि निप्पडिकम्मनिरायारं पडिवन्नं पायवोवगमणमणसणं ति। अह अन्नया तेणेव पएसेणं विहरमाणो समागओ तित्थयरो अरिट्ठनेमी तस्स य अणुग्गहत्तेण य अणुग्गहट्ठाए तेण य अचलियसत्तो भव(सत्तो) त्ति काऊणं उत्तिमट्ठाए साहणीकया साइमया देसणा। तमायन्नमाणो सजलजलहरनिनायं देवदुंदुहीनिग्घोसं तित्थयरभारइं सुहज्झवसायपरो आरूढो खवगसेढीए अपुव्वकरणेणं अंतगडकेवली जाओ। एतेणं अट्ठेणं एवं वुच्चइ। जहा णं गोयमा! सिद्धीए। ता गोयमा! कुसीलसंसग्गीए विप्पजहियाए एवइयं अंतरं भवइ त्ति बेमि। महा० ४ अ०।

ऋषभस्य नवसितमे पुत्रे, कल्प० १ अधि० ७ क्षण। शोभना मतिः सुमतिः। रागद्वेषरहितमतौ, त्रि०। कल्प० ३ अधि० ६ क्षण। पाण्डुसेनराजस्य सुतायां मतिभगिन्याम्, स्त्री०। आ० क० ४ अ०। आव०।

**सुमइसूरि-सुमतिसूरि**-पुं०। स्वनामख्याते लक्ष्मीसागरसूरिशिष्ये, ग० ३ अधि०।

**सुमउय-सुमृदुक**-त्रि०। सुतरां मृदुकं सुमृदुकम्। अत्यन्तकोमले, कल्प० १ अधि० ३ क्षण।

**सुमंगल-सुमङ्गल**-न०। प्रत्यन्तनगरविशेषे, पराद्धे वर्षे भविष्यति षष्ठतीर्थंकरे, पुं०। प्रव० ७ द्वार। आव०। आ० म०। स्वनामख्याते ग्रामे, कृतचरमासान्तपारणको वीरस्वामी यत्रागतः सनत्कुमारेण वन्दितः, प्रियं च पृष्टः। आ० चू० १ अ०। धर्मिकसहाराजस्य पूर्वभवजीवे, आ० क० ४ अ०। जम्बूद्वीपे भरते वर्षे आगामिन्यामुत्सर्पिण्यां भविष्यति प्रथमे तीर्थंकरे, स०। शत्रुञ्जयस्योद्धारकारके स्वनामख्याते गृहस्थे, ती० १ कल्प।

**सुमंगला-सुमङ्गला**-स्त्री०। राजपुरनगरवास्तव्यस्य रत्नसञ्चयश्रेष्ठिनो भार्यायां गुणसागरमातरि, ध० र० २ अधि०। विमलयशोभूपतेः पत्न्यां पुष्पचूलस्य मातरि, ती० ४१ कल्प। भरतब्राह्मीरूपयुगलस्य एकोनपञ्चाशत्पुत्रयुगलस्य च मातरि, ऋषभपत्न्याम्, कल्प० १ अधि० ७ क्षण। आ० चू०। स०। आ० म०। "सुमंगला जसवई भद्दा सहदेवी अइरसिरिदेवी" आव० १ अ०।

**सुमग्गिय-सुमार्गित**-त्रि०। शोभनमार्गिते, पं० चू० १ कल्प।

**सुमड-सुमृत**-त्रि०। सुष्ठु मृते, दश० ७ अ०।

**सुमण-सुमनस्**-त्रि०। शोभनं धर्मध्यानादिप्रवृत्ततया मनश्चित्तं यस्य सः सुमनाः। सद्गुणान्वितमनस्कत्वे, प्रश्न० १० संव०। आ० म०। हर्षिणि, सूत्र० २ श्रु० २ अ०। स्वनामख्याते सुमित्रनामपरिव्राजकशिष्ये, पुं०। दर्श० २ तत्त्व। रुचकसमुद्रस्य पूर्वार्धाधिपतौ देवे, जी० ३ प्रति० ४ अधि०। द्वी०। गुच्छभेदे, प्रज्ञा० १ पद। पुष्पे, न० पुं०। सू० १ उ० २ प्रक०। अन्त०। दश०। सूत्र०। ज्ञा०।

**सुमणदाम-सुमनोदामन्**-न०। पुष्पमालायाम्, ज्ञा० १ श्रु० १ अ०।

**सुमणभद्द-सुमनोभद्र**-पुं०। कस्यचिद् द्वीपस्य समुद्रस्य वाधिपतौ देवे, द्वी०। स्वनामख्याते श्रावस्तीनगरीवास्तव्ये गृहपतौ, अन्त०। (स च वीरान्तिके प्रव्रज्य बहुवर्षपर्यायं श्रामण्यं परिपाल्य विपुले पर्वते सिद्ध इत्यन्तकृद्दशानां षष्ठे वर्गे द्वादशेऽध्ययने सूचितम्।) जलिकाभेदे, प्रज्ञा० १ पद।

**सुमणस-सुमनस**-पुं०। नन्दीश्वरसमुद्रस्य पूर्वार्धाधिपतौ देवे, सू० प्र० १९ पाहु०।

**सुमणा-सुमनस्**-स्त्री०। शक्राग्रमहिष्याः पद्मायाः दक्षिणपौरस्त्यरतिकरपर्वते राजधान्याम्, स्था० ४ ठा० २ उ०। स०। भूतानन्दस्य नागकुमारेन्द्रस्य लोकपालानामग्रमहिष्याम्, भ० १० श० ५ उ०। स्था०। चन्द्रप्रभस्य अग्रमही-

र्थकरस्य प्रथमशिष्यायाम्, नि० । स्वनामख्यातायां श्रेणिकमहाराजभार्यायाम्, अन्त० । ( सा च वीरान्तिके प्रव्रज्य विंशतिवर्षाणि श्रामण्यं परिपाल्य सिद्धेत्यन्तकृद्दशानां षष्ठवर्गस्य द्वादशेऽध्ययने सूचितम् । ) शोभनं मनो यस्याः सकाशाद्भवति सा सुमनाः। जम्ब्वां सुदर्शनायाम्, भवति हि तां पश्यतां महर्द्धिकानामपि मनः शोभनमतिरमणीयत्वात् । जी० ३ प्रति० ४ अधि० ।

सुमर-स्मृ-धा० । स्मरणे, " स्मरेर्भर-झूर-भर-भल-लढ-विम्हर-सुमर-पयर-पम्हुहाः" ॥ ८ । ४ । ७४ ॥ इति स्मरतेः सुमर इत्यादेशः । सुमरइ । स्मरति । प्रा० ४ पाद ।

सुमरिउए-स्मर्तुम्-अव्य० । आख्यातुमित्यर्थे, "पुव्वकीलियाइं सुमरित्तए " आचा० २ श्रु० ३ चू० ।

सुमरुता-सुमरुत्-स्त्री० । स्वनामख्यातायां श्रेणिकमहाराजभार्यायाम्, अन्त० १ श्रु ६ वर्ग ७ अ० । ( सा च वीरान्तिके प्रव्रज्य विंशतिवर्षाणि प्रव्रज्यां परिपाल्य सिद्धेत्यन्तकृद्दशानां षष्ठवर्गस्य सप्तमेऽध्ययने सूचितम् । )

सुमहन्त-सुमहत्-त्रि० । अपारे, द्वा० २२ द्वा० ।

सुमहग्घ-सुमहार्घ-त्रि० । बहुमूल्ये, कल्प० १ अधि० ३ क्षण । औ० ।

सुमागह-सुमागध-पुं० । स्वनामख्याते वीरस्वामिनः पितृवयस्यगोष्ठिके, आ० म० १ अ० । आ० चू० ।

सुमालि-सुमालिन्-पुं० । लङ्कापुरीश्वरस्य दशग्रीवस्य पितामहे, ती० ४१ कल्प ।

सुमिइंत-सुमृदत्-न० । वाद्यविशेषे, आ० चू० १ अ० ।

सुमिण-स्वप्न-पुं० । सामान्यफले स्वापे, भ० ११ श० ११ उ० । ( एतेषां सम्यक् स्वरूपं, वीरस्य १० स्वप्नाश्च 'सुमिण' शब्दे वक्ष्यन्ते । ) ( गजादि १० स्वप्नरूपं 'वीर' शब्दे षष्ठभागे । ) " दुसुमिणं वा कुसुमिणं वा उग्गहपज्जा सपणं ऊसासाण काउस्सग्गं " महा० १ चू० ।

पापस्वप्नं दृष्ट्वा आलोचयेत् ।

सावरं सुहासुहं मम्मं, सुविणगं समवधारए ।
जं तत्थ सुविणगं पासे, तारिसगं तं तहा भवे ॥ ५१ ॥
जइसं सुंदरगं पासे, सुमिणगं तो इमं महा ।
परमत्थतत्तसारत्थं, सल्लुद्धरणं सुणेतु णं ॥ ५२ ॥
देजा आलोयणं सुद्धं, अट्ठमट्ठाणविरहिओ ।
रजंतो धम्मतित्थयरे, सिद्धे लोगग्गमंठिए ॥ ५३ ॥

महा० १ अ० ।

तथा सुस्वप्नदुःस्वप्नाभ्यां यत्कथ्यते शुभाशुभं तत् स्वप्नाख्यं निमित्तम् । यथा—" देवेन्द्रात्मजबान्धवांस्तव-गुरुच्छत्राम्बुजश्रेणं, प्राकाराद्विरदाम्बुदद्रुमगिरिप्रासाद-संगेहनम् । अम्भोधेस्तरणं सुराऽमृतपयोदध्नां च पानं तथा, चन्द्रार्कग्रसनं स्थिनं शिवपदे स्वापे प्रशस्तं नृणाम् " ॥ १ ॥ इत्यादि । प्रव० २५७ द्वार । ( मानुषस्वप्नोऽलभ्ये स्वप्नदृष्टान्तः 'माणुस्स' शब्दे षष्ठभागे गतः । )



सुमिणजागरिया-स्वप्नजागरिका-स्त्री० । स्वप्नसंरक्षणाय जागरिका-निद्रानिरोधः स्वप्नजागरिका । स्वप्नसंरक्षणार्थे निद्रानिरोधे, भ० ११ श० ११ उ० ।

सुमिणभद्द-स्वप्नभद्र-पुं० । माठरसगोत्रस्य संभूतविजयस्य षष्ठे शिष्ये, कल्प० २ अधि० ८ क्षण ।

सुमिणुग्गह-स्वप्नावग्रह-पुं० । स्वप्नानां स्मरणे, कल्प० १ अधि० ३ क्षण ।

सुमित्त-सुमित्र-पुं० । मल्लिनाथेन सह प्रव्रजिते तन्नामधेये ज्ञातकुमारे, ज्ञा० १ श्रु० ८ अ० । श्रीपुरनगरवास्तव्यस्य समुद्रदत्तस्य पुत्रे, ध० र० २ अधि० ३ लक्ष० । ( मित्रीभावो-पाख्यकथा 'उज्जुववहार' शब्दे द्वितीयभागे ७४१ पृष्ठे गता । ) स्वनामख्याते परिव्राजके, दर्श० २ तत्त्व ।

सुमित्तविजय-सुमित्रविजय-पुं० । एकविंशतीर्थंकरस्य नमेः पितरि, आव० १ अ० । नि० । प्रव० । स० । जम्बूद्वीपे भरते वर्षेऽस्यामुत्सर्पिण्यां जातस्य सगरचक्रवर्तिनः पितरि शान्तितीर्थंकरस्य प्रथमभिक्षादायके, स० ६ समः ।

सुमित्ता-सुमित्रा स्त्री० । मुनिसुव्रतमातरि, ती० १० कल्प ।

सुमुइय-सुमुदित-त्रि० । अतिहृष्टे, औ० ।

सुमुणिय-सुज्ञात-त्रि० । सुष्ठुज्ञाते, ध० २ अधि० ।

सुमुणियपरमत्थ-सुज्ञातपरमार्थ-त्रि० । परिज्ञातपरमार्थे, ध० २ अधि० ।

सुमुह-सुमुख-पुं० । स्वनामख्याते काम्पिल्यराजे, आ० चू० । " कंपिल्लं नगरं तत्थ सुमुहो राया, सो इंदकेतुं पासति लोकेण महिज्जतं अणेगकुडभीसहस्सपरिमंडितानिभरामं पुणो य विलुत्तं पडितं अ मुत्तपुरीसाण मज्झे सो वि संबुद्धो, जो इंदकेतुं सुयलंकियं पासति सो विहरति । " विमलवाहनस्य राज्ञो मन्त्रिणि, आ० चू० ४ अ० । ती० । कल्प० । जम्बूद्वीपे भरते वर्षे उत्सर्पिण्यां भविष्यति सुमापरनामके कुलकरे, ती० २० कल्प । ति० । संकर्षणबलदेवस्य धारिणीकुक्षि-संभूते पुत्रे, अन्त० ३ वर्ग ९ अ० । ( स च अरिष्टनेमेः समीपे प्रव्रज्य गजसुकुमार इव दीक्षां परिपाल्य सिद्ध इत्यन्तकृद्दशानां तृतीये वर्गे नवमेऽध्ययने सूचितम् । )

सुमुहुत्त-सुमुहूर्त-पुं० । सुन्दरमुहूर्ते, प्रश्न० २ आश्र० द्वार ।

सुमेरुप्पभ-सुमेरुप्रभ-पुं० । मेघकुमारस्य तृतीयपूर्वभवजीवे, कल्प० १ अधि० १ क्षण । ( 'मेघकुमार' शब्दे षष्ठे भागे कथा गता । )

सुमेहा-सुमेघा स्त्री० । ऊर्ध्वलोकवासिन्यां स्वनामख्यातायां दिक्कुमारिकायाम्, आ० म० १ अ० । स्था० । ति० । आ० चू० ।

सुमोक्ख-सुमोक्ष-पुं० । भावरूपादिदुर्वासनं निरुपमसुखे, पं० व० ३ द्वार ।

सुय-शुक-पुं० । व्यासपुत्रे, ज्ञा० १ श्रु० ५ अ० । ( 'थावच्चापुत्त' शब्दे चतुर्थभागे २४०६ पृष्ठे कथा गता । ) पक्षिविशेषे, प्रज्ञा० १७ पद ४ उ० । औ० । प्रश्न० ।

श्रुत-त्रि० । आकर्णिते, उत्त० ५ अ० । सूत्र० । अवधारिते, उत्त० २ अ० । स० । श्रोत्रेन्द्रियविषयीकृते, स्था० ८ ठा० ३ उ० ।

अयगेन, सूत्र० १ श्रु० १४ अ० । अवग्रपधगुणागेन, सूत्र० १ श्रु० ५ अ० १ उ० । श्रोत्रेन्द्रियेण विशेषतोऽभिमते, सूत्र० १ श्रु० ४ अ० । उपलब्धे, सूत्र० १ श्रु० ५ अ० १ उ० । अधीते, सूत्र० १ श्रु० ३ अ० ३ उ० । श्रूयते इति श्रुतम् । भावे क्तप्रत्यये कृते नपुंसकता । शब्दे, पा० । " सुयं मे आउसंतेणं " श्रूयते तदिति श्रुतं प्रतिविशिष्टार्थप्रतिपादनफलं वाग्योगमात्रं भगवता निसृष्टम् आत्मीयश्रवणकोटरप्रविष्टं क्षायोपशमिकभावपरिणामाविर्भावकारणं श्रुतमित्युच्यते । श्रुतम्—आकर्णितम्-अवधारितमिति यावत् । दश० ४ अ० । ( ' समणा ' शब्देऽस्मिन्नेव भागेऽस्य विस्तरो गतः । )

**सुयं मे आउसंतेणं भगवया एवमक्खायं । ( सू० १ )**

अस्य च व्याख्या संहितादिक्रमेणेति, आह च भाष्यकारः—
" संहिता १ पयं २ पयत्थो ३, संमवतो विग्गहो ४ वियारो य ५ । दूसियसिद्धी ६ नयमय-विसेसओ नेयमणुसुत्तं ॥ १ ॥ "

तत्र सूत्रमिति संहिता , सा चानुगतैव , सूत्रानुगमस्य तद्रूपत्वादिति । आह च—" होइ कयत्थो वोत्तुं सपयच्छेयं सुयं सुयाणुगमो " त्ति सूत्रं चास्खलितादिगुणोपेतं उच्चारिते कश्चिदर्थो अवगताः प्राज्ञानां भवन्त्यतः संहिता व्याख्याभेदो भवति, अनधिगतार्थाधिगमाय च पदादयो व्याख्याभेदाः प्रवर्त्तन्ते इति , तत्र पदानि—' श्रुतं मया आयुष्मन् ! तेन भगवता एवमाख्यातमिति । एवं पदेषु व्यवस्थापितेषु सूत्रालापकनिष्पन्ननिक्षेपावसरः । तत्र चेयं व्यवस्था—" जत्थ उ जं जाणेज्जा , निक्खेवं निक्खिवे निरवसेसं । जत्थ वि य न य जाणेज्जा , चउक्कयं निक्खिवे तत्थ " ॥ १ ॥ त्ति तत्र नामश्रुतं स्थापनाश्रुतं च प्रतीतम् । द्रव्यश्रुतमधीयानस्यानुपयुक्तस्य पत्रकपुस्तकन्यस्तं वा, भावश्रुतं तु श्रुतोपयुक्तस्येति । इह च भावश्रुतेन श्रोत्रेन्द्रियोपयोगलक्षणेनाधिकारः । ( स्था० ) इह च संयमायुषा यश कीर्त्यायुषा चाधिकार इति, एवं शेषपदानां यथासम्भवं निक्षेपो वाच्य इति, उक्तः सूत्रालापकनिष्पन्ननिक्षेपः । पदार्थः पुनरयम्—इह किल सुधर्मस्वामी पञ्चमो गणधरदेवो जम्बूनामानं स्वशिष्यं प्रति प्रतिपादयाञ्चकार । श्रुतम्—आकर्णितम् ' मे ' मया 'आउसं' ति-आयुः जीवितं तत्संयमप्रधानतया प्रशस्तं प्रभूतं वा विद्यते यस्यासावायुष्मांस्तस्यामन्त्रणं हे आयुष्मन् !-शिष्य ! ' तेणं ' ति—यः सर्वाहितव्यवहितसूक्ष्मबादरबाह्याध्यात्मिकसकलपदार्थव्यवहितवचनतयाऽऽसत्येन जगति प्रतीतः, अथवा—पूर्वभवोपात्ततीर्थकरनामकर्मादिलक्षणपरमपुण्यप्राग्भारो विलीनानादिकालीनमिथ्यादर्शनादिवासना परिहृतमहाराज्यो दिव्याद्युपसर्गवर्गसंसर्गाविचलितशुभध्यानमार्गो भास्कर इव घनघातिकर्मघनाघनपटलविघटनाविर्भावितविमलकेवलभानुमण्डलो विबुधपतिपदपद्मपटलजुष्टपादपद्मो भव्यसमभिधानपुरीप्रथमप्रवर्त्तितप्रवचनो जिनो महावीरस्तेन—भगवता अष्टमहाप्रातिहार्यरूपसमग्रैश्वर्यादियुक्तेन एव-मित्यमुना वक्ष्यमाणैकत्वादिना प्रकारेण ' आख्यात ' मिति आ—मर्यादया जीवाजीवलक्षणासंकीर्णतारूपया अभिविधिना वा—समस्तवस्तुविस्तरव्यापनलक्षणेन ख्यातं-कथितं आख्यातमात्मादि वस्तुजातमिति गम्यते । अत्र च श्रुतमित्यनेनात्रधारणाभिधायिना स्वयमवधारितमेवान्यस्मै प्रतिपादनीयमित्याह-अन्यथाऽभिधाने प्रस्तुतानायत्तसम्भवात् , उक्तञ्च—" किं एत्तो पावयरं ? सम्मं अणहिगयधम्मसब्भावो । अन्नं कुदेसणाए, कट्ठयरागम्मि पाडेइ " ॥ १ ॥ त्ति " मये " त्यनेनापकमद्वाराभिहितभावप्रमाणद्वारगतास्मानंतरपरम्परभेदभिन्नागमेऽयं वक्ष्यमाणो ग्रन्थोऽर्थतोऽनन्तरागमः सूत्रतस्त्वात्मागम इत्याह—" आयुष्मन्नि ' त्यनेन तु कोमलवचोभिः शिष्यमनःप्रह्लादयताऽऽचार्येणोपदेशो देय इत्याह । उक्तञ्च—" धम्ममइएहि अइसुं-दरेहिं कारणगुणोवणीएहिं । पल्हायंतो य मणं, सीसं चोएइ आयरिओ ॥ १ ॥" त्ति । आयुष्मत्त्वाभिधानं चात्यन्तमाह्लादकम् , प्राणिनामायुषोऽत्यन्ताभीष्टत्वात् , यत उच्यते—" सव्वे पाणा पियाउया अप्पियवहा सुहासया दुक्खपडिकूला सव्वे जीविउकामा सव्वेसिं जीवियं पियं " त्ति । तथा " तृणायापि न मन्यन्ते , पुत्रदारार्थसंपदः । जीवितार्थे नरास्तेन , तेषामायुरतिप्रियम् ॥ १ ॥ " इति । अथवा—आयुष्मन्नित्यनेन ग्रहणधारणादिगुणयुक्तेन शिष्याय शास्त्रार्थो देय इति ज्ञापनार्थं सकलगुणाधारभूतत्वेनाशेषगुणोपलक्षणेन चिरायुर्लक्षणगुणेन शिष्यामन्त्रणमकारि । यत उक्तम्—" सुट्ठु वि दोहमंडे, न कणहभूमाउ लोहए उदयं । गहणधरणासमत्थे, इय देयमछिन्नकारिम्मि ॥ १ ॥" विपर्यये तु दोष इति । आह च—" आमेघडे निहत्तं, जहा जलं तं घडं विणासेइ । इय सिद्धंतरहस्सं, अप्पाहारं विणासेइ ॥ " सुत्तम्मि य, परिवाओ सुत्तअत्थपलिमंथो । अज्जेसि । पि य हाणी , पुट्ठावि न दुव्वदा वंझा ॥ १ ॥ " इति । तथा ' तेन ' त्यनेन त्वासन्नादिगुणप्रसिद्धताऽभिधायकेन प्रस्तुताध्ययनप्रामाण्यमाह-वक्तृगुणापेक्षत्वाद्वचनप्रामाण्यस्येति, 'भगवते' त्यनेन तु प्रस्तुताध्ययनस्योपादेयतामाह, अतिशयवान् हि-लोपादेयः, तद्वचनमपि तथेति, अथवा—' तेणं ' ति-अनेनोपोद्घातनिर्युक्त्यन्तर्गतं निर्गमद्वारमाह, यो हि मिथ्यात्वतमःप्रभृतिभ्यो दोषेभ्यो निर्गतस्ततो निर्गतमिदमध्ययनं क्षेत्रतोऽपापायां कालतो वैशाखशुद्धैकादश्यां पूर्वाह्णे भावे क्षायिके वर्त्तमानादिति, एवं च गुरुपर्वक्रमलक्षणः सम्बन्धोऽस्य प्रदर्शितो भवति तथा तथाविधेन भगवता यदुक्तं तत् सप्रयोजनमेव भवतीति सामान्यतः सप्रयोजनता चास्योक्ता, न हि पुरुषार्थानुपयोगि भगवन्तो भाषन्ते, भगवत्त्वहानेः, अत एव वास्योपायोपेयभावलक्षणः सम्बन्धोऽपि दर्शितः , इदं हि भगवद्व्याख्यातं ग्रन्थरूपापन्नमुपायः, पुरुषार्थस्तूपेय इति, अत एव चात्र श्रोतारः श्रवणे प्रवर्त्तिताः, यतः—" सिद्धार्थं सिद्धसम्बन्धं , श्रोतुं श्रोता प्रवर्त्तते । शास्त्रादौ तेन वक्तव्यः , सम्बन्धः सप्रयोजनः ॥ १ ॥ " इति । ' एव ' मित्यनेन तु भगवद्वचनानामात्मवचनस्यानुवादितामाह, अत एव स्ववचनस्य प्रामाण्यम् सर्वज्ञवचनानुवादमात्रत्वाद्दर्शयति , अथवा-' एव ' मित्येकत्वादिः प्रकारोऽभिधेयतया निर्दिष्टः , निरभिधेयताऽऽशङ्कया श्रोतॄणां काकदन्तपरीक्षायामिवाप्रवृत्तिरत्र माभूदिति, आख्यातमित्यनेन तु नापौरुषेयवचनरूपमिदम् , तस्यासम्भवादित्याह , यत उक्तम्—" वेयवयणं न माणं , अपोरुसेयं ति भिन्नियं ( तम्मयं ) जेण । इदमभ्यंत—

विरुद्धं . वयणं च अपोरुसेयं च ॥ १ ॥ जं पुरुसाइ त्ति वयणं , पुरिसाभावे उ नेयमेवं ति । ता तस्सवाभावो, निय-मेण अपोरुसेयत्ते ॥२॥" इति । अथवा—आख्यातं भगवते-दं, न कुड्यादिनिःसृतम् , यथा कैश्चिदभ्युपगम्यते--"त-स्मिन् ध्यानसमापन्ने , चिन्तारत्नवदास्थिते । निःसरन्ति य-थाकामं, कुड्यादिभ्योऽपि देशनाः ॥ १ ॥ " इत्यस्यानेनान-भ्युपगममाह, यतः—" कुड्यादिनिःसृतानां तु , न स्यादा-प्तोपदिष्टता । विश्वासश्च न तासु स्या—त्केनेमाः कीर्तिता इति ? ॥ १ ॥ " समस्तपदसमुदायेन त्वात्मौद्धत्यपरिहारे-ण गुरुगुणप्रभावनापरैरेव विनेयेभ्यो देशना विधेयेत्या-ह, एवं हि तेषु भक्तिपरता स्यात् , तथा च विद्यादेरपि सफलता स्यादिति , यदुक्तम्—" भत्तीए जिनवराणं , खि-ज्जंति य पुव्वसंचिया कम्मा । आयरियनमोक्कारेण , वि-ज्जा मंता य सिज्झंति ॥ १ ॥ " त्ति । नमस्कारश्च भक्तिरेवे-ति । अथवा—' आउसंतेणं ' ति--भगवद्विशेषणम् , आयुष्म-ता भगवता , चिरजीविनेत्यर्थ , अनेन भगवद्बहुमानगर्भेण मङ्गलमभिहितम् । भगवद्बहुमानस्य मङ्गलत्वादिति चोक्तमेव यद्वा--' आयुष्मते ' ति परार्थप्रवृत्त्यादिना प्रशस्तमायुर्धार-यता न तु मुक्तिमवाप्यापि तीर्थनिकारादिदर्शनात् पुनरि-हायातेनाभिमानादिभावतोऽप्रशस्तम् । यथोच्यते कैश्चित्-"ज्ञानिनो धर्मतीर्थस्य , कर्तारः परमं पदम् । गत्वाऽऽ-गच्छन्ति भूयोऽपि , भवं तीर्थनिकारतः ॥ १ ॥ " " यदा यदा हि धर्मस्य, ग्लानिर्भवति भारत ! । अभ्युत्थानमधर्म-स्य , तदाऽऽत्मानं सृजाम्यहम् ॥ २ ॥" एवं ह्यनुन्मूलितरा-गादिदोषत्वात् तद्वचसोऽप्रामाण्यमेव स्यात् , निःशेषोन्मूल-ने हि रागादीनां कुतः पुनरिहागमनसम्भव इति ? । अथ-वा—आयुष्मता—प्राणधारणधर्मवता न तु सदा संशु-द्धेन , तस्याकरणत्वेनाख्यातृत्वासम्भवादिति । यदिवा—' आउसंतेणं ' ति-मन्त्रस्य विशेषणम् , मम आज्ञप्ति-गु-रुदर्शितमर्यादया वसता , अनेन तस्यतो गुरुमर्यादावर्ति-स्वरूपत्वात् गुरुकुलवासस्य सन्निधानमर्थत उक्तम् , ज्ञाना-दिहेतुत्वात्तस्य । उक्तञ्च—" णाणस्स होइ भागी , थिरय-रओ दंसणे चरित्ते य । धन्ना आवकहाए , गुरुकुलवासं न मुंचंति ॥ १ ॥ गीयाथासो रती धम्मे , अणाययणवज्जणं । निग्गहो य कसायाणं , एयं धीराण सासणं ॥ २ ॥ " त्ति । अथवा—' आमुसंतेणं ' ति—आमृशता भगवत्पादारविन्दं भक्तितः करतलयुगलादिना स्पृशता , अनेनैतदाह—अधि-गतसकलशास्त्रेणापि गुरुविश्रामणादिविनयकृत्यं न मोक्तव्यम्. उक्तं हि—" जहा हि अग्गी जलणं णमंसे णाणा हुती मंतप-याभिसित्तं । एवायरीयं उवचिट्ठएज्जा. अणंतणाणोऽवगओ वि संतो ॥१॥" त्ति । यद्वा-'आउसंतेणं' ति-आजुषमाणेन-श्रव-णविधिमर्यादया गुरुमासेवमानेन, अनेनाप्येतदाह--विधि-नैवोचितदेशस्थेन गुरुसकाशाच्छ्रोतव्यम् , ननु यथा कथ-ञ्चित् । यत आह—" निद्दाविगहापरिव-ज्जिएहिं गुत्तेहिं पं-जलिउडेहिं । भत्तिबहुमाणपुव्वं, उवउत्तेहिं सुणेयव्वं ॥ १ ॥" इत्यादि , एवमुक्तः पदार्थः । पदविग्रहस्तु सामासिकपदवि-षयः स व्याख्यातमित्यादिषु दर्शित इति । इदानीं चाल नाप्रत्यवस्थाने , ते च शब्दतोऽर्थतश्च । तत्र शब्दतः-ननु 'मे' इत्यस्य मम मह्यं चेति व्याख्यानमुचितं षष्ठीच-तुर्थ्योरेवैकवचनान्तस्यास्मत्पदस्य, 'मे' इत्यादेशादिति, अ-त्रोच्यते—' मे ' इत्यय विभक्तिप्रतिरूपकोऽव्ययशब्दस्तृती-यैकवचनान्तोऽस्मच्छब्दार्थे वर्तत इति न दोषः । अर्थ-तस्तु चालना—ननु वस्तु नित्यं वा स्यादनित्यं वा ?, नित्यं चेत्तर्हि नित्यस्याप्रच्युतानुत्पन्नस्थिरैकस्वरूपत्वाद्यो भगवतः सकाशे श्रोतृत्वस्वभावः स एव च कथं शिष्योप-देशकत्वस्वभाव इति ?, किञ्च—शिष्योपदेशकत्वे स्वस्य पू-र्वस्वभावत्यागे स्यादत्यागे वा ?.यदि त्यागे हन्त हतं वस्तुनो नित्यत्वं,वस्तुनः स्वभावाव्यतिरिक्तत्वेन तत्त्यागे तत्त्यागादिति, अपरित्याग इति चेत् , न, विरुद्धयोः स्वभावयोर्युगपद्-सम्भवादिति । अथ चानित्यमिति पक्षस्तदपि, न, निरन्व-यनाशे हि श्रोतुः श्रवणकाल एव विनष्टत्वात् कथमवसरे-ऽन्यस्यैवोत्पन्नत्वात्कथनप्रसङ्गः , यज्ञदत्तश्रुतस्य देवदत्ता-कथनवदिति । अत्र समाधिर्नैयमतेनेति नयद्वारमवतरति, तत्र नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवम्भूता नयाः, तत्र चाद्यास्त्रयो द्रव्यमेवार्थोऽस्तीति वादितया द्रव्यार्थिके ऽवतरन्ति, इतरे तु पर्याय एवार्थोऽस्तीति वादितया पर्या-यार्थिकनये,तदेवमुभयमनाश्रयेण द्रव्यार्थितया नित्यं वस्तु पर्यायार्थितया त्वनित्यमिति नित्यानित्यं वस्त्विति प्रत्य--कपक्षोक्तदोषाभावो गुरुनागरादिवदिति । एवमेव च सक-लव्यवहारप्रवृत्तिरिति । उक्तं च—" सव्वं चिय पइसमयं, उप्पज्जइ नासए य निच्चं च । एवं चेव य सुहदु-क्खबं-धमोक्खादिसब्भावो ॥ १ ॥" त्ति । उक्तः सूत्रस्पर्शिकनिर्यु-क्त्यनुगमः । स्था० १ ठा० । श्रूयते नादीन श्रुतम् ,प्रतिविशि-ष्टार्थप्रतिपादनफलं वाग्योगमात्रं भगवता निसृष्टम् । आत्मी-यश्रवणकोटरप्रविष्टं क्षायोपशमिकभावपरिणामाविर्भावका-रणं श्रुतमित्युच्यते,श्रुतमवधृतमवगृहीतमिति पर्यायाः।दश० ४ अ० । आचा० । श्रवणं श्रुतम् । अभिलापप्लावितार्थग्रहण-स्वरूपे उपलब्धिविशेषे, अनु० । वाच्यवाचकभावपुरस्स-रीकारेण शब्दसंसृष्टग्रहणार्थहनावुपलब्धिविशेषे एवमाकारं वस्तु जलधारणाद्यर्थक्रियासमर्थघटशब्दवाच्यमित्यादि—रूपतया प्रधानीकृतत्रिकालसाधारणसमानपरिणाम शब्दा-र्थपर्यालोचनानुसारिणि इन्द्रियमनोनिमित्ते अवगमविशेषे, आ० म० १ अ० । प्रव० । अर्थश्रवणे, नं० । द्वा० । शृणोती-ति श्रुतम् । आत्मनि तदनन्यत्वात् । श्रुतज्ञाने च । आ० म० १ अ० । "तं तेण तओ तम्मि व सुणेइ सो वा सुयं तेणं" । अनु० ।

अथ श्रुतव्युत्पत्तिमाह—' तं तेण' इत्यादि श्रूयते आत्म-ना तदिति श्रुतं शब्दः । अथवा-श्रूयतेऽनेन श्रुतज्ञाना-वरणक्षयोपशमेन श्रूयते तस्मात् क्षयोपशमाच्छ्रूयते तस्मि-न् क्षयोपशमे सतीति श्रुतं क्षयोपशमः 'सुणेइ सो व ' त्ति-शृणोतीति श्रुतमसौ आत्मा इति वा व्युत्पत्तिरित्यर्थः, 'सुयं तेणं' ति—येनैव व्युत्पत्तिस्तेन कारणेन श्रुतमुच्यत इत्यर्थः । विशे० । स्था० । गुरुसमीपे श्रूयते इति श्रुतम् । अनु० । क-र्म० । बृ० । द्वादशाङ्गे, स्था० २ ठा० १ उ० । आगमे, स्था० ३ ठा० २ उ० । अङ्गानङ्गप्रकीर्णादिभिन्ने आगमे , उत्त० १ अ०। स्था० । पा० । ध० । दर्श०। स० । नं० । जीवादिपदार्थ-सूचके,सूत्र० १ श्रु० ६ अ० ।सूत्रे, श्रुतग्रन्थसिद्धान्तप्रवचना-ज्ञोपदेशागमादीनि श्रुतैकार्थिकनामानि ।

सूत्रस्य पर्यायानाह—

**सुयसुत्तगंथसिद्धं-तसासणे आणवयणउवएसो ।**
**पण्णवणआगम इय, एगट्ठा पज्जवा सुत्ते ॥ १७७ ॥**

श्रुतम्, सूत्रम्, ग्रन्थः, सिद्धान्तः, शासनम्, आज्ञा, वचनम्, उपदेशः, प्रज्ञापना, आगम इति, एते दश पर्याया एकार्थाः । बृ० १ उ० १ प्रक० । विशे० । उत्त० । आव० । श्रुतं सामायिकादिबिन्दुसारान्तम् । आव० ४ अ० । ल० । ध० । स्वाध्याये, स० ३० सम० । स्वदर्शनपरदर्शनानुगतम्-कलशास्त्रं, नं० । आचा० । ( मतिश्रुतभेदः ' णाण ' शब्दे चतुर्थभागे १८४१ पृष्ठे गतः । )

श्रुतनिक्षेपः—

**से किं तं सुतं, सुतं चउव्विहं पण्णत्तं । तं जहा नामसुअं, ठवणासुअं, दव्वसुअं, भावसुअं । ( सू० २९ )**

अथ किं तत् श्रुतमिति प्रश्नः, अत्र निर्वचनं ' सुअं चउव्विहमि ' त्यादि, श्रुतम्—प्राग्निरूपितशब्दार्थं चतुर्विधं प्रज्ञप्तम्, तद्यथा—नामश्रुतम्, स्थापनाश्रुतम्, द्रव्यश्रुतम्, भावश्रुतं च ।

तत्राऽऽद्यभेदनिर्णयार्थमाह—

**से किं तं नामसुअं ?, णामसुअं जस्स णं जीवस्स वा ०जाव सुए त्ति नामं कज्जइ से तं नामसुअं । ( सू० ३० )**

अत्र निर्वचनं नामश्रुतम्, ' जस्स णाम ' इत्यादि, यस्य जीवस्य वा अजीवस्य वा जीवानां वा अजीवानां वा तदुभयस्य वा तदुभयानां वा श्रुतमिति यन्नाम क्रियते तन्नामश्रुतमित्यादिपदैः सम्बन्धः, नाम च तत् श्रुतं चेति व्युत्पत्तेः । अथवा—यस्य जीवादेः श्रुतमिति नाम क्रियते तज्जीवादि वस्तु नामश्रुतम्, नाम्ना नाममात्रेण श्रुतं नामश्रुतमिति व्युत्पत्तेः । तत्र जीवस्य कथं श्रुतमिति नाम सम्भवतीत्यादिभावना यथा नामावश्यके तथा तदनुसारेण यथासम्भवमभ्यूह्य वाच्या, ' से तमि ' त्यादि निगमनम् । उक्तं नामश्रुतम् ।

अथ स्थापनाश्रुतनिरूपणार्थमाह—

**से किं तं ठवणासुअं ?, जं णं कट्ठकम्मे वा ०जाव ठवणा ठविज्जइ से तं ठवणासुअं । नामठवणाणं को पइविसेसो ?, नाम आवकहियं ठवणा इत्तरिआ वा होज्जा आवकहिआ वा । ( सू० ३१ )**

अत्र निर्वचनम्—' ठवणासुअं जं णमि ' त्यादि, अत्र व्याख्यानं यथा स्थापनावश्यके तथा सप्रपञ्चं द्रष्टव्यम्, नवरमावश्यकस्थाने श्रुतमुच्चारणीयम्, काष्ठकर्मादिषु श्रुतपठनादिक्रियावन्त एकादिसाध्वादयः स्थाप्यमानाः स्थापनाश्रुतमिति तात्पर्यम् । ' से तमि ' त्यादि निगमनम् । "नामठवणाणं को पइविसेसो ? " इत्यादि पूर्वं भावितमेव, वाचनान्तरे तु ' नामठवणाओ भणियाओ ' इत्येतदेव दृश्यते, आवश्यकनामस्थापनाभ्यामेन प्रायोऽभिन्नार्थत्वात् श्रुतनामस्थापनेऽप्युक्ते एव भवतः, इत्यतो नात्र ते पुनरुक्त्येते इति भावः ।

द्रव्यश्रुतनिरूपणार्थमाह—

**से किं तं दव्वसुयं ?, दव्वसुयं दुविहं पण्णत्तं, तं जहा-आगमतो अ, नो आगमतो अ । ( सू० ३२ )**

अत्र निर्वचनम्—' दव्वसुअं दुविहमि ' त्यादि, द्रव्यश्रुतं द्विविधं प्रज्ञप्तम्, तद्यथा—आगमतो, नोआगमतश्च ।

अत्राऽऽद्यभेदनिर्णयार्थमाह—

**से किं तं आगमतो दव्वसुअं ?, आगमतो दव्वसुयं जस्स णं सुए त्ति पयं सिक्खियं ठियं जियं० जाव णो अणुप्पेहाए कम्हा ?, अणुवओगो दव्वमिति कट्टु, नेगमस्स णं एगो अणुवउत्तो आगमतो एगं दव्वसुयं ० जाव कम्हा ?, जइ जाणए अणुवउत्ते न भवइ । से तं आगमतो दव्वसुअं । ( सू० ३३ )**

अत्र निर्वचनम्--' आगमओ दव्वसुअमि ' त्यादि, यस्य कस्यचित् श्रुतमिति पदं श्रुतपदाभिधेयमाचारादिशास्त्रं शिक्षितं स्थितं यावद्वाचनोपगतं भवति स जन्तुस्तत्र वाचनाप्रच्छनादिभिर्वर्त्तमानोऽपि श्रुतोपयोगेऽवर्त्तमानत्वादागमतः आगममाश्रित्य द्रव्यश्रुतमिति समुदायार्थः । शेषोऽत्राऽऽक्षेपपरिहारादिप्रपञ्चो नयविचारणा च द्रव्यावश्यकवत् द्रष्टव्या, अत एव सूत्रेऽप्यतिदेशं कुर्वता ' जाव कम्हा ?, जइ जाणए ' इत्यादिना पर्यन्तनिर्दिष्टानां शब्दनयानां सम्बन्धि सूत्रालापको गृहीतः । एतच्च काश्चिदेव वाचनामाश्रित्य व्याख्यायते, वाचनान्तराणि तु हीनाधिकान्यपि दृश्यन्ते, ' से तमि ' त्यादि निगमनम् । उक्तमागमतो द्रव्यश्रुतम् ।

इदानीं नोआगमतस्तदेवोच्यते—

**से किं तं नोआगमतो दव्वसुअं ?, नोआगमतो दव्वसुअं तिविहं पण्णत्तं, तं जहा-जाणयसरीरदव्वसुअं भविअसरीरदव्वसुअं जाणयसरीरभविअसरीरवइरित्तं दव्वसुअं । ( सू० ३४ )**

अत्र निर्वचनम्-' नोआगमतो दव्वसुअं तिविहमि' त्यादि, 'जाणयसरीरदव्वसुअं भविअसरीरदव्वसुअं जाणयसरीरभविअसरीरवइरित्तं दव्वसुअं ' ।

अत्राऽऽद्यभेदज्ञापनार्थमाह--

**से किं तं जाणयसरीरदव्वसुअं ?, जाणयसरीरदव्वसुयं सुअ त्ति पयत्थाहिगारजाणयस्स जं सरीरयं ववगयचुअचाविअचत्तदेहं तं चेव पुव्वभणिअं भाणिअव्वं ० जाव से तं जाणयसरीरदव्वसुअं । ( सू० ३५ )**

अत्रोत्तरम्-' जाणयसरीरदव्वसुयं सुअत्ती ' त्यादि, ज्ञातवानिति ज्ञस्तस्य शरीरं तदेवानुभूतभावत्वाद् द्रव्यश्रुतं ज्ञशरीरद्रव्यश्रुतं, श्रुतमिति यत्पदं तदर्थाधिकारज्ञायकस्य यच्छरीरकं व्यपगतादिविशेषणविशिष्टं तज्ज्ञशरीरद्रव्यश्रुतमित्यर्थः । ननु यदि जीवविप्रमुक्तमिदं कथं तर्ह्यस्य द्रव्यश्रुतत्वम् ?, लष्ठ्वादीनामपि तत्प्रसङ्गात्, तत्पुद्गलानामपि कदाचित् श्रुतकर्तृभिः गृहीत्वा मुक्तत्वसम्भवादित्याशङ्क्याह- ' सिज्जागयमि ' त्यादि, शय्या संस्तारकजरूपा

दिप्रपञ्चो ज्ञशरीरद्रव्यावश्यकवत् , श्रुताभिलापतो वाच्यः, यावत् ' से तमि ' त्यादि निगमनम् ।

द्वितीयभेदनिरूपणार्थमाह—

से किं तं भविअसरीरदव्वसुअं ?, भविअसरीरदव्वसुयं जे जीवे जोणीजम्मणनिक्खंते जहा दव्वावस्सए तहा भाणिअव्वं ०जाव से तं भविअसरीरदव्वसुअं । (सू०३६)

अत्र प्रतिवचः—' भविअसरीरदव्वसुअं जे जीवे ' इत्यादि, विवक्षितपर्यायेण ' भविष्यतीति भव्यो—विवक्षितपर्यायार्हः तद्योग्य इत्यर्थः, तस्य शरीरं तच्च भाविभावश्रुतकारणत्वात् द्रव्यश्रुतं भव्यशरीरद्रव्यश्रुतम् , किं पुनस्तदिति अत्रोच्यते—यो जीवो योनिजन्मत्वनिष्क्रान्तोऽनेनैव शरीरसमुच्छ्रयेणादत्तेन जिनोपदिष्टेन भावेन श्रुतमित्येतत् पदमागामिकाले शिक्षिष्यते न तावच्छिक्षते तज्जीवाधिष्ठितं शरीरं भव्यशरीरं द्रव्यश्रुतमित्यर्थः । शेषं द्रव्यावश्यकवत् श्रुताभिलापेन सर्वं वाच्यम् , यावत् ' से त ' मित्यादि निगमनम् । अनु० ।

अथ भावश्रुतनिरूपणार्थमाह—

से किं तं भावसुयं ?, भावसुयं दुविहं पण्णत्तं, तं जहा-आगमतो अ, नोआगमतो अ । ( सू० ३८ )

अत्रोत्तरम्—' भावसुअं दुविहमि ' त्यादि , विवक्षितपरिणामस्य भवनं भावः स चासौ श्रुतं चेति भावश्रुतं भावप्रधानं वा श्रुतं भावश्रुतं, तद् द्विविधं प्रज्ञप्तम्-आगमतो, नोआगमतश्च ।

तत्राऽऽद्यभेदनिरूपणार्थमाह—

से किं तं आगमतो भावसुअं ? , आगमतो भावसुयं जाणए उवउत्ते, से तं आगमतो भावसुअं । ( सू० ३६ )

अत्रोत्तरम्-श्रुतपदार्थज्ञस्तत्र चोपयुक्त आगमतः—आगममाश्रित्य भावश्रुतम् श्रुतोपयोगपरिणामस्य सद्भावात् तस्य चाऽऽगमत्वादिति भावः ' से तमि ' त्यादि निगमनम् ।

अथ द्वितीयभेद उच्यते—

से किं तं नोआगमतो भावसुअं ? , नोआगमतो भावसुयं दुविहं पण्णत्तं , तं जहा--लोइअं, लोगुत्तरिअं च । ( सू०-४० )

अत्रोत्तरम्—' नोआगमओ भावसुअं दुविहं पण्णत्तं , लोइअं लोउत्तरिअमि ' त्यादि ।

अत्राऽऽद्यभेदनिरूपणार्थमाह—

से किं तं लोइअं नोआगमतो भावसुअं ?, लोइअं नोआगमतो भावसुयं जं इमं अण्णाणिएहिं मिच्छदिट्ठीहिं सच्छंदबुद्धिमइविगप्पियं, तं जहा--भारहं रामायणं भीमासुरुक्कं कोडिल्लयं घोडयमुहं सगडभद्दिआउ कप्पासियं णागसुहुमं कणगसत्तरीवेसियं वइसेसियं बुद्धसासणं काविलं लोगायतं सट्ठियंतं माढरपुराणवागरणनाडगाइ अहवा--बावत्तरिकलाओ, चत्तारि वेआ संगोवंगा, से तं लोइयं नोआगमतो भावसुयं । ( सू० ४१ )

अत्र निर्वचनम्—' लोइयं भावसुअं जं इममि ' त्यादि, लौकैः प्रणीतं लौकिकं, किं पुनस्तदित्याह-यदिदमज्ञानिकैर्मिथ्यादृष्टिभिः स्वच्छन्दबुद्धिमतिविकल्पितं तल्लौकिकं भावश्रुतमिति सम्बन्धः तत्राऽज्ञानमावृतोऽप्यमम्यग्दर्शीऽलपद् वा सम्यग्दृष्टयोऽप्यज्ञानिकाः प्रोच्यन्तेऽत आह-मिथ्यादृष्टिभिः स्वच्छन्दमतिबुद्धिविकल्पितम् । ईहावग्रहं बुद्धिः, अपायधारणे तु मतिः स्वच्छन्देन—स्वाभिप्रायेण तत्त्वतः सर्वज्ञप्रणीतार्थानुसारमन्तरेण बुद्धिमतिभ्यां विकल्पितं स्वच्छन्दबुद्धिमतिविकल्पितम्—स्वबुद्धिविकल्पनाशिल्पिनिर्मितमित्यर्थः । तत्प्रकटनार्थमेवेदमाह—तद्यथा—'भारतमि' त्यादि, एतच्च भारतादिकं नाटकादिपर्यन्तं श्रुतं लोकप्रसिद्धिगम्यम् । अथ प्रकारान्तरेण लौकिकश्रुतनिरूपणार्थमाह—' अहवा बावत्तरिकलाओ ' इत्यादि, तत्र कलाभि—वस्तुपरिज्ञानानि कलास्ताश्च द्विसप्ततिः समवायाङ्गादिग्रन्थप्रसिद्धाः, चत्वारश्च वेदाः सामवेदऋग्वेदयजुर्वेदाथर्वणवेदलक्षणाः साङ्गोपाङ्गाः, तत्राङ्गानि—शिक्षा १ कल्प २ व्याकरण ३ छन्दो ४ निरुक्त ५ ज्योतिष्कायन ६ लक्षणानि, षड् उपाङ्गानि तद्व्याख्यानरूपाणि तैः सह वर्तन्ते इति साङ्गोपाङ्गा । ' से तमि ' त्यादि निगमनम् । उक्तं नोआगमतो लौकिकं भावश्रुतम् ।

अथ लोकोत्तरिकं तद्वाऽऽह—

से किं तं लोउत्तरिअं नोआगमतो भावसुयं ?, लोउत्तरिअं नो आगमतो भावसुयं जं इमं अरिहंतेहिं भगवंतेहिं उप्पण्णणाणदंसणधरेहिं तीयपच्चुप्पण्णमणागयजाणएहिं सव्वण्णूहिं सव्वदरिसीहिं तिलुक्कवहितमहितपूइएहिं अप्पडिहयवरणाणदंसणधरेहिं पणीअं । ( अनु० ) से तं नोआगमतो भावसुअं । से तं भावसुअं । ( सू०-४२ × )

लोकोत्तरैः—लोकप्रधानैरर्हद्भिः प्रणीतं लोकोत्तरिकम् ,किं पुनस्तदित्याह-' लोउत्तरियं भावसुअं जं इममि ' त्यादि, यदिदमर्हद्भिः-द्वादशाङ्गं गणिपिटकं प्रणीतं तल्लोकोत्तरिकं भावश्रुतमिति सम्बन्धः , तद्यथा-' आयारो सूयगडमि ' त्यादि, तत्र सदेवमनुजासुरलोकाचरितां पूजामर्हन्तीति अर्हन्तस्तैः, एवंभूताश्चातीर्थकरा अपि केवल्यादयो भवन्त्यतस्तीर्थकरप्रतिपत्तये आह-' भगवद्भिर ' ति; समस्तैश्वर्यनिरुपमरूपयशःश्रीधर्मप्रयत्नवद्भिरित्यर्थः , इत्थंभूताश्च अनाद्यप्रतिघज्ञानादिमन्तः केचित् कैश्चिदभ्युपगम्यन्ते, उक्तं चैतद्वादिभिः—"ज्ञानमप्रतिघं यस्य, वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च, सह सिद्धं चतुष्टयम् ॥ १ ॥" इत्यादि । अतस्तद्व्यवच्छेदार्थमाह—ज्ञानावरणक्षपणादिप्रकारेणोत्पन्न तु सहजे ज्ञानदर्शने धरन्तीत्युत्पन्नज्ञानदर्शनधरास्तैः, न च प्रस्तुतविशेषणव्यवच्छेद्या अप्येवंभूता एव— ' सह सिद्धं चतुष्टयमि' त्यादिवचनविरोधप्रसङ्गात् , तर्हि सुगता इत्थंभूता अपि भविष्यन्तीत्याशङ्कयाऽऽह-' तीयपच्चुप्पण्ण' त्यादि, अतीतवर्तमानभविष्यदर्थज्ञायकैरित्यर्थः न च सुगतानामतीतभविष्यदर्थज्ञातृत्वसम्भवः, एकान्तक्षणभङ्गत्वादित्वेन तद्सम्स्याभ्युपगमाद् . अमतो न प्रहणाऽनिप्रसङ्गात् । अथ सन्तानसद्भावेन कालत्रयपदार्थानां सद्धा-

वाद्गीताद्यर्थज्ञातृत्वं तेषामपि न विहन्यत इत्याशङ्क्याह-'सर्वदर्शिभि' रिति, सर्वम्—एकेन्द्रियद्वीन्द्रियजीवादिवस्तु केवलज्ञानेन जानन्तीति सर्वज्ञाः, तदेव सर्वं केवलदर्शनेन पश्यन्तीति सर्वदर्शिनस्तैः, शाक्यानां त्वतीताद्यर्थज्ञातृत्वेऽपि सर्वज्ञादित्वं नोपपद्यते, कतिपयधर्माद्यभीष्टपदार्थज्ञातृत्वस्यैव तैरभ्युपगमात्, यत उक्तं तच्छिष्यैः-'सर्वं पश्यतु मा वाऽसौ—विष्टमर्थं तु पश्यतु। कीटसङ्ख्या परिज्ञानं, तत्र नः क्वोपयुज्यते ?॥ १॥" इत्यादि, यथोक्तगुणविशिष्टत्वात् 'तिलुक्कवहियमहिये' त्यादि, 'महिय' त्ति—विगलद्बहुमानभ्राजिष्णुदृष्टिभिः सहर्षं निरीक्षिता यथावस्थितासाधारणगुणोत्कीर्तनलक्षणेन भावस्तवेन महिता–अभिष्टुताः सुगन्धपुष्पप्रकरदानादिना तु द्रव्यस्तवेन पूजिताः, तत एषां द्वन्द्वः त्रैलोक्येन—भवनपतिव्यन्तरनरविद्याधरवैमानिकादिसमुदायलक्षणेन वीक्षितमहितपूजितास्तैः, अत्राऽऽह-ननूत्पन्नज्ञानदर्शनधरैरित्युक्तम्, उत्पत्तिमत् सप्रतिघं दृष्टं यथा मूर्तेष्ववध्यादिज्ञानम्, उत्पन्नं च तज्ज्ञानदर्शनं अभ्युपगतं, अतस्ताभ्यां ते सप्रतिघज्ञानिनः प्राप्नुवन्ति, तथा च पूर्वोक्तसर्वज्ञत्वादिहानिरित्याशङ्क्याऽऽह-'अप्रतिहतवरज्ञानदर्शनधरै'रिति, समस्तावरणक्षयसम्भूतत्वादप्रतिहते—मूर्तामूर्तेषु समस्तवस्तुष्वस्खलिते अत एव वरे-प्रधाने केवलज्ञानदर्शनलक्षणे ज्ञानदर्शने धरन्ति ये ते तथा तैः। यस्त्ववध्यादेः सप्रतिघत्वं तदुत्पत्तिमत्त्वेन, किं तर्हि ?, आवरणसद्भावात्, अतोऽप्रतिघकेवलज्ञानदर्शने समस्तावरणक्षयसम्भूतत्वात्, सत्यपि सप्रतिघत्वाभ्युपगमेऽतिप्रसङ्गात्। इदं च विशेषणं कस्याञ्चिदेव वाचनायां दृश्यते, न सर्वत्र। तदेवं यथोक्तप्रकारेण तावद् व्याख्यातान्यमूनि विशेषणानि अन्यथा वाऽभियोगेन सुधिया व्याख्येयानि। तैरर्थकथनद्वारेण प्रणीतम्-प्ररूपितम्, द्वादशाङ्गं श्रुतम्, अनु०। (एतद्व्याख्यता 'दुवालसंग' शब्दे चतुर्थभागे उक्ता।) एतद्गणेन च समर्थितं द्विविधमपि नोआगमतो भावश्रुतम् अतस्तदपि निगमयति-'से तं नोआगमतो भावसुअं' इत्यादि। एतद्गणेन चोक्तं सर्वमपि भावश्रुतमतो निगमयति-'से तं भावसुअमिति'।

तदेवं स्वरूपत उक्तं भावश्रुतमनेनैव चाऽऽधिकार इति तोऽस्यैव पर्यायनिरूपणार्थमाह—

तस्स णं इमे एगट्ठिया णाणाघोसा णाणावंजणा नामधेज्जा भवन्ति, तं जहा-"सुअसुतगंथसिद्धंतसासणे आणावयणउवएसे। पन्नवण आगमेऽवि अ, एगट्ठा पज्जवा सुत्ते ॥ १ ॥" (४) से तं सुअं। (सू० ४२)

तस्य—श्रुतस्य अमूनि—अनन्तरमेव वक्ष्यमाणतया प्रत्यक्षाणि एकार्थिकानि-तत्त्वत एकार्थविषयाणि—नानाघोषाणि पृथगभिन्नोदात्तादिस्वराणि नानाव्यञ्जनानि-पृथग्भिन्नाक्षराणि नामधेयानि पर्यायध्वनिरूपाणि भवन्ति। तद्यथा-'सुअगाहा' व्याख्या-गुरुसमीपे श्रूयत इति श्रुतम्। अर्थानां सूचनात् सूत्रं, विप्रकीर्णार्थग्रन्थनाद् ग्रन्थः, सिद्धं-प्रमाणप्रतिष्ठितमर्थमन्तम् संवेदनानिष्ठारूपं नयतीति सिद्धान्तः, मिथ्यात्वाविरतिकषायादिप्रवृत्तजीवानां शासनात्-शिक्षणाच्छासनं, प्रवचनमिति पाठान्तरम्, तत्रापि प्रशस्तं-प्रधानं प्रथमं वा वचनं प्रवचनं, मोक्षार्थमाज्ञाप्यन्ते प्राणिनोऽनयेत्याज्ञा उक्तिः-वचनं वाग्योग इत्यर्थः हिताहितप्रवृत्तिनिवृत्त्युपदेशनादुपदेशः, यथावस्थितजीवादिपदार्थप्रज्ञापनात् प्रज्ञापना, आचार्यपारम्पर्येणागच्छतीत्यागमः, आप्तवचनं वाऽऽगम इति, 'सूत्रे' सूत्रविषये एकार्थाः पर्याया इति गाथार्थः॥ १॥ 'से तं सुअं' इत्यादि। तदेतदभिधानादिभेदभिन्नं श्रुतमित्यर्थः। अनु०।

अथ श्रुतपदस्य तं चिकीर्षुरिदमाह—

आगमओ दव्वसुयं, वत्तासुत्तोवओगनिरवेक्खो।
नोआगमओ जाणय-भव्वसरीरा-ऽइरित्तमिदं ॥८७७॥

इह नामस्थापने सुगमत्वाद् नोक्ते। द्रव्यश्रुतं त्वागमतो, नोआगमतश्च। तत्रागमतो द्रव्यश्रुतं वक्ता तदुपयोगनिरपेक्षः, अनुपयुक्त इत्यर्थः नोआगमतस्तु त्रिविधम् ज्ञशरीरद्रव्यश्रुतम्, भव्यशरीरद्रव्यश्रुतम्, तद्व्यतिरिक्तं द्रव्यश्रुतं चेति। तत्राद्यभेदद्वयमावश्यकवदेव वक्तव्यम्।

तद्व्यतिरिक्तं त्विदं किम् ?, इत्याह-

पत्ताइगयं सुत्तं, सुत्तं च अमंडजाइपंचविहं।
आगमओ भावसुयं,सुओवउत्तो तओ ऽणन्नो ॥८७८॥

इह श्रुतं सूत्रं च द्वे अपि किलैकार्थे। तत्र तलतालवृक्षादिसम्बन्धीनि पत्राणि प्रतीतानि, तेषु गतं लिखितं सूत्रं पत्रादिगतम्, आदिशब्दात्—पत्रसंघातनिष्पन्नाः पुस्तकाः वस्त्रादयश्च गृह्यन्ते, तेष्वपि लिखितं सूत्रं ज्ञशरीर-भव्यशरीरव्यतिरिक्तं द्रव्यश्रुतमुच्यते। अथवा—अण्डजाद्यपि यदागमे पञ्चविधं सूत्रमुक्तम्। तद्यथा-"अंडए, बोंडए, कीडए, वालए, वागए" एतदपि सूत्राभिधानसाम्याद् व्यतिरिक्तं द्रव्यश्रुतमुच्यते। तत्राण्डाच्चतुरिन्द्रियकीटविशेषनिर्वर्तितकोशकारकरूपाज्जातमण्डजं लोकप्रतीतं चटकसूत्रमित्यर्थः। बोण्डं-वमनीफलं तस्माज्जातं बोण्डजं कर्पाससूत्रमित्यर्थः। कीटजं तु पञ्चविधम्, तद्यथा—"पट्टे, मलए, अंसुए, चीणंसुए, किमिराए" एते पञ्चापि पट्टसूत्रविशेषाः। वालजमपि पञ्चविधम्, तद्यथा—'उण्णिए, उट्टिए, मियलोमिए, कोतवे, किट्टिसे'। तत्र मूषिकलोमनिष्पन्नम्-कौतवम्, ऊर्णाद्युद्धरितावकिट्टनिष्पन्नं सूत्रं किट्टिसम्। अथवा, ऊर्णादीनां द्विकादिसंयोगनिष्पन्नं किट्टिसम्, यदि वा, उक्तशेषाऽश्वादिजीवलोमनिष्पन्नं किट्टिसम्। शेषं प्रतीतम्। सणा-ऽतस्यादिप्रभवं वल्कजम्। तदेतत् सर्वमपि व्यतिरिक्तं द्रव्यश्रुतम्। भावश्रुतमपि द्विधा—आगमतः, नोआगमतश्च। तत्र श्रुतोपयुक्तस्तद्वेत्ताऽऽगमतो भावश्रुतम्। ननूपयोग एव भावश्रुतं युज्यते, तत्कथमिह तद्वान् गृह्यते ?, इत्याह-'तओऽणन्नो' त्ति-ततः श्रुतोपयोगादनन्य इति कृत्वोपचारतः स एव भावश्रुतमुक्तमिति।

नोआगमतो भावश्रुतमाह—

नोआगमओ भावे, लोइयलोउत्तरं पुराभिहियं।
सम्मत्तपरिग्गहियं, सम्मसुयं मिच्छमियरं ति ॥८७९॥

नोआगमतो भावश्रुतं द्विविधम्—लौकिकं, लोकोत्तरं च। तत्र लौकिकं भारत—रामायणादि। इदं चैव पूर्वं श्रुतज्ञानविचारे प्रोक्तम्। लोकोत्तरं त्वङ्गप्रविष्टादि, इदमपि

पूर्वं तथैवोक्तम् । एतच्च सर्वं सम्यक्त्वपरिगृहीतं सम्यक्श्रुतं, मिथ्यात्वपरिगृहीतं तु मिथ्याश्रुतमिति ।

अत्र प्रेरकः प्राह—

आगमओ भावसुयं, सुयं नोआगमे कहं होइ ?।
जइ नागमो न सुत्तं,अह सुत्तमणागमो किह णु ?।८८०।

यदागमतो भावश्रुतमुक्तम् तद् युक्तम्—घटत एव । नोआगमतस्तु भावश्रुतं कथं भवति ?—न घटत एवेत्यभिप्रायः । तथाहि-नोशब्दस्तावद् निषेधवचनः, ततश्च यदि 'न'-नैवाऽऽगमः, तर्हि न श्रुतम् , तस्याऽऽगमरूपत्वात् ; अथ श्रुतम् , तर्ह्यनागमः कथम् ? । तस्माद् नोआगमतो भावश्रुतमिति 'माता वन्ध्या' इत्यादिवद् विरुद्धमेवेति ।

अन्यक एवाऽऽशङ्कयाह—

उवओगो आगमसे, तं तं जइ नागमोऽवमेमं तु ।
नोआगमो त्ति एवं, किमणुवउत्तम्मि दव्वसुयं?॥८८१॥

यदि वा—एवं सिद्धान्तवादी ब्रूयात्-यावदत्र यत्र यत्र श्रुतार्थेऽपि तदुपयोगस्तत्तदागमतो भावश्रुतम् , यत् त्ववशेषमनुपयुक्तस्याध्येतुः श्रुतं तद् नोआगमतो भावश्रुतमिति सर्वं सुस्थमिति । हन्त ! तर्हि 'आगमओ दव्वसुयं वत्ता सुओवओगनिरवेक्खो' इत्यनेनाऽनुपयुक्तवक्तारं यत् पूर्वं द्रव्यश्रुतमुक्तं तत् किं स्यात् , नोआगमस्येदानीं नोआगमतो भावश्रुतत्वेन त्वया प्रतिपाद्यमानत्वात् ?—निर्विषयमेव तत् स्यादिति भावः ।

परः एवाचार्यमतमाशङ्क्य परिहरन्नाह-

अविसुद्धनयमएण व, जइ लद्धिसुयमणुवउत्ते वि ।
भावसुयं चिय पढओ, किमणुवउत्तस्स दव्वसुयं ?।८८२।

यदि च सूरिरिदं ब्रूयात्—अविशुद्धनयमतेन श्रुतलब्धिरपि भावश्रुतमुच्यते । ततश्चानुपयुक्तोऽपि लब्धिसंपन्नो जीवे तल्लब्धिरूपं श्रुतं लब्धिश्रुतं भावश्रुतमेवाऽङ्गीक्रियते , अन्यस्य तु लब्ध्यादिशून्यस्य यत् श्रुतं तद् द्रव्यश्रुतम् , इति न तस्य निर्विषयतेति भावः । हन्त ! तर्ह्यनुपयुक्तस्य पठतो वक्तुः किं द्रव्यश्रुतम् ?, तस्यापि श्रुतलब्धिसद्भावतो भावश्रुतप्राप्त्या तदवस्थैव द्रव्यश्रुतस्य निर्विषयतेति भावः । न हि श्रुतलब्धिरहितः कोऽपि पठति । तस्मादेतदपि वाङ्मात्रत्वाद् न किञ्चिदिति ।

अथाचार्यः प्रतिविधानमाह—

आगम सुओवओगो, सुद्धो चिय न चरणाइसंमिस्सो ।
मीसेऽवि वा विवक्खा, सुयस्स चरणाइभिन्नस्स॥८८३॥

इह तावत् सर्वस्यापि(?)स्य प्रक्रमस्य भावार्थे उच्यते-परेण निषेधवचनं नोशब्दमवगम्य पूर्वपक्षः कृतः । आचार्यस्तु मिश्रवचनं नोशब्दं चेतसि निधाय प्रतिविधत्ते । मिश्रवचनेनापि नोशब्देन द्रव्यश्रुतम् , आगमतो भावश्रुतम् , नोआगमतो भावश्रुतं चेत्येतत्त्रयं कथं पृथगुपपद्यते ? इति चेत् । उच्यते—अनुपयुक्तस्य श्रुताध्येतुस्तावद् द्रव्यश्रुतं 'आगम' त्ति एकदेशेन समुदायस्य गम्यमानत्वादागमतो भावश्रुतमुच्यते । किम् ?, इत्याह—शुद्ध एव श्रुतोपयोगः , न चरणादिमिश्रः । यदि वा-चरणादिमिश्रेऽपि श्रुतोपयोगे तद्भिन्नस्य श्रुतोपयोगस्य विवक्षा क्रियते इदमुक्तं भवति—चरणादिमिश्रमपि श्रुतोपयोगं भिन्नं विवक्षितत्वादागमतो भावश्रुतमुच्यत इति ।

तर्हि नोआगमतो भावश्रुतं किम्?, इत्याह—

चरणाइममेयम्मि उ,उवओगो जो सुए स तओ समए ।
नोआगमो त्ति भण्णइ, नोसद्दो मीसभावम्मि ॥८८४॥

चरणादिसमेते तु श्रुते चरणादिमिश्र उपयोगस्तकोऽसौ समयप्रसिद्धया नोआगमतो भावश्रुतमुच्यते । नोशब्दोऽत्र मिश्रवचन इति । निषेधवचनस्तु नोशब्दोऽत्र कथंचित, यतोऽसौ सर्वनिषेधवचनो वा स्यात् , देशनिषेधवचनो वा ? ।

तत्र सर्वनिषेधवचनत्वे नोशब्दस्य दोषमाह—

सव्वनिसेहे दोसो, सव्वसुयमणागमो पसज्जेजा ।
होज्जा वाऽणागमओ, सुयवज्जमणागमसुयं तु ॥८८५॥

सर्वनिषेधवचने नोशब्देऽत्र गृह्यमाणे दोषः प्रसज्यते । कः ?, इत्याह—'सव्वसुयमित्यादि' नोआगमतो भावश्रुतमिति । कोऽर्थः ?-अनागमः सर्वमपि यद् भावश्रुतमिति-सर्वनिषेधवाचकस्य नोशब्दस्य सर्वस्यापि भावश्रुतस्याऽऽगमत्वाभिधायकत्वादिति भावः । अयुक्तं चैतत् , श्रुतस्यागमत्वेन सुप्रतीतत्वात् । अथवा—सर्वनिषेधवाचके नोशब्दे नोआगमतो भावश्रुतमित्ययमर्थः स्यात् । कः ?, इत्याह-अनागमतोऽनागमत्वात् श्रुतवर्जं मत्यादिचतुष्टयात्मकं यदनागमरूपं ज्ञानं तत् श्रुतं भावश्रुतं भवेदिति । अश्रुतरूपस्यापि मत्यादिज्ञानचतुष्टयस्य श्रुतप्रसङ्गः स्यादिति भावः ।

देशनिषेधवचनेऽप्यत्र नो शब्दे दूषणमाह—

देसनिसेहे सयलं, नोआगमओ सुयं न पावेज्जा ।
भिन्नं पि व तं देसो,चरणाईणं पसज्जेज्जा ॥८८६॥

देशनिषेधवचने नोशब्दे सकलमप्याचारादि श्रुतं नोआगमतो भावश्रुतं न प्राप्नुयात्—न स्यात् , किन्तु तदेकदेश एव नोआगमतो भावश्रुतं स्यादित्यर्थः । सर्वश्रुतस्य चैतदिष्यते, समस्तस्यापि द्वादशाङ्गगणिपिटकस्य ज्ञान-दर्शन-चारित्रपर्यायपिण्डाऽऽत्मकत्वाद् नोआगमत्वेन सिद्धान्ते रूढत्वात् , एतच्च मिश्रवचन एव नोशब्दे घटते,नान्यथेति भावः । अत्रैकदेशनिषेधपक्षे दूषणान्तरमाह-'भिन्नं पि वेत्यादि' वा' इति-अथवा, भिन्नमपि पृथग्भूतमपि सत् तद्-भावश्रुतं चरणादीनामेकदेशः प्रसज्येत , अभिन्नदेशं त्विष्यते तच्चरणादिभिः सह, घात्यघातकनिशावर्णकवत् ; अन्यथा संकरैकत्वादिदोषप्रसङ्गादिति ।

किञ्च,देशनिषेधको नोशब्द एकदेशवाचकः, तत्र—
चापरोऽपि. दोषः । कः ?, इत्याह—

होज्ज व नोआगमओ,सुओवउत्तो वि जं स देसम्मि ।
उवजुज्जइ न उ सव्वे, तेणायं नीसभावम्मि ॥८८७॥

यः श्रुतोपयुक्तः पूर्वमागमतो भावश्रुतमुक्तः, सोऽपि नोशब्दस्य देशवाचकत्वे नोआगमतो भावश्रुतं भवेत् । कुतः ?, इत्याह—यद् यस्मात् स श्रुतैकदेश एवोपयुज्यते, न तु सर्वस्मिन्नपि श्रुते, सर्वस्यापि श्रुतस्याऽनन्ताभिलाप्यार्थ-

विषयत्वात्, एतदुपयोगस्य चैकदाऽसंभवात् । तस्माद्येक-देशवचनत्वे नोशब्दस्याऽयं नो आगमः । तस्माद् यनैवं सति आगम--नोआगमभावश्रुतयोरविशेषः प्राप्नोति, तेना-ऽयं नोशब्दो मिश्रभावे ग्राह्य इति ।

अथ प्रेरकाभिप्रायमाशङ्कमान आह--

आह नणु मीसभावे, नाभिहिओ अभिहिओ य नोसद्दो ।
देसे तदन्नभावे, दव्वे किरियाएँ भावे य ॥ ८८८ ॥

आह-प्रतिषेधवाचकत्वाद् नोशब्दो मिश्रभावे न क्वचिदभि-हितः। किं तर्हि? देशादिषु पञ्चस्वर्थेष्वभिहितः । तत्र देशे नो-घटो घटैकदेश उच्यते, यतो घटैकदेशस्तावदघटो न वक्त-व्यः, नापि घटः, किं तर्हि ?, नोघटः । तथाहि--घटैकदे-शस्य ग्रीवादेरघटत्वे तदन्यदेशानामपि तद्वदेवाऽघटत्वात् सर्वघटाभावप्रसङ्गः, एवं, पट—शकटादावप्यभावप्रसङ्गेन सर्वशून्यतापत्तिः । नापि घटैकदेशो घटः, एवं हि प्रत्यव-यवं घटप्राप्त्यैकस्मिन्नपि घटे घटबाहुल्यापत्तिः, तथा च सत्येकघटविषयप्रवृत्ति-निवृत्त्यादिव्यवहारोच्छेदप्रसङ्गः । त-स्मात् पारिशेष्याद् घटैकदेशो नोघट एवोच्यते, पर्याय-शब्दत्वादनयोः । तदन्यभावेऽपि नोशब्दो दृश्यते, यथा 'नो घटः' इत्युक्ते तदन्यः पटादिः प्रतीयते, यथा 'नो ब्राह्म-णः' इत्यभिहिते क्षत्रियादिर्गम्यते । द्रव्ये तु नोशब्दो घटैक-देशवचनादिः—नो घटः, नो पटः, नो स्तम्भ इत्यादिघटा-द्येकदेशवाचक इत्यर्थः । ननु देशवाचकादस्य को भेदः?, इति चेत् । उच्यते--तत्र घटादिसंबद्ध एव तदेकदेशो नोघटादिरुक्तः, अत्र तु स एव घटाद्येकदेशो ग्रीवादि पृ-थग्भूतो रथ्यादिपतितः स्वतन्त्र एव गृह्यते । स च घटा-दे: पार्थक्येन वर्तमानत्वात् पृथगेव स्वतन्त्रं द्रव्यम्, इति द्र-व्ये नोशब्दः । क्रियानिषेधवचनो नोशब्दः—'नो पचति, नो पक्ष्यामि' इत्यादि । भावनिषेधे तु नोशब्दो 'नो शय्यते, नो कथ्यते' इत्यादि । भाव--क्रिययोश्च विशेषः सिद्ध--सा-ध्यतादिरूपः कोऽपि शब्दशास्त्रादिगतो बोद्धव्यः । इत्येवं विवक्षावशाद् देशादिष्वर्थेषु दृष्टो नोशब्दः, न तु मिश्रभावे इति ।

अथोत्तरमाह—

सच्चमयं देसाइसु, तह वत्थवसेण सद्दविणिओगो ।
अमियत्था य निवाया, जुज्जइ तो मीसभावे वि ॥ ८८९ ॥

सत्यम्, देशप्रतिषेधादिवचनोऽयं नोशब्दः, तथाप्यर्थवशा-च्छब्दानां विनियोगः—यो यत्राऽर्थो घटते, तस्मिन्नर्थे तत्र ते प्रयुज्यन्ते इत्यर्थः । आह-नन्वेकस्यापि शब्दस्य किम-नेकार्था विद्यन्ते, येनैवमुच्यते ?, इत्याशङ्क्याह-द्योतकत्वे-नापरिमितार्थाश्च निपाता इति मिश्रवचनोऽपि प्रयुज्यते नोशब्दः, न किञ्चित् दूषणं इति ।

अथवा—देशवचनोऽपि भवत्यत्र नोशब्दः, न कश्चिद् दो-षः, इति दर्शयन्नाह-

अविसेसियसंमिस्सो-वओगदेसु त्ति वा सुयं काउं ।
नोआगमभावसुए, नोसद्दो होज्ज देसे वि ॥ ८९० ॥

अविशेषितज्ञानां ज्ञान-दर्शन-चारित्राणां परिपूर्णघटा-दिर्वाऽखण्डः संमिश्रोपयोगश्चाविशेषितसंमिश्रोपयोगस्त-स्य घटादेर्ग्रीवादिरिव श्रुतं देश एकदेश इति कृत्वा नो-आगमतो भावश्रुतं विचार्ये, नोशब्दो देशेऽपि युज्यते । इदमुक्तं भवति—यथा सामान्येन परिपूर्णघटादिर्हाऽख-ण्डस्यैकदेशो ग्रीवादिर्नोघट उच्यते, एवमविशेषितभेदस्य ज्ञान-क्रियापरिणामरूपस्याऽखण्डस्य वस्तुनः श्रुतमेकदे-श इति कृत्वा ज्ञान-क्रियापरिणामो नोआगमतो भाव-श्रुतमिति स्थितम् ।

अथ मतान्तरमुपदर्श्य परिहरन्नाह—

नोआगमओ केई, सद्दसहायमुवओगमिच्छंति ।
नणु सुतरमागमत्तं, हि दव्व-भावागमे जुत्तं ॥ ८९१ ॥

केचिदाचार्याः शब्दसहायं श्रुतोपयोगं नोआगमतो भाव-श्रुतमिच्छन्ति । अयमभिप्रायः-श्रुतोपयोगपूर्वकं ब्रुवाणस्य यः श्रुतोपयोगसहितः शब्दः स नोआगमतो भावश्रुतम् । तत्र किलोपयोग—शब्दसमुदाये उपयोगलक्षणस्याऽऽगम-स्यैकदेशत्वात्, शब्दनिरपेक्षं तूपयोगमात्रमागमतो भावश्रु-तमिति । एतच्चायुक्तमिति दर्शयति-'नणु' इत्यादि । नन्वत्र हि स्फुटं श्रुतोपयोगो भावागमः, शब्दस्तु द्रव्यागमः, इति सुतरामागमत्वमेव युक्तम्, आगमत एव श्रुतं युज्यते, न तु नोआगमत इत्यर्थः । यदि हि केवलोऽपि श्रुतोपयोग आ-गम उच्यते, तर्हि द्वितीये शब्दलक्षणे द्रव्यागमे मिलिते सुतरामयमागम एव युज्यते, न तु नोआगमः, आगमा—ऽनागमसमुदाय एव तस्य युज्यमानत्वादिति भावः ।

पराभिप्रायमेवाशङ्क्य निराचिकीर्षुराह—

अह नागमो त्ति सद्दो, नोआगमया य तदहियत्तणओ ।
आगमओ दव्वसुयं, किह सद्दो नागमो जइ सो ॥ ८९२ ॥

अथ परो मन्यते-शब्द आगमो न भवति, तत उपयोगस्य तदधिकत्वादनागमरूपशब्दाधिकत्वात् नोआगमता, आग-माऽनागमसमुदाय आगमस्यैकदेशत्वाद् नोआगमत्वमित्य-भिप्रायः । अत्र सूरिराह-हन्त ! यद्यसौ शब्द आगमो न भवति तर्ह्यागमतो द्रव्यश्रुतं स्यात् ? । सुप्रतीतमप्यस्य-त्वमागतो द्रव्यश्रुतत्वं न स्यात्, अनागमत्वात् । त-स्माद् द्रव्यत आगम एवाऽयम्, अतो द्रव्यागमसहायो भावागम आगमत एव भावश्रुतम्, न तु नोआगमत इति स्थितम् ।

अथान्यदपि मतान्तरमुपन्यस्य दूषयति—

अन्ने नोआगमओ, सामित्ताणासियं सुयं बेंति ।
जइ न सुयमणुवओगे, नणु सुयरमणासियं नत्थि ॥ ८९३ ॥

अन्ये तु केचनाऽप्याचार्याः स्वामिसमाश्रितं श्रुतोपयोगं भावश्रुतं ब्रुवते, स्वाध्ययनाश्रितं तु तमेव नोआगमतो भाव-श्रुतं ब्रुवते, एतच्चातिफल्गुवेदिति दर्शयति—' जइ' इत्यादि ' य-द्यनुपयुक्तेऽपि वक्तरि श्रुतं नोक्तम्, किन्तु विशिष्टेऽपि तस्मिन् स्वामिनि द्रव्यश्रुतमेव पूर्वमभिहितम्; मूढ ! तर्हि सुतरा-मत्राऽनाश्रितं भावश्रुतं नास्ति, स्वामिनमन्तरेण पुस्तकादि-लिखिते श्रुते उपयोगस्य दूरोत्सारितत्वात्, उपयोगमन्तरेण च भावश्रुतस्य सर्वथाऽसत्त्वात्; 'स्वाध्ययनाश्रितं च श्रुतं क्वाप्यस्ति' इति प्रतिपादयितुमिहास्माभिरशक्यमिति यत् किञ्चिदेतदिति । तदेवमुक्तं नोआगमतोऽपि भावश्रुतम् ।

भावतः शृणोति, श्रुत्वा चार्थरूपतया गृह्णाति गृहीत्वा च ईहते पूर्वापराविरोधेन पर्यालोचयति, चशब्दः समुच्चयार्थः, अपिशब्दात्प(ऽद्.प)र्यालोचयन् किञ्चित् स्वबुद्ध्याऽप्युत्प्रेक्षते इति सूचनार्थः, ततः पर्यालोचनाऽनन्तरमपोहते एवमेतत् यदादिष्टमाचार्येण नान्यथेत्यवधारयति, ततस्तमर्थं निश्चितं स्वचेतसि विस्मृत्यभावार्थं सम्यग्धारयति करोति च सम्यक्-यथोक्तमनुष्ठानं, यथोक्तमनुष्ठानमपि श्रुतज्ञानप्राप्तिहेतु तदावरणक्षयोपशमनिमित्तत्वात् । तदेव गुणा व्याख्याताः । सम्प्रति यच्छुश्रूषते इत्युक्तं तत्र श्रवणविधिमाह-'मूयं' मित्यादि, मूकमिति प्रथमतो मूकं शृणुयात्, किमुक्तं भवति ?—प्रथमश्रवणे संयतगात्रस्तूष्णीमासीत्, ततो द्वितीय श्रवणे हुङ्कारं दद्यात्; वन्दनं कुर्यादित्यर्थः, ततस्तृतीये बाढकारं कुर्यात्, बाढमेवमेतन्नान्यथेति, ततश्चतुर्थे श्रवणे तु गृहीतपूर्वापरसूत्राभिप्रायो मनाक् प्रतिपृच्छां कुर्यात्, कथमेतदिति ?, पञ्चमे मीमांसां-प्रमाणजिज्ञासां कुर्यादिति भाव., षष्ठे श्रवणे तदुत्तरोत्तरगुणप्रसङ्गः पारगमनं चास्य भवति, ततः सप्तमे श्रवणे परिनिष्ठा गुरुवदनुभाषते । एवं तावच्छ्रवणविधिरुक्तः ' सम्प्रति व्याख्यानविधिमभिधित्सुराह--'सुत्तत्थो' इत्यादि, प्रथमानुयोगः सूत्रार्थः सूत्रार्थप्रतिपादनपरः, खलुशब्द एवकारार्थः, स चावधारणे । ततोऽयमर्थः—गुरुणा प्रथमोऽनुयोग. सूत्रार्थाभिधानलक्षण एव कर्तव्य', मा भूत् प्राथमिकविनेयानां मतिमोहः, द्वितीयोऽनुयोगः सूत्रस्पर्शिकनिर्युक्तिमिश्रितो भणितस्तीर्थकरगणधरैः , सूत्रस्पर्शिकनिर्युक्तिमिश्रितं द्वितीयमनुयोगं गुरुर्विदध्यादित्याख्यातं तीर्थकरगणधरैरिति भावः, तृतीयश्चानुयोगो निरवशेषः-प्रसक्तानुप्रसक्तप्रतिपादनलक्षण इत्येवः-उक्तलक्षणो विधिर्भवत्यनुयोगे व्याख्यायाम् । आह—परिनिष्ठा सप्तमे इत्युक्तं, त्रयश्चानुयोगप्रकारास्तदेतत्कथम् ?, उच्यते—त्रयाणामनुयोगानामन्यतमेन केनचित्प्रकारेण भूयो भूयो भाव्यमानेन सप्त वारा. श्रवणं कार्यते ततो न कश्चिद्दोषः, अथवा-कञ्चिन्मन्दमतिविनेयमधिकृत्य तदुक्तं द्रष्टव्यं, न पुनरेष एव सर्वत्र श्रवणविधिनियमः, उद्घटितज्ञविनेयानां सकृच्छ्रवणत एवाशेषग्रहणदर्शनादिति कृतं प्रसङ्गेन । ' से त्त 'मित्यादि, तदेतच्छ्रुतज्ञानम् । नं० ।

सांप्रतं श्रुतज्ञानं व्याचिख्यासुराह—" चउदसहा वीसहा य सुयंति "। श्रुतं-श्रुतज्ञानं चतुर्दशधा चतुर्दशभेदं विंशतिधा विंशतिप्रकारं वा भवतीति । तत्र प्रथमं श्रुतस्य चतुर्दशभेदान् व्याख्यानयन्नाह-

अक्खर सन्नी सम्मं, साइअं खलु सपज्जवसियं च ।
गमियं अंगपविट्ठं, सत्त वि एए सपडिवक्खा ॥६॥

इह श्रुतशब्दः पूर्वगाथातः संबध्यते । ततोऽक्षरश्रुतं, संज्ञिश्रुतं, सम्यक्छ्रुतं, सादिश्रुतं, सपर्यवसितश्रुतं, गमिकश्रुतम्, अङ्गप्रविष्टश्रुतमित्येते सप्त भेदाः सप्रतिपक्षाः श्रुतस्य चतुर्दश भेदा भवन्ति । तथाहि—अक्षरश्रुतप्रतिपक्षमनक्षरश्रुतम्, एवमसंज्ञिश्रुतं मिथ्याश्रुतमनादिश्रुतमपर्यवसितश्रुतमगमिकश्रुतमङ्गबाह्यश्रुतमिति । तत्राक्षरं त्रिधा संज्ञाव्यञ्जनलब्धिभेदात् । उक्तं च-"तं सन्नावंजणल-द्धिसन्नियं तिविहमक्खरं भणियं । सुबहुलिविभेयनिययं, सन्नक्खरमक्खरागारं ॥१॥" सुबहुर्या या एता अष्टादश लिपयः श्रूयन्ते, तथाहि-" हंसलिवी भूयलिवी, जक्खी तह रक्खसी य बोधव्वा । उड्डी जवणि तुरुक्की, कीरी दाविडी य सिंधविया ॥१॥ मालविणी नडि नागरि, लाडलिवी पारसी य बोधव्वा । तह अनिमित्ती य लिवी, चाणक्की मूलदेवी य ॥ २ ॥ " व्यञ्जनाक्षरमकारादिहकारपर्यन्तमुच्यते । तदेतद्द्वितयमज्ञानात्मकमपि श्रुतकारणत्वादुपचारेण श्रुतम् । लब्ध्यक्षरं तु शब्दश्रवणरूपदर्शनादिरर्थप्रत्यायनगर्भाक्षरोपलब्धिः । यदाह—" जो अक्खरोवलंभो, सा लद्धी तं च होइ विन्नाणं । इंदियमणोनिमित्तं, जो आवरणक्खओवसमो ॥१॥ " ततोऽक्षरैरभिलाप्यभावानां प्रतिपादनप्रधानं श्रुतमक्षरश्रुतम् । नन्वनभिलाप्या अपि किं केचिद्भावाः सन्ति, येनैवमुच्यतेऽभिलाप्यभावानां प्रतिपादनप्रधानं श्रुतमिति, उच्यते—सन्त्येव । यदाहुः श्रीपूज्याः—

" पण्णवणिज्जा भावा, अणंतभागो उ अणभिलप्पाणं ।
पण्णवणिज्जाणं पुण, अणंतभागो सुयनिबद्धो ॥ १ ॥
जं चउद्दस पुव्वधरा, छट्ठाणगया परुप्परं हुंति ।
तेण उ अणंतभागो, पण्णवणिज्जाण जं सुत्तं ॥ २ ॥
अक्खरलंभेण समा, ऊणाहिया हुंति मइविसेसेणं (हिं) ।
ते वि हु मइविसेसा, सुयनाणब्भंतरे जाण ॥ ३ ॥ "

अनक्षरश्रुतं क्ष्वेडितशिरःकम्पनादिनिमित्तं समाह्वयति वारयति वेत्यादिरूपमभिप्रायपरिज्ञानम् । तथा संज्ञिश्रुतं तत्र संज्ञानं संज्ञा "उपसर्गादातः" ॥५।३।११०॥ इत्यङ्प्रत्ययः । सा च त्रिविधा दीर्घकालिकी हेतुवादोपदेशिकी दृष्टिवादोपदेशिकी । यदाह भाष्यसुधाम्भोनिधिः—

" इह दीहकालिगी त्ति, सन्ना तया जया सुदीहं पि ।
संभरइ भूयमेस्सं, चिंतइ य किह णु कायव्वं ॥ १ ॥
जं पुण संचिंतेउं, इट्ठाणिट्ठेसु विसयवत्थूसु ।
वट्टंति नियत्तंति य, स देहपरिपालणाहेउं ॥ २ ॥
पाएण संपयं चिय, कालंमि न यावि दीहकालं जा ।
ते हेउवायसन्नी, निच्चेट्ठा हुंति अस्सन्नी ॥ ३ ॥
सम्मद्दिट्ठी सन्नी, संते नाणे खओवसमियंमि ।
अस्सन्नी मिच्छत्तं-मि दिट्ठिवाओवएसेणं ॥ ४ ॥ "

ततश्च संज्ञा विद्यते येषां ते संज्ञिनः परं सर्वत्राप्यागमे दीर्घकालिकया संज्ञया संज्ञिनस्ते संज्ञिन उच्यन्ते, ततः संज्ञिनां श्रुतं संज्ञिश्रुतं समनस्कानां मनःसहितैरिन्द्रियैर्जनितं श्रुतं संज्ञिश्रुतमिति भावः । मनोरहितेन्द्रियजं श्रुतमसंज्ञिश्रुतम् । तथा सम्यग्दृष्टेरर्हत्प्रणीतं मिथ्यादृष्टिप्रणीतं वा यथास्वरूपमवगमात् सम्यक्छ्रुतं, मिथ्यादृष्टेः पुनः अर्हत्प्रणीतमितरद्वा मिथ्याश्रुतं, यथास्वरूपमनवगमात् । आह—मिथ्यादृष्टेरपि मतिश्रुते सम्यग्दृष्टेरिव तदावरणकर्मक्षयोपशमसमुत्थे सम्यग्दृष्टेरिव पृथुबुध्नोदराद्याकारं घटादिकं च संविदाते, तत् कथं मिथ्यादृष्टेरज्ञाने ?। उच्यते-सदसद्विवेकपरिज्ञानाभावात् । तथाहि—मिथ्यादृष्टिः सर्वमप्येकान्तपुरःसरं प्रतिपद्यते, न भगवदुक्तस्याद्वादनीत्या, ततो घट एवायमिति यदा ब्रूते तदा तस्मिन् घटे घटपर्यायव्यतिरेकेण शेषान् सत्त्वज्ञेयत्वप्रमेयत्वादीन् सतोऽपि धर्मानपलपति, अन्यथा घट एवायमित्येकान्तेनावधारणानुपपत्तेः । घटः सर्वथापि गुणः पररूपेण नास्तित्वस्यानभ्युपगमात् पररूपतामसतीमपि तत्र प्रतिपद्यते । ततः सन्तमसन्तं

अनिवर्तमानोऽसन्नं च सन्तमिति सदसद्विशेषपरिज्ञानाभावा-दज्ञानं मिथ्यादृष्टेर्मतिश्रुते । इतश्च ते मिथ्यादृष्टेरज्ञाने, भव-हेतुत्वात् । तथाहि-मिथ्यादृष्टीनां मतिश्रुते पशुवधमैथुनादी-नां धर्मसाधकत्वेन परिच्छेदके ततो दीर्घतरसंसारपथप्र-वर्तिनी । तथा यदृच्छोपलम्भादुन्मत्तकविकल्पवत् । तथाहि-उन्मत्तकविकल्पा वस्तुतत्त्वापेक्षया यथाकथंचित् प्रवर्तन्ते । यद्यपि च ते क्वचित्तथाविधस्थितवस्तुसंवादिनस्तथापि सम्य-ग्यथावस्थितवस्तुतत्त्वपर्यालोचनाविरहेण प्रवर्तमानत्वात् परमार्थतोऽपारमार्थिकाः । तथा मिथ्यादृष्टीनां मतिश्रुते यथायदृच्छयोपलब्धार्थेव प्रवर्तेते, ततो यद्यपि ते क्वचिद्सो-ऽयं स्पर्शोऽयमित्यादावर्थावधारणाव्यवसायाभावे संवादिनी, तथापि न ते स्याद्वादमुद्रापरिभावनातस्तथा प्रवृत्ते, किंतु यथाकथंचित्, अतस्ते अज्ञाने । तथा ज्ञानफलाभावात्, ज्ञानस्य हि फलं हेयस्य हानिरुपादेयस्य चोपादानं, न च संसारात्परं किंचन हेयमस्ति, न च मोक्षात्परं किंचिदुपा-देयं, ततो भवमोक्षावेकान्तेन हेयोपादेयौ, भवमोक्षयोश्च हान्युपादाने सर्वसङ्गविरतिरूपेण:, ततः साऽवश्यं तस्याव-शिना कर्तव्या, सैव च तत्त्वतो ज्ञानस्य फलम् । तथाऽऽह भगवानुमास्वातिवाचकः—" ज्ञानस्य फलं विरतिरिति " । सा च मिथ्यादृष्टेर्नास्तीति ज्ञानफलाभावादज्ञाने मिथ्यादृ-ष्टेर्मतिश्रुते । यदाह भाष्यसुधाम्भोनिधिः—" सदसदविसे-सणाओ, भवहेउ जहिच्छओवलंभाओ । नाणफलाभावाओ, मिच्छद्दिट्ठिस्स अन्नाणं ॥ १ ॥ " इति । तथा—" साइयं, सपज्जवसियं, अणाइयं, अपज्जवसियं, इच्चेयं दुवाल-संगं वुच्छित्तिनयट्ठयाए साइयं सपज्जवसियं, अवुच्छि-त्तिनयट्ठयाए अणाइयं अपज्जवसियं, तं समासओ चउ-व्विहं पन्नत्तं, तं जहा-दव्वओ खित्तओ, कालओ, भावओ, दव्वओ णं सम्मसुयं एगं पुरिसं पडुच्च साइयं सपज्जवसियं, बहवे पुरिसे पडुच्च अणाइयं अपज्जवसियं, खित्तओ णं पंच भरहाइं पंच एरवयाइं पडुच्च साइयं सपज्जवसियं, पंच महाविदेहाइं पडुच्च अणाइयं अपज्जवसियं, कालओ णं उस्सप्पिणिं ओसप्पिणिं च पडुच्च साइयं सपज्जवसियं नोउस्सप्पिणिं नोओसप्पिणिं च पडुच्च अणाइयं अपज्जव-सियं" । नोउत्सर्पिणी नोअवसर्पिणी चेति कालो महाविदेहे-षु तेष्वुत्सर्पिण्यवसर्पिणीलक्षणकालाभावात् । "भावओ णं जे जया जिणपन्नत्ता भावा आघविज्जंति पन्नविज्जंति परूविज्जंति दंसिज्जंति निदंसिज्जंति, ते तया पडुच्च साइयं सपज्जवसियं, खाओवसमियं पुण भावं पडुच्च अणाइयं अप-ज्जवसियं । अहवा भवसिद्धियस्स सुयं साइयं सपज्जवसियं" केवलज्ञानोत्पत्तौ तदभावात्, " नट्ठंमि उ छाउमत्थिए ना-णे " इति वचनात् । " अभवसिद्धियस्स सुयं अणाइयं अपज्जवसियं " । इह च सामान्यतः श्रुतशब्देन श्रुतज्ञानं श्रुताज्ञानं चोच्यते । यदाह—" अविसेसियं सुयं सुयनाणं सुयअन्नाणं च " । तथा गमाः सदृशपाठास्ते विद्यन्ते यत्र तद्गमिकम्, "अतोऽनेकस्वरात्" ७-२-६ इति (सूत्रेण) इक-प्रत्ययः तत् प्रायो दृष्टिवादगतम् । अगमिकमसदृशाक्षरा-लापकं तत् प्रायः कालिकश्रुतगतम् । कर्म० ।

परिकम्म सुत्तपुव्वा-णुओगपुव्वगयचूलिया पंच ।
पुण दिट्ठिवायभेया, चउदस पुव्वाइँ पुव्वगयं ॥ ३ ॥
उप्पाय पयकोडी, अग्गाणीयंमि छन्नवइलक्खा ।
वि (वी) रियपवाए अच्छि-णपवाइ लक्खा सट्ठिलक्खा ॥४॥
एगपऊणा कोडी, पयाण नाणप्पवायपुव्वंमि ।
सच्चप्पवायपुव्वे, एगा पयकोडि छच्च पया ॥ ५ ॥
छव्वीसं पयकोडी, पुव्वे आयप्पवायनामंमि ।
कम्मप्पवायपुव्वे, पयकोडी असिइलक्खजुया ॥ ६ ॥
पच्चक्खाणभिहाणे, पुव्वे चुलसीइ पयसयसहस्सा ।
दसपयसहस्सजुया, पयकोडी विज्जपवायंमि ॥ ७ ॥
कल्लाणनामधिज्जे, पुव्वंमि पयाण कोडिछव्वीसा ।
छप्पन्नलक्खकोडी, पयाण पाणाउपुव्वंमि ॥ ८ ॥
किरियाविसालपुव्वे, नव पयकोडी उ बिंति समयविऊ ।
सिरिलोकबिंदुसारे, सड्ढदुवालस य पयलक्खा ॥ ९ ॥"
अङ्गबाह्यं श्रुतमावश्यकदशवैकालिकादि । इति व्याख्यातं चतुर्दशधा श्रुतम् ।

संप्रति विंशतिधा श्रुतं व्याख्यानयन्नाह—

**पज्जयअक्खर पयसं-घाया पडिवत्ति तह य अणुओगो ।**
**पाहुडपाहुडपाहुड-वत्थूपुव्वा य ससमासा ॥७॥**

पर्यायश्चाक्षरं च पदं च संघातश्च पर्यायाक्षरपदसंघाताः 'पडिवत्ति' त्ति प्रतिपत्तिः । प्राकृतत्वात्सुप्तविभक्तिको निर्देशः । तथा चानुयोगोऽनुयोगद्वारलक्षणः, प्राभृतप्राभृतं च प्राभृतं च वस्तु च पूर्वं च प्राभृतप्राभृतप्राभृतव-स्तुपूर्वाणि । प्राकृतत्वाल्लिङ्गव्यत्ययः । यदाह पाणिनिः स्वप्राकृतलक्षणे " लिङ्गं व्यभिचार्यपि " । 'च' समुच्चये । एते पर्यायादयः श्रुतस्य दश भेदाः । कथंभूता इत्याह—'ससमास' त्ति समासः संक्षेपः मीलक इत्यर्थः, सह समासेन वर्तन्ते ससमासास्तेषां प्रत्येकं संबन्धः । तथाहि, पर्यायः पर्यायसमासः, अक्षरमक्षरसमासः, पदं पदसमासः, संघातः संघातसमासः, प्रतिपत्तिः प्रतिपत्तिसमासः, अनुयोगोऽनुयोगसमासः, प्राभृतप्राभृतं प्राभृतप्राभृतसमासः, प्राभृतं प्राभृतसमासः, वस्तु वस्तु-समासः पूर्वं पूर्वसमासः, इति विंशतिधा श्रुतं भवतीति गाथाक्षरार्थः । भावार्थस्त्वयम्-पर्यायो ज्ञानस्यांशो विभा-ग. परिच्छेद इति पर्यायाः । तत्रैको ज्ञानांशः पर्यायोऽने-के तु ज्ञानांशाः पर्यायसमासः । एतदुक्तं भवति--लब्ध्यप-र्याप्तस्य सूक्ष्मनिगोदजीवस्य यत् सर्वजघन्यं श्रुतमात्रं त-स्मादन्यत्र जीवान्तरे य एकश्रुतज्ञानांशो विभागपरिच्छे-दरूपो वर्धते स पर्यायः ॥ १ ॥ ये तु द्व्यादयः श्रुतज्ञा-नविभागपरिच्छेदा नानाजीवेषु वृद्धा लभ्यन्ते ते समु-दिताः पर्यायसमासः ॥ २ ॥ अकारादिलब्ध्यक्षराणामन्य-तरदक्षरम् ॥ ३ ॥ तेषामेव द्व्यादिसमुदायोऽक्षरसमासः ॥ ४ ॥ पदं तु अर्थपरिसमाप्तिः पदमित्याद्युक्तिसद्भावे-ऽपि येन केनचित्पदेनाष्टादशपदसहस्रादिप्रमाणा आचारा-दिग्रन्था गीयन्ते तदिह गृह्यते, तस्यैव द्वादशाङ्गश्रुतपरि-माणेऽधिकृतत्वात्, श्रुतभेदानामेव चेह प्रस्तुतत्वात्, तस्य च पदस्य तथाविधाम्नायाभावात्प्रमाणं न ज्ञायते, तदेकं पदं पदमुच्यते ॥ ५ ॥ द्व्यादिपदसमुदायस्तु पदसमासः ॥ ६ ॥ 'गइइंदिए य काए' इत्यादिगाथाप्रतिपादितद्वा-रकलापस्यैकदेशो यो गत्यादिकस्तस्यापेक्षदेशो यो गत्-

कादयोऽनेकस्तत्र जीवादिमार्गणा यका क्रियते स संघातः ॥ ७ ॥ तथादिगत्याद्यवयवमार्गणा संघातसमासः ॥ ८ ॥ गत्यादिद्वाराणामन्यतरैकपरिपूर्णगत्यादिद्वारेण जीवादिमार्गणा प्रतिपत्तिः ॥ ९ ॥ द्वारद्वयादिमार्गणा तु प्रतिपत्तिसमासः ॥ १० ॥ "संतपयपरूवणया दव्वपमाणं च" इत्यादि, अनुयोगद्वाराणामन्यतरदेकमनुयोगद्वारमुच्यते ॥ ११ ॥ तद्द्व्यादिसमुदायः पुनरनुयोगद्वारसमासः ॥ १२ ॥ प्राभृतान्तर्वर्ती अधिकारविशेषः प्राभृतप्राभृतं ॥ १३ ॥ तद्द्व्यादिसमुदायस्तु प्राभृतप्राभृतसमासः ॥ १४ ॥ वस्त्वन्तर्वर्ती अधिकारविशेषः प्राभृतम् ॥ १५ ॥ तद्द्व्यादिसंयोगस्तु प्राभृतसमासः ॥ १६ ॥ पूर्वान्तर्वर्ती अधिकारविशेषो वस्तु ॥ १७ ॥ तद्द्व्यादिसंयोगस्तु वस्तुसमासः ॥ १८ ॥ पूर्वमुत्पादपूर्वादि पूर्वोक्तस्वरूपम् ॥ १९ ॥ तद्द्व्यादिसंयोगस्तु पूर्वसमासः ॥ २० ॥ एवमेते संक्षेपतः श्रुतज्ञानस्य विंशतिर्भेदा दर्शिताः, विस्तरार्थिना तु बृहत्कर्मप्रकृतिरन्वेषणीया । एते च पर्यायादयः श्रुतभेदा यथोत्तरं तीव्रतीव्रतरादिक्षयोपशमलभ्यत्वादित्थं निर्दिष्टा इति परिभावनीयमिति । अथवा चतुर्विधं श्रुतज्ञानम्, तथाहि—द्रव्यतः क्षेत्रतः कालतो भावतश्च । तत्र द्रव्यतः श्रुतज्ञानी सर्वद्रव्याण्यादेशेन जानाति, क्षेत्रतः सर्वक्षेत्रमादेशेन श्रुतज्ञानी जानाति, कालतः सर्वं कालमादेशेन श्रुतज्ञानी जानाति, भावतः सर्वान् भावानादेशेन श्रुतज्ञानी जानातीति व्याख्यानं सविस्तरं श्रुतज्ञानम् ।

उपधानवत्ताऽध्येतव्यम्—

से भयवं ! किं जहा पंचमंगलं तहा सामाइयाइयमसेसं पि सुयनाणमहिज्जियव्वं ?, गोयमा ! तहा चेव विणओ विहाणेणमहिएयव्वं, णवरं अहिज्जिणिउकामेहिं अट्ठविहं चेव नाणायारं सव्वपयत्तेणं कालादी रक्खेज्जा अन्नहा महया मायणं ति अन्नं च दुवालसंगस्स सुयनाणस्स पढमचरिमजाम अहनिसमज्झयणज्झावणं च पंचमंगलस्स सोलसट्ठजामियं । अन्नं च पंचमंगलं कयसामाइए वा अकयसामाइए वा, अहीए सामाइयं तु सयं च सारंभपरिग्गहे जावज्जीवं कयसामाइए अहिज्जिणइ णो उण सारंभपरिग्गहे । अकयसामाइए तहा पंचमंगलस्स आलावगे य आयंबिलं तहा सक्कत्थयाईसु वि दुवालसंगस्स पुण सुयनाणस्स उद्देसगज्झयणेसु । महा० ३ अ० ।

श्रुतज्ञानस्य विराधकः—

एएसिं पयाणं अन्नयरपए खलेज्जा । जो सहसा देसूणपुव्वकोडी ताव णं गोयमा ! मुज्झेज्ज वा ण वावि । "एवं गच्छविवड्ढी, तह वि पालेतु जं जहा भणियं । रयमलकिलेसमुक्कं, गोयमा ! मुक्खं गएणं तं ॥१॥ गच्छंति गमिस्संति य, ससुरासुरजगणमंसिए वीरे । भुवणेक्कपायडजसे, जह भणियं गुणट्ठिए गणिणो ॥ २ ॥" से भयवं जे णं केइ अणुणियसमयसब्भावे होत्था विहीए वा अविहीए वा कस्स य गच्छायारस्स य मंडलिधम्मस्स य वा छत्तीसइविहस्स णं सप्पत्तेयनाम दंसणचारित्ततववीरियायारस्स वा मणसा वा वाया वा कहिं वि अन्नयरे ठाणे केइ गच्छाहिवई आयरिएइ वा अणंतो विसुद्धपरिणामो वि होत्था णं । अतुहं वएज्ज वा (खलेज्ज वा) परूवमाणे वा अणुट्ठमाणे वा से णं आराहगे उयाहु अणाराहगे ?, गोयमा ! अणाराहगे । से णं भयवं ! केणं अट्ठेणं एवं वुच्चइ एवं जहा णं गोयमा ! अणाराहगे णं इमे दुवालसंगे सुयनाणे अणपज्जवसिए अणाइनिहणे सब्भूयत्थपसाहगे । अणाइसंसिद्धे से णं देविंदविंदवंदाणं अतुलबलवीरिएसरियसत्तपरक्कममहापुरिसायारकंतिदित्तिलावन्नरूवसोहग्गसकलकलाकलावविच्छड्डमंडियाणं अणंतनाणीणं । सयंसंबुद्धाणं जिणवराणं अणाइसिद्धाणं अणंताणं वट्टमाणसमयसिज्झमाणाणं । अन्नेसिं च आसन्नपुरक्खडाणं अणंताणं सुगहियनामधिज्जाणं महायसाणं महासत्ताणं महाणुभागाणं तिहुयणेक्कतिलयाणं तेलोक्कनाहाणं जुगप्पवराणं जगेक्कबंधूणं जगगुरूणं सव्वन्नूणं सव्वदरिसीणं पवरवरधम्मतित्थकराणं अरहंताणं भगवंताणं भूए सव्वभविमाइयाणं गयवट्टमाणनिखिलासेसकसिणसगुणसपज्जयसव्ववत्थुविदियसब्भावाणं असहाए पवरे एक्कमेक्कमग्गे से णं सुरूवत्ताए अच्छत्ताए गंधत्ताए । तम्मि पि णं जहट्ठिए चेव पसवणिज्जे जहट्ठिए अणुट्ठणिज्जे जहट्ठिए चेव भासणिज्जे जहट्ठिए चेव परूवणिज्जे जहट्ठिए चेव वायणिज्जे जहट्ठिए चेव कहणिज्जे । से णं इमे दुवालसंगे गणिपिडगे । तम्मि पि णं देविंदाणं णिखिलजयविदियदव्वसपज्जवगइआगइहासवुड्ढी जीया य तत्थ जाव णं वत्थुसहावाणं अलंघणिज्जे अणाइक्कमणिज्जे अणासायणिज्जे । तहा चेव इमे दुवालसंगे सुयनाणे सव्वजगजीवाणं भूयसत्ताणं एगंतेणं हिए सुए खमे नीसेसिए आणुगामिए पारगामिए पसत्थे महत्थे महागुणे महाणुभागे महापुरिसाणुचिन्ने परमरिसिदेसिए दुक्खक्खयाए मोक्खयाए संसारुत्तारणयाए त्ति कट्टु उवसंपज्जित्ता णं विहरिंसु किं सुतमन्नेसिं ति । ता गोयमा ! जे णं केइ अणुणियसमयसब्भावेइ वा विइयसमयसारेइ वा विहीए वा अविहीए वा गच्छाहिवई वा आयरिएइ वा अंतो विसुद्धपरिणामे वि होत्था गच्छायारमंडलिधम्मा छत्तीसइविहायारादि जाव णं अन्नयरस्स वा आवस्सगाइ करणिज्जस्स णं पवयणसारस्स असत्ती चुक्केज्ज वा खलेज्ज वा तेणं इमे दुवालसंगे सुयनाणे अन्नहा पयरेज्जा जेणं इमे दुवालसंगे सुयनाण–

निबद्धतरोवगयं एकपयक्खरमवि अन्नहा पयंरे से णं उ-म्मग्गे पयंसेज्जा,जे णं उमग्गे पयंसेज्जा से णं अणारहागे भ-वेज्जा । ता एएणं अट्ठेणं एवं वुच्चइ–जहा णं गोयमा ! एगंत णं अणाराहगे । महा० ५ अ० । "जत्थक्खलियममलिय-वा-इपयं पयक्खरविसुद्धं । विणओवहाण पुव्वं, दुवालसंगं पि सुयनाणं ॥१॥ " महा० ४ अ० ।

परोपदेश· श्रुतग्रन्थश्च श्रुतमिहोच्यते।विशे०।अविनीतो वि-कृतिप्रतिबद्धो व्यवशमितप्राभृतश्चैते न वाचनीयाः। बृ०४उ० । ( विनीतस्य सर्वोऽपि विनयः 'विणय' शब्दे षष्ठभागे गतः । ) श्रुतं द्विविधं बद्धम् , अबद्धं च । बद्धं द्वादशाङ्गरूपम् , अबद्धं तु भारतादि लौकिकम् । आ० म० १ अ० ।

आयारदसाकप्पो, ववहारो नवमपुव्वणीसंदो ।
चारित्तरक्खणट्ठा, सूयगडस्सुवरिठविताइं । पं० भा० १ कल्प ।

( ' आयारपकप्प' शब्दे द्वितीयभागे ३५० पृष्ठे व्याकृतैषा ।) ('सिक्खा' शब्देऽस्मिन्नेव भागे सूत्राध्ययनरूपा शिक्षा उक्ता ।)

आत्महितादिज्ञानं सूत्राध्ययनस्य फलं--श्रुताध्ययनेऽमी अभ्यधिका गुणाः—

आतहियपरिण्णा भा–वसंवरो नवनवो अ संवेगो ।
निक्कंपया तवो नि–ज्जरा य परदेसियत्तं च ॥३६०॥

आत्महितं १ परिज्ञा २ भावसंवरो ३ नवनवश्च संवेगः ४ निष्कम्पता ५ तपो ६ निर्जरा च ७ परदेशिकत्वं च ८ इति द्वारगाथासमासार्थः । बृ० । " जयइ सुयाणं पभवो, वीरजिणो । " नं० । ( व्याख्या ' आगम ' शब्दे द्वितीयभागे ५३ पृष्ठे उक्ता । )

एकमप्यक्षरं श्रुतस्य जानानो नाराधको भवति-

भयवं ! जो रत्तिदियहं सिद्धंतं पढइ सुणेइ वक्खाणेइ चिंतेइ सततं सो किं अणायारमायरे ? सिद्धंतगयमेगं पि अक्खरं जो वियाणइ सो गोयमा ! मरणंते वि अणायारं नो समायरे । महा० ६ अ० ।

('अवण्णवाय' शब्दे प्रथमभागे ७६३ पृष्ठे श्रुतावर्णवादः । )

सुयं पडुच्च तओ पडिणीया पण्णत्ता, तं जहा–सुत्तपडि-णीए, अत्थपडिणीए, तदुभयपडिणीए । स्था० ३ ठा० ४ उ० ।

( प्रव्राजितस्य श्रुतदानं ' पव्वज्जा ' शब्दे ७५५ पृष्ठेऽस्ति ) आचार्योपाध्यायाद्वत्तां गिरं गृह्णतः प्रायश्चित्तम् । नि० चू० १९ । (स्वगणे सांविग्नाभावे श्रुतग्रहणम् ' उद्दस ' शब्दे द्वितीयभागे ८९६ पृष्ठे गतम् ।) अपूर्वज्ञानग्रहणं.महा०१चू० । ( ' सुयकप्प ' शब्दोऽत्र वीक्ष्यः । ) ( स्थानादिप्रवृत्तियो-गरहितस्य सूत्रदानं महादोष इति आचार्या हरिभद्रादयः ।) (आवकेभ्यः श्रुतप्रदानं 'पाढयण' शब्दे ५ भागे निरस्तम् । ) पार्श्वस्थादिभ्यः श्रुतग्रहणम् ।

अधुना पार्श्वस्थादिसमीपे सूत्रनिषेधो विधीयते-

उस्सग्गविहंडियसु—द्धबोहपसरा भणंति एवं के ।
पासत्थाइसमीवे, सुत्ताईयं न घेत्तव्वं ॥ ६७ ॥

उत्सर्गेण सामान्योक्तविधिना , ' विहंडिय' त्ति—देशीश-ब्दो विनाशार्थः, ततो विनाशितः शुद्धबोधप्रसरः प्रशस्त-स्वप्रकाशलक्षणो येषां ते भणन्ति—जल्पन्ति एवं वक्ष्यमाण-न्यायेन अन्ये परे । तदेवाह—पार्श्वस्थादिसमीपे, तत्र पार्श्व-स्था उक्तलक्षणाः , आदिशब्दाद्—अवसन्नादिग्रहः , तेषां निकटे सूत्रादिकम् , आदिशब्दाद्—अर्थादिग्रहः न ग्रहीत-व्यं–न स्वीकर्तव्यमिति गाथार्थः ।

अत्रोत्तरम्—

तमवि न छेयग्गन्था–णुसारि वयणं जओ जइदस्स ।
भणियं निसीहगंथे , उस्सग्गववायजलहिम्मि ॥ ६८ ॥

तदपि सूत्रादिनिषेधकरणं न केवलं पूर्वोक्तमित्यपिशब्दा-र्थः , ' न ' नैव छेदग्रन्थानुसारि वचनम् उत्साहकशास्त्रसं-वादिभणनं, यस्मादिति—साधुमुद्दिश्याश्रित्य भणितम्-उक्तं निशीथग्रन्थे—प्रकल्पशास्त्रे । किंविशिष्टे उत्सर्गापवादजल-धौ–सामान्यविशेषनीरनिधाविति गाथार्थः ।

तदेवाह—

संविग्गासंविग्गे, पच्छाकडसिद्धपुत्तसारूवी ।
पडिकंते अब्भुट्ठिए, असई अन्नत्थ तत्थेव ॥६९॥

सुगमा । भावार्थस्तु कथ्यते. प्रथमं संविग्नस्योद्युक्तस्य सूत्रा-र्थनिपुणस्य समीपे साधुभिः श्रोतव्यं,तदभावेऽसंविग्नस्यापि गीतार्थस्य, तस्याप्यभावे पश्चात्कृतस्यामुक्तलिङ्गस्य । स च द्विरूपो भवति-एकः सिद्धपुत्रोऽन्यश्च सारूपी । अनयोश्च स्वरूपमाभ्यामु—क्ताभ्यामवगन्तव्यम् ।

"सभज्जओ वावि अभज्जओ वा,नियंसणं दोसुकिक्ष वत्थधारी ।
खुरेण मुंडो असिही सिहो वा, अदंडपत्तो वि य सिद्धपुत्तो ॥
मुंडसिरो दोसुकिक्षवत्थधरो न विय मच्छए कच्छं ।
छिंडइ नवा अभज्जो, सारूवी पस्सिओ होइ ॥२॥ "

एतयोश्च देशनां कृत्वाऽभ्युद्यमं कार्यौ, यदि कुरुतस्ततो लष्टं, न चेत् , ततोऽन्यत्र नीयते, यदि न गच्छतः ततस्तत्रैव सिद्धान्तोक्तविधिना तत्समीपे पठितव्यम् , पठद्भिश्च यदि निर्वाहो न भवति तयोस्ततः स्वयं सर्वं करणीयं, श्रावकैश्च कारयितव्यम् । तथा च तत्रैव निशीथे भणितम्-"चोयइ से परिवारं , अकरेंति य वा भणाइ तो सड्ढे । अव्वोच्छित्तिकरस्स उ. सुयभत्तीए कुणह पूयं ॥१॥" तथा उपदेशमालायाम्-" सुग्गइमग्गपईवं " इत्यादि प्रकरणे च प्रायश्चित्तं भणितमिति गाथार्थः ।

एवं स्थिते जीवोपदेशमाह—

ता सिद्धिनगरसम्म–ग्गपयडणे नाणमणिपईवम्मि ।
कुणसु पयत्तं जीव !, मच्छरं चइय सव्वत्थ ॥७०॥

तस्मात्सिद्धिनगरसन्मार्गप्रकटने मोक्षपुरपदवीप्रकाशके ज्ञाने—श्रुतज्ञाने तदेव वाताद्यक्षोभ्यत्वेन प्रकाशकत्वेन च मणिप्रदीपस्तस्मिन् कुरु--विधेहि प्रयत्नम्--आदरं जीव ! भो आत्मन् ! मत्सरम्--रोषं त्यक्त्वा-प्रोज्झ्य सर्वत्र पा-र्श्वस्थादिसमीपे , किञ्च—श्रावकान् पार्श्वस्थादिसमीपे शृ-ण्वतो वारयत, स्वयं च पूर्वोक्तयुक्त्या निष्कारणं नित्यश्राव-कधर्मकथनेन पार्श्वस्था भवन्तोऽपीत्थं जल्पन्त्यहो। मोहविल-सितमित्यर्थस्थितमतोऽयमसदुक्तो जीवोपदेश इति गाथार्थः। जीवा० ११ अधि० । ( संयतः किं श्रुतमध्येतुं शक्नोतीति 'संजय' शब्दे गतम् । ) श्रुतं श्रुतविषयं उद्देशसमुद्देशानुज्ञा-

प्रस्थापनाप्रतिक्रमणश्रुतस्कन्धाङ्गपरिवर्तनादिषु अविधिना विधाने कायोत्सर्गः प्रायश्चित्तम्। " जगगुरुहिं गंथिउं जं अङ्गगयस्स सुत्तत्थं न दायव्वं " अत्र साधर्म्याचार्यसंबन्धः। प्रतिश्रुतज्ञाने, उत्त० १ अ०।

श्रुतज्ञानप्रशंसा—

जाणंति बंधमुक्खं, जीवाजीवे अ पुण्णपावे अ।
आसवसंवरनिज्जर-तो किर नाणं चरणहेउं ॥ ७० ॥
नाणाणं दोसाणं, विवज्जणा सेवणा गुणाणं च।
धम्मस्स साहणाइं, दुन्नि वि किर नाणसिद्धाइं ॥ ७१ ॥
नाणी वि अ वट्टंतो, गुणेसु दोसे सु ते अवजित्ता।
दोसाणं च न मुंचइ, तम्मि न वि ते गुणे लहइ ॥७२॥
नाणेण विणा ण करणं, करणं न विणा न तारयं नाणं।
भवसंसारसमुद्दं, नाणी करणट्ठिओ तरइ ॥ ७३ ॥
अस्संजमेण बद्धं, अन्नाणेण य भवेहिँ बहुएहिं।
कम्ममलं सुह असुहं, करणे य दढो धुणइ नाणी ॥ ७४॥
सत्थेण विणा जोहो, जोहेण विणा य तारिसं सत्थं।
नाणेण विणा करणं, करणेण विणा तहा नाणं ॥७५॥
नादंसणस्स नाणं, न वि अन्नाणस्स हुंति करणगुणा।
अगुणस्स नत्थि मुक्खो,नत्थि असुत्तस्स निव्वाणं॥७६॥
जं नाणं तं करणं, जं करणं पवयणस्स सो सारो।
जो पवयणस्स सारो, सो परमत्थो त्ति नायव्वो ॥७७॥
परमत्थगहिअसारा, बंधं मुक्कि (त्ति) च ते वियाणंता।
नाऊण बंधमुक्खं, खवंति पोराणयं कम्मं ॥ ७८ ॥
नाणेण होइ करणं, करणं नाणेण फासियं होइ।
दुन्हं पि समाओगे, होइ विसोही चरित्तस्स ॥ ७९ ॥
नाणं पगासयं सो-हओ तवो संजमो य गुत्तिकरो।
तिविधं पि समाओगे,मुक्खो जिणसासणे भणिओ॥८०॥
किं अन्नं लट्ठयरं, अच्छेरतरं च सुंदरतरं वा।
चंदमिव सव्वलोगा, बहुस्सुयमुहं पलोयंति ॥ ८१ ॥
चंदाओ निअजुन्हा, बहुसुयमुहाउ निअइ जिणवयणं।
जं सोऊण मणूसा, तरंति संसारकंतारं ॥ ८२ ॥
सूई जहा ससुत्ता, न नस्सई कयवरम्मि पडिआ वि।
जीवो तहिं ससुत्तो, न नस्सइ गओ वि संसारे ॥८३॥
सूई जहा असुत्ता, नासइ सुत्ते अदिस्समाणम्मि।
जीवो जहा असुत्तो, नासइ मिच्छत्तसंजुत्तो ॥ ८४ ॥
परमत्थम्मि सुदिट्ठे, अविणट्ठेसु तवसंजमगुणेसु।
लब्भइ गई विसिट्ठा, सरीरसारे विणट्ठे वि ॥ ८५ ॥
जह आगमेण विज्जो, जाणइ वाहिं तिगिच्छणे निउणो।
तह आगमेण नाणी, जाणइ सोहिं चरित्तस्स ॥ ८६ ॥
जह आगमेण हीणो, विज्जो वाहिस्स न मुणइ तेगिच्छं।
तह आगमपरिहीणो, चरित्तसोहिं न याणाइ ॥ ८७ ॥
तम्हा तित्थयरपरू-विअम्मि नाणम्मि अत्थजुत्तम्मि।
उज्जोओ कायव्वो,नरेण मुक्खाभिकंखेणं॥८८॥द०प०।
इक्कम्मि वि जम्मि पए, संवेगं वीअरायमग्गम्मि।
पच्चइ नरो अभिक्खं, तं मरणं तेण (न) मुत्तव्वं ॥९३॥
इक्कम्मि वि जंमि पए, संवेगं कुणइ वीयरायमए।
सो तेण मोहजालं, खवेइ अज्झप्पजोगेणं ॥ ९४ ॥
इक्कम्मि वि जम्मि पए, संवेगं वीयरायमग्गम्मि।
वच्चइ नरो अभिक्खं, तं मरणं तेन मुत्तव्वं ॥ ९५ ॥
इक्कम्मि वि जंमि पए, संवेगं कुणइ वीअरायमए।
सो तेण मोहजालं, खवेइ अज्झप्पजोगेणं ॥ ९६ ॥
इक्कम्मि वि जम्मि पए, संवेगं वच्चए नराभिक्खं।
तं तस्स होइ नाणं, जं एए वीयरागम्मि ॥ ९७ ॥
महुमरणंमि उवग्गे, सक्को वारसविहो सुयक्खंधो।
सव्वो अणुचिंतेउं, धणियं पि समत्थचित्तेणं ॥ ९८ ॥
तम्हा इक्कम्मि पयं, चिंतंतो तं निदंसकालम्मि।
आराहणाउवउत्तो, जिणेहिं आराहगो भणिओ ॥९९॥
आराहणोवउत्तो, सम्मं काऊण सुविहिओ कालं।
उक्कोसं तिन्नि भवे, गंतूण लभिज्ज निव्वाणं ॥ १००॥
नाणस्स गुणविसेसा, केइम वण्णिया समासेणं।
चरणस्स गुणविसेसे, अहिअहिअया निसामेह ॥१०१॥
भाविण अणन्नमणा, जं जिणवयणं सया अणुचरंति।
ते मरणम्मि उवेया, न विसीयंति य गुणसमिद्धा ।१०३।
द० प०। ( १०२ गाथा धम्मशब्दे )
सीयंति ते मणूसा, सामन्नं दुल्लहं पि लद्धूणं।
जे अद्धाणनिअत्ता, दुक्खविमुक्खंमि मग्गम्मि॥१०४॥
दुक्खाण ते मणूसा, पारं गच्छंति जे दढधिईआ।
भावेण अणन्नमणा, पारं तेहिं गवेसंते ॥ १०५ ॥
मग्गंति अपरमसुहं, ते पुरिसा, जोगेहि न हायंति।
ते लद्धपोयसंजत्ति-वग्गा पच्छा न हायंति।१०६।द०प०।

( सूत्रवाचनाप्रकारः ' गीयत्थ ' शब्दे तृतीयभागे ९०२ पृष्ठे गतः।) ( श्रुतस्याशातना ' आसायणा ' शब्दे द्वितीयभागे ४८८ पृष्ठे गता।) ( एकेन्द्रियाणामपि श्रुतज्ञानसत्त्वानि 'णाण' शब्दे चतुर्थभागे १९४२ पृष्ठे गतम्।) इन्द्रियादि श्रुतज्ञानं चैतदावरणक्षयेन श्रूयते अनेन अस्मादस्मिन्निति वेति श्रुतम्। श्रुतज्ञानावरणकर्मक्षये परोक्षतया त्रैकालिकार्थावधानसमर्थं,"कृत्बहुलम्।" इति वचनात् कर्मादावपि क्तप्रत्ययः। आ० म० १ अ०। स०। श्रुतज्ञानावरणक्षये, उत्त० ३४ अ०। श्रूयते इति श्रुतम्। व्यवहारभेदे, प्रव० १०७ द्वार।

सुयअण्णाण-श्रुताज्ञान-न०। मिथ्यादृष्टिश्रुतज्ञाने, आ० चू० १ अ०।

अविसेसियं सुयं सुयणाणं च सुयअन्नाणं च। विसेसियं

सुयं सम्मदिट्ठिस्स सुयं सुयणाणं । मिच्छादिट्ठिस्स सुयं सुयअन्नाणं । नं० ।

**सुयआराहणा**-श्रुताराधना-स्त्री०। सिद्धान्तस्याराधनायाम्, उत्त०।

सुयस्स आराहणयाए णं भंते! जीवे किं जणयइ ? सुयस्स आराहणयाए णं अन्नाणं खवेइ न य संकिलिस्सइ ॥२४॥

हे भदन्त ! श्रुतस्य आराधनया जीवः किं जनयति । गुरुराह-हे शिष्य ! श्रुतस्य आराधनया-सम्यग् आसेवनया अज्ञानं क्षपयति विशिष्टतत्त्वावबोधस्य अवाप्तेश्च पुनर्न संक्लिश्यते रागद्वेषजनितं क्लेशं न भजतीति भावः । उत्त० २९ अ० ।

**सुयकप्प**-श्रुतकल्प-पुं०। प्रवचनभणने, बृ० १ उ० १ प्रक०।

**सुयकरण**-श्रुतकरण-न०। बद्धाबद्धादिश्रुतकरणे, आ० चू० १ अ०। सूत्र०।

**सुयकेवली**-श्रुतकेवलिन्-पुं०। चतुर्दशपूर्वधरे, जीवा० १४ अधि०। संथा०।

" जो सुयणाणभिगच्छइ, अप्पाणमिमं तु केवलं सुद्धं ।
तं सुयकेवलिमिसिणो, भणंति लोगप्पईवकरा ॥ १ ॥
जो सुयनाणं सव्वं, जाणइ सुयकेवली तमाहु जिणा ।
नाणं आयं सव्वं, जम्हा सुयकेवली तम्हा ॥ २ ॥"

आतु० १३ अष्ट० टी०। " केवली चरमो जम्बू-स्वाम्यथ प्रभवः प्रभुः । शय्यम्भवो यशोभद्रः, संभूतविजयस्तथा॥ ०॥ भद्रबाहुः स्थूलभद्रः, श्रुतकेवलिनो हि षट् ।" कल्प० २ अधि० ८ क्षण।

**सुयक्खंध**-श्रुतस्कन्ध-पुं०। द्वादशाङ्गरूपे श्रुतपिण्डे, आतु०। दृष्टिवादे श्रुतसमुदायत्वात्तस्य। स०।

**सुयक्खाय**-स्वाख्यात-त्रि०। सुष्ठु आख्यातं स्वाख्यातम्। पूर्वोत्तराविरोधितया युक्तिभिरुपपन्नतयाऽभिहिते सूत्र० १ श्रु० १४ अ०। सुप्रज्ञप्ते, सूत्र० २ श्रु० २ अ०। लोकश्रुतिपारम्पर्या चिरन्तनाख्यासु वा परिज्ञाने, सूत्र० १ श्रु० १६ अ०।

**सुयक्खायधम्म**-स्वाख्यातधर्मन्-त्रि०। सुष्ठु आख्यातः श्रुतचारित्राख्यो धर्मो येन साधुनाऽसौ स्वाख्यातधर्मा। ज्ञानसमाधियुक्ते, सूत्र० १ श्रु० १० अ०।

**सुयगब्भ**-श्रुतगर्भ-पुं०। आगमगर्भे, षो० १ विव०।

**सुयग्गाहि**-श्रुतग्राहिन्-पुं०। परमपुरुषप्रणीतागमग्रहणाभिलाषिणि, दश० ९ अ० २ उ०।

**सुयण**-स्वपन-न०। शयने, दर्श० १ तत्त्व।

**सुयणजण**-सुजनजन-पुं०। सर्वपापविरतानां समूहे, प्रश्न० ४ आश्र० द्वार।

**सुयणसुंद**-सुजनसुन्द-पुं०। भरतक्षेत्रजाजितजिनसमकालिके ऐरवतजिने, ति०।

**सुयणाण**-श्रुतज्ञान-न०। ज्ञानविशेषे, आ० म० १ अ०। आव०। श्रवणं श्रुतं वाच्यवाचकभावपुरस्सरीकारेण शब्दसंसृष्टार्थग्रहणहेतुरुपलब्धिविशेषः एवमाकारं वस्तु जलधारणाद्यर्थक्रियासमर्थं घटशब्दवाच्यमित्यादिरूपतया प्रधानीकृतत्रैकाल्यसाधारणसमानपरिणामः शब्दार्थपर्यालोचनानुसारी इन्द्रियमनोनिमित्तोऽवगमविशेष इत्यर्थः । श्रुतं च तत् ज्ञानं च श्रुतज्ञानम् । अथवा—श्रूयते अनेन अस्मात् अस्मिन्वेति श्रुतं तदावरणक्षयोपशमः ' कृद्बहुलम्" इति वचनात्करणादावपि क्तप्रत्ययः, तज्जनितं श्रुतं कार्ये कारणोपचारात्, शृणोतीति वा श्रुतमात्मा तदनन्यत्वात् ज्ञानमपि श्रुतं, श्रुतं च तत् ज्ञानं चेति समासः। ('सुय' शब्दे श्रुतज्ञानमुक्तम् ।) आ० म० १ अ०। श्रुतज्ञानं [illegible] । षो० १० विव० । इन्द्रियमनोनिमित्ते श्रुतग्रन्थानुसारिणि बोधे, भ० ८ श० २ उ०। द्वा० । प्रज्ञ० । ध० र०। स्था०।

सुयनाणे दुविहे पण्णत्ते तं जहा-अंगपविट्ठे चेव, अंगबाहिरे चेव । ( सू० ७१ × ) स्था० २ ठा० ।

अथोत्तरगाथासम्बन्धनार्थमाह—

कत्तो पसूयमागय मायरियपरंपराइ सुयनाणं ।
सामाइयाइयमिदं, सव्वं चिय सुत्तमत्थो वा ? ॥१०९२॥

ननु पूर्वं भवतेदमुक्तम्—' आचार्यपरम्परया समागतां सामायिकनिर्युक्तिमहं वक्ष्ये ' । तथेदं पृच्छ्यते—' कत्तो पसूयमित्यादि ' आदौ कुतः पुरुषविशेषात् प्रसूतामुत्पन्नां सतीं तत आचार्यपरम्परयाऽऽगतामायातां तां सामायिकनिर्युक्तिं त्वं वक्ष्यसि ? इत्युपस्कारः । तथा, इदमपि पृच्छ्यते । किम् ?, इत्याह—' सुयनाणमित्यादि ' सर्वमपि च सामायिकादिकं बिन्दुसारपर्यन्तं सूत्रार्थरूपं श्रुतज्ञानमिदं प्रथमं कुतः प्रसूतं सत् पश्चादाचार्यपरम्परयाऽऽयाऽऽगतम् ? इति ।

एवमुत्तरगाथाप्रस्तावनां कुर्वन्नाचार्य आत्मनः
प्रेर्यमाशङ्क्य परिहरन्नाह—

एवं नणु भणियं चिय, अत्थपुहत्तस्स तेहिं कहियस्स ।
इह तेसिं चिय सीला-इकहणगहणं फलविसेसो ॥१०९३॥

ननु ' सामायिकनिर्युक्तिः श्रुतज्ञानं वा सर्वं कुतः पुरुषात् प्रथमं प्रसूतम् ?, इत्यत्र यदुत्तरं तदेतद् भणितमेव-उक्तमेव निर्गमितार्थमेवेत्यर्थः । क ?, इत्याह—' अत्थपुहत्तस्सेत्यादि ' " तैस्तीर्थकर-गणधरैः कथितस्यार्थपृथक्त्वरूपस्य श्रुतज्ञानस्य भगवतो निर्युक्तिं कीर्तयिष्ये ' इत्युक्ते तीर्थकर-गणधरेभ्यः सर्वमपि श्रुतज्ञानमादौ प्रसूतम्, इत्युक्तमेव, तत् किमिति पुनरपि प्रश्नः ? । अत्र प्रतिविधानमाह-'इयत्थीति' सत्यम्, ज्ञातमेवेदं यत्--तीर्थकर-गणधरेभ्य एव सर्वमिदमादौ प्रसूतम्, किन्त्विह तेषामेव तीर्थकर--गणधराणां शीलादिस्वरूपकथनम्, ग्रन्थनम्, फलविशेषश्च विशेषतोऽभिधास्यते, इत्ययं पुनरपि प्रश्नोत्तरोपन्यासः । तत्र तीर्थकृता तपो-नियमज्ञानानि शीलमभिधास्यते, आदिशब्दः स्वगतभेदप्रख्यापकः, तान्येव वृक्षः, तदारूढस्य पुष्पप्रक्षेपकल्पा तु देशना-कथनम्, तत्फलविशेषस्तु भव्यजनविबोधनादिति । गणधराणां तु बुद्धिमयपटेन तीर्थकरात् गृहीत्वा सूत्रग्रन्थनं प्रतिपादयिष्यते, फलविशेषस्तु

प्रवचनमाथना, सुखग्रहणाद्यनुग्रहश्च इति गाथाऽक्षरार्थः ।

अथोक्तार्थस्यैवोत्तरमाह--

तव-नियम-नाणरुक्खं, आरूढो केवली अमियनाणी ।
तो मुयइ नाणवुट्ठिं, भवियजणविबोहणट्ठाए ॥१०९४॥
तं बुद्धिमएण पडेण गणहरा गिण्हिउं निरवसेसं ॥
तित्थयरभासियं गं-थंति तओ पवयणट्ठा ॥१०९५॥

रूपकमिदं द्रष्टव्यम् । तत्र वृक्षो द्विधा-द्रव्यतः, भावतश्च । द्रव्यतः प्रधानः कल्पवृक्षः, यथा च तमारुह्य कश्चिद् गन्धादिगुणविशिष्टानां कुसुमानां संचयं कृत्वा तदधोभागवर्तिनां तदारोहणासमर्थानां पुरुषाणामनुकम्पया कुसुमानि विसृजति, तेऽपि भूपति-रजोगुण्ठनभिया विमलविस्तीर्णपटेषु प्रतीच्छन्ति, ततो यथाप्रयोगमुपभुञ्जानाः , परेभ्यश्चोपकुर्वाणाः सुखमाप्नुवन्ति। एवं भाववृक्षेऽपि सर्वमिदमायोज्यम् ; यथा--तपश्च नियमश्च ज्ञानं च तान्येव वृक्षस्तम् तपो बाह्य-ऽभ्यन्तरभेदतो द्वादशधा प्रतीतमेव । इन्द्रिय-नोइन्द्रियसंयमस्तु नियमः। तत्र श्रोत्रादीन्द्रियाणां निग्रह इन्द्रियसंयमः, कषायादीनां तु निग्रहो नोइन्द्रियसंयमः। ज्ञानमिह केवलं संपूर्णं गृह्यते । एतत्त्रयरूपं वृक्षमारूढः । ज्ञानमकेवलरूपमपि स्यात् तद्व्यवच्छेदार्थमाह—' केवली , केवलशब्दस्येह संपूर्णवाचकत्वात् केवलं संपूर्णमस्याऽस्तीति केवली । अयमपि श्रुत-क्षायोपशमिक-क्षायिकज्ञानभेदात् त्रिविधः ; अथवा—श्रुता-ऽवधि-मनःपर्याय-केवलज्ञानभेदाच्चतुर्विधः, तत्र शेषव्यवच्छेदार्थमाह—' अमितज्ञानी' क्षायिकज्ञानकेवलीः सर्वज्ञ इत्यर्थः । स चेह प्रक्रमाद् भगवांश्चतुस्त्रिंशदतिशयसंपन्नस्तीर्थकरः। ' तो त्ति ' ततो वृक्षाज्ज्ञानरूपकुसुमवृष्टिं कारणे कार्योपचाराज्ज्ञानकारणभूतशब्दकुसुमवृष्टिमित्यर्थः । किमर्थम् ?, भव्याश्च ते जनाश्च तेषां विबोधनं तदर्थं तद्विबोधनार्थमिति । तां च ज्ञानकुसुमवृष्टिं बुद्ध्या निर्वृत्ता बुद्धिमयस्तेन विमलबुद्धिमयेन पटेन गणधरा गौतमादयो ग्रहीतुं गृहीत्वाऽऽदाय निरवशेषां संपूर्णाम् , ततस्तीर्थकरभाषितानि कुसुमकल्पानि भगवदुक्तानि विचित्रप्रधानकुसुममालावद् ग्रथ्नन्ति। किमर्थम् ?, प्रगतं , शस्तम् , आदौ वा वचनं प्रवचनं द्वादशाङ्गम् , प्रवक्तीति वा प्रवचनं सङ्घस्तदर्थं तद्धितमेतम्। इति निर्युक्तिगाथाद्वयार्थः ।

भाष्यकारः प्राह—

रुक्खाइरूवयनिरू-वणत्थमिह दव्वरुक्खदिट्ठंतो ।
जह कोइ विउलवणसं-डमज्झयारट्ठियं रम्मं ॥१०९६॥
तुंगं विउलक्खंधं, साहसओ कप्परुक्खमारूढो ।
पज्जत्तगहियबहुविह-सुरभिकुसुमाऽणुकंपाए ॥१०९७॥
कुसुमत्थिभूमिचिट्ठिय पुरिसपसारियपडेसु पक्खिवइ ।
गंथंति ते वि घेत्तुं, सेसजणाणुग्गहट्ठाए ॥१०९८॥
लोगवणसंडमज्झे, चोत्तीसाइसयसंपदोवेओ ।
तव-नियम-नाणमइयं, स कप्परुक्खं समारूढो ॥१०९९ ।
मा होज्ज नाणगहण-म्मि संसओ तेण केवलिग्गहणं ।
सो चिं पउहा ततोऽयं,भव्वजणू अमियनाणि त्ति।११००
पज्जत्तनाणकुसुमो, ताइं छउमत्थभूमिसंथेसु ।
नाणकुसुमत्थिगणहर-सियबुद्धिपडेसु पक्खिवइ॥११०१।

एवमपि सुगमा एव. नवरमिह वृक्षादिरूपकनिरूपणार्थं द्रव्यवृक्षदृष्टान्तोऽभिधीयते । कः पुनरसौ ?, इत्याह-'जह कोइ' इत्यादि । 'साहसउ ' त्ति वक्ष्यमाणकेवलिस्थानीयः सातिशयः कोऽपि नरः । उक्तो द्रव्यवृक्षदृष्टान्तः । अथ प्रकृते भाववृक्षे सर्वं योजयन्नाह--'लोगवणसंडेत्यादि' । छद्मस्थत्वमेव भूमिश्छद्मस्थत्वभूमिरिति भावप्रधानोऽयं निर्देशः, तत्संस्थेषु । ज्ञानकुसुमार्थिनो ये गणधरास्तच्छुक्लबुद्धिपटेष्विति ।

अथ प्रेरकः--

कीस कहेइ कयत्थो, किं वा भवियाण चेव बोहत्थं ।
सव्वोवायविहिण्णू ,किं वाऽभव्वे न बोहेइ ? ॥११०२॥

शब्दवृष्टिप्रमोचनेन तीर्थकृतां धर्मकथनं सूचितम् , तत्र कृतार्थोऽप्यसौ भगवान् किमिति कथयति ? । भव्यजनविबोधनार्थमिति चोक्तम् , तत्र किमसौ भव्यानेव बोधयति ?, यावता सर्वोपायाभिज्ञः सन्नभव्यानपि किमिति न बोधयति ? इति ।

अत्र प्रतिविधानमाह--

नगंतरणु कयत्थो, जगोदिक्खं जिणिन्दनामं से ।
तदवंझफलं तस्स य,खवणोवाओऽयमेव जओ॥११०३॥
जं व कयत्थस्स वि से, अणुवकयपरोवगारिसिभव्वं ।
परमहियदेसयत्तं, भासयमाभव्वमिव रविणो ॥११०४॥
किं व कमलेसु राओ,रविणो बोहेइ जेण सो ताइं ।
कुमुएसु व से दोसो,जं न विबुज्झंति से ताइं ?॥११०५॥
जं बोहमउलणाइं, सूरकरामरिसओ समाणाओ ।
कमलकुमुयाण तो तं, साभव्वं तस्स तेसिं च ॥११०६॥
जह वोलूगाईणं पगासधम्मा वि सो सदोसेणं ।
उइओ वि तमोरूवो, एवमभव्वाण जिणसूरो ॥११०७॥
सज्झं तिगिच्छमाणो, रोगं रोगी न भण्णए वेज्जो ।
मुणमाणो य असज्झं,निसेहयंतो जह अदोसो ॥११०८॥
तह भव्वकम्मरोगं, नासंतो रागवं न जिणवेज्जो ।
न य दोसीऽभव्वास-ज्झकम्मरोगं निसेहंतो ॥११०९॥
सोत्तुमजोग्गं जोग्गं, दलिए रूवं करेइ रूयारो ।
न य रागद्दोसिल्लो, तहेव जोग्गो विबोहंतो ॥१११०॥

सर्वा अपि सुगमाः, नवरं नैकान्तेन तीर्थकरः कृतार्थः, येन तीर्थकरनाम ' से ' तस्यावेदितम् , तच्चाऽवन्ध्यफलम् इति नाऽवेदितं क्षीयते । तत्क्षपणोपायश्च यस्मादयमेव धर्मकथनादिकः, ततः कथयतीति । किञ्च, कृतार्थत्वे सत्यपि रविर्भासकस्वाभाव्यमिव यद् यस्मात् ' से ' तस्य भगवतस्तीर्थकरस्य कृतार्थस्यापि यदिदं परमहितदेशकत्वं तदनुपकृतोपकारिणः स्वभावोऽनुपकृतोपकारिस्वभावस्तस्य भावोऽनुपकृतोपकारित्वस्वाभाव्यं, तस्मात् कथयति । कृतार्थस्याऽप्यनुपकृतोपकारिणो भगवतः परोपदेशदातृत्वं स्व-

भाषत एव, इत्यतस्तत्स्वाभाव्यात् कथयतीति तात्पर्यमिति न च भव्यानेव प्रतिबोधयतस्तस्य राग-द्वेषौ, इति दृष्टान्तेन दर्शयति—'किं व कमलेसु' इत्यादि । 'म' त्ति । 'स' तस्य रवेः प्रतिबोधयतोऽपि यत् तानि कुमुदानि न विबुध्यन्ते इति । तस्मात् कोऽत्राभिप्रायः ?, इत्याह—'जं बोहेत्यादि' समानादपि सूरकरपरामर्शाद् यतो बोध-मुकुलनानि यथासंख्यमेव कमल-कुमुदानां जायमानानि दृष्टानि 'तो' त्ति ततो ज्ञायते-तस्य रवेः, तेषां च कमल-कुमुदानां स्वभावोऽयं यद्—रविः कमलान्येव बोधयति न तु कुमुदानि, कमलान्यपि रवेः सकाशाद् बुध्यन्ते न कुमुदानि, न पुनरिह कस्यापि राग-द्वेषौ ; एवं भगवतोऽपि भव्याभव्येषु योज्यमिति । दृष्टान्तान्तरमाह-'जहवेत्यादि' उलूकादीनां रात्रिञ्चराणां घूकादीनां 'सो' त्ति रविः । अपरमप्यत्र दृष्टान्तमाह-'सज्झमित्यादि' । अत्रैवोदाहरणान्तरमाह-'सोत्तुमित्यादि' दलिकं काष्ठादि 'रूयारो' रूपकारः । इति व्याख्याता प्रथमनिर्युक्तिगाथा ।

अथ द्वितीयनिर्युक्तिगाथाव्याख्यानमाह-

**तं नाणकुसुमवुट्ठिं, घेत्तुं बीयाइबुद्धओ सव्वं ।**
**गंथंति पवयणट्ठा, माला इव चित्तकुसुमाणं ॥१११३॥**

'प्रवचनार्थं प्रथ्नन्ति' इत्युक्तम् । अथवा प्रयोजनान्तरमाह-

**घेत्तुं व सुहं सुहगुणण-धारणादाउँ पुच्छिउं चेव ।**

मुत्कलं भगवता तीर्थकरेणोक्तं वचनवृन्दं मुत्कलकुसुमनिकरमिव ग्रथितं-सूत्रितं सद् ग्रहीतुं चाऽऽदातुं सुखं भवति । इदमुक्तं भवति- पद-वाक्य-प्रकरण-ध्याय-प्राभृतादिनियतक्रमस्थापितं जिनवचनमयत्नेन एव ग्रहीतुं शक्यम-'एतावदस्य ग्रहीतम्, एतावच्चाद्यापि पुरस्ताद् ग्रहीतव्यम्' इत्यादिविवक्षया ग्रथितं सत् सुखेनैव ग्रहीतुं शक्यमित्यर्थः । तथा, गुणनं च धारणा च गुणन-धारणे, ते अपि ग्रथिते सूत्रे सुखं भवतः । तत्र गुणनं परावर्तनमभ्यासः, धारणा त्वविच्युतिरविस्मृतिः । तथा, दातुं प्रष्टुं च सुखमेव भवति । तत्र दानं शिष्येभ्योऽतिसर्जनम्, प्रश्नस्तु संशयापन्नस्य निःसंशयार्थं गुरुप्रच्छनम् । एतैः कारणैः कृतं रचितं गणधरैः । अत एतस्मादपि हेतोः कृतं श्रुतम् 'इदम्' इति शेषः । इति निर्युक्तिगाथार्थः । विशे० ।

अत्र भाष्यम्-

**मुक्ककुसुमाणँ गहणा-इयाइँ जह दुक्करं करेउं जे ।**
**गुच्छाणं तु सुहयरं, तहेव जिणवयणकुसुमाणं ॥१११४॥**
**पय-वक्क-पगरण-ज्झा-य-पाहुडाइनियतक्कमपमाणं ।**
**तदणुसरता सुहं चिय,घेप्पइ गहियं इदं गेज्झं॥१११५॥**
**एवं गुणणं धरणं , दाणं पुच्छा य तदणुसारेणं ।**

यथा मुत्कानां मुत्कलानां कुसुमानां ग्रहणादीनि कर्तुं दुष्कराणि, ग्रथितानां तु सुकराणि, तथा जिनवचनकुसुमानामपि द्रष्टव्यम् । अतो गणधरास्ता ग्रथ्नन्ति । 'अज्झाय' त्ति अध्ययनम्, प्राभृतं पूर्वान्तर्गतं । श्रुतविशेषः 'गहिय इदं गेज्झं' ति एतावदस्य गृहीतम्, एतावच्चाद्यापि पुरस्ताद् ग्रहीतव्यम् इत्यादि विवक्षया पद-वाक्यादिक्रमेण विरचितं सत् तत्पदानुसरता सुखेनैव श्रुतं गृह्यते, एवं गुणनाद्यपि सुखं भवति । विशे० ।

उक्तनिर्युक्तिगाथासंबन्धनार्थमाह—

**जिणभणिइ च्चिय,सुत्तं गणहरकरणम्मि को विसेसो त्थ ?।**
**सो तदविक्खं भासइ, न उ वित्थरओ सुयं किंतु ॥१११८॥**

ननु 'तित्थयर भासियाइं गंथंति' इत्यादिवचनाज्जिनभणितिरेव—तीर्थकरोक्तिरेव तर्हि श्रुतम्, गणधरसूत्रीकरणे तु तत्र को विशेषः ? । अत्रोच्यते—स तीर्थकरस्तदपेक्षं गणधरप्रज्ञापेक्षमेव किञ्चिदल्पं भाषते, न तु सर्वजनसाधारणं विस्तरतः समस्तमपि द्वादशाङ्गश्रुतम्, किन्तु यद् भाषते तद् दर्श्यते । इति गाथार्थः ।

किं पुनस्तत् ?, इत्याह—

**अत्थं भासइ अरहा, सुत्तं गंथंति गणहरा निउणं ।**
**सासणस्स हियट्ठाए, तओ सुत्तं पवत्तइ ॥ १११९ ॥**

अर्थमेवाऽर्हन् भाषते, न सूत्रं द्वादशाङ्गरूपम् । गणधरास्तु तत् सूत्रं सर्वमपि निपुणं सूक्ष्मार्थप्ररूपकं बह्वर्थं चेत्यर्थः, अथवा—नियताः प्रमाणनिश्चिता गुणा यत्र तद् नियतगुणं निगुणं प्रथ्नन्ति । ततः शासनस्य हितार्थं सूत्रं प्रवर्तते । इति निर्युक्तिगाथासारार्थः ।

भावार्थं त्वभिधित्सुर्भाष्यकारः प्रेर्यं परिहारं च प्राह—

**णणु अत्थोऽणभिलप्पो, स कहं भासइ न सद्दरूवो सो ?।**
**सद्दम्मि तदुवयारो, अत्थप्पच्चायणफलम्मि ॥११२०॥**

आह—ननु भाष्यमाणः सर्वत्र शब्द एव दृश्यते, यस्त्वर्थः सोऽनभिलाप्यः—अशब्दात्मकत्वाद् वक्तुमशक्य एव, इति कथं सतीर्थकरस्तमशब्दरूपमर्थं भाषते ? । उच्यते—अर्थप्रत्यायनफले शब्द एव तदुपचारोऽर्थोपचारः क्रियते । एतदुक्तं भवति—अर्थप्रतिपादनस्य कारणभूते शब्देऽर्थोपचारं कृत्वाऽर्थं भाषत इत्युच्यत इत्यदोष इति ।

प्रेरकः प्राह—

**तो सुत्तमेव भासइ, अत्थप्पच्चायगं न नामत्थं ।**
**गणहारिणो वि तं चिय,करेंति को पडिविसेसो त्थ?॥११२१**

ततस्तर्हि त्वदुक्तयुक्त्या शब्दभाषकस्तीर्थकरः सूत्रमेवाऽर्थप्रत्यायकं भाषते, न त्वर्थम् । गणधारिणोऽपि तदेव कुर्वन्ति, तत् को नामाभयत्र विशेषः ?—न कश्चिदिति ।

आचार्यः प्राह—

**सो पुरिसाविक्खाए, थोवं भणइ न उ बारसंगाइं ।**
**अत्थो तदविक्खाए, सुत्तं चिय गणहराणं तं ॥११२२॥**

ननु प्रागेवोक्तं यत्—गणधरलक्षणपुरुषापेक्षया स तीर्थकरः " उप्पन्नेइ वा, विगमेइ वा, धुवेइ वा " इति मातृकापदत्रयमात्ररूपं स्तोकमेव भाषते, न तु द्वादशाऽङ्गानि । ततश्च तद् मातृकापदत्रयमात्रं शब्दरूपमपि सत् तदपेक्षया द्वादशाङ्गापेक्षया तदर्थसंक्षेपरूपत्वादर्थो भण्यते । गणधराणां तु गणधरापेक्षया त्वित्यर्थः, तदेव मातृकापदत्रयं शब्दरूपत्वात् सूत्रम्, इति नोभयत्र समानतादोष इति ।

आह-ननु मातृकापदत्रयस्य शब्दरूपत्वात् सूत्ररूपता बुध्यते, अर्थरूपतां तु तस्य नावगच्छाम इत्याशङ्क्य पुनरपि तस्य तां समर्थयन्नाह—

**अंगाइसुत्तरयणा-निरवेक्खो जेण तेण सो अत्थो ।**
**अहवा न सेसपवयण-हियउ त्ति जह बारसंगमिणं ॥११२३॥**
**पवयणहियं पुण तयं, जं सुहगहणाइ गणहरेहिंतो ।**
**बारसविहं पवत्तइ, निउणं सुहुमं महत्थं च ॥११२४॥**

अङ्गा-ऽनङ्गादिविभागेन विरचितमेव सूत्रं प्रसिद्धम्, अयं तु मातृकापदत्रयरूपः शब्दो येन कारणेनाऽङ्गादिविभागेन या सूत्ररचना तामनपेक्षमाणस्तत्समुदायार्थरूपत्वेन तद्बहिर्भूत इत्यतः सोऽर्थ इति व्यपदिश्यते । अथवा-शब्दस्य गणधरादेरन्यस्य संघरूपस्य प्रवचनस्य यः सुखग्रहण-धारणादिभ्यो हितः शब्दराशिः स एव सूत्रतया प्रोक्तः । अयं तु मातृकापदत्रयरूपः शब्दो न शेषप्रवचनस्य-त्यो हितः, यथेदं द्वादशाङ्गम्, अतो नासौ सूत्रम्, किन्त्वर्थ इति । तत्पुनः शब्दजालं शेषप्रवचनस्य हितमेव । यत् किम् ?, इत्याह—यत् सुखग्रहणादिकारणेभ्यो द्वादशधा-आचारादिद्वादशभेदं गणधरेभ्यः प्रवर्तते । अतस्तदेव सूत्रम्, मातृकापदत्रयं त्वर्थ इति स्थितम् । अथ 'निउणं' इति निर्युक्तिगाथावयवस्यार्थमाह-तदाचारादिकं द्वादशविधं सूत्रं कथम्भूतम् ?, निपुणं सूक्ष्मं सूक्ष्मार्थप्रतिपादकत्वात्, महानपरिमितोऽर्थो यस्मिंस्तद् महार्थं च निपुणमिति ।

अर्थान्तरमाह—

**नियगुणं वा निउणं निद्दोसं गणहराऽहवा निउणा ।**
**तं पुण किमाइपज्जं-तमाणमह को व से सारो ॥११२५॥**

अथवा-नियतगुणं निश्चितगुणं नितुणं संनिहितसमस्तसद्गुणत्वाद् निर्दोषमित्यर्थः । 'निउणा' इति पाठान्तरं गणधरा विशेष्यन्ते-निपुणाः, सूक्ष्मार्थदर्शित्वात्, निगुणा वा गणधराः, संनिहितसमस्तगुणत्वादित्यर्थः । वक्ष्यमाणनिर्युक्तिगाथायाः प्रस्तावनामाह—तत् पुनः श्रुतं किमादि ?, किंपर्यन्तमानं- कियत्परिमाणम् ?, को वाऽस्य सारः ? इति गाथापदकार्थः ।

अनन्तरपृष्टस्यैवोत्तरमाह-

**सामाइयमाईयं, सुयनाणं जाव बिंदुसाराओ ।**
**तस्स वि सारो चरणं, सारो चरणस्स निव्वाणं ॥११२६॥**

तस्य श्रुतज्ञानं सामायिकादि वर्तते; चरणप्रतिपत्तिकाले सामायिकस्यैवादौ प्रदानात् । यावद् बिन्दुसार इति बिन्दुसाराभिधानचतुर्दशपूर्वपर्यन्तमित्यर्थः, यावच्छब्दादेव च इयमेक—द्वादशपरिमाणं तद् वेदितव्यम् । तस्यापि श्रुतज्ञानस्य सारश्चरणम् । सारशब्दोऽत्र प्रधानवचनः फलवचनश्च मन्तव्यः, तस्मादपि श्रुतज्ञानाच्चारित्रं प्रधानम्, तस्य फलं तादित्यर्थः । अपिशब्दात्—सम्यक्त्वस्यापि सारश्चरणमेव । अथवा—अपिशब्दस्य व्यवहितः संबन्धः, तस्य श्रुतज्ञानस्य सारश्चरणमपि । विशे० । "सो होइ अहिगयट्ठो, सुयनाणं, जेण अत्थओ दिट्ठं । एक्कारसंगमाई, पइण्णगं दिट्ठिवाओ य ॥" उत्त० २८ अ० । श्रुतज्ञानस्य पुस्तकादेः कर्पूरादिना पूजामात्रं सर्वदाऽपि सुकरं तदशक्तेनापि प्रतिवर्षमेकैकशः कार्या । ध०२अधि० । आ० चू० । आव० । श्रुतज्ञानावरणक्षयोपशमजनितं श्रुतज्ञानम् । नं० ।

**सुयणाणकरण-श्रुतज्ञानकरण**-न० । गुरूपदेशादिना श्रुतज्ञानकरणे, विशे० ।

**सुयणाणपमाण-श्रुतज्ञानप्रमाण**-त्रि० । आगमप्रामाण्ये, पिं० ।

**सुयणाणारिय-श्रुतज्ञानार्य**-पुं० । श्रुतज्ञानिन्यार्ये, प्रज्ञा० १ पद ।

**सुयणाणावरण-श्रुतज्ञानावरण**-न० । श्रुतं च तत् ज्ञानं च श्रुतज्ञानम्, तस्यावरणं श्रुतज्ञानावरणम् । ज्ञानावरणीयकर्मभेदे, कर्म० ६ कर्म० ।

**सुयणाणि-श्रुतज्ञानिन्**-पुं० । श्रुतज्ञानसम्पन्ने, "जह केवली वि जाणइ, दव्वं खेत्तं च कालभावं च । तह चउलक्खणमेयं, सुयनाणी मेव जाणाति ।" व्य० १० उ० । (ववहार शब्द व्याख्यानेया ।)

**सुयणिघस-श्रुतनिघर्ष**-पुं० । श्रुतं निघर्षयन्तीति श्रुतनिघर्षाः । स्वर्णवल्लतपरीक्षकेषु, यथा सुवर्णकारस्तापनिकषच्छेदैः सुवर्णं परीक्षते । व्य० ३ उ० ।

**सुयणिबद्ध-श्रुतनिबद्ध**-त्रि० । सूत्रैरुपात्ते, "पण्णवणिज्जाणं पुण अणंतभागो सुयणिबद्धो" सूत्र० १ श्रु० १ अ० १ उ० ।

**सुयणिस्संद-श्रुतनिस्यन्द**-पुं० । सिद्धान्तोपनिषद्भूते, ग० ३ अधि० ।

**सुयणिस्सिय-श्रुतनिश्रित**-न० । श्रुतं कर्मतापन्नं निश्रितम्-आश्रितम् अनेनेति श्रुतनिश्रितम् । आभिनिबोधिकज्ञानभेदे, यत्पूर्वमेव श्रुतकृतोपकारस्येदानीं पुनस्तदनुपेक्षमेवानुप्रवर्तते तदवग्रहादिलक्षणं श्रुतनिश्रितमिति । स्था० २ ठा० १ उ० । यत् पूर्वश्रुतपरिकर्मितमतेर्व्यवहारकाले पुनः पुनः श्रुतानुसारितया समुत्पद्यते तच्छ्रुतनिश्रितम् । स्था० ।

सुयनिस्सिए दुविहे पण्णत्ते, तं जहा- अत्थोग्गहे चेव, वंजणोग्गहे चेव । असुयनिस्सिए वि एवमेव । स्था० २ ठा० १ उ० ।

मतिज्ञानभेदे, "से किं तं सुयनिस्सियं मइनाणं ?, सुयनिस्सियं मइनाणं चउव्विहं पण्णत्तं । तं जहा-उग्गहो ईहा अवाए धारणा ।" कर्म० १ कर्म० । नं० ।

**सुयतुंडपईवनिभ-शुकतुण्डप्रदीपनिभ**-त्रि० । शुकचञ्चुप्रदीपार्चिःसदृश, उत्त० ३४ अ० ।

**सुयत्थ-श्रुतार्थ**-पुं० । श्रुतागमे, द्वा० १८ द्वा० ।

**सुयत्थधम्म-श्रुतधर्मार्थ**-पुं० । प्राकृतत्वाल्लक्षणरूपम् । गीतार्थे, दश० ९ अ० २ उ० ।

**सुयत्थय-श्रुतस्तव**-पुं० । पुष्करवरेत्यादिलक्षणे श्रुतस्तुतौ, पं० व० २ द्वार ।

**सुयत्थेर-श्रुतस्थविर**-पुं० । श्रुतेनागमेन स्थविरो वृद्धः श्रुतस्थविरः । तृतीयचतुर्थाङ्गधरे साधौ, 'ठाणसमवायधरणं निग्गंथे सुयथेरे' । स्था० ३ ठा० २ उ० ।

**सुयदाण-श्रुतदान**-न० । अक्षरप्रतिपादिश्रुतोद्देशने, जं० १ वक्ष० ।

**सुयदेवया-श्रुतदेवता**-स्त्री० । जिनवाण्याम्, पं० सं० ५ द्वार ।

( 'सुयदेवयापसा० १४१ 'गाथा' पंचसंगह' शब्दे ५ भागे उक्ता ।)

श्रुतदेवतां प्रणिपातयन्नाह—

सुयदेवया भगवई, नाणावरणीयकम्मसंघायं ।
तेसिं खवेउ सययं, जेसिं सुयसायरे भत्ती ॥ १ ॥

श्रुतमर्हत्प्रवचनं श्रुताधिष्ठात्री देवता श्रुतदेवता । संभवति च श्रुताधिष्ठातृदेवता, यदुक्तं कल्पभाष्ये;—"सव्वं च लक्खणोवेयं, समहिट्ठंति देवता । सुत्तं च लक्खणोवेयं, जेण सव्वण्णुभासियं ॥१॥" इति भगवती पूज्यतमा ज्ञानावरणीयकर्मसंघातं ज्ञानघ्नं कर्मनिवहं तेषां प्राणिनां क्षपयतु क्षयं नयतु सततमनवरतं येषां किमित्याह-श्रुतमपरिमितगम्भीरतयाऽतिशयगत्त्रप्रचुरतया च सागरः समुद्रः श्रुतसागरः तस्मिन्भक्तिर्बहुमानो विनयश्च समस्तीति गम्यते । ननु श्रुतरूपदेवताया उक्तरूपविज्ञापना युक्ता श्रुतभक्तेः कर्मक्षयकारणत्वेन सुप्रतीतत्वात् श्रुताधिष्ठातृदेवतायास्तु व्यन्तरादिप्रकाराया न युक्ता तस्याः परकर्मक्षपणेऽसमर्थत्वादिति । नैष श्रुताधिष्ठात्री देवता गोचरशुभप्रणिधानस्यापि स्वतः कर्मक्षयहेतुत्वेनाभिहितत्वात् यदुक्तम्-" सुयदेवयाए जीए संभरणं कम्मक्खयकरं भणियं नत्थि त्ति अकज्जकरी व एवमासायणा तीए" त्ति किंचेदमेव व्याख्यानं कर्तुमुचितं येषां सततं श्रुतसागरे भक्तिस्तेषां श्रुताधिष्ठातृदेवता ज्ञानावरणीयकर्मसंघातं क्षपयत्विति वाक्यार्थोपपत्तेः । व्याख्यानान्तरे तु श्रुतरूपदेवता श्रुते भक्तिमतां कर्म क्षपयत्विति सम्यग्नोपपद्यते । श्रुतस्तुतेः प्रागप्युक्तत्वात् । ततः स्थितमिदमर्हत्पादिका श्रुतदेवतेह गृह्यत इति । पा० । "सुअदेवयाए करेमि काउस्सग्गं अन्नत्थ" स्यादि च पठित्वा श्रुताधिष्ठातृदेवतायाः स्मृतेः कर्मक्षयहेतुत्वेन तत्कायोत्सर्गं कुर्यात् , तत्र च नमस्कारं चिन्तयति, देवताद्याराधनस्य स्वल्पयत्नसाध्यत्वेनाष्टोच्छ्वासमानमेवायं कायोत्सर्ग इत्यादि हेतुः संभाव्य, पारयित्वा च तस्याः स्तुतिं पठति-" सुअदेवया भगवई " इत्यादि अन्येन दीयमानां वा शृणोति । ध० २ अधि० । " यस्याः प्रभावमतुलं, सम्प्राप्य भवन्ति भव्यजननिवहाः । अनुयोगवेदिनस्तां, प्रयतः श्रुतदेवतां वन्दे ॥१॥" अनु० । श्रुतदेवता तिमिरं पणासेतु । भ० ।

कुंदसमुसंठियचलणा, अमलियकोरंटवेंटसंकासा ।
सुयदेवया भगवती,मम मतितिमिरं पणासेतु ॥१॥ भ०॥
वियसियअरविंदकरा, नासियतिमिरा सुयाहिया देवी ।
मज्झं पि देउ मेहं, बुहविबुहणमंसिया णिच्चं ॥ १ ॥
सुयदेवयाए पणमिमो, जीएँ पसाएण सिक्खियं णाणं ।
अन्नं पवयणदेवी, संतिकरी तं नमंसामि ॥ २ ॥
सुयदेवयाए जक्खो, कुंभधरो बंभसंतिवेरोट्टा ।
विज्जा य अंतिहुंडी, देउ अविग्धं लिहंतस्स ॥ ३ ॥
भ० १४१ श० ।

सुयदेवयाए आसायणाए ।

श्रुतदेवताया-आशातना—श्रुतदेवता न विद्यते अकिञ्चित्करी वा न ह्यनधिष्ठितो मौनीन्द्रः खल्वागमः अतोऽस्मावस्ति नवा अकिञ्चित्करी नामालम्ब्य प्रशस्तमनसः कर्मक्षयदर्शनात् । आव० ४ अ० । सुतदेवताए जीए सुत्तमहिट्ठियं तीए आसायणा णत्थि सा अकिंचिकरी वा एवमादि । आ०चू० ४ अ० ।

श्रुतदेवताविद्यां लक्षधा जपेत्—

वंदित्तु चेइए सम्मं, छट्ठभत्तेण परिजवे ।
इमं सुयदेवयं विज्जं, लक्खहा चेइयालए ॥ ४७ ॥
उवसंता सव्वभावेणं, एगचित्तो सुनिच्छओ ।
आउत्तो अव्वक्खित्तो, रागरइअरइवज्जिओ ॥ ४८ ॥

अउम् ण् अम् उक् उद् अद् उठ् ईण् अम् अउम् ण् अम् उम् अय् आस् उस आर ईण् अम् । अओ मस् अम् ओम् अम् मइप्पस् उ ईण् अम् अउम् ण् अम् । उवहिरे आसवलद्धईण् अम् अउम् णम् । उ सव्वउ । ठसहिलद्धईण् अम् अउम् ण् आम् उ । अक्खईण् अम् । अह आण सलद्धईण् अम् । अउम् ण् । अम् उ भगवउ अरहउ महइमहावीरवद्धमाणं धम्मतित्थंकरस्स अउम् णम् उ सव्वधम्मतित्थंकराणं । अउम् णम् उ सव्वसिद्धाणं अउम् णम् उ सव्वसाहूणं । अ ओम् । णम् उ भगवतो मइण् आणस्स । अउम् णमउ भगवओ सुयणआणस्स । अउम् णमउ भगवओ ओहिइण् आणस्स । अउम् णमउ भगवओ मणपज्जवणआणस्स । अउम् णमउ अम् णमउ व अम् अउ अम् ण अउ अम् णमउ । आउ अभिवत्तीलक्खणम् । सम्मदंसणम् । अओ अम् णम् उअट्ठआरसअम् ईल् अमृगमहस्साहिट्ठियस्स णई म । अमगेण इणइ आणण् ईसहणइ । सयमहणं तु भगवओ कए व लण् आणस्स । अउम् ण् उम् ओ भगवतीए सुयदाएवय आए सिज्झउ मम् अ आहिवाविज्जा । अउम् णम् उ भगवओ णमर । अओ सव्वदुक्खणिम्महणपरमनिव्वुइकरिस्स णं पवयणस्स परमविन्नुतमस्सेति एसा विज्जा सिद्धंतिएहिं अक्खरेहिं लिखिया । महा० २ अ० ।

सुयदेवयातव-श्रुतदेवतातपस्-न० । एकादशसु एकादशीषूपवासो मौनव्रतं श्रुतदेवतापूजा चेति क्रियात्रयात्मके तपोभेदे, पञ्चा० १६ विव० ।

सुयधम्म-श्रुतधर्म-पुं० । श्रुतं द्वादशाङ्गं तस्य धर्मः श्रुतधर्मः । स्वाध्यायवाचनादिरूपे धर्मभेदे, तत्त्वचिन्तायां धर्महेतुत्वस्य धर्मत्वम् । दश० १ अ० । आ० म० । श्रुतस्य धर्मः-स्वभावः श्रुतधर्मः श्रुतस्य बोधस्वभावत्वात् श्रुतस्य धर्मो बोधो बोद्धव्यः । अथवा--श्रुतं च तत् धर्मश्च सुगतिधारणात् श्रुतधर्मः । यदि वा--जीवपर्यायत्वात् श्रुतस्य श्रुतं च धर्मश्च श्रुतधर्मः । उक्तं च--"बोहो सुयस्स धम्मो, सुयं च धम्मो सजीवपज्जोवो । सुगईए संजमंमि य, धरणाओ वा सुयं धम्मो ॥१॥" आ० म० १ अ० । स्वाध्याये, स्था० ३ ठा० ३ उ० । नं० । चारित्रधर्मव्यवस्थाकारिणि धर्मभेदे, पं० व० ४ द्वार । स्था० । ( श्रुतधर्मस्तुतिः ' काउसग्ग ' शब्दे तृतीयभागे ५१६ पृष्ठे उक्ता । ) श्रुतधर्मस्योच्यते

" तमतिमिरपडलविद्धंसणस्स सुरगण० " इत्यादि तमः-- अज्ञानं तदेव तिमिरम् । अथवा--तमो बद्धस्पृष्टनिधत्तं ज्ञानावरणीयं निकाचितं तिमिरं तस्य पटलं वृन्दं तमस्तिमिरपटलं तद्विध्वंसयति नाशयतीति तमस्तिमिरपटलविध्वंसनः तस्य । आव० ४ अ० ।

सुयधम्मे दुविहे पम्मत्ते, तं० सुत्तसुयधम्मे चेव अत्थसुयधम्मे चेव । (सू० ७२X) स्था० २ ठा० १ उ० ।

"सुयधम्मो त्ति वा तित्थ त्ति वा मग्गो त्ति वा पवयणं ति वा एगट्ठा " आ० चू० १ अ० ।

श्रुतधर्म्मन्- त्रि० । श्रुतो धर्मो येनेति आकर्णिताणुव्रतादिप्रतिपादनप्रासवचने , ध० २ अधि० ।

सुयधम्मकहण--श्रुतधर्म्मकथन--न० । श्रुतधर्मस्य वाचनाप्रच्छनापरावर्त्तनानुप्रेक्षाधर्मकथनलक्षणस्य सकलकुशलकलापकल्पद्रुमाविपुलालवालकल्पस्य कथने , ध० । यथा "चक्षुष्मन्तस्त एवेह,ये श्रुतज्ञानचक्षुषा । सम्यक् सदैव पश्यन्ति, भावान् हेयेतरान्नराः ॥ १ ॥" अयं च श्रुतधर्मः प्रतिदर्शनमन्यथान्यथाप्रवृत्त इति नासावद्यापि सत् स्वरूपमार्य विवेचयितुमलमित्याह बहुत्वात्परीक्षावतार इति । यस्य हि बहुत्वाच्छ्रुतधर्म्माणां श्रुतधर्म इति शब्दसमानतया विप्रलब्धबुद्धेः परीक्षायां त्रिकोटिपरिशुद्धिलक्षणायां श्रुतधर्मस्वर्वाभिस्यामवतारः कार्यः । ध० १ अधि० ।

सुयधारय--श्रुतधारक--त्रि० । श्रुतज्ञातरि, प्रश्न० ४ संव०द्वार ।

सुयपज्जवजाय--श्रुतपर्यवजात--न० । उद्देशकाध्ययनादिषु श्रुताध्ययनप्रकारेषु,स्था० ४ ठा० २ उ० । सूत्रार्थप्रकारे, ग० १ अधि० ।

सुयपारायण--शुकपारायण--न० । अर्थपरिसमाप्त्या पदच्छेदेन सूत्रोच्चारणे संहितायाम् , व्य० ३ उ० ।

सुयपिच्छ--शुकपिच्छ--पुं० । शुकपक्षिसत्कपक्षे , जी० ३ प्रति० ४ अधि० । प्रज्ञा० । रा० ।

सुयबुद्धोवेय--श्रुतबुद्ध्युपेत--त्रि० । श्रुतेन बुद्धिभावेन च समन्विते, दश० ६ अ० २ उ० ।

सुयभत्ति--श्रुतभक्ति--स्त्री० । श्रुतविषये बहुमाने, प्रव०१० द्वार।

सुयमद--श्रुतमद--पुं० । विशिष्टश्रुतनिमित्ते मदभेदे, स्था० ८ ठा० ३ उ० । उत्त० । ( अत्र कथानकं 'पण्णापरीसह ' शब्दे पञ्चमभागे ३६० पृष्ठे उक्तम ।) श्रुतेन मदः श्रुतमदः । मदस्थानभेदे , स० ।

सुयमयणाण--श्रुतमदज्ञान--न० । शाब्दज्ञाने, "वाक्यार्थमात्रविषयं,कोष्ठकगतबीजसन्निभं ज्ञानम् । श्रुतमदमिह विज्ञेयं,मिथ्याभिनिवेशरहितमलम् ॥१॥" इत्युक्तलक्षणे ज्ञानभेदे,षो० ११ विव० । ( वक्तव्यता ' णाण' शब्दे ४ भागे १९८९ पृष्ठे उक्ता । )

सुयमयमेत्तापोह--श्रुतमयमात्रापोह--पुं० । श्रुतवादेन निर्वृत्तं श्रुतमयं तदेव तन्मात्रमवधृतस्वरूपम् अन्यज्ञानद्वयनिरपेक्षं तदपोहस्तन्निराशः । श्रुतवादमात्रनिराशे, षो० १० विव० ।

सुयमाण--शयान--त्रि० । शयनं कुर्वति, तं० ।

सुयरयण--श्रुतरत्न--न० । द्वादशाङ्गीरूपे रत्ने , प्रज्ञा० १ पद ।

सुयरयणभरिय--श्रुतरत्नभृत--त्रि० । श्रुतान्येवाचारादीनि निरुपमसुखहेतुत्वाद्रत्नानि श्रुतरत्नानि तैर्भृतं पूरितम् । परिपूर्णगमे , नं० ।

सुयरहस्स--श्रुतरहस्य--न० । श्रुतनिष्कर्षे , संथा० ।

सुयरागि (न्) - श्रुतरागिन्--त्रि० । श्रुते प्रवचने रागो भक्तिर्यस्य स श्रुतरागी । प्रावचनिके , ध० ३ अधि० ।

सुयलंभ--श्रुतलाभ--पुं० । द्रव्यश्रुतलाभे, बृ० ।

दट्ठूण जिणवराणं, पूअं अन्नेण वावि कज्जेण ।
सुयलंभो उ अभव्वे, भविज्ज थंभेण उवणीए ।

बृ०१ उ०१ प्रक० ।

सुयवग--श्रुतवक--पुं० । तृणवनस्पतिभेदे, प्रज्ञा० १ पद ।

सुयवत्तार--श्रुतवक्तृ--त्रि० । द्वादशाङ्गस्य प्रवचनस्य सूत्रतः प्रवाचके, विशे० ।

सुयववहार--श्रुतव्यवहार--पुं० । श्रुतं श्रुतज्ञाने शेषमज्ञानभेदः तदेव व्यवहारः । द्वितीये व्यवहारभेदे, पञ्चा० १६ विव० । अष्टाद्यकाङ्गावसानपूर्वधरैकादशाङ्गनिशीथाद्यशेषश्रुतज्ञे,ध० २ अधि० ।

अथ श्रुतव्यवहारं स्वरूपतामेव कथयति--

नि(व्वू)ज्जूढं चोद्दसपु--व्विएण जं भद्दबाहुणा सुत्तं ।
पंचविहो ववहारो, दुवालसंगस्स नवनीतं ॥ ५७८ ॥

यत् भद्रबाहुस्वामिना चतुर्दशपूर्वधरेण पञ्चविधो व्यवहारः पञ्चविधव्यवहारात्मकं निर्व्यूढं द्वादशाङ्गस्य नवनीतं मथितस्य नवनीतमिव द्वादशाङ्गस्य सारमित्यर्थः । एतेन द्वादशाङ्गानि निर्व्यूढमावेदितव्यं तत्सूत्रं श्रुतमुच्यते । तेन व्यवहारः श्रुतव्यवहारः ।

जो सुयमाहिज्जइ बहुं, सुत्तत्थं च निउणं न याणेइ ।
कप्पे ववहारम्मि य, सो न पमाणं सुयहराणं ॥५७९॥
जो सुयमहिज्जइ बहुं, सुत्तत्थं च निउणं वियाणेइ ।
कप्पे ववहारंमि य, सो उ पमाणं सुयहराणं ॥५८०॥

यः कल्पव्यवहारे च सूत्रं बह्वधीते न सूत्रार्थं निपुणं जानाति,स व्यवहारविषये न प्रमाणं श्रुतधराणाम् । यस्तु कल्पे व्यवहारे च सूत्रं बह्वधीते सूत्रार्थं च निपुणं विजानाति स प्रमाणं व्यवहारे श्रुतधराणाम् ।

कप्पस्स य निज्जुत्तिं,ववहारस्स व परमनिउणस्स ।
जो अत्थतो न जाणइ, ववहारी सो नणुन्नातो ॥५८१॥
कप्पस्स य निज्जुत्तिं, ववहारस्सेव परमनिउणस्स ।
जो अत्थतो वियाणे, ववहारी सो अणुन्नातो ॥५८२॥

कल्पस्य-कल्पाध्ययनस्य व्यवहारस्य च परमनिपुणस्य यो निर्युक्तिमर्थतो न जानाति स व्यवहारी नानुज्ञातः । यस्तु कल्पस्य व्यवहारस्य च परमनिपुणस्य निर्युक्तिमर्थतो जानाति स व्यवहारी अनुज्ञातः ।

**सुवण्णवालुया**-सुवर्णवालुका-स्त्री० । दक्षिणोत्तरयोर्भ्याचाल-जनपदयोर्मध्ये वहन्त्यां नद्याम्, आ० म० १ अ० । ती० ।

**सुवण्णसिला**-सुवर्णशिला-स्त्री० । महौषधिभेदे, ती० ६ कल्प ।

**सुवण्णसुत्त**-सुवर्णसूत्र-न० । सुवर्णवर्णे कृमिसूत्रे, सू० २ उ० । आचा० ।

**सुवण्णसुब्भरययवालुया**-सुवर्णशुभ्ररजतवालुका-स्त्री० । सुवर्णं पीतकान्ति हेम, शुभ्रं रूप्यविशेषः रजतं प्रतीतं तन्मय्यो वालुका यासु ताः सुवर्णशुभ्ररजतवालुकाः । नदीविशेषे, रा० ।

**सुवण्णागर**-सुवर्णाकर-पुं० । सुवर्णखनौ, औ० ३ प्रति० १ अधि० २ उ० । यत्र सुवर्णं धमाप्यते । स्था० ८ ठा० ३ उ० ।

**सुवण्णिय**-सौवर्णिक-पुं० । सौन्दर्यादित्वादौत उत्वम् । सुवर्णक्रयविक्रयकारिणि, प्रा० १ पाद ।

**सुवत्त**-सुव्यक्त-त्रि० । स्फुटे, अन्त० १ श्रु० ६ अ० ३ वर्ग ।

**सुवत्थ**-सुवत्स-पुं० । दाक्षिणात्यशक्रेन्द्रे, स्था० २ ठा० ३ उ० ।

**सुवप्प**-सुवप्र-पुं० । शीतोदाया महानद्या उत्तरविजयवप्रयुगले, स्था० ८ ठा० ३ उ० ।

दो सुवप्पा । स्था० २ ठा० ३ उ० ।

**सुवम्म**-सुवर्मन्-पुं० । ऋषभदेवस्य त्रयस्त्रिंशत्तमे पुत्रे, कल्प० १ अधि० ७ क्षण ।

**सुवय**-सुवचस्-त्रि० । शोभनवचने, सूत्र० २ श्रु० ७ अ० ।

**सुवयण**-सुवचन-न० । शोभने वचने, स्था० ३ ठा० १ उ० ।

**सुवया**-सुव्रता-स्त्री० । तेतलिपुत्रस्य पोट्टिलाया द्वारिकायाः प्रव्राजकाभार्यायाम्, ज्ञा० १ श्रु० १४ अ० ।

**सुवाय**-सुवात-न० । तृतीयदेवलोकविमानभेदे, स० ५ सम० ।

**सुवासव**-सुवासव-पुं० । वासवदत्तकुमारे, उपा० ।

विजयपुरं णयरं णंदणवणं उज्जाणं असोगो जक्खो वासवदत्ते राया कण्हा देवी सुवासवे कुमारे भद्दापामोक्खाणं पंचसया देवी ०जाव पुव्वभवे कोसंबी णयरी धणपालो राया वेसमणभद्दे अणगारे पडिलाभिए इह ०जाव सिद्धे । विपा० २ श्रु० ४ अ० ।

**सुविअज्जिय**-सुव्यर्जित-त्रि० । जिनाज्ञापूर्वकदृढभावेन विशेषेण निरन्तरकरणेनार्जिते, तं० ।

**सुविक्कम**-सुविक्रम-पुं० । भूतानन्दस्य नागकुमारेन्द्रस्य कुञ्जरानीकाधिपतौ हस्तिराजे, स्था० ५ ठा० १ उ० ।

**सुविण**-स्वप्न-पुं० । स्वपनक्रियायाम्, भ० ११ श० ११ उ० । निद्राविकृतविज्ञानप्रतिमासार्थविशेषे, स्था० १० ठा० ३ उ० । ( 'महासुमिण' शब्दे षष्ठभागे वर्णनम् । ) ( सुत्तदशकः 'सीओसणिज्ज' शब्देऽस्मिन्नेव भागे उक्तः । ) स्वप्ने गजवृषभसिंहादिकम् । सूत्र० २ श्रु० २ अ० । स्वप्नगते शुभाशुभलक्षणे, भ० । उत्त० १५ अ० । स्वप्नगते शुभाशुभकथने, यथा-"गायने रोदनं ब्रूया-न्नर्तने वधबन्धनम् । हसने शोचनं ब्रूया-त्पठने कलहं तथा ॥१॥" इति । उत्त० १५ अ० । स्वप्न उदाहरणम्-"सुविणपाडि पगेण कप्पडिएण सुविणे चंदो गिलितो कप्पडि-याण य कहियं । ते भणंति--संपुण्णं चंदमंडलसरिसं पोलियं लहेसि । लद्धा घरच्छाइणियाए अण्णेणावि दिट्ठो से एहाऊण पुप्फफलाणि गहाय सुविणपाढगस्स कहेति, तेण भणियं-'राया भविस्ससि' इतो य सत्तमे दिवसे तत्थ राया मतो अपुत्तो सो य निव्विण्णो अच्छति-जाव आसोहियासओ आगतो, तेण तं दट्ठूण हिंसियं पयक्खिणीकओ य ततो विलइतो पट्ठे एवं सो राया जातो । ताहे सो कप्पडिओ सुणेति जहा-तेण वि दिट्ठो एरिसो सुविणतो । सो य आएसफलेण किर राया जातो । सो चिंतेति वच्चामि जत्थ गोरसोतं पिबित्ता सुयामि ०जाव पुणो वि तं सुविणं पेच्छामि । अवि पुणो सो पेच्छेज्जा ण माणुसातो ।" उत्त० ३ अ० । सूत्र० । ('भाव' शब्दे पञ्चमभागे स्वप्नस्य भावविषयो गतः । ) स्वप्नशास्त्रे,-"गजारोहात्कुलवृद्धि राज्यं, श्रीप्राप्तिः श्रीफलागमात् । पुत्राप्तिः फलिताम्रस्य, सौभाग्यं माल्यदर्शनात् ॥१॥" उत्त० ८ अ० । पा० । पञ्चा० ।



**सुविणंत**-स्वप्नान्त-पुं० । स्वप्नस्य विभागे, अवसाने च । भ० १ श० ८ उ० ।

**सुविणंतिय**-स्वाप्नान्तिक-त्रि० । स्वप्नप्रत्यये शाक्यसमये, सूत्र० १ श्रु० १ अ० । ( चतुर्विधं कर्म नोपचीयते तत्राप्यन्यतरत्स्वप्नान्तिकं, तच्च 'सूयगड' शब्दे वक्ष्यते । ) "अवियारमणवयणकायवक्कस्स सुविणमवि अप्पसओ पावं कम्मं कज्जइ ।" सूत्र० २ श्रु० ४ अ० ।

**सुविणदंसण**-स्वप्नदर्शन-न० । स्वापक्रियानुगतार्थविकल्पस्यानुभवने, भ० १६ श० ६ उ० । स्वप्नालोकने दर्शनभेदे, स्था० ८ ठा० ३ उ० ।

**सुविणय**-स्वप्नक-पुं० । स्वप्नफलप्रतिपादके निमित्तशास्त्रे, स्था० ८ ठा० ३ उ० ।

**सुविणलक्खणपाढग**--स्वप्नलक्षणपाठक--पुं० । स्वप्नलक्षणप्रतिपादके, कल्प० १ अधि० ३ क्षण ।

**सुविणा**-स्वप्ना-स्त्री० । स्वप्नात् पुष्पचूलाया इव या स्वप्ने प्रतिपद्यते सा स्वप्ना । प्रव्रज्याभेदे, स्था० १० ठा० ३ उ० ।

**सुविणिच्छिय**-सुविनिश्चित-त्रि० । कालतत्त्वे, पं० व० ४ द्वार ।

**सुविणियप्प**-सुविनीतात्मन्-त्रि० । विनयवति, जन्मान्तरकृतविनये निर्गतिवारधर्माराधके, दश० ६ अ० २ उ० ।

**सुविणीय**-सुविनीत-त्रि० । शिष्येषु सुष्ठु विनियोजिते, औ० । शोभनविनययुक्ते, ग० २ अधि० । ( 'विणय' शब्दे षष्ठभागे गतः सुविनीतः । )

**सुविणीयसंसय**-सुविनीतसंशय-त्रि० । सुतराम्-अतिशयेन विनीतो दूरीकृतः संशयो यस्य सः सुविनीतसंशयः । लब्धरहस्येन सुष्ठु-अतिशयेन विनीतः सुविनीतः । प्रसादितगुरुणैव शास्त्रपरमार्थसमर्पणेन संशयो दोलायमानमानसात्मकोऽस्येति सुविनीतसंशयः । अवगतसंशये, उत्त० १ अ० ।

**सुविणीतसंसक्क**-त्रि० । सुविनीता संसत्-परिषद्यस्येति सुविनीतसंसत्कः । विनीतस्य हि स्वयमनिशयविनीतैव परिषद्भवति इति व्युत्पत्तेः । विनययुक्तपरिषदुपेते, उत्त० १ अ० ।

सुविहि-सुविधि-पुं० । प्रसन्नचन्द्रमित्रस्य वज्रसंघर्ज्ञाबानन्दस्य पितरि, आ० क० १ अ० ।

सुविभज-सुविभज-त्रि० । अकृष्कृत विभजनीये, स्था० ५ ठा० १ उ० ।

सुविभत्त-सुविभक्त-त्रि० । यथास्थानस्थितसर्वावयवे , कल्प० १ अधि० २ क्षण । सुविविक्ते , औ० । रा० । सुप्रकटे , जं० २ वक्ष० । सू० प्र० । सुविविक्तसिके, जं० १ वक्ष० ।

सुविभत्तरायमग्गा-सुविभक्तराजमार्गा--स्त्री० । सुविभक्ता विविक्ता राजमार्गा यस्यां सा तथा । स्फुटराजमार्गसहितायां नगर्याम् , रा० ।

सुविभत्तसिंग-सुविभक्तशृङ्ग-त्रि० । विभागस्थसमशृङ्गे,"सेयं सुजायं सुविभत्तसिंगं, जो पासिया वसमं गोट्ठमज्झे ।" आव० ४ अ० ।

सुविभत्तिय-सुविभक्तिक-त्रि०। सुविच्छित्तिके,जी० ३ प्रति० ४ अधि० ।

सुविभावियप्प-सुविभावितात्मन्-त्रि० । सुष्ठु-विविधं भावितो धर्मवासनया वासित आत्मा यस्यासौ सुविभावितात्मा । धार्मिकमनस्के , सूत्र० १ श्रु० १० अ० ।

सुविमुक्क-सुविमुक्त-त्रि०। सुष्ठु-रागद्वेषात्मकेन स्त्रीसम्पर्केण मुक्त , सूत्र०१ श्रु० ४ अ० २ उ० ।

सुविम्हिय-सुविस्मित-त्रि० । संजाताश्चर्ये, उत्त० २० अ० ।

सुविर-स्वप्न-त्रि० । शीलाद्यर्थस्येरः ॥८।२।१४५॥ इति प्राकृतसूत्रेण तु इत्यस्येरादेशः । प्रा० । स्वप्नशील, बृ० १ उ०२ प्रक० ।

सुविरइय-सुविरचित-त्रि० । सुनिर्मित, जं० २ वक्ष० । नं० । आ० म० । जी० । सुघटित,उपा०७ अ० । "सुविरइयरयत्ताणं" सुष्ठु-विरचितं रजस्त्राणमाच्छादनविशेषो परिभोगावस्थायां यस्मिंस्तस्तथा । भ० ११ श० ११ उ० । रा० ।

सुविवेग-सुविवेक-पुं० । सुष्ठु विवेकः सुविवेकः । परिज्ञाने, सूत्र० १ श्रु० २ अ० २ उ० ।

सुविसद-सुविशद-त्रि० । सुविविक्त, कल्प०१ अधि० १ क्षण ।

सुविसुद्धलेस्स-सुविशुद्धलेश्य-त्रि० । सुष्ठु विशेषेण शुद्धा स्त्रीसम्पर्कपरिहाररूपतया विगतकलङ्का लेश्याऽन्तःकरणवृत्तिर्यस्येति । शुक्लपरिणतिशालिनि, सूत्र० १ श्रु०४ अ०३ उ० ।

सुविसोज्झ-सुविशोध्य-त्रि०।सुविशोधनीय, पञ्चा०१७ विव० ।

सुविहि-सुविधि-पुं० । शोभनो विधिः सुविधिः । सदनुष्ठाने, प्रश्न० ५ संव० द्वार । आ० क० । स० । ( 'धम्मंतरि' शब्दे चतुर्थभाग २६६० पृष्ठ कथा उक्ता ।) शोभनो विधिः कौशलमस्येति सुविधिः । ध० २ अ० । भारत वर्षेऽस्यामवसर्पिण्यां जाते पुष्पदन्तापरनामके नवमे तीर्थकरे, प्रव० ७ द्वार । आ० म० । कल्प० । अनु० । ( सुविधिः पुष्पकलिका मनोहरदन्तत्वात्पुष्पदन्त इति द्वितीयं नाम सर्वाऽस्य वक्तव्यता 'तित्थयर शब्दे, चतुर्थभाग २२४७ पृष्ठ गता )

सुविहिपुप्फदंतेणं अरहा एगं धणुसयं उड्डं उच्चत्तेणं होत्था । सं० १०० सम० ।

सुविहिस्स णं पुप्फदंतस्स अरहओ चउसीइजिणसया होत्था । स० ७४ सम० । आ० चू० ।

सुविहिस्स णं पुप्फदंतस्स अरहओ अलसीय गणा अलसीय गणहरा होत्था । स० ८८ सम० । प्रव० । आव० ।

सव्वविहीसु अ कुसला,गब्भगए तेण होइ सुविहिजिणो ।

गाहद्धं--भगवंते गब्भगए सव्वविहीसु चेव विसेसओ कुसला जणणि त्ति जेण तेण सुविहि त्ति णामं कयं । आव० २ अ० ।

सुविहिय-सुविहित-त्रि० ।शोभनं विहितः सुविहितः । सुव्यवस्थिते, पं० चू० २ कल्प । सदनुष्ठानोद्यते, ग० २ अधि० । ओघ० । साधौ, बृ० १ उ० ३ प्रक० । प्रश्न० । दर्श० । आव० । व्रतिनि, जी० १ प्रति० । तपस्विनि , दृश० १ अ० । शोभनं विहितमाचरितं येषां साधुसाध्वीश्रावकश्राविकाणां ते सुविहिताः । संथा० । नि० चू० ।

सुवुट्ठि-सुवृष्टि-स्त्री० । धान्यादिवर्षणहेतौ वृष्टौ , भ० ६ श० ७ उ० । आ० म० ।

सुवेकय-स्वःकृत-त्रि०। "एकस्वरे श्व: स्वे" ॥८।२।१४॥ एकस्वरे पदे यौ श्वः स्व इत्येतौ तयोरन्त्यव्यञ्जनात्पूर्वे उकारोऽन्ति । स्वःकृतं । सुवे-कयं । प्रातःकृत, प्रा० २ पाद ।

सुव्व--सु-धा० । प्रसवे, कर्मप्रत्ययान्तः । "न वा कर्मभावे व्वः क्यस्य च लुक्"॥८।४।२४२॥कर्मणि भावे वा वर्तमानानां च्व्यादीनामन्ते द्विरुक्तवकारो भवति । सुव्वइ । सुयते । प्रा०४ पाद ।

शुल्व-न०।"सर्वत्र लवरामचन्द्रे"॥८।२।७९॥ इति वलुक् । अत्र द्रइत्यादिसंयुक्तानामुभयप्राप्तौ यथादर्शनं लोपः क्वचिदूर्ध्वम् । शुल्वम् । सुव्वं च । ताम्रे, जलसमीपे, प्रा० २ पाद ।

सुव्वय-सुव्रत-पुं० । शोभनानि सम्यग्ज्ञानाधिष्ठितत्वेन व्रतानि हिंसाविरमणादीनि यस्य सः । उत्त० ८ अ० । निरतिचारनियमयुक्त.(स्था० ४ ठा० ३ उ० । ) साधौ, उत्त० ८ अ० । आचा० । सूत्र० । आव० । शोभनजिनवृत्तिकरणे. औ० । प्रश्न० । शोभनाणुव्रतधारके सुश्रावके, बृ० ३ उ० । आव० । पद्मतीर्थकरस्य पद्मप्रभस्य प्रथमशिष्ये, स० । शिशुनागस्य सुयशसि भार्यायां जाते पुत्रे , आ० चू० ४ अ० । आचा० । आव० । अङ्गारकाद्यष्टाशीतिग्रहेषु एकाशीतितमे ग्रहे, चं० प्र० २० पाहु० । कल्प० । स्था० । पार्श्वनाथस्य प्रथमश्रावके, कल्प० १ अधि० ७ क्षण । लोकोत्तरपरिभाषया दिवसभेदे,यस्मिन् दिवसे वीरस्वामिनः निष्क्रमणं केवलज्ञानं च जातम् ,कल्प०१ अधि० ५ क्षण । एरवते वर्षे भविष्यति सप्तदशे तीर्थकरे, प्रव० ७ द्वार । शोभनं व्रतमस्य, सुव्रतौ वा मातापितरावस्येति सुव्रतः । सामन्नं सव्ववसि सुव्वओ विसेसो गब्भगतो माता पिता य सुव्वता जाता । सामन्ने सव्ववसि परिसहानामिनो ।भारते वर्षेऽस्यामवसर्पिण्यां जाते विंशे तीर्थकरे,आ० चू० २ अ० । " जगन्मित्रं यत्र मित्रः, सुमित्रान्वयपङ्कजे । अश्वावबोधनिर्व्यूढ-वृत्तोऽभूत् सुव्रतो जिनः ॥१॥ " ती०१० कल्प । प्रव० । कल्प० । मुनिसुव्रतेति विशिष्टं नामास्य ।

मुणिसुव्वए णं अरहा वीसधणूइं उड्डं उच्चत्तेणं होत्था । स० २० सम० ।

मुणिसुव्वयस्स वि य उवणयालसहस्साइं सुव्वयनामासं वाती लक्खाइं इहिं उप्पन्ना । आ० चू० १ अ० ।

मुणिसुव्वयस्स णं अरहओ पंचासं अज्जियासाहस्सीओ होत्था । स० ४६ सम० ।

सोमशर्म्म उदाहृत स्वनामख्याते साध्वी, पिं० । " वंदामि अज्जधम्मं, सुव्वयं सीललद्धिसंपन्नं । जस्स निक्खमणे देवो, छत्तं वरमुत्तमं वहइ ॥१॥ " गोत्रविंशतप्रवर्त्तके ऋषौ, कल्प० २ अधि० ८ क्षण । शोभनानियम, नपुं० । प्रश्न०२ संव० द्वार । एकाशीतितमे महाग्रहे, स्था० ।

दो सुव्वया । स्था० २ ठा० ३ उ० ।

सुव्वया-सुव्रता-स्त्री० । धर्मनाथस्य पञ्चदशतीर्थकरस्य मातरि, प्रव० ११ द्वार । तत्र वेणयाकुकुलप्रदीपः पञ्चदशतीर्थंकरनिर्विजयविमानदवतीर्थश्रीभानुनरेन्द्रवेश्मनि सुव्रतादेवीकुक्षौ तमयतयाऽवततार । ती० १८ कल्प । स० । अरिष्टनेमितीर्थकरस्य प्रथमश्राविकायाम् , कल्प० १ अधि० ७ क्षण । बहुपुत्रिकापूर्वभवजीवभद्रासार्थवाहीप्रव्राजिकायाम् , नि० १ श्रु० ३ वर्ग ४ अ० ।

सुव्वयायरिय-सुव्रताचार्य-पुं० । मुनिसुव्रतस्वामिनः स्वनामख्याते शिष्ये, "अजसुहत्थसूरिणो पन्नविस जहापुव्वं उज्जेणीए पुरीए उज्जाणे सिरिमुणिसुव्वयसामिसीसो सुव्वयायरिओ समोसढो ।" ती०२० कल्प ।

सुव्ववहारकुसल-सुव्यवहारकुशल-त्रि० । सुष्ठ्वतिशयेन व्यवहारः सुव्यवहारः । स पञ्चविधस्तत्र कुशलो निपुणः । व्यवहारनिपुणे, ग० १ अधि० ।

सुसंगुत्थ-सुसङ्गोत्थ-त्रि० । देवगुरुप्रसङ्गसम्भवे, अष्ट०-अष्ट० ।

सुसंगोविय-सुसङ्गोप्य-त्रि० । सुगोपनीय, तं० ।

सुसंजमियमण-सुसंयमितमनस्-त्रि० । संवृत्ते चेतसाहेतौ, प्रश्न० ३ संव० द्वार ।

सुसंजय-सुसंयत-त्रि० । सुष्ठु संयतः सुसंयतः । कूर्म्मवत् संयतगात्रे, निरर्थककायक्रियारहिते, सूत्र० १ श्रु० १६ अ० ।

सुसंधि-सुसंधि-पुं० । सुष्ठु सन्धाने, जी० ३ प्रति० ४ अधि० ।

सुसंधिय-सुसंधित-त्रि० । सुबद्धे, सूत्र० २ श्रु० १ अ० ।

सुसंपग्गहिय-सुसंप्रगृहीत-त्रि० । सुष्ठ्वतिशयेन सम्यङ्मनागप्यचलनेन परिगृहीते, जी० ३ प्रति० ४ अधि० । रा० ।

सुसंपिणद्ध-सुसंपिनद्ध-त्रि० । अतिशयेन बद्धे,"सुसंपिणद्धारगमंडलधूलगस्स" सुष्ठ्वतिशयेन सम्यक् पिनद्धं बद्धमरकमण्डलं धूध्र यस्य स सुसंपिनद्धारकमण्डलधूस्तस्य । रा० ।

सुसंभंत-सुसंभ्रान्त-त्रि० । अत्यन्तं व्याकुलतां प्राप्ते , उत्त० २० अ० ।

सुसंभिय-सुसंभृत-त्रि० । सुष्ठु अतिशयेन संभृतः—संस्कृतः सुसंभृतः । सम्यक् संस्कृते सज्जीकृते, उत्त० १४ अ० ।

सुसंलिट्ठ-सुसंश्लिष्ट-त्रि० । लष्टे, औ० ३ प्रति० ४ अधि० ।

सुसंविद्ध-सुसंविद्ध-त्रि० । कृतसङ्क्षेपे , औ० । "सुसंविद्धवक्कअरुलधुरयंगे " सुष्ठु संविद्धे वक्रे यत्र मण्डलाधुरा च धूर्येन तेषां, सुसंविद्धवक्रमण्डलधुराणाम् , भ०७ श० ९ उ० ।

सुसंवुड-सुसंवृत-त्रि० । सुसंवृतः परिग्रतः यथा सुष्ठु संवृतं परिहितं येन सः । आ० १ श्रु० १ अ० । परिहितवृत्तवस्त्रे, कल्प० १ अधि० ३ क्षण । सूत्र० । सुष्ठु संवृतः इन्द्रियकषायैर्यन यः सः सुसंवृतः । जितेन्द्रिये, उत्त० २ अ० । सूत्र० । संवृतात्मनि, उत्त० २ अ० ।

सुसंवुय-सुसंवृत-त्रि० । सुष्ठु संवृतं परिहितं येन सः सुसंवृतः । सुपरिधाने , औ० ।

सुसंहय-सुसंहत-त्रि० । सुष्ठु अविरले, औ० ।

सुसज्ज-सुसज्ज-त्रि० । सुष्ठु अतिशयेन सज्जः । स्वसामग्रीयुक्ततया प्रगुणीभूतेषु, आ० म० १ अ० । " सुसज्जधम्मियसरणसबक्कयइ " सुसज्जाः धर्मणि नियुक्ताः धार्मिकास्तैः सज्जः कृतसज्जाः सुसज्जधार्मिकसज्जः बद्धः कर्यचिकः सन्नाहविशेषो यस्य सः तथोक्तः । भ०७ श० १० उ० । औ० ।

सुसढ-सुसढ-स्वनामख्याते अनगारे, महा० ।

जहा भयवं ! को उण सुसढो कयरा वा सा जयणा जमजाणमाणस्स णं तस्स आलोइयनिंदियगरहिओ वि कयपायच्छित्तस्स वि संसारं णय निम्मिट्ठियं ति । गोयमा! जयणा णाम अट्ठारसण्हं सीलंगसहस्साणं सत्तरसविहस्स णं संजमस्स चोद्दसण्हं भूयगामाणं तेरसण्हं किरियाठाणाणं सबज्झब्भंतरस्स णं दुवालसविहस्स णं तवोणुट्ठाणस्स दुवालसस्स णं भिक्खुपडिमाणं दसविहस्स णं समणधम्मस्स णवण्हं चेव बंभगुत्तीणं अट्ठण्हं तु पवयणमाईणं सत्तण्हं चेव पाणपिंडेसणाणं छण्हं तु जीवनिकायाणं पंचण्हं तु महव्वयाणं तिण्हं तु चेव गुत्तीणं ०जाव णं तिण्हं चेव सम्मद्दंसणनाणचरित्ताणं भिक्खू कंतारदुब्भिक्खायंकाईसु णं महं सपुण्णसेसु अंतोमुहुत्तावसेसकं—ठगयपाणेसु वि णं मणसा वि उ खंडणं विराहणं ण करेज्जा ण कारवेज्जा ण समणुजाणिज्जा ०जाव णं नारभिज्जा ण समारभिज्जा जावज्जीवाए ति,से णं जयणाए धुवे से णं जयणाए पक्खले से णं जयणाए वियाणति । गोयमा ! सुसढस्स उण महती संका परमविम्हियजणणी य चूलिया पढमा एगंतनिज्जरा । से भयवं ! केणं अट्ठेणं एवं वुच्चइ ? , तेणं कालेणं तेणं समएणं सुसढनामधेज्जे अणगारे इह भगवंतेणं व एगग्गमणं पक्खस्स तो पभूयट्ठाणीओ आलोयणाओ वि दिन्नाओ सुमहिंताइं च अच्चंतघोरसुदुकराइं पायच्छित्ताइं समणुचिन्नाइं तहावि तेणं चरएणं विसोहिपयं न समणुवलद्धं ति एतेणं अट्ठेणं एवं वुच्चइ । महा० १ चू० ।

सुसण्णप्प-सुसंज्ञाप्य-त्रि० । सुखेन संज्ञाप्यन्ते प्रज्ञाप्यन्ते बोध्यन्त इति सुसंज्ञाप्याः । सुखेन प्रज्ञापनीयेषु, स्था० ३ ठा० ४ उ० । वृ० ।

तओ सुसण्णप्पा पण्णत्ता, तं जहा—अदुट्ठे, अमूढे, अवुग्गाहिए । ( सू० ८ )

अथः सुसंज्ञाप्याः सुखप्रज्ञापनीयाः प्रज्ञप्तास्तद्यथा—अदुष्टः अमूढः अव्युद्ग्राहितश्चेति । आह-पूर्वसूत्रेणैवार्थापत्त्या इदमवसीयते यदेतद्विपरीता अदुष्टादयः सुसंज्ञाप्यास्तत् किमर्थमिदमारब्धम् ।

उच्यते--

कामं विपक्खसिद्धी, अत्थावत्तीइ होंति वुत्ता वि ।
तहवि विवक्खो वुच्चति,कालियसुयधम्मता एसा ।३५०।

कामम्-अनुमतमिदं विपक्षस्य प्रतिपक्षार्थस्य सिद्धिरनुक्ताप्यर्थापत्त्या भवति , तथापि विपक्षो साक्षादुच्यते । कुत ?, इत्याह-कालिकश्रुतस्य धर्मता स्वभावः शैली एषा, यदर्थापत्तिलब्धोऽप्यर्थः साक्षादभिधीयते ।

तथा च तल्लक्षणान्येव दर्शयति--

ववहारत्थावत्ती, अणप्पिए ण य चउत्थभासाए ।
मूढणय अगमियत्तेण य-कालेण य कालियं नेयं।३५१।

'ववहारे' त्ति नैगमसंग्रहव्यवहाराख्यास्त्रयो व्यवहारनया उच्यन्ते-ऋजुसूत्राद्यास्तु चत्वारो निश्चयनयाः,तत्र व्यवहारेण-व्यवहारनयमतेन कालिकश्रुते प्रायः सूत्रार्थनिबन्धो भवति, 'अहिगारो तीहि उस्सण्णं'ति वचनात् ' अत्थावत्ति ' त्ति अर्थापत्तिः कालिकश्रुतेन व्यवह्रियते, किं तु-तया लब्धोऽप्यर्थः प्रपञ्चितज्ञविनेयजनानुग्रहाय साक्षादेवाभिधीयते । अथोत्तराध्ययनेषु प्रथमाध्ययने ' आणानिद्देसकरे' इत्यादिना विनीतस्वरूपमभिधायार्थापत्तिलब्धमप्यविनीतस्वरूपम् 'आणा अनिद्देसकरे' इत्यादिना भूयः साक्षादभिहितमिति । 'अणप्पिए' त्ति-अनर्पितं विषयविभागस्यानर्पणं तेन कालिकश्रुतं चरितं विशेषाभिधानरहितमित्यर्थः , यथा--' जे भिक्खू हत्थकम्मं करेइ से आवज्जइ मासियं अणुग्घाइयं ' तत्र च यस्मिन् अवसरे यथा हस्तकर्माऽऽसेव्यमानस्य मासगुरुकं भवति स विशेषसूत्रे साक्षादोक्तः परमर्थादवगन्तव्यः, एवमन्यत्रापि द्रष्टव्यम् । ' चउत्थभासाए ' त्ति इह सत्यामृषामिश्रासत्यामृषाभेदाच्चतस्रो भाषाः । तत्र कारणेन सह विप्रतिपत्तौ सत्यां वस्तुनः साधकत्वेन बाधकत्वेन वा प्रमाणान्तरैरबाधिता या भाषा भाष्यते सा सत्या, सैव प्रमाणैर्बाधिता मृषा, सैव बाध्यमानाबाध्यमानरूपा मिश्रा तु वस्तुसाधकत्वाद्यविवक्षया व्यवहारपतिता स्वरूपमात्राभिधित्सया प्रोक्ता, सा पूर्वोक्तभाषात्रयविलक्षणा असत्यमृषानाम चतुर्थी भाषा भण्यते । सा चामन्त्रण्याज्ञापनीप्रभृतिस्वरूपतया कालिकश्रुतनिबद्धा यथा " गोयमा ! " इत्यामन्त्रणी "सव्वे जीवा न हन्तव्वा" इत्याज्ञापनी इत्यादि । दृष्टिवादस्तु नैगमादिनयमतप्रतिबद्धानि पुनर्युक्तिभिर्वस्तुतत्त्वव्यवस्थापकतया सत्यभाषानिबद्ध इति भावः । तथा मूढाविभागेनाव्यवस्थापिता नया यस्मिन् तत् मूढनयं, भावप्रधानश्चायं निर्देशस्ततो मूढनयत्वेन कालिकं विज्ञेयम् , तथा गमा भङ्गा गणितादयः सदृशपाठा वा तैर्युक्तं गमिकं तद्विपरीतमगमिकं तेनागमिकत्वेन कालिकश्रुतज्ञायी 'गमियं दिट्ठिवाओ अगमियं कालियं' इति वचनात् कालेन हेतुभूतेन निर्वृत्तं कालिकं काले-प्रथमचरमपौरुषीलक्षणे पठ्यते इति व्युत्पत्तेः । एतैर्लक्षणैः कालिकश्रुतं ज्ञेयम् । बृ० ४ उ० । स्था० ।

**सुसद्द**-सुशब्द-पुं० । शोभने माङ्गलिके वा शब्दे, आचा० २ श्रु० १ चू० ४ अ० २ उ० ।

**सुसमत्थ**-सुसमर्थ-त्रि० । सुष्ठु समर्थे, 'सुसमत्था व समत्था कीरंति अप्पसत्तिया पुरिसा ।" सूत्र० १ श्रु० ४ अ० १ उ० ।

**सुसमण**-सुसमन-पुं० । युगलिकमनुष्यजातिभेदे , जं० २ वक्ष० ।

**सुसमदूसमा**-सुषमदुःषमा-स्त्री० । दुष्टाः समा अस्यामिति दुःषमा,सुषमा चासौ दुःषमा च सुषमदुःषमा । सुषमानुभावबहुलमल्पदुःषमानुभावे अवसर्पिण्यास्तृतीये उत्सर्पिण्याश्च चतुर्थेऽरके, जं० २ वक्ष० । ( ' दो सागरोवमकोडाकोडीओ सुसमदूसमा' सा 'ओसप्पिणी'शब्दे तृतीयभागे १०१ पृष्ठ व्याख्याता । )

**सुसमपलिभाग**-सुषमप्रतिभाग-पुं० । सुषमायाः—सुषमसुषमायाः प्रतिभागः सादृश्यं यत्र काले स तथा । देवकुरूत्तरकुरुषु सुषमसुषमासदृशे काले, भ० २४ श० ३ उ० ।

**सुसमसुसम(मा)य**-सुषमसुषम(मा)ज-पुं० । सुषमसुषमायां जात इति "सप्तमीपञ्चम्यन्ते जनेर्ड." ( का० रू० ६६१ ) इति डप्रत्यये सुषमसुषमजः । प्रथमारकजे मनुष्ये , अनु० ।

**सुसमसुसमा**-सुषमसुषमा-स्त्री० । सुष्ठु शोभनाः समा वर्षाणि यस्या सा सुषमा 'निर्दुःसुवेः समसूतेः' ( श्रीसि० २-३-५६ ) इति षत्वम् । सुषमा चासौ सुषमा च सुषमसुषमा । द्वयोः समानार्थयोः प्रकृष्टार्थवाचकत्वादत्यन्तसुखस्वरूपे, जं० २ वक्ष० ।

अवसर्पिण्याः प्रथमारके, उत्सर्पिण्याश्च षष्ठे अरके, ज्यो० २ पाहु० । स्था० । जं० । नि० । आ० चू० ।

एगा सुसमसुसमा ( सू० ५०× ) स्था०१ ठा० ।
चत्तारि कोडाकोडीओ कालो सुसमसुसमा । ( सू० ) भ० ६ श० ७ उ० ।

परमाणू दुविहे पण्णत्ते, तंजहा—सुहुमे अ वावहारिए अ । अणंताणं सुहुमपरमाणुपुग्गलाणं समुदयसमिइसमागमेणं वावहारिए परमाणू णिप्फज्जइ,तत्थ णो सत्थं कमइ । 'सत्थेण सुतिक्खेण वि,छेत्तुं भित्तुं च जं किर ण सक्का । तं परमाणुं सिद्धा,वयंति आइं पमाणाणं ॥ १ ॥' वावहारिअपरमाणूणं समुदयसमिइसमागमेणं सा एगा उस्सण्हसण्हिआइ वा सण्हसण्हिआ इ वा उद्धरेणू इ वा तसरेणू इ वा रहरेणू इ वा वालग्गे इ वा लिक्खा इ वा जूआ इ वा जवमज्झे इ वा उस्सेहंगुले इ वा,अट्ठ उस्सण्हसण्हियाओ सा एगा सण्हसण्हिया , अट्ठ सण्हसण्हियाओ सा एगा उद्धरेणू अट्ठ उद्धरेणूओ सा एगा तसरेणू अट्ठ

-तसरेणूओ सा एगा रहरेणू, अट्ठ रहरेणूओ से एगे देवकुरूत्तरकुराणं मणुस्साणं वालग्गे, अट्ठ देवकुरूत्तरकुराणं मणुस्साण वालग्गा से एगे हरिवासरम्मयवासाण मणुस्साणं वालग्गे एवं हेमवयहेरण्णवयाणं मणुस्साणं पुव्वविदेहअवरविदेहाणं मणुस्साणं वालग्गा सा एगा लिक्खा, अट्ठ लिक्खाओ सा एगा जूआ अट्ठ जूआओ से एगे जवमज्झे अट्ठ जवमज्झा से एगे अंगुले एतेणं अंगुलप्पमाणेणं छ अंगुलाइं पाओ बारस अंगुलाइं विहत्थी चउवीसं अंगुलाइं रयणी अडयालीसं अंगुलाइं कुच्छी छण्णउइअंगुलाइं से एगे अक्खे इ वा दंडे इ वा धणू इ वा जुगे इ वा मुसले इ वा णालिआ इ वा। एतेणं धणुप्पमाणेणं दो धणुसहस्साइं गाउअं चत्तारि गाउआइं जोअणं, एएणं जोअणप्पमाणेणं जे पल्ले जोअणं आयामविक्खंभेण जोयणं उड्ढं उच्चत्तेणं, तं तिगुणं सविसेसं परिक्खेवेणं, से णं पल्ले एगाहिअबेहिअतेहिअ उक्कोसेणं सत्तरत्तपरूढाणं संमट्ठे सन्निचिए भरिए वालग्गकोडीणं। ते णं वालग्गा णो कुत्थेज्जा णो परिविद्धंसेज्जा, णो अग्गी डहेज्जा, णो वाए हरेज्जा, णो पूइत्ताए हव्वमागच्छेज्जा। तओ णं वाससए वाससए एगमेगं वालग्गं अवहाय जावइएणं कालेणं से पल्ले खीणे णीरए णिल्लेवे णिट्ठिए भवइ से तं पलिओवमे। "एएसिं पल्लाणं, कोडाकोडी हवेज्ज दसगुणिआ। तं सागरोवमस्स उ, एगस्स भवे परीमाणं ॥१॥" एएणं सागरोवमप्पमाणेणं चत्तारि सागरोवमकोडाकोडीओ कालो सुसमसुसमा १ ॥ ( सू० १६ + )

परमाणुर्द्विविधः प्रज्ञप्तः, तद्यथा—सूक्ष्मश्च व्यावहारिकश्च। शस्त्राद्यविषयत्वादिको धर्म उभयोरपीति समानकक्षताद्योतनार्थं प्रत्येकं चकारः, तत्र सूक्ष्मस्य "कारणमेव तदन्त्यं, सूक्ष्मो नित्यश्च भवति परमाणुः। एकरसवर्णगन्धो, द्विस्पर्शः कार्यलिङ्गश्च ॥ १ ॥" इत्यादिलक्षणलक्षितस्यात्यन्तपरमनिकृष्टतालक्षणं स्वरूपमभिनिरूप्यापरं वैशेषिकं रूपं न प्रतिपादनीयमस्तीति तं संस्थाप्यापरं स्वरूपतो निरूपयति—अनन्तानां सूक्ष्मपरमाणुरूपपुद्गलानां सम्बन्धिनो ये समुदायाः—द्विचतुरादिमीलकास्तेषां याः समितयो—बहूनि मीलनानि तासां समागमेन—संयोगेनैकीभावेन यावत् व्यावहारिकः परमाणुरेको निष्पद्यते। इदमुक्तं भवति—निश्चयनयो हि निर्विभागं सूक्ष्मं पुद्गलं परमाणुमिच्छति, यस्त्वेतैरनेकैर्जायते तं सांशत्वात् स्कन्धमेव व्यपदिशति। व्यवहारनयस्तु तदनेकसंहतिनिष्पन्नोऽपि यः शस्त्रच्छेदाग्निदाहादिविषयो न भवति तमद्यापि तथाविधस्थूलभावाप्रतिपत्तेः परमाणुत्वेन व्यवहरति, ततोऽसौ निश्चयतः स्कन्धोऽपि व्यवहारनयमतेन व्यावहारिकः परमाणुरुक्तः। अयं च स्कन्धत्वात् काष्ठवत् छेदादिविषयो भविष्यतीत्याशङ्क्य प्रत्याह—तत्र शस्त्रं न क्रामति—न सञ्चरति, असिक्षुरादिधारायामपि सन्न छिद्यते—न च भिन्नो भवेदित्यर्थः, यद्यनन्तैः परमाणुभिर्निष्पन्नाः काष्ठादयः शस्त्रच्छेदादिविषया दृष्टास्तथाप्ययमनन्तस्यानन्तभेदत्वात्तावत्प्रमाणेन निष्पन्नोऽपि सूक्ष्मत्वान्न शस्त्रच्छेदादिविषयतामासादयतीति भावः, एतेनाग्निदाहेन जलार्द्रता गङ्गाप्रतिश्रोतोविहन्यमानता जलकोथादिकं सर्वमपि निरस्तं मन्तव्यं; सर्वेषामपि तेषां शस्त्रत्वाविशेषात्। अस्मार्थे प्रमाणमाह—शस्त्रेण सुतीक्ष्णेनापि छेत्तुं—खड्गादिना द्विधा कर्तुं भेत्तुम्—अनेकधा विदारयितुं सूच्यादिना वा सच्छिद्रं कर्तुं, वा—विकल्पे, यं—पुद्गलविशेषं किलेति निश्चये न शक्ताः, केऽपि पुरुषा इति शेषः, तं व्यावहारिकपरमाणुं सिद्धा इव सिद्धा भगवन्तोऽर्हन्त उत्पन्नकेवलज्ञाना न तु सिद्धाः सिद्धिगताः, तेषां वचनयोगासम्भवादिति, आदिं—प्रथमं प्रमाणानां—वक्ष्यमाणोत्श्लक्ष्णश्लक्ष्णिकादीनामिति, एतेन अज्ञातम् इति आगमप्रमाणमाहितं. तर्कानुसारिणः प्रति प्रयोगः—अणुपरिमाणं क्वचिद्विश्रान्तं तरतमशब्दवाच्यत्वात् महत्परिमाणवत्, यत्र च विश्रान्तं स परमाणुः. विपर्यये वस्तुनः स्थूलतापि नोपपद्येत, न च द्व्यणुकादर्वाङ् नास्तीति वाच्यं, स एव सिध्यन् परमनिकृष्टो निरंश एव सिध्येत्. अन्यथाऽनवस्थापत्तेः सर्वेष्वप्यतुल्यपरिमाणापत्तेश्च, ततः सिद्धः परमाणुः। ननु सिध्यतु सः सूक्ष्मत्वाच्च न चक्षुरादिगम्यः, परं यदुक्तं सूक्ष्मैः परमाणुभिरेको व्यावहारिकः परमाणुरारभ्यते स चक्षुराद्यगोचरः शस्त्रच्छेदाद्यगोचरश्चेति तदसङ्गतम्, उच्यते—विचित्रो हि पुद्गलपरिणामः—सूक्ष्मो बादरश्च, तत्र सूक्ष्मपरिणामपरिणतानां पुद्गलानामतीन्द्रियत्वमगुरुलघुपर्यायवत्त्वं शस्त्रच्छेदाद्यविषयत्वमित्यादयो धर्मा भवन्ति, तेन न काप्यनुपपत्तिः, श्रूयते चागमे पुद्गलानामेवं सूक्ष्मत्वात्सूक्ष्मत्वपरिणामो यथा द्विप्रदेशिकः स्कन्धः एकस्मिन्नभःप्रदेशे माति स एव च द्वयोरपि मातीति संकोचविकाशकृतो भेदः, दृश्यते च लोकेऽपि पिञ्जितरुतपुञ्जलोहपिण्डयोः परिमाणभेदः, इत्यलं विस्तरेणेति। अथ प्रमाणान्तरलक्षणार्थमाह—अनन्तानां व्यावहारिकपरमाणूनां समुदयसमितिसमागमेन या परिमाणमात्रेति गम्यते सैका अतिशयेन श्लक्ष्णा श्लक्ष्णश्लक्ष्णा सैव श्लक्ष्णश्लक्ष्णिका उत्तरप्रमाणापेक्षया उत्—प्राबल्येन श्लक्ष्णश्लक्ष्णिका उच्छ्लक्ष्णश्लक्ष्णिका, इति रूपदर्शनं, वा उत्तरापेक्षया समुच्चये, एवं श्लक्ष्णश्लक्ष्णिकेति वा इत्यादिष्वपि वाच्यम्। एते च श्लक्ष्णश्लक्ष्णिकादयोऽङ्गुलान्ताः प्रमाणभेदा यथोत्तरमष्टगुणाः सन्तोऽपि प्रत्येकमनन्तपरमाणुकत्वं न व्यभिचरन्त्यतः निर्विशेषितमप्युक्तम्—'सण्हसण्हिआइ वा' इत्यादि, प्राक्तनप्रमाणापेक्षयाऽष्टगुणत्वेन स्थौल्याकुर्वन्त्युत्तरापेक्षया त्वष्टभागप्रमाणत्वात् श्लक्ष्णश्लक्ष्णिकत्वमुच्यते, स्वतः परतो वा ऊर्ध्वाधस्तिर्यक्चलनधर्मा जालप्रविष्टसूर्यप्रभाभिव्यङ्ग्यो रेणुरूर्ध्वरेणुः त्रस्यति—पौरस्त्यादिवायुप्रेरितो गच्छति यो रेणुः स त्रसरेणुः रथगमनात् रेणुः रथरेणुः वालाग्रलिक्षादयः प्रतीताः, देवकुरूत्तरकुरुहरिवर्षरम्यकादिविशेषणविशिष्टानां क्षेत्रस्थूलताक्रमेण [illegible] पूर्वापरविदेहाश्रयमनुष्याणामष्टौ वालाग्राणि एका लि-

क्षा, ता अष्ट यूका, अष्टौ यूका एकं यवमध्यम्, अष्टौ यवमध्यानि एकमङ्गुलम्, एतेनाङ्गुलप्रमाणेनेति न तु न्यूनाधिकतया, षडङ्गुलानि पादः-पादस्य मध्यतलप्रदेशः, पादैकदेशत्वात् पाद', अथवा—पादो हस्तचतुर्थांशः, द्वादशाङ्गुलानि वितस्तिः सुखावबोधार्थमत्रमुपन्यस्तः, लाघवार्थं तु द्वौ पादौ वितस्तिरिति पर्यवसितोऽर्थः, अन्यथा पादसंज्ञाया नैरर्थक्यापत्तिः, एवमग्रेऽपि चतुर्विंशतिरङ्गुलानि रत्निरिति सामयिकी परिभाषा, नामकोशादौ तु 'बद्धमुष्टिहस्तो रत्नि' रिति, अष्टचत्वारिंशदङ्गुलानि कुक्षिः, षण्णवतिरङ्गुलानि एकोऽक्ष इति वा-शकटावयवविशेष- दण्ड इति वा धनुरिति वा-युगमिति वा-वोढृस्कन्धकाष्ठं मुसलमिति वा नालिका इति वा-यष्टिविशेषः, अत्र च धनुषोपयोगः, संज्ञान्तराणि तु प्रसङ्गतोऽत्र लिखितानि अन्यत्रोपयोगीनीति, एतेन धनुःप्रमाणेन द्वे धनुःसहस्रे गव्यूतं, चत्वारि गव्यूतानि योजनम् । एतेन योजनप्रमाणेन यः पल्यो—धान्याश्रयविशेषः स इव सर्वत्र समत्वात्, लुप्तोपमाक शब्द इति, योजनमायामविष्कम्भाभ्यां समवृत्तत्वात् प्रत्येकमुत्सेधाङ्गुलनिष्पन्नयोजनं योजनमूर्ध्वोच्चत्वेन, तद्योजनं त्रिगुणं सविशेषं परिरयेण, वृत्तपरिधेः किञ्चिन्न्यूनषड्भागाधिकत्रिगुणत्वात्, स पल्यः 'एगाहिअबेहिअ' त्ति षष्ठीबहुवचनलोपादेकाहिकद्व्याहिकत्र्याहिकाणामुत्कर्षतः सप्तरात्रप्ररूढानां—सप्तदिवसोद्गतानां भृतो वालाग्रकोटीनामिति सम्बन्धः, तत्र मुण्डिते शिरस्येकेनाह्ना यावत्प्रमाणा वालाग्रकोटय उत्तिष्ठन्ति ता एकाहिक्यः, द्वाभ्यां तु यास्ता द्व्याहिक्यः, त्रिभिस्तु त्र्याहिक्यः, कथंभूता इत्याह—संमृष्ट—आकर्णपूरितः संनिचितः-प्रचयविशेषान्निविडीकृतः वालानामग्रकोटयः-प्रकृष्टा विभागा इत्यर्थः, यद्वा—वालाग्रकोटीनामिति वालपुविदेहनरवालार्थेत्वया सूक्ष्मत्वादिलक्षणोपेततयाऽग्राणि—श्रेष्ठानि वालाग्राणि, कुरुनररोमाणि तेषां कोटयः अनेकाः-कोटाकोटिप्रमुखाः सङ्ख्याः 'स्त्रीणां शतानि शतशो जनयन्ति पुत्रान्' इत्यादिवत्, तथा वालाग्रकोटीनामिति तृतीयार्थे षष्ठी यथा माषाणां भृतः कोष्ठ इति, तेन वालाग्रकोटीभिर्भृत इति सुखावबोधाऽक्षरयोजना कार्या इति, वालाग्रसंख्यानयनोपायस्त्वयं-देवकुरूत्तरकुरुनरवालाग्रेभ्योऽष्टगुणं हरिवर्षरम्यकनरवालाग्रमिति, यत्रैकं हरिवर्षरम्यकवालाग्रं तत्र कुरुनरवालाग्राण्यष्ट तिष्ठन्ति, यत्र चैकं हैमवतहैरण्यवतनरवालाग्रं तत्र कुरुनरवालाग्राणि चतुःषष्टिः, एवं विदेहनरवालाग्रे ५१२ लिक्षायां ४०९६ यूकायां ३२७६८ यवमध्ये २६२१४४ अङ्गुलेऽङ्कतः २०९७१५२, अत्राङ्गुलमुत्सेधाङ्गुलं ग्राह्यम्, आत्माङ्गुलस्यानियतत्वात् प्रमाणाङ्गुलस्यातिमात्रत्वात् अत्र सर्वत्र पूर्वप्रमाणापेक्षयोत्तरोत्तरप्रमाणस्याष्टाष्टगुणकारेणेयं संख्या समुत्पद्यते, अथायं राशिश्चतुर्विंशतिगुणो हस्तश्चतुर्विंशत्यङ्गुलमानत्वादस्य, स चैवम्-५०३३१६४८ नामतः पञ्च कोटयस्त्रीणि लक्षाणि एकत्रिंशत्सहस्राणि षट् शतान्यष्टचत्वारिंशदधिकानि, एष राशिश्चतुर्गुणो धनुषि, चतुर्हस्तमानत्वादस्य, अङ्कतः २०१३२६५९२ नामतो विंशतिः कोटयस्त्रयोदश लक्षाणि षड्विंशतिः सहस्राणि पञ्च शतानि द्विनवत्यधिकानि, अयं द्विसहस्रगुणः क्रोशे, द्विसहस्रमानत्वादस्य, अङ्कतो यथा-४०२६५३१८४००० नामतः चत्वारिंशत्सहस्राणि द्वे शते पञ्चषष्ट्यधिके कोटीनां एकत्रिंशल्लक्षाणि चतुरशीतिः सहस्राणि, पुनरयं राशिश्चतुर्गुणो योजने, चतुःक्रोशप्रमाणत्वादस्य, अङ्कतः १६१०६१२७३६००० नामतः एकं लक्षमेकषष्टिः सहस्राण्येकषष्ट्यधिकानि कोटीनां तथा सप्तविंशतिर्लक्षाणि षट्त्रिंशत्सहस्राणि, शून्यत्रिगणनयैवत्रं गणितं बोध्यम्, अयं सूचीराशिरनेनैव गुणितः प्रतरसमचतुरस्रयोजने, सूच्या सूचीगुणितायाः एव प्रतरत्वात्, अङ्कतः २५९४०७३३८५३६५४०५९६००००० नामतो यथा पञ्चविंशतिः शतानि चतुर्नवत्यधिकानि कोटाकोटिकोटीनां तथा सप्त लक्षाणि त्रयस्त्रिंशत्सहस्राण्यष्ट शतानि त्रिपञ्चाशदधिकानि कोटाकोटीनां तथा पञ्चषष्टिर्लक्षाणि चत्वारिंशत्सहस्राणि पञ्च शतान्येकोनसप्तत्यधिकानि कोटीनां तथा षष्टिर्लक्षाणि, अयं राशिर्भूयः पूर्वराशिना गुणितो घनरूपो रोमराशिः स्यात्, तथाहि-अङ्कतः ४१७८०-४७९३२५८८१५८४२७७८४५४४२५६०००००००००० नामतः एकचत्वारिंशत्कोटयोऽष्टसप्ततिर्लक्षाणि चत्वारि सहस्राणि सप्त शतानि त्रिषष्ट्यधिकानि कोटाकोटिकोटाकोटीनां तथा पञ्चविंशतिर्लक्षाण्यष्टाशीतिः सहस्राण्येकं शतमष्टपञ्चाशदधिकं कोटाकोटिकोटीनां तथा द्विचत्वारिंशल्लक्षाणि सप्तसप्ततिः सहस्राण्यष्ट शतानि पञ्चचत्वारिंशदधिकानि कोटाकोटीनां तथा चतुश्चत्वारिंशल्लक्षाणि पञ्चविंशतिः सहस्राणि षट् शतानि कोटीनामिति । अयं च राशिः समचतुरस्रघनयोजनप्रमितपल्यगतः समवृत्तघनयोजनप्रमितपल्यगतराश्यपेक्षया कियद्भागाभ्यधिकस्तेनाधिकभागपातनार्थं सौकुमार्याय स्थूलोपायमाह-अनन्तरोक्तराशेश्चतुर्विंशत्या २४ भागे हृते लब्धम् १७४०८५३१८०—९४५०६६०११५७६८९३४४०००००००००० अयं चैकोनविंशत्या १९ गुणितः समवृत्तघनयोजनपल्यगतो राशिर्भवतीति, स चाङ्कतो यथा ३३०७५२१०४२४५५५,२५४२१९९५०—९९५३५०००००००००० अयमर्थः-यादृशैश्चतुर्विंशत्या भागैः समचतुरस्रघनयोजनप्रमितपल्यगतो रोमराशिर्भवति तादृशैरेकोनविंशत्या भागैः समवृत्तघनयोजनप्रमितपल्यगतो राशिर्भवति, ननु चतुर्विंशत्या भागहरणमेकोनविंशत्या गुणनं च किमर्थम्?, उच्यते-एकयोजनप्रमाणवृत्तक्षेत्रस्य करणरीत्यागतं योजनत्रयमेकश्च योजनषड्भागः ३ १/६ सवर्णने च जातं १९/६ एतच्च वृत्तपल्यपरिधिक्षेत्रम्, अनेन सह समचतुरस्रपल्यपरिधिक्षेत्रं चतुर्योजनरूपं गुण्यते-स्थापना यथा- १९/६ × ४/१ अनयोः १९/६ समच्छेदे २४/६ लाघवार्थं द्वयोरपि छेदापगमे जातं १९--२४ किमुक्तं भवति-समचतुरस्रपरिधिक्षेत्रात् वृत्तपरिधिक्षेत्रं स्थूलवृत्त्या पञ्चभागन्यूनमिति तत्करणार्थोऽयमुपक्रम इति, स्थूलवृत्तिश्च योजनषड्भागस्य किञ्चिदधिकतया अविवक्षणात्, अथ प्रकृतं प्रस्तुमः-'ते णं' इति प्राग्वत्, तानि वालाग्राणि न कुथ्येयुः--प्रचयविशेषात्सुषिराभावाद्वायोरसम्भवाच्च नाऽसारतां गच्छेयुरित्यर्थः, अतो न परिविध्वंसेरन् कतिपयपरिशाटनमप्यङ्गीकृत्य न विध्वंसं गच्छेयुः अथवशाद्विभक्तिपरिणाम इति, तानि नाग्निर्दहेत् न वायुरपहरेत्तानीव विविक्तत्वादप्रचयत्वाच्च तत्र न कथमेते इ-

१-भक्तामरस्तोत्रे ।

त्यर्थः । तानि च न पूतितया—पूतिभावं कदाचिदाग-च्छेयुः, न कदाचिद्दुर्गन्धितां प्राप्नुयुरित्यर्थः । अथ कोति-कर्त्तव्यता ?, तामेवाह-ततस्तेभ्यो वालाग्रेभ्यः, अथवा-'त-त' इति तथाविधपल्यभरणानन्तरं वर्षशते २ एकैकं वा-लाग्रमपहृत्य कालो मीयत इति शेषः, ततश्च यावता का-लेन स पल्यः क्षीणो—वालाग्रकर्षणात् क्षयमुपागतः धा-न्यकोष्ठागारवत्, तथा ( नीरजाः )—निर्गतरजःक-णसूक्ष्मवालाग्रोऽपकृष्टधान्यरजःकोष्ठागारवत्, निर्लेपोऽत्य-न्तसंश्लेषाद्भित्त्यादिगतवालाग्रलेपापहारात्पनीतधान्यलेप-कोष्ठागारवत्, निष्ठितोऽपनेतव्यद्रव्यापनयनमाश्रित्य निष्ठां गतः विशिष्टप्रयत्नप्रमार्जितकोष्ठागारवत्, एकार्थिका वा एते शब्दा अत्यन्तविशुद्धिप्रतिपादनपराः । वाचनान्तरे दृ-श्यमाने चान्यदपि पदमुक्तानुसारतो व्याख्येयम्, तदेतत्प-ल्योपममिति, इदं च पल्यगतवालाग्राणां संख्येयैरेव व-र्षैस्तदपहारसम्भवात् संख्येयवर्षकोटाकोटीमानं बादरप-ल्योपमं ज्ञेयम्, न चानेनात्र वक्ष्यमाणसुषमसुषमादिकाल-मानाद्यधिकारः परं सूक्ष्मपल्योपमस्वरूपसुखप्रतिपत्त्यै प्र-रूपितमिति ज्ञायते तेन पूर्वोक्तमेकैकवालाग्रमसंख्येयख-ण्डीकृत्य भृतस्यास्यैवाकुलस्याङ्गुलप्रमाणायामविष्कम्भावगा-हस्य पल्यस्य वर्षशते वर्षशते एकैकवालाग्रापहारेण सक-लवालाग्रखण्डनिर्लेपनाकालरूपमसंख्येयवर्षकोटाकोटीप्रमा-णं सूक्ष्मपल्योपमं विचित्राकृतिराचार्यैस्तथेति सूत्रकारेणा-नुक्तमपि स्वयं ज्ञेयं , तेनैव च प्रस्तुतोपयोगः । अन्यथाऽनुयोगद्वारादिभिः सह विरोधप्रसक्तिरिति सर्वं सुस्थम् । एवमग्रे सागरोपमेऽपि ज्ञेयम् , अथ सागरोपमस्वरूपं गाथायेनाह—' एएसिं पल्लाणं , मित्यादि , एतेषामनन्तरोदितानां पल्यानामिति पदै-कदेशे , पदसमुदायोपचारात् पल्योपमानां या दशगुणिता कोटाकोटिर्भवेत् तत्सागरोपमस्यैकस्य भवेत् परिमाणमि-ति , प्रायः सर्वं कण्ठ्यं , नवरमेतेन सागरोपमप्रमाणेन न न्यूनाधिकेनेत्यर्थः चतस्रः सागरोपमकोटाकोट्यः कालः सु-षमसुषमा । जं० २ वक्ष० ।

सुसमा-सुषमा-स्त्री० । सुष्ठु समा यस्यां सा सुषमा । अव-सर्पिण्यां द्वितीये उत्सर्पिण्यास्तु पञ्चमारके, स्था० १ ठा० ।

तिणि सागरोवमकोडीओ कालो सुसमा । भ० ६ श० ७ उ० ।

सुषमा संसारिणां सुखाय चेति प्ररूपणायाह—

सत्तहिं ठाणेहिं ओगाढं सुसमं जाणेज्जा, तं जहा-अका-ले ण वरिसइ १, काले वरिसइ २ असाधू ण पुज्जंति ३ , साधू पुज्जंति ४, गुरूहिं जणो सम्मं पडिवण्णो ५ , मणो सु (दु) हया ६, वइसु (दु)हया ७। ( सू० ५५६+ )

'ओगाढं' ति अवतीर्णाम् अवगाढां वा प्रकर्षप्राप्तामिति. अ-कालः- अवर्षा, असाधवः-असंयता गुरुषु-मातापितृधर्मा-चार्येषु'मिच्छं'मिथ्याभावं विनयभ्रंशमित्यर्थः 'प्रतिपन्नः' आ-श्रितः, ' मणोदुहय ' त्ति मनसो मनसा वा दुःखिता-दुः-खितत्वं दुःखकारित्वं वा द्रोहकत्वं वा , एवं 'वयदुहय'-त्यपि व्याख्येयमिति । 'सम्मं' ति सम्यग्भावं विनयमित्य-र्थः । स्था० ७ ठा० ३ उ० ।

दसहिं ठाणेहिं ओगाढं सुसमं जाणिज्जा, तं जहा-अ-काले न वरिसइ, तं चेव विपरीतं, ०जाव मणुण्णा फासा । ( सू० ७६५ + ) स्था० १० ठा० ३ उ० ।

सुसमाउत्त-सुषमायुक्त-त्रि० । सुश्लेषीभावेन युक्ते, दश०५अ० ।

सुसमाहरण-सुषमाहरण-न० । सुष्ठुयोगेन ग्रहणे, सूत्र० १ श्रु० ८ अ० ।

सुसमाहि-सुसमाधि-स्त्री० । स्वस्थचित्तवृत्तौ , सूत्र० १ श्रु० ३ अ० ४ उ० ।

सुसमाहिइंदिय-सुसमाहितेन्द्रिय-त्रि० । सुसमाहितेन्द्रिये , दश० ७ अ० ।

सुसमाहिय-सुसमाहित-त्रि० । दर्शनादिषु सम्यगाहिते,आव० ३ अ० । ज्ञानदर्शनचारित्ररूपसमाधिमति, दश० ५ अ० । ज्ञानादिषु यत्नपरे, दश० ३ अ० । उद्युक्ते, दश० ६ अ० । नि-वृत्तविषयव्यापारे,दश० २ चू० । सुतराम्-अतिशयेन समा-धियुक्ते, उत्त० २० अ० ।

से किं तं जोगपडिसंलीणया ?, जोगपडिसंलीणया ति-विहा पण्णत्ता, तं जहा-अकुसलमणनिरोहो वा कुसल-मणउदीरणं वा मणस्स वा एगत्तीभावकरणं, अकुसलवइ-निरोहो वा कुसलवइउदीरणं वा वइए वा एगत्तीभावकरणं । से किं तं कायपडिसंलीणया ?, कायपडिसंलीणया जं णं सुसमाहियपसंतसाहरियपाणिपाए कुम्मो इव गुत्तिंदिए अल्लीणे पल्लीणे चिट्ठति । सेत्तं कायपडिसंलीणया । ( सू० ८०२ × )

' मणस्स वा एगत्तीभावकरणं ' मनसो वा ' एगत्त ' त्ति विशिष्टैकाग्रत्वेनैकता तद्रूपस्य भावस्य करणमेकताभाव-करणम् , आत्मना वा सहाद्वैकता-निरालम्बनत्वं तद्रूपो भावस्तस्य करणं यत्तत्तथा 'वईए वा एगत्तीभावकरणं ' ति वाचो वा विशिष्टैकाग्रत्वेनैकतारूपभावकरणमिति ' सुसमा-हियपसंतसाहरियपाणिपाए ' त्ति सुष्ठु समाहितः—समा-धिप्राप्तो बहिर्वृत्त्या स चासौ प्रशान्तश्चान्तर्वृत्त्या यः स तथा संहृतम्-अविक्षिप्ततया धृतं पाणिपादं येन स तथा ततः कर्मधारयः 'कुम्मो इव गुत्तिंदिए' त्ति गुप्तेन्द्रियो गुप्त इत्य-र्थः । क इव ?-कूर्म इव, कस्यामवस्थायामित्यत एवाह— 'अल्लीणे पल्लीणे ' त्ति आलीनः-ईषल्लीनः पूर्वं प्रलीनः पश्चात् प्रकर्षेण लीनस्ततः कर्मधारयः । भ० २५ श० ७ उ० ।

सुसमाहियप्पण-सुसमाहितात्मन्- त्रि० । मनोवाक्कायैः सु-विशुद्धे. दश० ६ अ० ४ उ० ।

सुसमाहियलेस्स-सुसमाहितलेश्य- त्रि० । सुष्ठु असावद्यानु-ष्ठानात् शोभना समाहिताः गृहीता लेश्याः अन्त:-करण-वृत्तयस्तेजःप्रभृतयो वा येन सः सुसमाहितलेश्यः । अक-लुषवृत्तौ. आचा० १ श्रु० ८ अ० ५ उ० ।

सुसमिय-सुसमित-त्रि० । सुष्ठु पञ्चभिः समितिभिः सम्यग् इतः प्राप्तो ज्ञानादिकं मोक्षमार्गमसौ सुसमितः । समिति-सहिते, सूत्र० १ श्रु० १६ अ० । तं० ।

सुसवण-सुश्रवण-त्रि० । सुष्ठु श्रवणं शब्दोपलम्भो येषां ते

तथा । शोभनश्रवणेषु, औ० ३ प्रति० ४ अधि० । प्रश्न० ।
सुसागय-सुस्वागत-न०। अतिशयेन स्वागते, भ०२ श० १ उ० ।
सुसाण-श्मशान-न० । पितृवने, शवस्थाने, उत्त० ३४ अ० । आचा० । कल्प० । प्रश्न० । आ० म० ।
सुसाणकम्मंत-श्मशानकर्मान्त-न० । श्मशानगृहे, यत्र शवदाहः क्रियते । आचा० २ श्रु० १ चू० २ अ० २ उ० ।
सुसाणगिह- श्मशानगृह-न०। पितृवनगृहे, भ० ३ श०७ उ०।
सुसाम-सुसामन्-न०।सप्तमदेवलोकविमानभेदे,स०१७सम० ।
सुसामण्णया-सुश्रामण्यता-स्त्री० । शोभनः पार्श्वस्थादिदोषवर्जिततया मूलोत्तरगुणसंपन्नतया च स चासौ श्रमणश्च तद्भावस्तत्ता । निरतिचारचारित्रे, स्था० १० ठा० ३ उ० ।
सुसामण्णरय-सुश्रामण्यरत-त्रि० । शोभने श्रामण्ये रते, भ० २ श० १ उ० । अतिशयेन श्रमणकर्माशक्ते, औ० ।
सुसामाइय-सुसामायिक-त्रि० । सुष्ठु समभावतया सामायिकं समशत्रुमित्रभावो यस्य स सुसामायिकः । सामायिकस्य शोभनेऽनुष्ठानके, सूत्र० १ श्रु० १६ अ० ।
सुसावग-सुश्रावक-पुं० । सम्यक्त्वाणुव्रतादिसकलक्रियाकलापोपेते, दर्श० ३ तत्त्व । श्रमणोपासकविशेषे, पञ्चा० १२ विव० ।
सुसाहिय-सुसाधित-त्रि० । सुष्ठु प्रतिपादिते,प्रश्न० ४ संव० द्वार । साधौ, प्रश्न० ४ संव० द्वार ।
सुसाहु-सुसाधु-पुं० । निर्वाणसाधकयोगसाधनपरे साधौ , प्रश्न० ४ संव० द्वार ।
सुसाहुजुत्त-सुसाधुयुक्त-त्रि०सुसाधोरुद्यतविहारिणो ये समाचारास्तैः समायुक्तः मध्यमपदलोपी समासः । स्थानशयनासनादावुपयुक्ते,"परक्कमेज्जा वि सुसाहुजुत्ते" सूत्र०१ श्रु०१४अ०
सुसाहुवाइ-सुसाधुवादिन्-पुं० ।सुष्ठु शोभनं हितं मितं प्रियं वदितुं शीलमस्येत्यसौ सुसाधुवादी । सम्यग्भाषासमिते , सूत्र० १ श्रु० १० अ० ।
सुसिक्खा-सुशिक्षा-स्त्री० । ग्रहणासेवनाभ्यां सम्यक्पालने, सूत्र० १ श्रु० १४ अ० । व्य० ।
सुसिणिद्धदंत-सुस्निग्धदन्त-त्रि० । अरूक्षदन्ते, तं० ।
सुसिर-सुषिर-न० । अनन्तादिषु विमानेषु अन्यतमे विमाने , स० ११ सम० । औ० । काहलादिवत् कोल्लयाद्ये, स्था० २ ठा० ३ उ० । रा० ।
सुसिलिट्ठ-सुश्लिष्ट-त्रि० । सुसन्धिके , ज्ञा० १ श्रु० १ अ० । तं० । अत्यन्तसङ्गत,पञ्चा० १८ विव० । औ० । कल्प० । सुघटिते,प्रश्न० ४ आश्र० द्वार । रा० । सम्यग्, रा० । अविशरे, भ० ११ श० ११ उ० ।
सुसिलिट्ठपरिघट्ठ-सुश्लिष्टपरिघृष्ट-त्रि० । यथा भवत्येवं परिघृष्टे, औ० ३ प्रति० ४ अधि० ।
सुसीमा-सुसीमा-स्त्री० । मन्दरस्य पूर्वे शीताया महानद्या दक्षिणे वत्सस्य विजयक्षेत्रस्य राजधान्याम् , "सुसीमा कुंडला चेव जाव." त्ति वचनात् । स्था० ८ ठा० ३ उ० ।
दो सुसीमाओ । स्था० २ ठा० ।
जम्बूद्वीपे महाविदेहे वर्षे वत्सो विजयः प्रज्ञप्तः, सुसीमा राजधानी विजयविभाजकत्रिकूटनामा वक्षस्कारपर्वतः सुवत्सो विजयः । जं० ४ वक्ष० । ('वच्छ' शब्दे षष्ठे भागे इयं दर्शिता । ) धर्माभिधानस्य कौशाम्बीमहाराजस्य भार्यायां पद्मप्रभस्वामिमातरि, स्था० ५ ठा० ३ उ० । सं० । प्रव० । आव० । स्वनामख्यातायां कृष्णवासुदेवाग्रमहिष्याम् , स्था० ८ ठा० ३ उ० ।
सुसील-सुशील-न० । शोभने समाधाने, चारित्रे च । उत्त० १२ अ० । उद्युक्तविहारिणि, सूत्र० १ श्रु० १ अ० १ उ० । सुष्ठु शीलं स्वभावो यस्येति । उत्त० २ अ० । शोभनाचारवति, औ० । अष्टादशसहस्रशीलाङ्गोपेते, ध० ३ अधि० ।
सुसीलभूय-सुशीलभूत-त्रि० । सुष्ठु शोभनं शीलं समाधानं चारित्रं वा प्राप्त, उत्त० १२ अ० ।
सुसीलसंसग्ग-सुशीलसंसर्ग-पुं० । शीलवद्भिः सम्बन्धे, दर्श० १० अ० ।
सुसुक्कसुक्क-सुशुक्लशुक्ल-न० । सुष्ठु शुक्लवच्छुक्ले ध्याने, सू० १ श्रु० ६ अ० ।
सुसुज्ज-सुसूर्य-न० । विमानभेदे, स० ।
सुसुज्जं सुज्जवित्तं सुज्जप्पभं ( स० ) विमाणं जे देवत्ताए उववण्णा, तेसि णं देवाणं णवसागरोवमाइं ठिई पण्णत्ता । ( सू० ९ ) स० ९ सम० ।
सुसुत्त-सुसूत्र-न० । सुष्ठु सत्ये सूत्रे, आव० ४ अ० । कणादमतानुसारिभिः-"सुसूत्रमासूत्रितम्" सम्यगागमः प्रणीत इतिः । अथवा-सुसूत्रमिति क्रियाविशेषणं शोभनं सूत्रं यस्तुद्वयस्थापदार्थानां यत्रैवमासूत्रितं तत्तत्स्वार्थोपनिबन्धः कृत इति द्वयम् , सूत्रं तु सूत्रकारग्रन्थे तत्तुद्वयस्यपदार्थयोरिति अनेकार्थवचनात् । स्था० ।
सुसुमार-सुसुमार-पुं० । जलचरविशेषे, प्रज्ञा० ।
से किं तं सुसुमारा सुसुमारा एगागारा पण्णत्ता , से तं सुसुमारा । ( सू० ३३ + ) प्रज्ञा० १ पद ।
सुसुविण-सुस्वप्न-पुं० । शोभनाः स्वप्नाः सुस्वप्नाः । श्वेतसुरभिपुष्पवस्त्रातपत्रचामरादिस्वप्नेषु, पं० १४ विव० ।
सुसूर-सुसूर-न० । चतुर्थदेवलोकविमानभेदे, स० ।
सुसूरं सुराव्वत्तं (स०) विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं पंचसागरोवमाइं ठिई पण्णत्ता । (सू०५×) स० ५ सम० ।
सुसेण-सुषेण-पुं० । अष्टमस्तीर्थकृतनि ऋषभदेवपुत्रे, कल्प० १ अधि० ७ क्षण । भरतचक्रिणः सेनापतौ , जं० ३ वक्ष० । आ० म० । ('भरह' शब्दे चतुर्थभागे १४४३ पृष्ठे कथा गता । ) शाखाञ्जनीराजस्य महाचन्द्रस्यामात्ये, विपा० १ श्रु० ४ अ० । ( 'सगड' शब्दे ऽस्मिन्नेव भागे कथा गता । ), शाखाञ्जन्यां नगर्यां सुभद्राख्यसार्थवाहभद्राभिधानतद्भार्ययोः पुत्रः शकटः । ...

धामात्येन सुदर्शनाभिधानगणिकाव्यतिकरं स्वगणिको त्रिनाशितः । स्था० १० ठा० ३ उ० ।

सुसेणा–सुषेणा–स्त्री० । रक्तामहानदीलक्ष्णायां महानद्याम्, स्था० ५ ठा० ३ उ० ।

सुस्समण–सुश्रमण–पुं० । मुनौ, आचा० २ श्रु० ४ चू० ।

सुस्सर–सुस्वर–त्रि० । शोभनषड्जादिस्वरविशेषे, प्रश्न० ४ संव० द्वार । आ० म० । रा० । सुस्वरघोषे, जी० ३ प्रति० ४ अधि० । "सुस्सराओ सुस्सरघोसाओ" जी० ३ प्रति० ४ अधि० । नि० चू० । जं० ।

सुस्सरणाम- सुस्वरनामन्–न० । स्वरनामकर्मभेदे, यदुदयवशाज्जीवस्य स्वरः श्रोतॄणां प्रीतिहेतुरुपजायते तत्सुस्वरनाम । पं० सं० ३ द्वार । कर्म० । श्रा० । प्रव० । रा० । जं० ।

सुस्सरपरिवायिणी–सुस्वरपरिवादिनी–स्त्री० । वीणाविशेषे, प्रश्न० ५ संव० द्वार ।

सुस्सरा–सुस्वरा–स्त्री० । गीतरतेर्गन्धर्वेन्द्रस्य स्वनामख्यातायामग्रमहिष्याम्, स्था० ४ ठा० ३ उ० । ज्ञा० । आ० चू० ।

सुस्सुयबहुस्सुय–सुश्रुतबहुश्रुत–पुं० । सुश्रुतम् शोभनमाकर्णितं बहु च श्रुतं येन स सुश्रुतबहुश्रुतः । तथाविधं बहुश्रुतं, यस्य बह्वपि श्रुतं न विस्मृतिपथमुपयाति स सुश्रुतबहुश्रुतः । अथवा बहुश्रुतोऽपि सन् यस्तस्योपदेशेन वर्त्तते सन्मार्गानुसारित्वात् स सुश्रुतबहुश्रुतः । व्य० १० उ० ।

सुस्सू- श्वश्रू–स्त्री० । श्वशुरस्त्रियाम्, बृ० २ उ० ।

सुस्सूगुज्झ–श्वश्रूगुह्य–न० । श्वश्र्वाः सम्बन्धिनि गुह्ये, बृ० २ उ० । ( कौतूहल श्वश्रूगुह्यदृष्टान्तः ' वसहि ' शब्दे षष्ठभागे गतः । )

सुस्सूसण–सुश्रूषण–न० । विधिवदनतिदूरासन्नतया सेवने, दशा० ६ अ० १ उ० । व्य० । आचा० ।

सुस्सूसणाविणय–सुश्रूषणाविनय–पुं० । दर्शनविनयभेदे, भ० २५ श० ७ उ० । ( ' विणय ' शब्दे षष्ठभागे स्वरूपम् । )

सुस्सूसमाण–सुश्रूषमाण–त्रि० । श्रोतुमिच्छति विनययुक्ते, नि० १ श्रु० १ वर्ग १ अ० । आव० । आ० म० । औ० । सू० प्र० । रा० । ज्ञा० । दशा० । भ० । आचा० । श्रोतुं प्रवृत्ते, सूत्र० २ श्रु० १ अ० । परिचरति, ज्ञा० २५ अ० । सुश्रूषां कुर्वाणे, सूत्र० १ श्रु० ६ अ० । धर्मं श्रोतुमिच्छति, आचा० १ श्रु० ६ अ० ४ उ० ।

सुस्सूसा–शुश्रूषा–स्त्री० । गुरोरादेशं प्रति श्रोतुमिच्छा सुश्रूषा । गुर्वादिवैयावृत्त्ये, सूत्र० १ श्रु० ६ अ० । विधिवददूरासन्नतया सेवने, द्वा० २८ द्वा० । पञ्चा० । आ० म० । सद्बोधावन्ध्यनिबन्धनधर्मशास्त्रश्रवणवाञ्छायाम्, पञ्चा० ६ विव० । ध० । यो० बि० । श्रवणेच्छायाम्, ज्ञा० १ श्रु० १३ अ० । पञ्चा० ।

सुस्सूसाभावकरण–सुशुश्रूषाभावकरण–न० । धर्मशास्त्रं प्रति श्रोतुमिच्छा शुश्रूषा तल्लक्षणो भावः–परिणामस्तस्य करणं निर्वर्त्तनं श्रोतुस्तैर्वर्त्तनारिति । श्रोतुः श्रवणेच्छोत्पादने, शुश्रूषामनुत्पाद्य धर्मकथने प्रत्युतानर्थसम्भवः, पठ्यते च– 'स खलु पिशाचकी वातकी वा यः परेऽनर्थिनि वाच्यमुदीरयति ।' ध० १ अधि० ।



सुस्सूसावयणकर–शुश्रूषावचनकर–त्रि० । पूजाप्रधानवचनकरणशीले, दशा० ६ अ० २ उ० ।

सुस्सूसु–शुश्रूषु–त्रि० । श्रोतुमुपस्थिते, ध० १ अधि० ।

सुट्ठु–सुष्ठु–अव्य० । " ष्ट-ष्ठयोः ट्ठः " ॥ ८।४।२९० ॥ द्विरुक्तस्य टकारस्य षकाराक्रान्तस्य ठकारस्य च मागध्यां सकाराक्रान्तः टकारो भवति । इति ष्ठस्य स्टः । शोभने, प्रा० ।

सुह- शुभ–न० । पुण्ये, आव० ४ अ० । उत्त० । सूत्र० । आ० म० । संक्लेशविरहिते, उत्त० १ अ० । सुकर्मणि, स्था० ६ ठा० ३ उ० । औ० । शुभगन्धस्पर्शात्मके कर्मणि, जी० १ प्रति० । शोभने, त्रि० । आव० ४ अ० । स्था० । उत्त० । कल्याणहेतौ, कल्प० १ अधि० ३ क्षण । रा० । कोमले, रा० । प्रधाने, रा० । जं० । मङ्गलभूते, रा० । शुभाध्यवसाये तदात्मकत्वात् सामायिके, नं० । आ० म० १ अ० । औ० ।

सुख–न० । सुखयतीति सुखम्, शर्मणि, ज्ञा० १ श्रु० १ अ० । जी० । दशा० । भ० । निर्वृत्तौ, कल्प० १ अधि० ३ क्षण । सातोदये, सूत्र० १ श्रु० २ अ० । यथाऽऽसन्नविषये, उत्त० ७ अ० । तृषितस्य जलपान इवानन्दे, स्था० ३ ठा० ४ उ० । पा० । आत्मनो विशेषगुणे, सुखयुक्ते, त्रि० । विशे० ।

गुरोः सुखत्वमिति व्युत्पत्तिः सुखस्तर्हि
कथमाचार्य इत्याह—

सुपसंसत्थो खाणि–दियाणि सुद्धिदिओ सुहो ऽभिमओ ।
वसिमदिओ जमुत्तं,असुहो अजिइंदिओ ऽभिमओ ॥३४४३
सुहमहवा निव्वाणं, तस्सं ससमुवयारओ ऽभिमयं ।
तस्साहणं गुरु त्ति य, सुहमन्नं पाणसमन्न ॥ ३४४४ ॥

सुशब्दः—प्रशंसार्थो निपातः खानि–इन्द्रियाणि, शोभनानि खानि यस्यासौ सुखः शुद्धेन्द्रियोऽभिमतः । किमुक्तं भवति– वश्येन्द्रियो–निर्विकारेन्द्रिय इति यदुक्तं भवति; अजितेन्द्रियस्तु सुखोऽभिमत इति । अथवा–सुखयतीति सुखं तथ्यं निरुपचरितं निर्वाणमुच्यते, शेषं तु सांसारिकमुपचारतः सुखमभिमतम् । ततोऽस्य द्विविधस्यापि सुखस्य साधनं कारणं गुरुरित्यसौ सुखम्, कारणे कार्योपचाराद् अन्नं भक्ते प्राणसंज्ञावदिति, अन्नं—प्राणा वृष्टिस्तन्दुला इत्यादिवद्यथोक्ताभयरूपसुखहेतुत्वात् सुखो गुरुरित्यर्थः ।

अथवा अन्यथा सुखशब्दार्थमाह—

जं च मियं खेहिं तो, ऽणुग्गहरूवं तओ सुहं तं च ।
अभयाई तप्पयाया, सुहमिह तब्भत्तिभावाओ ॥३४४६॥

यद्वा–सुष्ठु हतं–प्राप्तं स्वितं सेभ्यः–इन्द्रियेभ्यः स्वैरिन्द्रियैः करणभूतैरित्यर्थः, निपातनात् सुखमुच्यते । तत्कुतः प्राप्तम् ? इत्याह–ततो गुरोः सकाशाच्च सर्वे जीवा न हन्तव्या इत्यादि गुरुकृतानुग्रहरूपमभयप्रदानादि द्रष्टव्यम् . आदिशब्दात्–ज्ञानादिपरिग्रहः गुरुप्रदत्तेनाभयप्रदानादिना जीवाः पञ्चभिरपीन्द्रियैः सुखमनुभवन्ति । अतस्तत्प्रदाता अभयादिप्रदाता गुरुरपीह सुखम्, तद्भक्तिभावात्सुखोपचारात्कारणे कार्योपचारादित्यर्थः । विशे० । शरीराबाधाभावे, औ० । रा० । प्रश्न० । दर्श० । उत्त० । " गामाणुगामं सुहं सुहेणं वि-

हरमाणे " सुहं सुखेन-शरीरखेदाभावेन संयमबाधाभावेन च विहारेण वा ग्रामादिषु विहरन् । रा० ।

सुखं सामान्यत आह—

दसविहे सुखे पएणत्ते, तं जहा-"आरोग्ग १ दीहमाऊ२, अड्डुजं ३ काम ४ भोग ५ संतोसो ६ । अत्थि ७ सुहभोग ८ निक्ख-म्ममेव ९ तत्तो अणाबाहे १०॥१॥"(सूत्र०७३७।)

'दसविहे' त्यादि, 'आरोग्ग' गाहा. आरोग्यं—नीरोगता १ दीर्घमायुः—चिरं जीवितं, शुभमितीह विशेषणं द्रष्टव्यमिति २, 'अड्डुज्ज' त्ति आढ्यत्वं—धनपतित्वं सुखकारणत्वात्सुखम्, अथवा-आढ्यै· क्रियमाणा इज्या पूजा आढ्येज्या, प्राकृतत्वादड्डुज्जत्ति ३, 'काम' त्ति कामौ—शब्दरूपे सुखकारणत्वात् सुखम् ४, एवं 'भोग' त्ति भोगाः—गन्धरसस्पर्शाः ५, तथा सन्तोषः—अल्पेच्छता—तत्सुखमेव आनन्दरूपत्वात्सन्तोषस्य, उक्तं च— "आरोग्गसारियं मा-णुसत्तणं सच्चसारिओ धम्मो । विज्जा निच्छयसारा, सुहाइँ संतोससाराइं ॥१॥" इति ६। 'अत्थि' त्ति येन येन यदा यदा प्रयोजनं तत्तत्तदा तदाऽस्ति—भवति जायते इति सुखमानन्दहेतुत्वादिति ७, 'सुहभोग' त्ति शुभः—अनिन्दितो भोगो—विषयेषु भोगक्रियेति स सुखमेव सातोदयसम्पाद्यत्वात् तस्येति ८, तथा 'निक्खम्ममेव' त्ति निष्क्रमणं निष्क्रमः—अविरतिजम्बालादिति गम्यते, प्रव्रज्येत्यर्थः, इह च द्विर्भावो नपुंसकता च प्राकृतत्वात्, एवकारोऽवधारणे, अयमर्थः—निष्क्रमणमेव भवस्थानां सुखं, निराबाधस्वाधीनानन्दरूपत्वात्, अत एवोच्यते—'दुवालसमासपरियाए समणे निग्गंथे अणुत्तराणं देवाणं तेउल्लेसं वीइवयइ" त्ति। तथा "नैवास्ति राजराजस्य, तत्सुखं नैव देवराजस्य । यत्सुखमिहैव साधो-र्लोकव्यापाररहितस्य ॥१॥" इति, शेषसुखानि हि दुःखप्रतीकारमात्रत्वात् सुखाभिमानजनकत्वाच्च तत्त्वतो न सुखं भवन्तीति ९, 'तत्तो अणबाहे' त्ति ततो-निष्क्रमणसुखानन्तरम् अनाबाधं-न विद्यते आबाधा-जन्मजरामरणक्षुत्पिपासादिका यत्र तदनाबाधं; मोक्षसुखमित्यर्थः, एतदेव च सर्वोत्तमं, यत उक्तम्—"नवि अत्थि माणुसाणं तं सोक्खं न वि य सव्वदेवाणं । जं सिद्धाणं सोक्खं, अव्वाबाहं उवगयाणं ॥१॥" इति १०, निष्क्रमणसुखं चारित्रसुखमुक्तम् । स्था० १० ठा० ३ उ० । "द्रव्यादिएहिं निच्चा, एगंतेणेव जेसि अप्पाओ । होइ अभावो तेसिं, सुह दुहसंसारमोक्खाणं ॥" दश०७ अ० । ( सिद्धसुखं 'सिद्ध' शब्देऽस्मिन्नेव भागे उक्तम् ।) ( सुखदुःखकारणयोः सिद्धिः 'कम्म' शब्दे तृतीयभागे २५३ पृष्ठे उक्ता ।) सुखहेतुत्वात् सुखम् । उपशमश्रेण्यां शमकं प्रत्यपूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायरूपायां गुणत्रयावस्थायाम्, सूत्र० १ श्रु० ११ अ० । विपा० । राज्यैश्वर्यादौ, अष्ट० २१ अष्ट० । अनायासे, नं० । शरीरमनसोऽनुकूले, आचा० १ श्रु० ३ अ० १ उ० । आव० । अष्ट० ।

सुहग(गा)-शुभग(गा)-पुं० । स्त्री० । "ऊत्सुभगमुसले वा " ॥८।१।११३॥ इत्यनयोरादेरुत् विकल्पेन । स्त्रीभिः काम्ये पुरुषे, पुरुषैश्च काम्यायां स्त्रियाम्, प्रा० १ पाद ।

सुहकम्माणुबंध-शुभकर्मानुबन्ध-पुं० । कुशलकर्मानुबन्धे, पं० सू० १ सूत्र ।

सुहकामय-सुखकामक-त्रि० । सुखमानन्दरूपं तं कामयते इति । सुखेच्छौ, भ० १५ श० । प्रति० ।

सुहग-सुभग-त्रि० । सुरूपे, औ० ।

सुहगइ-सुखगति-स्त्री० । प्रशस्तविहायोगतौ, कर्म० २ कर्म० ।

सुहगुरुजोग-शुभगुरुयोग-पुं० । विशिष्टचारित्रयुक्ताचार्यसंबन्धे, ध० २ अधि० ।

सुहजीवि-सुखजीविन्-पुं०। सुखेन जीवनशीले, "मज्झिमस्सरमंताओ, हवंति सुहजीविणो । खायई पियई देई, मज्झिमस्सरमस्सिओ ॥१॥" अनु० ।

सुहजोग-शुभयोग-पुं० । साधकचन्द्रनक्षत्रादिसम्बन्धे, पञ्चा० ८ विव० । शुभे संयमव्यापारे, प्रश्न० १ संव० द्वार । प्रशस्तमनोवाक्कायव्यापारेषु, ध० ३ अधि० ।

सुहज्झाण-शुभध्यान-न० । धर्मशुक्ललक्षणे ध्यानभेदे, आव० ४ अ० ।

सुहड-सुहृत-त्रि०। सुष्ठु हृतं क्षुद्रस्य चित्तमिति सुहृतम् । दश० ७ अ० । सम्यक्कृहृते, उत्त० १ अ० । 'सुहडे त्ति नो वए' तत्र सुहृतमुपकरणमशियोपशान्तये । उत्त० १ अ० ।

सुहणाणज्झाणमग्ग-शुभज्ञानध्यानमग्न-त्रि०। शुभं यथार्थपरिच्छेदनभेदज्ञानविभक्तस्वपरत्वं च स्वस्वरूपैकत्वानुभवतन्मयत्वध्यानमग्ने, अष्ट० २ अष्ट० ।

सुहणाम-शुभनामन्-न०। नामकर्मभेदे, यदुदयवशान्नाभेरुपर्यवयवाः शुभा भवन्ति । कर्म० ६ कर्म० । श्रा० । पं० सं० ।

सुहणामा-शुभनामा-स्त्री०। लोकोत्तररीत्या पक्षस्य पञ्चम्यां तिथौ, जं० ७ वक्ष० । सू० प्र० । चं० प्र० ।

सुहणिसण्ण-सुखनिषण्ण-त्रि०। अनाबाधवृत्त्योपविष्टे, प्रश्न० १ संव० द्वार ।

सुहणुपाल-सुखानुपाल-त्रि० । सुखेनानुपाल्यते इति सुखानुपालः । सुरक्षे, पञ्चा० १७ विव० ।

सुहत्थ-सुखार्थ-त्रि० । सुखनिमित्ते, रा० ।

सुहत्थि-सुहस्तिन्-पुं० । गन्धहस्तिनि, भ० १५ श० । स्थूलभद्रस्वामिनो दशपूर्वधरे शिष्ये, कल्प० २ अधि० ८ क्षण । स्था० । ज्ञा० । आ० म० । आव० । आ० क० । नं० । आ० चू० । राजगृहवास्तव्येषु कालोदाय्यादिष्वन्ययूथिकेषु अन्यतमे, भ० ७ श० १० उ० । मन्दरस्य दक्षिणपूर्वे शीताया दक्षिणादिग्गहस्तिकूटे, जं० ४ वक्ष० ।

सुहद-सुहृत्-पुं०। "स्वरादसंयुक्तस्यानादेः" ॥८।१।१७६॥ इत्यधिकारात् । क-ग-च-ज-त-द-प-य-वां प्रायो लुक् ॥ ८।१।१७७ ॥ समासे तु वाक्यविभक्त्यपेक्षया भिन्नपदत्वमपि विवक्ष्यते तेन तत्र यथादर्शनमुभयमपि भवति । सुहदो । सुहओ इत्यादि । मित्रे, प्रा० १ पाद ।

सुहदव्वाइसमुदय-शुभद्रव्यादिसमुदय-पुं० । प्रशस्तद्रव्यप्रभृतीनां समवाये, पञ्चा० १५ विव० ।

**सुहधाउजोगभाव**-शुभधातुयोगभाव-पुं० । शुभानां सुन्दराणां धातूनां वातपित्तकफानां योगानां कायादिव्यापाराणां भावः सत्ता शुभधातुयोगभावः । शुभानां धातूनां सम्बन्धे, पञ्चा० ४ विव० ।

**सुहदुक्खसंपओग**-सुखदुःखसम्प्रयोग-पुं० । सुखदुःखयोरकल्पिते योगे. दश० १ अ० ।

**सुहदुक्खसमणिय**-सुखदुःखसमन्वित-त्रि० । सुखमानन्दरूपं दुःखमसातोदयरूपमिति ताभ्यां समन्वितो युक्तः । सातासातयुक्ते, सूत्र० १ श्रु० १ अ० ३ उ० ।

**सुहदुक्खिय**-सुखदुःखित-त्रि० । सुखदुःखोपलम्भके, व्य० ४ उ० ।

**सुहदुहनिव्विसेस**-सुखदुःखनिर्विशेष-त्रि० । हर्षशोकादिरहित, प्रश्न० ४ संव० द्वार ।

**सुहपगइ**-शुभप्रकृति-स्त्री० । पुण्यप्रकृतिषु. कर्म० ५ कर्म० ।

**सुहपडिबोहा**-सुखप्रतिबोधा-स्त्री० । सुखेनाकृच्छ्रेण नखच्छोटिकामात्रेणापि प्रतिबोधो-जागरणं स्वप्तुर्यस्यां स्वापावस्थायां सा सुखप्रतिबोधा । निद्राविशेषे, कर्म० १ कर्म० ।

**सुहपय**-सुखपद-न० । जइ वि अगराहं ण पत्तो तहा वि पच्छित्तं भवतीति लक्षणे प्रायश्चित्तस्थाने, नि० चू० १ उ० ।

**सुहपरिकम्मणा**-सुखपरिकर्मणा-स्त्री० । सुखा-सुखकारिणी परिकर्मणा कृतविश्रामणं यस्यां सा सुखपरिकर्मणा । श्रुतस्वाध्यायभेदे, कल्प० १ अधि० ३ क्षण ।

**सुहपसुत्त**-सुखप्रसुप्त-त्रि० । सुखेनैव शयाने, आ० म० १ अ० । आव० ।

**सुहप्पदाया**-सुखप्रदातृ-त्रि० । सुखदे, "सर्वाणि सत्त्वानि सुखे रतानि, सर्वाणि दुःखाच्च समुद्विजन्ति । तस्मात्सुखार्थी सुखमेव दद्यात्, सुखप्रदाता लभते सुखानि ॥१॥" सूत्र० १ श्रु० ३ अ० ४ उ० ।

**सुहफल**-शुभफल-त्रि० । अभिमतफले, पञ्चा० ४ विव० ।

**सुहफास**-सुखस्पर्श-त्रि० । सुखः-कोमलः स्पर्शो यस्य स सुखस्पर्शः । शुभस्पर्शे, रा० । चं० प्र० । सू० प्र० । स० । जं० । सुखहेतुस्पर्शे, रा० । आ० म० । चं० प्र० ।

**सुहभाव**-शुभभाव-त्रि० । गुणानुरागरूपेषु शोभनपरिणामेषु, पञ्चा० ७ विव० । प्रायश्चित्ततया विवक्षितसत्परिणामे, पञ्चा० १६ विव० । उदारतया प्रवर्धमानप्रशस्ताध्यवसायेषु, पञ्चा० ८ विव० ।

**सुहभावजुय**-शुभभावयुत-त्रि० । विशिष्टक्रियावत् प्रशस्ताध्यवसायविशेषोपेते, पञ्चा० १८ विव० ।

**सुहभाववुड्ढि**-शुभभाववृद्धि-स्त्री० । कुशलाशयवृद्धौ, पं० व० ५ द्वार । पञ्चा० ।

**सुहभोग**-शुभभोग-पुं० । शुभो-निन्दितो भोगो विषयेषु भोगक्रिया यस्येति । अनिन्दितक्रियायुक्ते, स्था० १० ठा० ३ उ० ।

**सुखभोग**-पुं० । सुखमेव सातोदयसंपाद्यत्वात्तस्य भोगः सुखभोगः । सुखभेदे, स्था० १० ठा० ३ उ० ।

**सुहभोगि**-सुखभोगिन्-त्रि० । सुखम्-आनन्दरूपं भुनक्तीति सुखभोगी । सुखाऽऽस्वादके, आचा० १ श्रु० २ अ० ३ उ० ।

**सुहमण**-शुभमनस्-त्रि० । असंक्लिष्टचेतसि, प्रश्न० १ संव० द्वार ।

**सुहमेत्त**-सुखमात्र-न० । सामान्येनैव वैषयिकं सुखं परपश्यादारभ्य जनितपरिणामासुन्दरसुखकल्पं स्वपरजीवप्रतिष्ठितं तत्सुखमात्रम् । स्वपरनिष्ठितं यत्किञ्चित्सुखे. षो० १३ विव० ।

**सुहमोय**-सुखमोच-त्रि० । सुखेन मोच्यन्ते इति सुखमोचाः । सुखपरित्याज्येषु, बृ० २ उ० ।

**सुहम्म**-सुधर्मन्-पुं० । वीरजिनेन्द्रस्य पञ्चमे गणधरे, कल्प० २ अधि० ८ क्षण । (श्रीवीरपट्टे श्रीसुधर्मस्वामी पञ्चमो गणधरः तद्वर्णनम् 'अज्जसुहम्म' शब्दे प्रथमभागे २११ पृष्ठे गतम् । )

अथ पञ्चमगणधरवक्तव्यतामभिधित्सुराह—

ते पव्वइए सोउं, सुहम्म आगच्छई जिणसगासं ।
वच्चामि ण वंदामी, वंदित्ता पज्जुवासामि ॥ १७७० ॥

व्याख्या पूर्ववत्, नवरं सुधर्मनामा द्विजोपाध्यायोऽत्र वक्तव्यः ।

आगतस्य तस्य भगवता किं कृतमित्याह—

आभट्ठो य जिणेणं, जाइजरा-मरणविप्पमुक्केणं ।
नामेण य गोत्तेण य, सव्वण्णू सव्वदरिसीणं ॥१७७१॥

व्याख्या पूर्ववदिति । विशे० । कल्प० । आ० म० । (सुधर्मस्वामिन आयुरादि 'गणहर' शब्दे तृतीयभागे ८१६ उक्तम् । )

**सुहम्मा**-सुधर्म्मा-स्त्री० । चमरादीनामिन्द्राणां सूर्यादीनां च महर्द्धिकदेवानां सभा सुधर्म्मासभा, । देवसभायाम्, रा० । प्रति० । जं० । आ० म० । प्रश्न० । सभानां मध्ये सुधर्म्मा श्रेष्ठा । सूत्र० १ श्रु० ६ अ० । स्था० ।

चमरस्स णं असुरिंदस्स असुररण्णो सभा सुहम्मा छत्तीसं जोयणाइं उड्ढं उच्चत्तेणं होत्था । ( सू० ३६ × )

स० ३६ सम० ।

चमरस्स णं असुरिंदस्स असुररण्णो सभा सुहम्मा, एकावन्न खम्भसयसन्निविट्ठा पण्णत्ता । ( सू० ५१ × )

स० ५ सम० । ( 'सूरियाभ' शब्दे वक्ष्यते एषा । )

सुधर्मावर्णकः—

कहि णं भंते ! सक्कस्स देविंदस्स देवरण्णो सभा सुहम्मा पण्णत्ता ?, गोयमा ! जंबुद्दीवे दीवे मंदरस्स पव्वयस्स दाहिणेणं इमीसे रयणप्पहाए पुढवीए० एवं जहा रायप्पसेणइज्जे ०जाव पंचवडिंसगा पण्णत्ता, तं जहा—असोयवडिंसए ०जाव मज्झे सोहम्मवडिंसए से णं सोहम्मवडेंसए महाविमाणे अद्धतेरस य जोयणसयसहस्साइं आयामविक्खंभेणं । एवं जहा सूरियाभे तहेव माणं तहेव उववाओ । सक्कस्स य अभिसेओ तहेव जहा सूरियाभस्स अलंकारअच्चणिया तहेव ०जाव आयरक्ख त्ति, दो सागरोवमाइं ठिई० । सक्के णं भंते ! देविंदे देवराया के महिड्ढीए ०जाव के महासोक्खे ? । गोयमा ! महिड्ढीए ०जाव महासोक्खे से णं तत्थ बत्तीसाए विमाणावाससयस-

दर्चनिकां कृत्वा पूर्वद्वारेण समागच्छति, तत्रार्चनिकां पूर्ववत् कृत्वा पूर्वस्य मुखमण्डपस्य दक्षिणद्वारे पश्चिमस्तम्भपङ्क्त्युत्तरपूर्वद्वारेषु क्रमेणोक्तरूपां पूजां विधाय पूर्वद्वारेण विनिर्गत्य पूर्वप्रेक्षागृहमण्डपे समागत्य पूर्ववत् द्वारमध्यभागदक्षिणद्वारपश्चिमस्तम्भपङ्क्त्युत्तरपूर्वद्वारेषु पूर्ववदर्चनिकां करोति, ततः पूर्वप्रकारेणैव क्रमेण चैत्यस्तूपजिनप्रतिमाचैत्यवृक्षमहेन्द्रध्वजनन्दापुष्करिणीनां, ततः सभायां सुधर्मायां पूर्वद्वारेण प्रविशति, प्रविश्य यत्रैव मणिपीठिका तत्राऽऽगच्छति, आलोके च जिनप्रतिमानां प्रणामं करोति, कृत्वा यत्र माणवकचैत्यस्तम्भो यत्र वज्रमया गोलवृत्ताः समुद्गकाः तत्रागत्य समुद्गकान् गृह्णाति, गृहीत्वा विघाटयति विघाट्य च लोमहस्तकं परामृश्य तेन प्रमार्ज्योदकधारया अभ्युक्ष्य गोशीर्षचन्दनेनानुलिम्पति, ततः प्रधानैर्गन्धमाल्यैरर्चयति धूपं ददाति, तदनन्तरं भूयोऽपि वज्रमयेषु गोलवृत्तसमुद्गकेषु प्रतिनिक्षिपति, प्रतिनिक्षिप्य तान् वज्रमयान् गोलवृत्तसमुद्गकान् स्वस्थाने प्रतिनिक्षिपति, तेषु पुष्पगन्धमाल्यवस्त्राभरणानि चारोपयति, ततो लोमहस्तकेन माणवकचैत्यस्तम्भं प्रमार्ज्योदकधारयाऽभ्युक्षणचन्दनचर्चापुष्पाद्यारोपणं धूपदानं च करोति, कृत्वा च सिंहासनप्रदेशे समागत्य मणिपीठिकायाः सिंहासनस्य च लोमहस्तकेन प्रमार्जनादिरूपां पूर्ववदर्चनिकां करोति, कृत्वा यत्र मणिपीठिका यत्र च देवशयनीयं तत्रोपागत्य मणिपीठिकाया देवशयनीयस्य च द्वारवदर्चनिकां करोति, तत उक्तप्रकारेणैव क्षुल्लकेन्द्रध्वजे पूजां करोति, ततो यत्र चोप्पालको नाम प्रहरणकोशस्तत्र समागत्य लोमहस्तकेन परिघरत्नप्रमुखाणि प्रहरणरत्नानि प्रमार्जयति, प्रमार्ज्योदकधारयाऽभ्युक्षणं चन्दनचर्चां पुष्पाद्यारोपणं धूपदानं च करोति, ततः सभायाः सुधर्माया बहुमध्यदेशभागेऽर्चनिकां पूर्ववत् करोति, कृत्वा सुधर्मायाः सभाया दक्षिणद्वारे समागत्य तस्य अर्चनिकां पूर्ववत् कुरुते, ततो दक्षिणद्वारेण विनिर्गच्छति, इत ऊर्ध्वं यथैव सिद्धायतनान्निष्क्रामतो दक्षिणद्वारादिका दक्षिणनन्दापुष्करिणीपर्यवसाना पुनरपि प्रविशतः उत्तरनन्दापुष्करिण्यादिका उत्तरद्वारान्ता ततो द्वितीयद्वारान्निष्क्रामतः पूर्वद्वारादिका पूर्वनन्दापुष्करिणीपर्यवसाना अर्चनिका वक्तव्यता सैव सुधर्मायां सभायामप्यन्यूनातिरिक्ता वक्तव्या, ततः पूर्वनन्दापुष्करिण्या अर्चनिकां कृत्वा उपपातसभां पूर्वद्वारेण प्रविशति, प्रविश्य च मणिपीठिकाया देवशयनीयस्य तदनन्तरं बहुमध्यदेशभागे प्राग्वदर्चनिकां विदधाति, ततो दक्षिणद्वारे समागत्य तस्यार्चनिकां कुरुते, अत ऊर्ध्वमत्रापि सिद्धायतनवत् दक्षिणद्वारादिका पूर्वनन्दापुष्करिणीपर्यवसानाऽर्चनिका वक्तव्या, ततः पूर्वनन्दापुष्करिणीतोऽपक्रम्य ह्रदं समागत्य पूर्ववत् तोरणार्चनिकां करोति, कृत्वा पूर्वद्वारेणाभिषेकसभां प्रविशति, प्रविश्य मणिपीठिकायाः सिंहासनस्याभिषेकभाण्डस्य बहुमध्यदेशभागस्य च क्रमेण पूर्ववदर्चनिकां करोति ततोऽन्यत्रापि सिद्धायतनवत् दक्षिणद्वारादिका पूर्वनन्दापुष्करिणीपर्यवसानाऽर्चनिका वक्तव्यता, ततः पूर्वनन्दापुष्करिणीतः पूर्वद्वारेणालङ्कारिकसभां प्रविशति, प्रविश्य मणिपीठिकायाः सिंहासनस्य बहुमध्यदेशभागस्य च क्रमेण पूर्ववदर्चनिकां करोति, तत्रापि क्रमेण सिद्धायतनवत् दक्षिणद्वाराऽऽदिका पूर्वनन्दापुष्करिणीपर्यवसानाऽर्चनिका वक्तव्या, ततः पूर्वनन्दापुष्करिणीतः पूर्वद्वारेण व्यवसायसभां प्रविशति, प्रविश्य पुस्तकरत्नं लोमहस्तकेन प्रमृज्योदकधारया अभ्युक्ष्य चन्दनेन चर्चयित्वा वरगन्धमाल्यैरर्चयित्वा पुष्पाद्यारोपणं धूपदानं च करोति। तदनन्तरं मणिपीठिकायाः सिंहासनस्य बहुमध्यदेशभागस्य च क्रमेण पूर्ववदर्चनिकां करोति, तदनन्तरमत्रापि सिद्धायतनवत् दक्षिणद्वारादिका पूर्वनन्दापुष्करिणीपर्यवसाना अर्चनिका वक्तव्या, ततः पूर्वनन्दापुष्करिणीतो बलिपीठं समागत्य तस्य बहुमध्यदेशभागवत् अर्चनिकां करोति कृत्वा चाभियोगिकदेवान् शब्दापयति, शब्दापयित्वा एवमवादीत्-'खिप्पामेव' इत्यादि सुगमं यावत् 'तमाणत्तियं पच्चप्पिणंति' तथा शृङ्गाटकं शृङ्गाटकाऽऽकृतिपथयुक्तं त्रिकोणं स्थानं त्रिकं—यत्र रथ्यात्रयं मिलति, चतुष्कं—चतुष्पथयुक्तं, चत्वरं—बहुरथ्यापातस्थानं, चतुर्मुखं—यस्माच्चतसृष्वपि दिक्षु पन्थानो निस्सरन्ति, महापथो-राजपथः शेषः सामान्यः पन्थाः प्राकारः प्रतीतः, अट्टालिकाः-प्राकारस्योपरि भृत्याश्रयविशेषाः, चरिका-अष्टहस्तप्रमाणो नगरप्राकारान्तरालमार्गः द्वाराणि—प्रासादादीनां गोपुराणि—प्राकारद्वाराणि तोरणानि-द्वारादिसम्बन्धीनि आरमन्ते यत्र माधवीलतागृहादिषु दम्पत्यादिल्यसावारामः, पुष्पादिमयवृक्षसंकुलमुत्सवादौ बहुजनोपभोग्यमुद्यानं, सामान्यवृक्षवृन्दनगरासन्नं काननं, नगरविप्रकृष्टं वनम्, एकाऽनेकजातीयोत्तमवृक्षसमूहो वनखण्डः, एकजातीयोत्तमवृक्षसमूहो वनराजी, 'तए णं' मित्यादि, ततः सूर्याभदेवो बलिपीठे बलिविसर्जनं करोति, कृत्वा चोत्तरपूर्वां नन्दापुष्करिणीमनुप्रदक्षिणीकुर्वन् पूर्वतोरणेनानुप्रविशति, अनुप्रविश्य च हस्तौ पादौ प्रक्षालयति प्रक्षाल्य नन्दापुष्करिण्याः प्रत्यवतीर्य सामानिकादिपरिवारसहितः सर्वर्द्ध्या यावद् दुन्दुभिनिर्घोषनादितरवेण सूर्याभविमानं मध्यंमध्येन समागच्छन् यत्र सुधर्मा सभा तत्रागत्य तां पूर्वद्वारेण प्रविशति, प्रविश्य मणिपीठिकाया उपरि सिंहासने पूर्वाभिमुखो निषीदति।

तए णं तस्स सूरियाभस्स देवस्स अवरुत्तरेणं उत्तरपुरच्छिमेणं दिसि एए णं चत्तारि य सामाणियसाहस्सीओ चउसु भद्दासणसाहस्सीसु निसीयंति, तए णं तस्स पुरत्थिमिल्लेणं चत्तारि अग्गमहिसीओ चउसु भद्दासणेसु निसीयंति तए णं दाहिणपुरत्थिमेणं अब्भिंतरियपरिसाए अट्ठ देवसाहस्सीओ अट्ठसु भद्दासणसाहस्सीसु निसीयंति, तए णं तस्स सूरियाभस्स देवस्स दाहिणेणं मज्झिमाए परिसाए दस देवसाहस्सीओ दससु भद्दासणसाहस्सीसु निसीयंति, तए णं दाहिणपच्चत्थिमेणं बाहिरियाए परिसाए बारस देवसाहस्सीओ बारससु भद्दासणसाहस्सीसु निसीयंति, तए णं देवस्स पच्चत्थिमेणं सत्त अणियाहिवइणो सत्तहिं भद्दासणेहिं णिसीयंति, तए णं तस्स सूरियाभस्स देवस्स चउद्दि-

सिं सोलस आयरक्खदेवसाहस्सीओ सोलसहिं भद्दासण- साहस्सीहिं णिसीयंति, तं जहा-पुरत्थिमिल्लेणं चत्तारि साहस्सीओ दाहिणेणं चत्तारि साहस्सीओ पच्चत्थिमेणं चत्तारि साहस्सीओ उत्तरेणं चत्तारि साहस्सीओ, ते णं आयरक्खा सन्नद्धबद्धवम्मियकवया उप्पीलि- यसरासणपट्टिया पिणद्धगेविज्जा बद्धआविद्धविमलव- रचिंधपट्टा गहियाउहपहरणा तिणयाणि तिसंधियाइं व- यरामयाइं कोडीणि धणूइं पगिज्झ पडियाइ- यकंडकलावा नीलपाणिणो पीतपाणिणो रत्तपाणिणो चावपाणिणो चारुपाणिणो चम्मपाणिणो दंडपाणिणो खग्गपाणिणो पासपाणिणो नीलपीयरत्तचावचारुचम्म- दंडखग्गपासधरा आयरक्खा रक्खोवगया गुत्ता गुत्तपा- लिया जुत्ता जुत्तपालिया पत्तेयं पत्तेयं समयओ विणयओ किंकरभूया चिट्ठंति। ( सू० ४५ )

ततः प्रागुपदर्शितसिंहासनक्रमेण सामानिकादय उपविश- न्ति, 'ते णं आयरक्खा' इत्यादि, ते आत्मरक्षाः सन्नद्धब- द्धवर्मितकवचाः उत्पीडितशरासनपट्टिकाः पिनद्धग्रैवेया- ग्रैवेयकाभरणाः आविद्धविमलवरचिह्नपट्टा गृहीताऽऽयु- धप्रहरणास्त्रिनतानि आदिमध्यावसानेषु नमनभावात् त्रि- सन्धीनि आदिमध्यावसानेषु संधिभावात् वज्रमयकोटीनि धनूंषि अभिगृह्य 'परियाइयकंडकलावा' इति पर्यात्तका- ण्डकलापा विचित्रकाण्डकलापयोगात्, केऽपि 'नीलपा- णिणो' इति नीलः काण्डकलाप इति गम्यते पाणौ येषां ते नीलपाणयः, एवं पीतपाणयो रक्तपाणयः चापं पाणौ येषां ते चापपाणयः चारुः—प्रहरणविशेषः पाणौ येषां ते चारुपाणयः चर्म अङ्गुष्ठाङ्गुल्योराच्छादनरूपं पाणौ येषां ते चर्मपाणयः, एवं दण्डपाणयः खड्गपाणयः पाशपाणयः, एतदेव व्याचष्टे—यथायोगं नीलपीतरक्तचापचारुचर्मदण्डखड्गपाश- धरा आत्मरक्षाः रक्षामुपगच्छन्ति तदेकचित्ततया तत्पराय- णा वर्तन्ते इति रक्षोपगाः गुप्ता न स्वामिभेदकारिणः, तथा गुप्ता-पराप्रवेश्या पालिः-सेतुर्येषां ते गुप्तपालिकाः, तथा युक्ताः-सेवकगुणोपेततया उचितास्तथा युक्ताः-परस्परसं- बद्धा न तु बृहदन्तरा पालिर्येषां ते युक्तपालिकाः, समयतः- आचारतः आचारेणेत्यर्थः, विनयतश्च किंकरभूता इव ति- ष्ठन्ति, न खलु ते किंकराः, किन्तु तेऽपि मान्याः, तेषामपि पृथगासननिपातनात्, केवलं ते तदानीं निजाचारपरिपा- लनतो विनीतत्वेन च तथाभूता इव तिष्ठन्ति, तत उक्तं किं- करभूता इवेति, 'तेहिं चउहिं सामाणियसाहस्सीहिं' इत्यादि सुगमं, यावत् 'दिव्याइं भोगभोगाइं भुंजमाणे विहरति' इति।

सूरियाभस्स णं भंते! देवस्स केवइयं कालं ठिती पण्णत्ता?, गोयमा! चत्तारि पलिओवमाइं ठिती पण्णत्ता, सूरियाभस्स णं भंते! देवस्स सामाणियपरिसोववण्णगाणं देवाणं केवइयं कालं ठिती पण्णत्ता?, गोयमा! चत्तारि पलिओवमाइं ठिती पण्णत्ता, महिड्डीए महज्जुतीए महब्बले



महाजसे महासोक्खे महाणुभागे सूरियाभे देवे, अहो णं भंते! सूरियाभे देवे महिड्डीए ०जाव महाणुभागे। (सू० ४६)
( सूर्याभदेवस्य दिव्या देवर्द्धिः कथं प्राप्तेति 'पएसि' श- ब्दे पञ्चमभागे उक्ता। )

से णं भंते! सूरियाभे देवे ताओ देवलोगाओ आउक्खएणं भवक्खएणं ठितिक्खएणं अणंतरं चयं चइत्ता कहिं गमिहि- ति कहिं उववज्जिहिति? गोयमा! महाविदेहे वासे जाइं इमाइं कुलाइं भवंति अड्ढाइं दित्ताइं विच्छिण्णविउलाइं भवण- सयणासणजाणवाहणाइं बहुजातरूवरययाइं आओगपओग- संपउत्ताइं विच्छड्डियपउरभत्तपाणाइं बहुदासीदासगोमहि- सगवेलगप्पभूयाइं बहुजणस्स अपरिभूयाइं तत्थ अन्नयरे सुकुमाले पुत्तत्ताए पच्चायाइस्सइ तए णं तंसि दारगंसि ग- ब्भगयंसि चेव समाणंसि अम्मापिऊणं धम्मे दढपइण्णा भविस्सइ। तए णं तस्स दारगस्स माया नवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाणाणं राइंदियाणं विइक्कंताणं सु- कुमालपाणिपायं अहीणपडिपुण्णपंचिंदियसरीरं लक्खण- वंजणगुणोववेयं माणुम्माणपमाणपडिपुण्णसुजायसव्वंग- सुंदरंगं ससिसोमाकारं कंतं पियं दंसणं सुरूवं दारयं प- याहिसि, तए णं तस्स दारगस्स अम्मापियरो पढमे दिवसे ठियवडियं करिस्संति, तातिए दिवसे चंदसूरदंसणियं क- रिस्संति छट्ठे दिवसे जागरियं जागरिस्संति एक्कारसमे दिवसे विइक्कंते संपत्ते बारसमे दिवसे निव्वत्ते असुइ- जाइकम्मकरणे चोक्खे संमज्जितोवलित्ते विउलं असणं पाणं खाइमं साइमं उवक्खडावेसंति २ त्ता मित्तणायनिय- गसयणसंबंधिपरिजणं आमंतिस्संति आमंतेत्ता तओ पच्छा ०जाव अलंकितसरीरा भोयणवेलाए भोयणमंडवंसि सुहा- सणवरगया ते णं मित्तनाइनियगसयणसंबंधि सद्धिं विउलं असणं पाणं खाइमं साइमं आसाएमाणा वीसाएमाणा परि- भुंजेमाणा परिभाएमाणा एवं च णं विहरिस्संति। जिमि- यभुत्तुत्तरागया वि य णं समाणा आयंता चोक्खा परिसुति- भूया ते मित्तनाइ ०जाव परिजणं विउलेणं वत्थगंधमल्लाल- ङ्कारेणं सक्कारिस्संति तस्सेव मित्त ०जाव परिजणस्स पुरतो एवं वदिस्संति जम्हा णं देवाणुप्पिया अम्हं इमंसि दारगंसि गब्भगयंसि चेव समाणंसि धम्मे दढा पतिण्णा जाया णं हो- ऊणं अम्ह एस दारगे दढपइण्णे णामेणं। तए णं तस्स दढ- पइण्णस्स दारगस्स अम्मापियरो नामधेज्जं करिस्संति दढपइण्णो य। तते णं तस्स दढपइण्णस्स अम्मा- पियरो अणुपुव्वेणं ठिइवडियं चंदसूरदरिसणं च जागरियं नामधेज्जं करणं परंगमणं च पंचंकमणं च पच्चक्खाणगं च जेमणं च पिंडवद्धणं च पजंप- माणं च कण्णवेहणगं च संवच्छरपडिलेहणगं च चूलोव-

णयणं उवणयणं च अन्नाणि य बहूणि य गब्भादाणज-
म्मणमाइयाणं कोउयाइं महया इड्ढीसक्कारसमुदएणं करि-
स्संति, तते णं से दढपतिन्ने दारए पंचधाइपरिक्खित्ते,
तं जहा-खीरधातीए मज्जणधातीए मंडणधाईए अंक-
धातीए कीलावणधाईए अन्नाहि य बहूहिं खुज्जाहिं चि-
लाइयाहिं वामणियाहिं वडभियाहिं बब्बरियाहिं पउसि-
याहिं जोयणियाहिं पल्हवियाहिं ईसिणियाहिं वारुणियाहिं
लासियाहिं लउसियाहिं दमिलीहिं सिंहलीहिं आरबीहिं पु-
लिंदीहिं पक्कणीहिं मरुडीहिं सबरीहिं पारसीहिं णाणादे-
सीहिं विदेसपरिमंडियाहिं सदेसनेवत्थगहियवेसाइ इंगिय-
चिंतियपत्थियवियाणियाहिं निउणकुसलाहिं विणीयाहिं
चेडियाचक्कवालवरतरुणीवंदपरियाल संपरिवुडे वरिस-
धरकंचुइज्जमहत्तरगविंदपरिक्खित्ते हत्थाओ हत्थं साह-
रिज्जमाणे २ अंकाओ अंकं परिभुंजमाणे २ उवनच्चिज्ज-
माणे २ उवगाइज्जमाणे २ उवलालिज्जमाणे २ उवगूहिज्ज-
माणे २ अवयासिज्जमाणे २ परिवंदिज्जमाणे २ परिचुं-
बिज्जमाणे २ रम्मेसु मणिकुट्टिमतलेसु परंगमाणे २
गिरिकंदरमल्लीणे विव चंपगवरपायवे निव्वाघायं सुहं
सुहेणं परिवड्ढिस्सइ तए णं दढपइन्नं दारगं अ-
म्मापियरो साइरेगअट्ठवासं जायगं जाणित्ता सोभ-
णंसि तिहिकरणदिवसनक्खत्तमुहुत्तंसि ण्हायं कयब-
लिकम्मं कयकोउयमंगलं पायच्छित्तं सव्वालंकारभू-
सियं करेत्ता महया इड्ढीसक्कारसमुदएणं कलायरियस्स उ-
वणेस्संति । तते णं से कलायरिए तं दढपइण्णदारगंहिं
तियाओ गणितप्पहाणाओ सउणरुतपज्जवसाणाओ वा-
वत्तरिकलाओ सुत्तओ य अत्थओ य करणओ सिक्खा-
वेहिइ सेहाविहिइ, तं जहा-लेहं गणियं रूवं नट्टं गीयं वाइयं
सरगयं पुक्खरगयं समतालं जूयं जणवायं पासगं अट्ठावयं
पोरेवच्चं दगमट्टियं अन्नविहिं पाणविहिं वत्थविहिं विलेव-
णविहिं सयणविहिं मयणविहिं अज्जं पहेलियं मागहियं गा-
हागाहियं सिलोगं हिरण्णजुत्तिं सुवण्णजुत्तिं आभरणविहिं
तरुणीपडिकम्मं इत्थिलक्खणं पुरिसलक्खणं हय-
लक्खणं गयलक्खणं गोणलक्खणं कुक्कुडलक्खणं छत्त-
लक्खणं दंडलक्खणं असिलक्खणं मणिलक्खणं का-
गिणिलक्खणं वत्थुविज्जंनगरमाणं खंधारमाणं चारपडि-
चारवूहपडिवूहं चक्कवूहं गरुडवूहं सगडवूहं जुद्धं निजुद्धं
असिजुद्धं मुट्ठिजुद्धं बाहुजुद्धं लयाजुद्धं जुइजुद्धं छरुप्पवायं
धणुव्वेदं हिरण्णपागं सुवण्णपागं मणिपागं धाउपागं सुत्त-
खेडं वट्टखेडं नालियाखेडं पत्तच्छेज्जं कडगच्छेज्जं सज्जीव-
निज्जीवमउणरुयमिति । तए णं से कलायरिते दढपइण्णं दा-
रगं लेहाइयाओ गणियप्पहाणाओ सउणरुतपज्जवसाणाओ
बावत्तरिं कलाओ सुत्तओ य अत्थओ य करणओ य सि-
क्खावेत्ता सेहावेत्ता अम्मापिऊणं उवणेहिइ, तते णं तस्स द-
ढपइण्णस्स दारगस्स अम्मापियरो तं कलायरियं विउलेणं
असणेणं० जाव वत्थगंधमल्लालंकारेणं सक्कारिस्संति सम्मा-
णिस्संति वत्थगंधमल्ल लंकारेणं सक्कारित्ता समाणित्ता वि-
उलं जीवियारिहं पीइदाणं दलइस्संति विउलं जीवि-
यारिहं पीइदाणं दलइत्ता पडिविसज्जेहिति तते णं से दढ-
पतिन्ने दारगे उम्मुक्कबालभावे विण्णयपरिणयमेत्ते जोव्व-
णगमणुपत्ते बावत्तरिकलापंडिते अट्ठारसविहदेसिप्पगार-
भासाविसारते नवंगसोतोपडिबोहिए गीयरती गंधव्वनट्ट
कुसलेहिं सिंगारचारुरूवे संगयगयहसियभणियचेट्ठियवि-
लाससंलावनिउणजुत्तोवयारकुसले हयजोहि बाहुजोहि
गयजोही बाहुप्पमद्दी अलं भोगसामत्थसाहसिए वियाल-
चारी यावि भविस्सति । तए णं तं दढपइन्नं दारगं अ-
म्मापियरो उम्मुक्कबालभावं ० जाव वियालचारगं वियाणि-
त्ता विउलेहिं अन्नभोगेहिं पाणभोगेहिं लेणभोगेहिं
वत्थभोगेहिं सयणभोगेहिं उवनिमंतेहिं तते णं से दढपइन्ने
दारए तेहिं विपुलेहिं अन्नभोगेहिं ० जाव सयणभोगेहिं नो
सज्जिहिति नो रज्जिहिति नो गिज्झिहिति नो मुज्झिहिति
नो अब्भोववज्जिहिति से जहानामए उप्पलेइ वा पउमेति
वा ० जाव सहस्सपत्तेइ वा पंके जाए जले संवुडे नो विलिप्पइ
पंकरएणं नो विलिप्पइ जलरएणं, एवामेव दढपइन्ने वि
दारगे कामेहिं जाए भोगेहिं वड्ढिते नो विलिप्पहिइ कामरए-
णं नो विलिप्पहिइ भोगरएणं नो विलिप्पहिइ मित्तनाइनि-
यगसयणसंबंधिपरिजणेणं से णं तहारूवाणं थेराणं अंतिए
केवलं बोहिं बुज्झिहिति केवलं मुंडे भवित्ता अगाराओ
अणगारियं पव्वतिस्सति से णं अणगारे भविस्सति इरि-
यासमिए ० जाव सुहुयहुयासणे इव तेयसा जलंते तस्स
णं भगवओ अणुत्तरेणं नाणेणं एवं दंसणेणं चरित्तेणं
आलएणं विहारेणं अज्जवेणं मद्दवेणं लाघवेणं खं-
तीए गुत्तीए मुत्तीए अणुत्तरेणं सव्वं संजमतवसु-
चरियफलनिव्वाणमग्गेणं अप्पाणं भावेमाणस्स अ-
णंते अणुत्तरे निव्वाघाए निरावरणे कसिणे पडि-
पुण्णे केवलवरनाणदंसणे समुप्पज्जिहिति तए णं से
भगवं अरहा केवली जिणे भविस्सइ सदेवमणुया-
सुरस्स लोगस्स परियागं जाणिहिति पासिहिति , तं
जहा-आगतिगतिठितिचवणं उववायतक्कं पच्छाकम्मं
पुरेकडं मणोमाणसियं खइयं भुत्तं कडं पडिसेवियं आ-
विकम्मं रहोकम्मं अरहा अरहस्स भागी तं तं का-

लं मणोवयकायजोगे वट्टमाणाणं सव्वलोए सव्वजीवाणं सव्वभावे जाणमाणे पासमाणे विहरिस्सइ । तए णं से दढपइण्णे केवली एयारूवेणं विहारेणं विहरमाणे बहूइं वासाइं केवलपरियागं पाउणिहिति पाउणित्ता अप्पणो आउसेसं आभोएइ अप्पणो आउसेसं आभोएत्ता बहूइं भत्ताइं पच्चक्खाइस्सइ पच्चक्खाइत्ता बहूइं भत्ताइं अणसणाए छेइस्सइ बहूइं छेइत्ता जस्सट्ठाए कीरइ णग्गभावे मुंडभावे अण्हाणए अदंतधावणत्ते केसलोचे बंभचेरवासे अच्छत्तगं अणुवाहणगं भूमिसिज्जातो फलहसेज्जायरघरपवेसो लद्धावलद्धाइं माणावमाणाइं परेहिं हीलणाओ निंदणाओ खिंसणाओ गरहणाओ तज्जणाओ तालणाओ परितावणाओ पव्वहणाओ उच्चावयविरूवरूवा बावीसपरीसहोवसग्गा गामकंटका अहियासिज्जंति तमट्ठं आराहेइ २ हित्ता चरिमेहिं ऊसासनीसासेहिं सिज्झिहिति बुज्झिहिति मुच्चिहिइ परिनिव्वाहिइ सव्वदुक्खाणं अंतं करेहिइ ।

सुखं सुखेन परिवर्धिष्यते अर्थात इति व्याख्यानमलङ्करणतः प्रयोगतः 'सहावेहिइ' संघयिष्यति निष्पादयिष्यति शिष्यापयिष्यत्यभ्यासं करिष्यति 'नवङ्गसोत्तापडिबोहिए' इति द्वे श्रोत्रे द्वे नयने द्वे नासिके एका जिह्वा एका त्वग् एकं मन इति सुप्तानीव बाल्यादव्यक्तचेतनानि प्रतिबोधितानि यौवनेन व्यक्तचेतनावन्ति कृतानि यस्य स तथा उक्तञ्च व्यवहारभाष्ये—'सोत्ताइं नव सुत्ताइं' इत्यादि अट्ठारसविहदेसीभासाविसारए' अष्टादशविधाया-अष्टादशभेदाया देशीप्रकाराया विशारदो-विचक्षणः तथा गीतरतिस्तथा गन्धर्वे गीते नाट्ये च कुशलः हयेन युध्यते इति हययोधी एवं गजयोधी रथयोधी बाहुयोधी तथा बाहुभ्यां प्रमृद्नातीति बाहुप्रमर्दी साहसिकत्वात् । विकाले चरतीति विकालचारी 'सव्वसंजमतवसुचरियफलनिव्वाणमग्गणं' ति सर्वसंयमः सर्वात्मना मनोवाक्कायसंयमनं तस्य सुचरितस्य वाऽऽसेवादिदोषरहितस्य तपसो यत्फलं निर्वाणं तन्मार्गेण, किमुक्तं भवति—सर्वसंयमेन सुचरितेन च तपसा निर्वाणग्रहणमनयोर्निर्वाणफलत्वख्यापनार्थं 'मणोमाणसियं' ति मनसि भवं मानसिकं तच्च कदाचिद् वचसाऽपि प्रकटितं भवति तत उच्यते मनसि स्थवस्थितं मनोमानसिकं 'खइय' त्ति खादितं—खयं भीतमिति भावः । 'पडिसेवियं' ति प्रतिसेवितं स्थ्यादि अध. कर्मभूमौ निस्थानं रहःकर्म गुप्तस्थानकृतं 'परेहिं हीलणाओ' इति हीलनानि सद्भूतासद्भूतहीलनजात्याद्युद्घाटनानि । परोक्ष जुगुप्साभाषणानि खिंसनानि धिङ्मुण्डेत्यादिवाक्यानि तर्जनानि अङ्गुल्या निर्भर्त्सनपुरस्सरं भर्त्सनानि ताडनानि कशादिघाताः । रा० । श्रीराजप्रश्नीये सूर्याभस्य शीघ्रगमननाम्नो वैक्रियविमानस्यान्तर्भूमिकावर्णनाधिकारे पञ्चवर्णैरत्नवर्णैर्मं पञ्चवर्णा अशोककणवीरबन्धुजीवाः समानीताः सन्ति.वृक्षा अ प्रतीता इति व्याख्याने न वृक्षाः के ?, किं च पुष्पादिकं तेषां पञ्चवर्णं भवतीति प्रश्नः; अत्रोत्तरम्-अशोकादयो वृक्षा जीवाभिगमवृत्त्यादिषु पञ्चवर्णा व्याख्याताः सन्ति न तु तत्पुष्पादीनि, तेन तान्यपि तदनुसारेण ज्ञातानि ॥ ३४७ ॥ सेन० ३ उल्ला० ।

सूरियावत्त--सूर्यावर्त्त--पुं० । सूर्यं उपलक्षणमेतच्चन्द्रनक्षत्रतारकाश्च प्रतिक्षणमावर्त्तन्ते यस्य स सूर्यावर्तः । मेरुपर्वते, सू० प्र० ५ पाहु० । स० । जं० । चं० प्र० । चतुर्थदेवलोकस्थविमानभेदे, स० ५ सम० ।

सूरियावरण--सूर्यावरण--पुं० । सूर्यैरुपलक्षणमेतच्चन्द्रनक्षत्रतारकाभिश्च समन्ततः परिभ्रमणशीलैराव्रियते आवेष्ट्यते इति सूर्यावरणः । मेरुपर्वते, चं० प्र० ५ पाहु० । सू० प्र० ।

सूरिल्लि- सूरिल्लि--पुं० । वनस्पतिविशेषे, जं० १ वक्ष० ।

सूरीकंता--शूरीकान्ता--स्त्री० । स्वनामख्यातायां पुरुषवधकारिकायाम् , तं० ।

सूरुग्गमणमुहुत्त--सूर्योद्गमनमुहूर्त्त--पुं० । उदयोपेते मुहूर्ते, जं० ७ वक्ष० ।

सूरुग्गमणपविभत्ति--सूर्योद्गमनप्रविभक्ति--न० । नाट्यविधानभेदे, रा० ।

सूरोदय--सूर्योदय--पुं० । प्रथमायां पौरुष्याम् , आ० म० १ अ० । प्रव० ।

सूरोदयादि--सूर्योदयादि--त्रि० । सूर्योदय आदौ यस्याः सा सूर्योदयादिः । सूर्योदयादारभ्येत्यर्थे, आ० म० १ अ० ।

सूरोपराग--सूर्योपराग--पुं० । सूर्यस्य—सूर्यविमानस्योपरागो राहुविमानतेजसोपरञ्जनं सूर्योपरागः । ग्रहणे, स्था० १० ठा० ३ उ० । उत्पातविशेषे, भ० ३ श० ५ उ० । अनु० ।

सूल--शूल--न० । त्रि० । त्रिशूले, प्रश्न० १ आश्र० द्वार । उत्त० । एकशूले. औ० । आयुधभेदे, जं० ३ वक्ष० । सूत्र० । आ० म० । प्रश्न० । रोगभेदे, ज्ञा० १ श्रु० १३ अ० । पा० । नि० चू० ।

सूलग्ग- शूलाग्र--न० । शूलकोटौ, प्रश्न० ३ आश्र० द्वार ।

सूलपाणि-शूलपाणि-पुं० । ईशानदेवे तस्य हस्तधृतशूलत्वात्, प्रश्ना० २ पद । अस्तिग्रामाभिधानसंनिवेशाद्बहिः शूलपाणिनामकयक्षायतनम् । स्था० ।

तद्वर्णनमाह—

'छद्मस्थकाले यदा किल भगवान् त्रिकचतुष्कचत्वरचतुर्मुखमहापथादिषु पट्टपटहप्रतिरवोद्घोषणापूर्वं यथाकाममुपहतसकलजनदारिद्र्यमनवच्छिन्नमब्दं यावन्महादानं दत्त्वा सदेवमनुजासुरपरिषदा परिवृतः कुण्डपुरान्निर्गत्य ज्ञातखण्डवने मार्गशीर्षकृष्णदशम्यामेककः प्रव्रज्य मनःपर्यायज्ञानमुत्पाद्याष्टौ मासान् विहृत्य मयूरकाभिधानसंनिवेशबहिःस्थानां दूयमानाभिधानानां पाषण्डिकानां सम्बन्धिन्येकस्मिन्नुटजे तदनुज्ञया वर्षावासमारभ्य अविधीयमानरक्षतया पशुभिरुपद्रूयमाणे उटजेऽप्रीतिकं कुर्वाणमाकलय्य कुटीरकनायकमुनिकुमारकं ततो वर्षाणामर्द्धमासे गतेऽ-

काल एव निर्गत्यास्थिकग्रामाभिधानसन्निवेशाद् बहिः शूलपाणिनामकयक्षायतने शेषं वर्षावासमारेभे, तत्र च यत्र रात्रौ शूलपाणिर्भगवतः क्षोभणाय झटिति टालिताट्टाल-कमट्टाट्टहासं मुञ्चन् लोकमुत्त्रासयामास तदा विनाश्यते स भगवान् देवेनेति भगवद्दासस्तेनां अनल्पाधृतिं जनितवान् पुनर्हस्तिपिशाचनागरूपैर्भगवतः क्षोभं कर्तुमशक्नुवन् शिरःकर्णनासादन्तनखाक्षिपृष्ठिवेदनाः प्राकृतपुरुषस्य प्रत्येकं प्राणापहारप्रवणाः सपदि सम्पादितवान्, तथापि प्रचण्ड-पवनाहतसुरगिरिशिखरमिवाविचलन्तं वर्द्धमानस्वामि-नमवलोक्य श्रान्तः सन्नसौ जिनपतिपादपद्मवन्दनपुरस्स-रमाचचक्षे—क्षमस्व क्षमाश्रमण ! इति, तथा सिद्धार्थाभि-धानो व्यन्तरदेवस्तत्प्रहारार्थमुद्धाव, बभाण च-अरे रे-शूलपाणे!अप्रार्थितप्रार्थक!हीनपुण्यचतुर्दशीक ! श्रीह्रीधृति-कीर्त्तिवर्जित ! दुरन्तप्रान्तलक्षण ! न जानासि सिद्धार्थरा-जपुत्रं पुत्रीयितनिखिलजगज्जीवं जीवितममशेषसुरासुर-नरेन्द्रनायकानामेनं च भवदपराधं यदि जानाति त्रि-दशपतिस्ततस्त्वां निर्विषयं करोतीति, श्रुत्वा चासौ भीतो द्विगुणतरं क्षमयति स्म, तथा सिद्धार्थश्च तस्य धर्ममच-कथत्, स चोपशान्तो भगवन्तं भक्तिभरनिर्भरमानसो गीतनृत्तोपदर्शनपूर्वकमपूपुजत्, लोकश्च चिन्तयाञ्चकार-देवार्यकं विनाश्येदानीं देवः क्रीडतीति, स्वामी देशो-नांश्चतुरो यामानतीव तेन परितापितः प्रभातसमये मुहूर्त-मात्रं निद्राप्रमादमुपगतवान् तत्रावसरे इति। स्था० १० ठा० ३ उ०।

सूला-शूला-स्त्री०। त्रिशूलिकायाम्,सूत्र०१श्रु० ५ अ० १उ०।

सूलाइय-शूलाचित-न०।शूलप्रोते. ज्ञा० १ श्रु० ६ अ०।औ०। सूत्र०। शूलारोपिते,यस्य गुदे प्रोता शूली वदने निर्गच्छति। दशा० १ अ०।

शूलायित-त्रि०। शूलसदृशे, आचरितशूलारूपभ्रुकुटितप-रिकरत्वात्। ज्ञा० १ श्रु० ६ अ०।

सूलाभिन्न-शूलाभिन्न-न०। मध्यविदारिते, स्था० ६ अ०।

सूलारोवण-शूलारोपण-न०।शूलिकाप्रोतने,सूत्र०१श्रु०८अ०।

सूलि-शूलिन्-पुं०। शिवे, पाइ० ना०।

सूलिया-शूलिका-स्त्री०। कीलकविशेषे, प्रश्न० १ आश्र० द्वार।

सूव-सूप-पुं०। (दालि) सूपे.उपा० १अ०।सू० प्र०। आचा०। पत्रशाके, सूत्र० १ श्रु० ४ अ० २ उ०।

सूवच्छेज-सूपच्छेद्य-न०। पत्रशाकच्छेदने, सूत्र० १ श्रु० ४ अ० २ उ०।

सूवणीय-सूपनीत-त्रि०। सुष्ठूपनीते, आचा० १ श्रु० ५ अ० २ उ०।

सूवविहिपरिमाण-सूपविधिपरिमाण-न०। दालिप्रकारपरि-माणे,उपा० १ अ०। ('आणंद' शब्दे २ भागे विधिरुक्तः।)

सूस-शुष-धा०। शोषणे, "रुषादीनां दीर्घः" ॥ ८। ४। २३६॥ इति धातोः स्वरस्य दीर्घः। सूसइ। शुष्यति। प्रा० ४ पाद।

सूसरघंटा-सुस्वरघण्टा-स्त्री०। सुस्वराभिधानायां घण्टा-याम्, रा०।

सूसव-सुश्रव-पुं०। कर्णसुखशब्दे, "सूसवो वायरो मा वा; निसं वा परिब्भसओ" आ० क० ४ अ०।

सूसास-सोल्लास-त्रि०। "ऊत्सोच्छ्वासे"॥ ८। १ ॥१५७॥ इति सोच्छ्वासशब्दे ओत ऊत्। सूसासो। उच्छ्वाससहिते, प्रा०।

सूहव-सुभग-त्रि०। "ऊत्सुभगमुशले वा" ॥ ८१। ११३ ॥ इति ह्रस्वस्य दीर्घः। "ऊत्वे दुर्भग-सुभगे वः" ॥ ८। १। ११२ ॥ अनयोरूत्वे गस्य वो भवति। सूहवो। सुभगः। स्त्रीभिः काम्यमाने, प्रा० १ पाद।

से-से-देशी-। अव्य०। प्रस्तुतपरामर्शे, जं०१ वक्ष०। मागधी-देशीप्रसिद्धो निपातः अथ शब्दार्थे, स च वाक्योपन्यासार्थः। प्रा०।ज्ञा०। उपन्यासे, उत्त० २ अ०। निश्चये, से नूनमिति। तन्नूनम्। उत्त० २ अ०। से इति मागधदेशीवचनः प्रथमा-न्तो निर्देशः। आचा० २ श्रु० १ चू० १ अ० १ उ०। से शब्द-स्तच्छब्दार्थे स च वाक्योपन्यासार्थः। आचा० १ श्रु० ६ अ० १ उ०। सूत्र०। उत्त०। आव०। औ०। दशा०। नि० चू०। सेशब्दो मागधदेशीप्रसिद्धो निपातस्तच्छब्दार्थे अथश-ब्दार्थे वा द्रष्टव्यः,स च वाक्योपन्यासार्थः। दशा० ४ अ०। निर्देशे, दशा० ५ अ०। सेशब्दो मागधदेशीप्रसिद्धोऽथशब्दा-र्थे। अथशब्दस्तु वाक्योपन्यासार्थः, परिप्रश्नार्थो वा, यदा, ह अथ प्रक्रियाप्रश्नानन्तर्यमङ्गलोपन्यासप्रतिवचनसमुच्चयेषु, भ० १ श० १ उ०। कथञ्चिद्भाविन्यर्थे, कथञ्चित्तस्येत्यर्थे,स्था० १० ठा० ३ उ०। भ०। नि०चू०। औ०। रा०। जं०। प्राकृत-त्वात्ते इति बहुवचनार्थः। यथा से इति। जं० १ वक्ष०। स इत्यात्मनिर्देशे, सोऽहमत्रमुपलब्धाऽनेकाप्कायसत्त्वस्वरूपान्तो ब्रवीमि। आचा० १ श्रु० १ अ० ३ उ०। "वेदंतदेतदो ङ-साम्भ्यां से—सिमौ" ॥ ८। ३। ८१॥ इदंतदेतदित्येतेषां स्थाने ङस आमित्येताभ्यां सह यथासंख्यं से—सिमादेशौ भवतः। तस्येत्यर्थे,अस्येत्यर्थे च। से सीलं। से गुणा। प्रा०।

सेअ-सिच्-धा०। क्षरणे, "सिचेः सिञ्च-सिम्पौ" ॥८।४।९६॥ सिञ्चतेरेतावादेशौ भवतः। सिञ्चइ। पक्षे। सेअइ। प्रा०।

सेइया-सेतिका-स्त्री०। द्वाभ्यां प्रसृतिभ्यां निष्पन्ने धान्यमान-विशेषे, तं०। ज्ञा०। औ०। स्था०। आचा०।

सेउ-सेतु-पुं०। जलोपरिनिबद्धे मार्गविशेषे, प्रश्न० १ आश्र० द्वार०। जं०। आ० चू०। रा०। स्था०। ज्ञा०। जी०। औ०। आलिबन्धे, औ०। आलवालपाल्याम्, ज्ञा० १ श्रु० १ अ०।

सेउगर-सेतुकर-त्रि०। सेतुं मार्गमापन्नानां निस्तारणोपायं करोति यः स सेतुकरः। स्था० ६ ठा० ३ उ०। मार्गप्रदर्शके, रा०। सूत्र०। ज्ञा०। औ०।

सेउक्खेत्त-सेतुक्षेत्र-न०। अरघट्टादिसेच्ये क्षेत्रे, आव० ६ अ०। यदरघट्टादिजलेन सिच्यते। ध० २ अधि०।

सेंटिय-सेण्टित-न०। सेण्टने, नासिकाशब्दविशेषकरणे, विशे०। प्रज्ञा०।

सेंधव-सैन्धव-न० । सिन्धुदेशजे लवणे , अश्वे च । पुं० । सूत्र० १ श्रु० ७ अ० ।

सेखरय-शेखरक-पुं० । शिरोविभूषणे, स्था० ५ ठा० १ उ० ।

सेज्जा-शय्या-स्त्री० । संस्तारके, संथा० । ( एतद्व्यक्तव्यता 'संथारग' शब्देऽस्मिन्नेव भागे उक्ता । ) ( एवंप्रकाराः शब्दाः 'सिज्जादि' शब्दप्रकरणे उक्ताः । )

सेडमासव-श्वेतसर्षप-पुं० । श्वेतवर्णे सर्षपभेदे, यान्यपि मधुरतृणफलानि मधुरतृणतन्दुलाः समयविषये सकलजगत्प्रसिद्ध एकः श्वेतसर्षपो भवति । ज्यो० १ पाहु० ।

सेडियग-सेटितक-न० । तृणभेदे, प्रज्ञा० १ पद ।

सेडिया-श्वेतिका-स्त्री० । खटिकायाम् , आचा० २ श्रु० १ चू० १ अ० ६ उ० । शुक्लमृत्तिकायाम् , दश० ५ अ० १ उ० ।

सेडी-सेडी-स्त्री० । लोमपक्षिभेदे, प्रज्ञा० १ पद ।

सेडीवह-सेडीविह-पुं० । लोमपक्षिभेदे, जी० १ प्रति० ।

सेडुय-सेटुक-पुं० । कर्पासे,सेडुओ कप्पासो रूयं उट्टियं रूयपडलं पिंजयं तमेव वलितं पलू भण्णति । नि० चू० ५ उ० । बृ० । कौशाम्बीनगरीवास्तव्यस्वनामख्याते विप्रे, आ० क० ४ अ० । ( तत्कथानकं 'कूणिक' शब्दे तृतीयभागे उक्तम् । )

सेढी-श्रेणि-स्त्री । पङ्क्तौ, अनु० । भ० । अङ्गुलप्रमाणे प्रतरक्षेत्रे यः श्रेणिः-राशिस्तत्र किलासंख्येयानि वर्गमूलानि तिष्ठन्तीति । अनु० ।

खेत्तओ असंखेज्जाओ सेढीओ पयरस्स असंखिज्जइभागो, तासि णं सेढीणं विक्खंभसूई अंगुलपढमवग्गमूलं बिइअवग्गमूलपडुप्पण्णं अहव णं अंगुलबिइअवग्गमूलघणपमाणमेत्ताओ सेढीओ ।

क्षेत्रतस्तु प्रतरासङ्ख्येयभागवर्त्यसङ्ख्येयश्रेणीनां ये प्रदेशास्तत्सङ्ख्यानि भवन्ति । ननु प्रतरासङ्ख्येयभागे असंख्या योजनकोट्योऽपि भवन्ति, तत्किमेतावत्यपि क्षेत्रे या नभःश्रेण्यो भवन्ति ता इह गृह्यन्ते ?, नेत्याह—' तासि णं सेढीणं विक्खंभसूई ' त्यादि, तासां श्रेणीनां विष्कम्भसूचिः-विस्तरश्रेणिर्ग्राह्येति शेषः । कियतीत्याह—' अंगुली ' त्यादि, अङ्गुलप्रमाणे प्रतरक्षेत्रे यः श्रेणिः—राशिस्तत्र किलासंख्येयानि वर्गमूलानि तिष्ठन्त्यतः प्रथमवर्गमूलं द्वितीयवर्गमूलेन प्रत्युत्पन्नं—गुणितं तथा च सति यावत्योऽत्र श्रेण्यो लब्धा एतावत्प्रमाणा श्रेणीनां विष्कम्भसूचिर्भवति; एतावत्य. श्रेण्योऽत्र गृह्यन्त इत्यर्थः, इदमुक्तं भवति-अङ्गुलप्रमाणे प्रतरक्षेत्रे किलासत्कल्पनया षट्पञ्चाशदधिके द्वे शते २५६, श्रेणीनां भवतस्तद्यथा-अत्र प्रथमवर्गमूलं षोडश १६ द्वितीयं चत्वारः ४ चतुर्भिः षोडश गुणिता जाताश्चतुःषष्टिः , एताश्चतुःषष्टिरपि सद्भावतोऽसंख्येयाः श्रेण्यो मन्तव्याः, एतावत्संख्या श्रेणीनां विस्तरसूचिरिह ग्राह्या । ' अहवा णं ' मित्यादि, णमिति वाक्यालङ्कारे, अथवा—अन्येन प्रकारेण प्रस्तुतोऽर्थ उच्यते इत्यर्थः, ' अहव ण ' त्ति क्वचित्पाठः, स चैवं व्याख्यायते-अथवा-नैव पूर्वोक्तः प्रकारोऽपि तु प्रकारान्तरेण प्रस्तुतोऽर्थोऽभिधीयते इति भावः, समुदितो वाऽयंशब्दोऽथवाशब्दस्यार्थे वर्तते, तदेव प्रकारान्तरमाह—'अंगुलबीयवग्गमूलघणे' त्यादि, अङ्गुलप्रमाणप्रतरक्षेत्रवर्तिश्रेणिराशेर्यद् द्वितीयवर्गमूलमनन्तरं चतुष्टयरूपं दर्शितं तस्य यो घनः—चतुःषष्टिलक्षणस्तत्प्रमाणाः—तत्संख्याः श्रेण्योऽत्र गृह्यन्त इति. प्ररूपणैव भिद्यते अर्थस्तु स एवेति , तदेवं कल्पनया चतुःषष्टिरूपाणां सद्भावतोऽसंख्येयानां श्रेणीनां यः प्रदेशराशिस्तावत्संख्यानि नारकाणां , बद्धवैक्रियाणि प्राप्यन्त इति । अनु० ।

श्रेणिप्ररूपणायाह—

सत्त सेढीओ पण्णत्ताओ. तं जहा—उज्जुआयया सेढी एगओवंका दुहतो वंका एगओ खुहा दुहओ खुहा चक्कवाला अद्धचक्कवाला । ( सू० ५८१ )

' सत्त सेढी ' त्यादि, श्रेणयः प्रदेशपङ्क्तयः ऋज्वी-सरला सा चासावायता च दीर्घा ऋज्वायता स्थापना(–)'एगओ वंका ' एकस्यां दिशि वक्रा । स्थापना(⌐)'दुहओ वंका' उभयतो वक्रा स्थापना( ⌐ ) 'एगओ खुहा' एकस्यां दिश्यङ्कुशाकारा(⌐) 'दुहओ खुहा'उभयतोऽङ्कुशाकारा(⌐)चक्रवाला वलयाकृतिः (०) अर्द्धचक्रवाला अर्द्धवलयाकारेति ( । ) एताश्चैकतो वक्रावालोकपर्यन्तप्रदेशापेक्षया संभाव्यन्ते । स्था० ७ ठा० ३ उ० ।

उज्जुआयताए सेढीए उववज्जमाणे एगसमइएणं विग्गहेणं उववज्जेज्जा , एगओ वंकाए सेढीए उववज्जमाणे दुसमइएणं विग्गहेणं उववज्जेज्जा, दुहओ वंकाए सेढीए उववज्जमाणे तिसमइएणं विग्गहेणं उववज्जेज्जा से तेणट्ठेणं गोयमा ! ०जाव उववज्जेज्जा ।

तत्र ' उज्जुआययाए ' त्ति यदा मरणस्थानापेक्षयोत्पत्तिस्थानं समश्रेण्यां भवति तदा ऋज्वायता श्रेणिर्भवति, तया च गच्छत एकसामयिकी गतिः स्यादित्यत उच्यते— ' एगसमइएणं ' मित्यादि, यदा पुनर्मरणस्थानादुत्पत्तिस्थानमेकप्रतरे विश्रेण्यां वर्त्तते तदैकतो वक्रा श्रेणिः स्यात् , समयद्वयेन चोत्पत्तिस्थानप्राप्तिः स्यादित्यत उच्यते-' एगओ वंकाए सेढीए उववज्जमाणे दुसमइएणं विग्गहेणं ' मित्यादि , यदा तु मरणस्थानादुत्पत्तिस्थानमधस्तने उपरितने वा प्रतरे विश्रेण्यां स्यात्तदा द्विवक्रा श्रेणिः स्यात् समयत्रयेण चोत्पत्तिस्थानावाप्तिः स्यादित्यत उच्यते-'दुहओ वंकाए ' इत्यादि । भ० ३४ श० १ उ० ।

सेढीओ णं भंते ! दव्वट्ठयाए किं संखेज्जाओ असंखेज्जाओ अणंताओ ?, गोयमा ! नो संखेज्जाओ नो असंखेज्जाओ,अणंताओ । पाईणपडीणायताओ णं भंते ! सेढी–

१ भगवतीमध्ये ' खहा ' शब्द. ।

ओ दव्वट्ठयाए किं संखेज्जाओ एवं चेव ३, एवं दाहिणुत्तरायताओ वि एवं उड्डमहायताओ वि । लोगागाससेढीओ णं भंते ! दव्वट्ठयाए किं संखेज्जाओ असंखेज्जाओ अणंताओ ?, गोयमा ! नो संखेज्जाओ असंखेज्जाओ नो अणंताओ, पाईणपडीणायताओ णं भंते ! लोगागाससेढीओ दव्वट्ठयाए किं संखेज्जाओ एवं चेव, एवं दाहिणुत्तरायताओ वि, एवं उड्डमहायताओ वि । अलोयागाससेढीओ णं भंते ! दव्वट्ठयाए किं संखेज्जाओ, असंखेज्जाओ अणंताओ ?, गोयमा ! नो संखेज्जाओ, नो असंखेज्जाओ, अणंताओ । एवं पाईणपडीणायययाओ वि एवं दाहिणुत्तरायययाओ वि एवं उड्डमहायताओ वि । सेढीओ णं भंते ! पएसट्ठयाए किं संखेज्जाओ जहा दव्वट्ठयाए तहा पएसट्ठयाए वि० जाव उड्डमहायययाओ वि सव्वाओ अणंताओ । लोयागाससेढीओ णं भंते ! पएसट्ठ० किं संखेज्जाओ पुच्छा गोयमा ! सिय संखे० सिय असं० नो, अणंताओ, एवं पाईणपडीणायताओ दाहिणुत्तरायताओ वि एवं चेव उड्डमहायताओ वि नो संखेज्जाओ असंखे० नो अणंताओ ॥ अलोगागाससेढीओ णं भंते ! पएसट्ठयाए पुच्छा, गोयमा ! सिय संखेज्जाओ सिय असंखे० सिय अणंताओ पाईणपडीणायययाओ णं भंते ! अलोया पुच्छा, गोयमा ! नो संखेज्जाओ नो असंखेज्जाओ अणंताओ, एवं दाहिणुत्तरायताओ वि, उड्डमहायताओ पुच्छा, गोयमा ! सिय संखेज्जाओ सिय असंखेज्जाओ सिय अणंताओ । ( सू० ७२८ ) ।

'सेढी' त्यादि, श्रेणीशब्देन च यद्यपि पङ्क्तिमात्रमुच्यते तथाऽपीहाकाशप्रदेशपङ्क्तयः श्रेणयो ग्राह्याः, तत्र श्रेणयोऽविवक्षितलोकालोकसम्बन्धेन सामान्याः १ तथा ता एव पूर्वापरायताः २ दक्षिणोत्तरायताः ३ ऊर्ध्वाधआयताः ४ एवं लोकसम्बन्धिन्योऽलोकसम्बन्धिन्यश्चेति, तत्र सामान्ये श्रेणीप्रश्ने 'अणंताओ' त्ति सामान्याकाशास्तिकायस्य श्रेणीनां विवक्षितत्वादनन्तास्ताः, लोकाकाशश्रेणीप्रश्ने त्वसङ्ख्याता एवं ताः, असङ्ख्यातप्रदेशात्मकत्वाल्लोकाकाशस्य, अलोकाकाशश्रेणीप्रश्ने पुनरनन्तास्ताः, अनन्तप्रदेशात्मकत्वादलोकाकाशस्य । तथा 'लोगागाससेढीओ णं भंते ! पएसट्ठयाए' इत्यादौ 'सिय संखेज्जाओ सिय असंखेज्जाओ' त्ति अस्येय चूर्णिकारव्याख्या—लोकवृत्ताभिष्क्रान्तस्यालोके प्रविष्टस्य दन्तकस्य याः श्रेणयस्ता द्विव्यादिप्रदेशा अपि सम्भवन्ति तेन ताः सङ्ख्यातप्रदेशा लभ्यन्ते शेषा असङ्ख्यातप्रदेशा लभ्यन्त इति, टीकाकारस्तु साक्षेपपरिहारं चेह प्राह—"परिमंडलं जहन्नं, भणियं कडजुम्मवाहियं लोए । तिरियायतसेढीणं, संखेज्जपएसिया किह णु ? ॥ १ ॥ दो दो दिसासु एक्क-क्कओ य विदिसासु एस कडजुम्मं । पढमपरिमंडलाओ, वुड्ढी किर जाव लोगंतो ॥ २ ॥" इत्याक्षेपः, परिहारस्तु—"अट्ठ संघा पत्तरए, एवं लोगस्स न परिमंडलया । वट्टालेहए तओ, वुड्ढी कडजुम्मिया जुत्ता ॥ ३ ॥"

एवं च लोकवृत्तपर्यन्तश्रेणयः सङ्ख्यातप्रदेशात्मिका भवन्तीति 'नो अणंताओ' त्ति लोकप्रदेशानामनन्तत्वाभावात्, 'उड्डमहाययाओ' 'नो संखेज्जाओ असंखेज्जाओ' त्ति यतस्तासामुच्छ्रितानामूर्ध्वलोकान्तादधोलोकान्तेऽधोकान्ताद्दूर्ध्वलोकान्ते प्रतिघातोऽतस्ता असंख्यातप्रदेशा एवेति, या अप्यधोलोककोणतो ब्रह्मलोकतिर्यग्मध्यप्रान्ताद्वोत्तिष्ठन्ते ता अपि न सङ्ख्यातप्रदेशा लभ्यन्ते, अत एव सूत्रवचनादिति ।

पू०
उ० | 00000 / 0000000 / 000000000000 / 000000000000 / 000000000000 / 000000000000 / 0000000 / 00000 | द०
प०

'अलोगागाससेढीओ णं भंते ! पएसट्ठयाए' इत्यादि, 'सिय संखेज्जाओ सिय असंखेज्जाओ' त्ति यदुक्तं तत्सर्वं क्षुल्लकप्रतरप्रत्यासन्ना ऊर्ध्वाधआयता अधोलोकश्रेणीराश्रित्येत्यवसेयं, ता हि आदिमाः संख्यातप्रदेशास्ततोऽसंख्यातप्रदेशास्ततः परं त्वनन्तप्रदेशाः, तिर्यगायतास्त्वलोकश्रेणयः प्रदेशतोऽनन्तता एवेति ।

सेढीओ णं भंते ! किं साइयाओ सपज्जवसियाओ—१, साईयाओ अपज्जवसि० २ अणादीयाओ सपज्जवसियाओ ३ अणादीयाओ अप० ४, ? गोयमा ! नो सादीयाओ सप० नो सादीयाओ अप० णो अणादीयाओ सप० अणादीयाओ अप० एवं ०जाव उड्डमहायताओ, लोयागाससेढीयाओ णं भंते ! किं सादीयाओ सप० पुच्छा, गोयमा ! सादीयाओ सपज्जवसियाओ नो सादीयाओ अपज्जवसियाओ नो अणादीयाओ सपज्ज०नो अणादीयाओ अपज्ज० एवं ०जाव उड्डमहायताओ । अलोयागाससेढीओ णं भंते ! किं सादीयाओ सप० पुच्छा, गोयमा ! सिय साईयाओ सपज्जवसियाओ १ सिय साईयाओ अपज्जवसियाओ २ सिय अणादीयाओ सपज्जवसियाओ ३ सिय अणाईयाओ अपज्जवसियाओ ४, पाईणपडीणायययाओ दाहिणुत्तरायताओ य, एवं चेव, नवरं नो सादीयाओ सपज्जवसियाओ सिय साईयाओ अपज्जवसियाओ सेसं तं चेव, उड्डमहायताओ ०जाव ओहियाओ तहेव चउभंगो । सेढीओ णं भंते ! दव्वट्ठयाए किं कडजुम्माओ तेओयाओ ? पुच्छा, गोयमा ! कडजुम्माओ नो तेओयाओ नो दावरजुम्माओ नो कलियोगाओ एवं ०जाव उड्डमहायताओ, लोगागाससेढीओ एवं चेव, एवं अलोगागाससेढीओ वि । सेढीओ णं भंते ! पएसट्ठाए किं कडजुम्माओ पुच्छा, एवं चेव एवं ०जाव उड्डमहायताओ । लोगागाससेढीओ णं भंते ! पएसट्ठयाए पुच्छा, गोयमा ! सिय कडजुम्माओ नो तेओयाओ सिय दावरजुम्माओ नो कलिओगाओ

१ अत्र दीर्घत्वं चिन्त्यम् ।

एवं पाईणपडीणायताओ वि दाहिणुत्तरायताओ वि । उड्ढमहायताओ णं पुच्छा, गोयमा ! कडजुम्माओ, नो तेओगाओ नो दावरजुम्माओ नो कलियोगाओ । अलोगागाससेढीओ णं भंते ! पएसट्ठयाए पुच्छा, गोयमा ! सिय कडजुम्माओ ०जाव सिय कलिओगाओ, एवं पाईणपडीणायताओ वि एवं दाहिणुत्तरायताओ वि, उड्ढमहायताओ वि एवं चेव, नवरं नो कलिओगाओ सेसं तं चेव । ( सू० ७२९ ) कति णं भंते ! सेढीओ पण्ण०?, गोयमा! सत्त सेढीओ पण्णत्ताओ, तं जहा–उज्जुआयता एगओ वंका दुहओ वंका एगओ खहा दुहओ खहा चक्कवाला अद्धचक्कवाला । परमाणुपोग्गलाणं भंते ! किं अणुसेढिं गती पवत्तति विसेढिं गती पवत्तति?, गोयमा ! अणुसेढिं गती पवत्तति नो विसेढिं गती पवत्तति । दुपएसियाणं भंते ! खंधाणं अणुसेढिं गती पवत्तति विसेढिं गती पवत्तति एवं चेव , एवं ०जाव अणंतपएसियाणं खंधाणं । नेरइयाणं भंते ! किं अणुसेढिं गती पवत्तति विसेढिं गती पवत्तति एवं चेव, एवं ०जाव वेमाणियाणं । ( सू० ७३० )

'सेढीओ णं भंते ! किं साइयाओ' इत्यादिप्रश्नः, इह च श्रेणयोऽविशेषितत्वाद्या लोके चालोके च तासां सर्वासां ग्रहणं, सर्वग्रहणाच्च ता अनादिका अपर्यवसिताश्चेत्येक एव भङ्गकोऽनुमन्यते शेषभङ्गकत्रयस्य तु प्रतिषेधः । 'लोगागाससेढीओ णं' मित्यादौ तु 'साइयाओ सपज्जवसियाओ' इत्येको भङ्गकः सर्वश्रेणीभेदेष्वनुमन्यते, शेषाणां तु निषेधः, लोकाकाशस्य परिमितत्वादिति । 'अलोगागाससेढी' त्यादौ 'सिय साइयाओ सपज्जवसियाओ' त्ति प्रथमो भङ्गकः क्षुल्लकप्रतरप्रत्यासन्नां ऊर्ध्वायतश्रेणीरधिकृत्यावसेयः,'सिय साइयाओ अपज्जवसियाओ' त्ति द्वितीयः, स च लोकान्तादधस्तादारभ्य, सर्वतोऽवसेयः 'सिय अणाइयाओ सपज्जवसियाओ' त्ति तृतीयः, स च लोकान्तसन्निधौ श्रेणीनामन्तस्य विवक्षणात् , 'सिय अणाइयाओ अपज्जवसियाओ' त्ति चतुर्थः, स च लोकं परिहृत्य याः श्रेणयस्ता अपेक्षतेति । 'पाईणपडीणाययाओ' इत्यादौ 'नो साइयाओ सपज्जवसियाओ' त्ति अलोके तिर्यक्श्रेणीनां सादित्वेऽपि सपर्यवसितत्वस्याभावान्न प्रथमो भङ्गः, शेषास्तु त्रयः संभवन्त्यत एवाह–'सिय साइयाओ' इत्यादि । 'सेढीओ णं भंते ! दव्वट्ठयाए किं कडजुम्माओ ?' इत्यादि प्रश्नः, उत्तरं तु–'कडजुम्माओ' त्ति, कथं ?, वस्तुस्वभावात् , एवं सर्वा अपि, यः पुनर्लोकालोकश्रेणीषु प्रदेशार्थतया विशेषोऽसावुच्यते–तत्र 'लोगागाससेढीओ णं भंते ! पएसट्ठयाए' इत्यादौ स्यात् कृतयुग्मा अपि स्यात् द्वापरयुग्मा इत्येतदेवं भावनीयं–रुचकाद्धोदारभ्य यत्पूर्वं दक्षिणं वा लोकार्द्धं तद्विस्तरेण तुल्यमतः पूर्वापरश्रेण्यो दक्षिणोत्तरश्रेणयश्च समसंख्यप्रदेशाः, ताश्च काश्चित् कृतयुग्माः काश्चिद् द्वापरयुग्माश्च भवन्ति न पुनस्त्र्योजप्रदेशाः कल्योजप्रदेशा वा, तथाहि–असद्भावस्थापनया दक्षिणपूर्वाद् रुचकप्रदेशात्पूर्वतो यल्लोकश्रेण्यर्द्धं तत्प्रदेशशतमानं भवति यच्चापरदक्षिणाद् रुचकप्रदेशादपरतो लोकश्रेण्यर्द्धं तदपि प्रदेशशतमानं, ततश्च शतद्वयस्य चतुष्कापहारे पूर्वापरायतलोकश्रेण्याः कृतयुग्मता भवति, तथा दक्षिणपूर्वाद् रुचकप्रदेशाद्दक्षिणो योऽन्यः प्रदेशस्तत आरभ्य पूर्वतो यल्लोकश्रेण्यर्द्धं तन्नवनवतिप्रदेशमानं, यच्चापरदक्षिणायताद् रुचकप्रदेशाद्दक्षिणो योऽन्यः प्रदेशस्तत आरभ्यापरतो लोकश्रेण्यर्द्धं तदपि च नवनवतिप्रदेशमानं, ततश्च द्वयोर्नवनवत्योर्मीलने चतुष्कापहारे च पूर्वापरायतलोकश्रेण्या द्वापरयुग्मता भवति, एवमन्यास्वपि लोकश्रेणीषु भावना कार्या, इह चेयं संग्रहगाथा–"तिरियाययाउ कडबा-यराउ लोगस्स संखऽसंखा वा । सेढीओ कडजुम्मा , उड्ढमहेआययमसंखा ॥ १ ॥" इति ( तिर्यगायताः कृतयुग्माः लोकस्य संख्याता असंख्याता वा । श्रेणयः कृतयुग्माः ऊर्ध्वाधआयताः असंख्याताः ॥ १ ॥ ) तथा 'अलोगागाससेढीओ णं भंते ! पएसे' त्यादौ 'सिय कडजुम्माओ' त्ति याः क्षुल्लकप्रतरद्वयसमीपवर्तिरधोनतयोत्थिता याश्च लोकमस्पृशन्त्यः स्थितास्ता वस्तुस्वभावात्कृतयुग्माः, यावत्करणात्–'सिय तेओयाओ सिय दावरजुम्माओ' त्ति दृश्यं, तत्र च याः क्षुल्लकप्रतरद्वयस्याधस्तनादुपरितनाद्वा प्रतरादुत्थितास्तास्त्र्योजाः, यतः क्षुल्लकप्रतरद्वयस्याध उपरि च प्रदेशतो लोकस्य वृद्धिभावनालोकस्य प्रदेशत एव हानिभावादेकैकस्य प्रदेशस्यालोकश्रेणिभ्योऽपगमो भवतीति, एवं तदनन्तराभ्यामुत्थिता द्वापरयुग्माः, 'सिय कलिओगाओ' त्ति तदनन्तराभ्यामेवोत्थिताः कल्योजाः, एवं पुनः पुनस्ता एव यथासम्भवं वाच्या इति । 'उड्ढाययाण' मित्यादि, इह क्षुल्लकप्रतरद्वयमानेन या उत्थिता ऊर्द्ध्वायतास्ता द्वापरयुग्माः तत ऊर्द्ध्वमधश्चैकैकप्रदेशवृद्ध्या कृतयुग्माः काश्चिदेकप्रदेशवृद्ध्याऽन्यत्र वृद्ध्यभावेन त्र्योजाः, कल्योजास्त्विह न संभवन्ति वस्तुस्वभावात् , एतच्च भूमौ लोकमालिख्य केदाराकारप्रदेशवृद्धिमन्तं ततः सर्वं भावनीयमिति । अथ प्रकारान्तरेण श्रेणीप्ररूपणायाह–'कइ ण' मित्यादि, श्रेणयः–प्रदेशपङ्क्तयो जीवपुद्गलसञ्चरणविशेषिताः तत्र 'उज्जुयायत' त्ति ऋजुश्चासावायता चेति ऋज्वायता यया जीवादय ऊर्द्ध्वलोकादेरधोलोकादौ ऋजुतया यान्तीति, 'एगओ वंक' त्ति 'एकत' एकस्यां दिशि 'वङ्का' वक्रा यया जीवपुद्गला ऋजु गत्वा वक्रं कुर्वन्ति श्रेण्यन्तरेण यान्तीति, स्थापना चैवम्–(⌐) 'दुहओ वंक' त्ति यस्यां वारद्वयं वक्रं कुर्वन्ति सा द्विधावक्रा, इयं चोर्ध्वक्षेत्रादाग्नेयदिशोऽधःक्षेत्रे वायव्यदिशि गत्वा य उत्पद्यते तस्य भवति, तथाहि–प्रथमसमये आग्नेय्यास्तिर्यग् नैर्ऋत्यां याति ततस्तिर्यगेव वायव्यां ततोऽधो वायव्यामेवेति, त्रिसमयेयं त्रसनाड्या मध्ये बहिर्वा भवतीति, 'एगओ खह' त्ति यया जीवः पुद्गलो वा नाड्या वामपार्श्वादेस्तां प्रविष्टस्तयैव गत्वा पुनस्तद्वामपार्श्वादावुत्पद्यते सा एकतः खा, एकस्यां दिशि वामादिपार्श्वलक्षणायां खस्य–आकाशस्य लोकनाडीव्यतिरिक्तलक्षणस्य

भाष्यादीति, इयं च द्वित्रिचतुर्वक्रोपेताऽपि तत्रविशेषाभि-
धानि भेदेनोक्ता, स्थापना चेयम्—[ ] दुहओ खह 'त्ति ना-
डया वामपार्श्वादिनाड्यां प्रविश्य तयैव गत्वाऽस्या एव द-
क्षिणपार्श्वादौ यथोत्पद्यते सा द्विधा खा, नाड्या बहिर्भूत-
योर्वामदक्षिणपार्श्वलक्षणयोर्द्वयोराकाशयोस्तया स्पृष्टत्वादि-
ति । स्थापना चेयम्—[ ] 'चक्कवाले'त्ति चक्रवाले-मण्डलं,
ततश्च यया मण्डलेन परिभ्रम्य परमाण्वादिरुत्पद्यते सा
चक्रवाला, सा चैवम्—० 'अद्धचक्कवाले'त्ति चक्रवाला-
र्द्धरूपा, सा चैवम्—[ ] । अनन्तरं श्रेण्य उक्ताः, अ-
थ ता एवाधिकृत्य परमाण्वादिगतिप्रज्ञापनायाह—' परमा-
णुपोग्गलाणं भंते !' इत्यादि, 'अणुसेढिं' त्ति अनुकूला-पूर्वा-
दिदिगभिमुखा श्रेणिर्यत्र तदनुश्रेणि, तद्यथा भवत्येवं गतिः
प्रवर्त्तते, 'विसेढिं' त्ति विरुद्धा विदिगाश्रिता श्रेणी यत्र
तद्विश्रेणि, इदमपि क्रियाविशेषणम् । भ० २५ श० ३ उ० ।
आ० म० । ज० । रा० । श्रेणयो भवनपतीनां परिमाणावधार-
णाय द्रष्टव्याः । पं० सं० २ द्वार । जं० । नं० । आ० म० ।
सम्प्रति श्रेणिनिरूपणायाह—' तहीहपएसा सेढि ' त्ति-
स एव घनीकृतलोकः सप्तरज्जुप्रमाणो दीर्घो दैर्घ्ये यस्याः
सा तद्दीर्घा एकप्रदेशेति वीप्साप्रधानत्वान्निर्देशस्य एकै-
काकाशप्रदेशा शूचिः श्रेणिरित्युच्यते । एतेन च यत्र कु-
त्राप्यविशेषितायाः श्रेणेः सामान्येन ग्रहणं तत्र सर्वत्रास्य
घनीकृतलोकस्य सेयमित्यवसेयमेव सप्तरज्जुप्रमाणा एकप्रदे-
शिकी श्रेणिर्ग्राह्या । कर्म० ४ कर्म० । क० प्र० । पं० सं० ।
अनन्तरं मितीनप्रमाणाङ्गुलेन यद्योजनं तेन योजनेना-
संख्येययोजनकोटीकोटचः संवर्त्तितसमचतुरस्रीकृतलोकस्यै-
का श्रेणिः । अनु० । ( ' किइकम्मइ ' शब्दे तृतीयभागे ४१०
पृष्ठे संयमश्रेणयः । )

अथ श्रेणिप्ररूपणामाह-

अविभागपलिच्छेया, ठाणंतरकंडए य छट्ठाणा ।
हिट्ठा पज्जवसाणे, वड्ढी अप्पाबहुं जीवा ॥ ८३३ ॥

अविभागपरिच्छेदप्ररूपणा स्थानान्तरप्ररूपणा कण्डकप्र-
रूपणा षट्स्थानप्ररूपणा अधःप्ररूपणा पर्यवसानप्ररू-
पणा वृद्धिप्ररूपणा अल्पबहुत्वप्ररूपणा जीवप्ररूपणा चा-
मूनि प्रतिद्वाराणि ।

तद्यथा—

आलावगणणविरहिय-मविरहियं फासणा परूवणया ।
गणणपयसेढिअक्खर- भागअप्पाबहुं समया ॥ ८३४ ॥

आलापकप्ररूपणा गणनाप्ररूपणा विरहितप्ररूपणा अ-
विरहितप्ररूपणा श्रेण्यपहारप्ररूपणा अल्पबहुत्वप्ररूपणा
समयप्ररूपणा चेति द्वारगाथाद्वयम् । वृ० ३ उ० ।

सेढिआयय-श्रेण्यायत-न० । प्रदेशिकश्रेणिरूपे आयते, भ०
२५ श० ३ उ० ।

सेढिचारण-श्रेणिचारण-पुं० । चतुर्योजनशतोच्छ्रितस्य नि-
षधस्य नीलस्य वा अन्यस्य वा श्रेणिमुपर्यधो वा
पादाभ्यां प्रत्यक्षपूर्वकमुत्तरणावतरणनिपुणे चारणभेदे, प्रव०
६८ द्वार । ग० ।

सेढितव-श्रेणितपस्-न० । श्रेणिः—पङ्क्तिस्तदुपलक्षितं तपः
श्रेणितपः । चतुर्थादिक्रमेण क्रियमाणे षण्मासान्ते तपोभेदे,
उत्त० ३० अ० । ( 'अणसण ' शब्दे प्रथमभागे ३०३ पृष्ठे द-
र्शितमेतत् । )

सेढिसय-श्रेणिशत-न० । ऋज्वायतादिश्रेणिप्रधाने शते,
भ० ३४ श० १ उ० ।

सेण-श्येन-पुं० । पक्षिविशेषे, सूत्र० १ श्रु० २ अ० १ उ० ।
प्रश्न० । नगरानगरीवास्तव्यस्य वस्तुश्रेष्ठिनः स्वनामख्याते
पुत्रे, ध० २ अधि० । काञ्चीनगरवास्तव्ये स्वनामख्याते
श्रेष्ठिनि, ध० र० ।

श्येनश्रेष्ठिकथा चेयम्—

इह अत्थि पुरी कंची—कंचणचित्तइयचेइहरकलिया ।
तत्थ य सेणो सिट्ठी, कुवलयमाला पिया तस्स ॥ १ ॥
ताणं च तिन्नि पुत्ता, सिद्धिगिहे मासखमणपारणए ।
भिक्खत्थमणुपविट्ठो, कयावि साहू चउन्नाणी ॥ २ ॥
गहिउं सत्तुगथालं, सिट्ठी उट्ठइ झत्ति से दाउं ।
संसत्ता सुहुमजिएहिं, मम न कप्पंति भणइ मुणी ॥ ३ ॥
को पच्चओ त्ति वुत्ते—मि सिट्ठिणा दंसए मुणी तस्स ।
तव्वन्नजिए उवर-त्त फुंभदायमउवाएण ॥ ४ ॥
तो तइयदिवसदहियं-मि होइए दंसए तहव जिए ।
अह सिट्ठी से ढोयइ, मोयगाणं भरियथालं ॥ ५ ॥
विसमोयगा इमे, मुणि-कहिए स भणइ कहं, मुणी आह ।
जा इह लग्गइ सा मर-इ मच्छिया, पिच्छ, तणु सिट्ठी ॥ ६ ॥
तो सो विम्हियहियओ, जंपइ विसदायगं कहसु मज्झ ।
पच्चाह साहुपवरो, जो कम्मयरो मया कज्ज ॥ ७ ॥
किं तीइ कयमिमं, इय पुट्ठे साहू भणइ जह तुमए ।
सकुडुंबेण वि अमुगे, अवराहे तज्जिया सा उ ॥ ८ ॥
तो तीए तुम्ह कए, विरुज्झमा मोयगा इमे विहिया ।
तह अत्तणो निमित्तं, विसरहिया मोयगा तुज्झ ॥ ९ ॥
तो अइछुहाइयाए, संभमभणाइ मोयगा तीए ।
विससंजुत्ताभुत्ता, पंचत्तं तक्खणा पत्ता ॥ १० ॥
विसमोयसव्वज्जयं इह, थाले पुण मोयगाण दुगमेव ।
सेसा सव्वे सविसा, तो मज्झ इमे न कप्पंति ॥ ११ ॥
अह कहवि इमे तुमए, सकुडुंबेणावि भक्खिया हुंता ।
तो पावंतो मरणं, तमस्सरणो धम्मपरिमुक्को ॥ १२ ॥
तत्तो सेणो पुच्छइ, धम्मं पत्तो मुणी उ सट्ठाणं ।
भिक्खगएहिं धम्मो, न कहिज्जइ इय भणेऊण ॥ १३ ॥
अह मज्झण्हे सिट्ठी, सकुडुंबो गंतु साहुमूलंमि ।
पणमिय पुच्छइ धम्मं, एवं स कहइ साहू वि ॥ १४ ॥
जह सुरकरी करीसुं, अमरेसु हरी गिरिसु कणयगिरी ।
तह धम्मेसु पहाणो, दाणाई चउह जिणधम्मो ॥ १५ ॥
तत्थ वि सुनिकाइयक—समधम्मजलहरसमो तवो पवरो ।
तत्थ वि य विसेसिज्जइ, सज्झाओ जोणिमे भणियं ॥ १६ ॥
कम्ममसंखिज्जभवं, खवेइ अणुसमयमेव आउत्तो ।
अन्नयरंमि वि जोगे, सज्झायंमि य विसेसेण ॥ १७ ॥
बारसविहंमि वि तवे, सब्भितरबाहिरे कुसलदिट्ठे ।
नवि अत्थि नवि य होही, सज्झायसमं तवोकम्मं ॥ १८ ॥

अन्नो—

सज्झाएण पसत्थं, झाणं जाणइ य सव्वपरमत्थं ।
सज्झाए वट्टंतो, खणे खणे जाइ वेरग्गं ॥ १६ ॥
उड्ढमह तिरियनरए, जोइसवेमाणिया य सिद्धी य ।
सव्वो लोगालोगो, सज्झायविउस्स पच्चक्खो ॥ २० ॥
इय सोउं तुट्ठमणो, सेणो सम्मं गहित्तु गिहिधम्मं ।
सज्झायभिग्गहजुयं, नमिउं च मुणिं गओ सगिहं ॥ २१ ॥
तो धम्मकम्मनिरए, सज्झायपरे सया वि सिट्ठिम्मि ।
वड्ढियविहवं पसरिय-पुत्तपुत्ताइसंताणं ॥२२॥
बहुयाओ बहुयाओ, जेहा तहा करगरंति अन्नुन्नं ।
गलियसिणेहा सव्वय-णाओ ण लहंति पुत्ता वि ॥ २३ ॥
से कलहेन ददट्ठुं, सिट्ठी भिन्नं करेइ तो ते उ ।
मग्गंति मूलगेहं, तयंमि सिट्ठी पयच्छेइ ॥ २४ ॥
*अह सो पियाइ वुत्तो, इयिसजुयं नियघरं पि पुत्ताण ।*
दाउं संपइ कह ते, होहिसि तो भणइ इय सिट्ठी ॥२५॥
जस्स मणआलवाले, वट्टइ जिणनाहधम्मकप्पतरू ।
भवणेण धणेण परेण, वा वि का तस्स किर गणणा ॥ २६ ॥
सा पुण तं पइ जंपइ, संपइ भिक्खं भमसु गहियवयं ।
तह निवससु सुसाणे, देवउले सुन्नगेहे वा ॥ २७ ॥
स भणइ हवसु धीरा, इमं पि काहं कमेण नणु सुयणु ।
दंसमि ताव इहलो-इयं पि धम्मप्पभावं ते ॥ २८ ॥
इय वुत्तु झत्ति नियमि—त्त मंतिगेहंमि गंतु साहेइ ।
सव्वं कुडुबवत्तं, तप्पुरओ मग्गइ गिहं पि ॥ २६ ॥
मंती वि भणइ मह गिह-मेगं अत्थि त्ति मुग्गइपविट्ठं ।
किंतु सदोसं न कया, वि कोइ निवसेइ तं गिण्ह ॥ ३० ॥
जइ पुण धम्मपभाव-ण पभविही वंतरो न तुह किंचि ।
सो तयणु सउणगंठिं, बंधिय पत्तो गिहे तम्मि ॥३१॥
निस्सीहियं करेउं, अणुजाणाविय गओ गिहस्संतो ।
पडिक्कमिऊण य इरियं, एवं च करेइ सज्झायं ॥३२॥

तथाहि—

गयमेअज्ज महामुणि-खंदगसीसाइ साहुचरियाइं ।
सुमरंतो कह कुप्पसि, इत्तियमित्ते वरं जीव ! ॥ ३३ ॥
पिच्छसु पाणविणासे, वि नेव कुप्पंति जे महासत्ता ।
तुज्झ पुण हीणसत्त-स्स वयणमित्ते वि एस खमा ॥ ३४ ॥
रे जीव ! सुह दुहेसु, निमित्तमित्तं परो जियाणं ति ।
सकयफलं भुंजंतो, कीस मुहा कुप्पसि परस्स ॥३५॥
हा हा मोहविमूढा, विहवे य घरे य मुच्छिया जीवा ।
निहणंति पुत्तमित्ते, भमंति तो चउगइभवम्मि ॥३६॥
एवं सो सज्झायं, करेइ जा जामिणीइ जामदुगं ।
ता वंतरेण सुणिउं, पहिट्ठचित्तेण इय भणियं ॥ ३७ ॥
मह भवजलहिम्मि निम-ज्जियस्स पोयाइयं तए साहु ।
सो हं अमरो एवं, गेहं उव्वासियं जेण ॥ ३८ ॥
तो कहइ सेणपुट्ठो, स वंतरो भद्द ! एयगेहस्स ।
अहमासि पुरा सामी, अहेसि पुत्ता दुवे मज्झ ॥ ३६ ॥
तेसु लहू अइदुट्ठो, दिसं सव्वं पि तस्स गिहसारं ।
दाऊण किंपि मए, निसागिहे ठाविओ जिट्ठो ॥ ४० ॥
तो कहिउं रायउले, तेणं मारविओ अहं सहसा ।
लहुभायरं धराविय, गेहमिणं अप्पणा गहियं ॥ ४१ ॥
लहुबंधू सुत्तीए, मओ अहं इत्थ वंतरो जाओ ।
जिट्ठसुयविलसिरमिणं, नायं मे नियथनाणेण ॥ ४२ ॥
तत्तो कुविएण मए, जिट्ठसुओ विहणिओ सपरिवारो ।
अन्नो वि वसइ जो इह, रयणीइ तयं हणामि धुवं ॥ ४३ ॥
संपइ तुह सज्झायं, सोउं बुद्धो विमुक्कवइरो य ।
तं मज्झ गुरु तो तुह, सन्निहाणमिणं गिहं दिन्नं ॥ ४४ ॥
निहिठाणं च कहेउं, खणेण अमरो अदंसणी हुओ ।
सिट्ठी वि इमं गोसे, साहइ निवमंतिमाईणं ॥ ४५ ॥
तो विम्हिओ नरिंदो, तुट्ठा वरसचिवसयणपमुहजणा ।
पुत्ता उवसंतप्पा, जाया जाया वि धम्मपरा ॥ ४६ ॥
जियअतं विऊसेणो, सेणो वि चिरं करेति गिहिधम्मं ।
गहिऊण य पव्वज्जं, पत्तो सासयपयं कमसो ॥ ४७ ॥

श्येनः सदैवं स्फुटशुद्धभावः,
स्वाध्यायनिष्ठोऽजनि निष्ठितार्थः ।
विवेकपीयूषमयूखवार्द्धौ,
तदत्र सन्तः सततं यतध्वम् ॥ ४८ ॥

इति श्येनश्रेष्ठिकथा । ध० र० २ अधि० ३ लक्ष० ।

सेणंग–सेनाङ्ग–न० । हस्त्यश्वरथपदातिलक्षणे सेनाङ्गे, ज्ञा० १ श्रु० १८ अ० ।

सेणग–श्येनक–पुं० । पक्षिविशेषे, सं० प्र० ४ पाहु० । सू० प्र० ।

सेनक–पुं० । प्रत्यन्तनगरराजस्य जितशत्रोरमात्यपुत्रे, आ० क० ४ अ० । आ० म० । कूणिकमहाराजस्य पूर्वभवजीवे, आ० क० ४ अ० । ( एतत्कथा 'कूणिक' शब्दे तृतीयभागे ६२६ पृष्ठे उक्ता । )

सेणा–सेना–स्त्री० । चतुरङ्गकटकसमूहे, उत्त० ३० अ० । हस्त्यश्वरथपदातिसन्नाहखड्गकुन्तादिसमुदाये, अनु० । विशे० । बृ० । आव० । आ० म० । सम्भवनाथजिनस्य जनन्याम्, " दो चेव सयसहस्सा, सीमाणं आसि सम्भवजिनस्स । अमितवीरियजुयस्स, सेणाए जियारितणयस्स ॥ १ ॥" ति० । प्रव० । आव० स्थूलभद्रस्वामिनो भगिन्याम्, आर्यसम्भूतविजयस्यान्तेवासिन्याम्, ति० । आ० क० । आ० चू० ।

सेणाकम्म–सेनाकर्मन्–न० । सेनायाः सैन्यस्य कर्म–व्यापारः शत्रुसाधनलक्षणः, सेनाविषयं वा कर्म–इतिकर्त्तव्यतालक्षणं सेनाकर्म । सैन्यकर्मणि, स्था० ६ ठा० ३ उ० ।

सेणावइ–सेनापति–पुं० । सेनायाः पतिः सेनापतिः । आ० म० १ अ० । नृपतिनिरूपितचतुरङ्गसैन्यनायके, प्रज्ञा० १६ पद । स्था० । भ० । कल्प० । जी० । आव० । औ० । सकलानीकनायके, प्रश्न० ४ आश्र० द्वार । जं० । रा० । स० । आव० । औ० । आ० म० । सूत्र० । अनु० । ज्ञा० । आ० क० । स्था० । प्रव० ।

सेणावइरयण–सेनापतिरत्न–न० । सेनापतिः–सैन्यनायकः स एव रत्नम् । उत्कृष्टसेनापतौ, स्था० ७ ठा० ३ उ० ।

सेणावच्च–सेनापत्य–न० । सेनापतिः–सैन्यनायकस्तस्य भावः कर्म वा सेनापत्यम् । सैन्यनायकत्वे, औ० । विपा० । जं० ।

सेणि–श्रेणि–स्त्री० । पङ्क्तौ, आचा० १ श्रु० ६ अ० ३ उ० । रा० । जं० । कुम्भकाराद्यष्टादश प्रकृतयः श्रेणिशब्देनोच्यन्ते । जं० ३ वक्ष० । आ० म० ।

सेणिय--श्रेणिक -पुं०। स्वनामख्याते राजगृहनगरराजे, स्था० ४ ठा० ३ उ०। कूणिकस्य पिता श्रेणिकराजः। स्था० ४ ठा० ३ उ०। आव०। उत्त०। राजगृहनगरराजस्य प्रसेनजितः पुत्रे, आ० क० १ अ०। अन्त०। ( श्रेणिकस्य महाराजस्य सुनन्दाप्रमुखाया: पत्न्यः स्वस्वकथाने दर्शिताः। ) अयमुत्तरभवे महापद्मो नाम तीर्थकरो भविष्यति। आ० चू० ४ अ०। अन्त०। ध० र०। विशे०। आव०। स०। आ० म०। प्रश्न०। आ० क०। दशा०। नि० चू०। भ०। ( श्रेणिकजीवो महापद्मस्तत्कथा- 'महापउम' शब्दे षष्ठे भागे उक्ता। ) स्थविरस्य आर्यशान्तिश्रेणिकस्य शिष्ये, कल्प० २ अधि० ८ क्षण। नं०।

सेणी--श्येनी--स्त्री०। परिव्राजकप्रयुक्ताया मयूरीविकुर्वणात्मिकायाः प्रतिमन्थिन्यां श्येनीविकुर्वणात्मिकायां विद्यायाम्, नि० १ श्रु० १ वर्ग १ अ०।

सेण्ण--सैन्य--न०। 'एत एत्' ॥८।१।१४८॥ इत्यादौ वर्तमानस्यैत एत्त्वम्। सेण्णं। प्रा०। हस्त्यश्वरथपदातिवृषभनर्तकगाथकजनरूपेऽनीके, औ०।

सेणहग--श्येनक--पुं०। पक्षिविशेषे, उपा० ७ अ०। जी०।

सेत--श्वेत--त्रि०। शुक्ले, प्रज्ञा० १७ पद।

सेतई--श्वेतवी--स्त्री०। स्वनामख्यातायां नगर्याम्, आ० म० १ अ०।

सेधा--सेधा--स्त्री०। भुजसर्पिणीभेदे, जी० २ प्रति०।

सेफ- श्लेष्मन्--न०। 'श्लेष्मणि वा' ॥८।२।५४॥ इति ष्मस्य फः। सेफो। कफजे मुखमले, प्रा०२ पाद।

सेभण्ड--तद्भाण्ड--न०। तस्य विवक्षितस्य भाण्डे, भ० ५ श० ६ उ०।

सेमुसी--शेमुषी--स्त्री०। बुद्धौ, आ० म० १ अ०। आचा०।

सेय--श्रेयस्--न०। कल्याणे, भ० २ श० १ उ०। स्था०। पञ्चा०। शोभनतरे, दश० २ अ०। पं०। सूत्र०। अष्ट०। आ० चू०। अहोरात्रस्य त्रिंशन्मुहूर्तेषु द्वितीयो मुहूर्तः श्रेयान्। जं० ७ वक्ष०। पुण्ये आत्महिते, आचा० १ श्रु० ३ अ० ३ उ०। श्रेयस्करे, सूत्र० १ श्रु० ३ अ० ३ उ०। औ०। पथ्ये, हिते सेयमित्यत्र "स्नमदामशिरोनभः" ॥८।१।३२॥ इति सूत्रात्पुंस्त्वं न बहुलाधिकारात्। प्रा०।

श्वेत--त्रि०। शुभ्रे, धवले, औ०। शक्रस्य देवेन्द्रस्य नाट्यानीकाधिपतौ, स्था० ७ ठा० ३ उ०। दाक्षिणात्यानां कुम्भाण्डानामिन्द्रे, स्था० २ ठा० ३ उ०। श्रमणस्य भगवतो महावीरस्य नाट्यानीकाधिपतौ, स्था० ८ ठा० ३ उ०।

सेक--पुं०। सीयन्ते या बध्यन्ते यस्मिन्नसौ सेकः। कर्दमे, सूत्र० २ श्रु० २ अ०। सजले पङ्के, आव० ४ अ०। बृ०।

स्वेद--पुं०। श्रमजे शरीरजले, प्रव० ४० द्वार। नि० चू०। स्था०। तं०। दशा०।

सेजस्--त्रि०। सकम्पे, भ० ५ श० ७ उ०। बृ०। रा०। ( सजयतिरैजतो दण्डकः 'एजणा' शब्दे तृतीयभागे गतः। )

सेयआसंठिइ--श्वेततासंस्थिति--स्त्री०। श्वेततायाः संस्थाने, चं० प्र० ३ पाहु०।

सेयई--श्वेतवी--स्त्री०। सूर्याभपूर्वभवजीवस्य प्रदेशिनो राज्ञो नगर्याम्, स्था० ८ ठा० ३ उ०

सेयंकर--श्रेयस्कर--पुं०। अष्टाशीतिमहेषु सप्तषष्टितमे महाग्रहे, चं० प्र० २० पाहु०।

दो सेयंकरा। ( सू० ) स्था० २ ठा० ३ उ०।

सेयंकरअणुओग--श्रेयस्करानुयोग--पुं०। द्रव्यानुयोगभेदे, स्था०।'सेयंकरे'त्ति। इहाप्यकारोऽलाक्षणिकत्वेन सेकार इति तदनुयोगो यथा।'से भिक्खू वा'इत्यत्र सेशब्दोऽथार्थः, अथशब्दश्च प्रक्रियाप्रश्नानन्तर्यमङ्गलोपन्यासप्रतिवचनसमुच्चयेष्वित्यानन्तर्यार्थः, सेशब्द इति क्वचिदसावित्यर्थः, क्वचित् तस्येत्यर्थः, अथवा--सेयंकार इति श्रेय इत्येतस्य करणं श्रेयस्कारः, श्रेयस उच्चारणमित्यर्थः, तदनुयोगो यथा-'सेयं मे अहिज्जिओ अज्झयणमि' त्यत्र सूत्रे श्रेयः-अतिशयेन प्रशस्यं कल्याणमित्यर्थः, अथवा--' सेयकाले अकम्मं यावि भवइ ' इत्यत्र सेयशब्दो भविष्यदर्थः। स्था० १० ठा० ३ उ०।

सेयंकाल--श्रेयस्काल--पुं०। छान्दसत्वात्सेयंकाल त्ति। आगामिनि काले, भ० ५ श० ५ उ०। अनु०।

सेयंगुली--श्वेताङ्गुली--पुं०। भार्याप्रेरणा चुल्ल्याः भस्मसमाकर्षणेन श्वेतकराग्रे, पिं०।

सेयंबर--श्वेताम्बर--न०। श्वेतवस्त्रे, श्वेतमम्बरं यस्येति गच्छवासिनि श्वेतवस्त्रपरिधानकर्तरि निर्ग्रन्थसाधौ, पुं०।"सेयंबरो य आसं-बरो य बुद्धो य अन्नो य। समभावभावियप्पा, लहइ य मुक्खं न संदेहो॥" नि० चू०।

निर्ग्रन्थसाधूनां श्वेतवस्त्रमेव, अन्यथा करणे प्रायश्चित्तमुक्तं निशीथसूत्रे चतुर्दश उद्देशके तथा च तत्सूत्रम्--

जे भिक्खू नवए मे वत्थे लद्धे त्ति कट्टु तल्लेण वा घएण णवणीएण वा वसाए वा मंखेज्ज वा भिलिंगेज्ज वा मंखं- ( मक्खं ) तं वा भिलिंगंतं वा साइज्जइ ॥ १२ ॥ एवं लोद्धेण वा कक्केण वा वण्णेण वा चुण्णेण वा उल्लोलेज्ज वा उव्वोलेज्ज वा उल्लोलंतं वा उव्वोलंतं वा साइज्जइ। १३। एवं सीतोदगवियडेण वा उसिणो० साइज्जइ ॥ १४ ॥ नि० चू० १४ उ०।

आचाराङ्गेऽपि--

से भिक्खू वा भिक्खुणी वा अहेसणिज्जाइं वत्थाइं जाएज्जा, अहापरिग्गहियाइं वत्थाइं धारेज्जा नो धोएज्जा नो रएज्जा नो धोतरत्ताइं वत्थाइं धारेज्जा।

टीकाकारेणापि--

स भिक्षुर्यथैषणीयान्यपरिकर्माणि वस्त्राणि याचेत। यथापरिगृहीतानि च धारयेन्न तत्र किञ्चित्कुर्यादिति दर्शयति। तद्यथा--न तद्वस्त्रं गृहीतं सत्प्रक्षालयेत्, नापि रञ्जयेत्। तथा नापि वा कुत्सिततया धौतरक्तानि धारयेत् तथाभूतानि न गृह्णीयादित्यर्थः। तथाभूतोऽधौतारक्तवस्त्रधारी च ग्रामान्तरं गच्छन् ' अपलिउंचमाणे ' त्ति अगोपयन् सुखेनैव

प्रत्याख्यानपरिज्ञया च प्रत्याख्याय 'चरेज दन्त' त्ति वचनव्यत्ययाच्चरेयुर्यतिं प्रवर्त्तेरन्, भवन्त इति गम्यते । पठन्ति च—'चरन्ति दंत' त्ति अत्र च यत एवं दान्ताश्चरन्त्यतो भवद्भिरप्येवं चरितव्यमिति भाव इति सूत्रार्थः ।

प्रथमप्रश्नप्रतिवचनमुक्तं, शेषप्रश्नप्रतिवचनमाह–

सुसंवुडा पंचहिँ संवरेहिं,
इह जीवियं अणवकंखमाणो ।
वोसट्ठकाओ सुइचत्तदेहो,
महाजयं जयई जन्नसिट्ठं ॥ ४२ ॥

सुष्ठु संवृतः-स्थगितसमस्ताश्रवद्वारः सुसंवृतः कैः ?-पञ्चभिः-पञ्चसंख्यैः संवरैः-प्राणातिपातविरत्यादिभिः 'इह' अस्मिन् मनुष्यजन्मनि, उपलक्षणत्वात्परत्र च जीवितं—प्रस्तावादसंयमजीवितम् अनवकाङ्क्षन्—अनिच्छन्, यद्वा-अपगम्यमानत्वाज्जीवितमपि—आयुरप्यास्तामन्यजनादि, अनवकाङ्क्षन् यत्र हि प्रनबाधा तत्रासौ जीवितमपि न गणयति, अत एव व्युत्सृष्टो—विविधैरुपायैर्विशेषेण वा परीषहोपसर्गसहिष्णुतालक्षणेनोत्सृष्टः—त्यक्तः—कायः शरीरमनेनेति व्युत्सृष्टकायः, शुचिः-अकलुषव्रतः स चासौ त्यक्तदेहश्च अत्यन्तनिष्प्रतिकर्मतया शुचित्यक्तदेहः, महान् जयः कर्मशत्रुपराभवनलक्षणो यस्मिन् यज्ञश्रेष्ठोऽसौ महाजयस्तं, क्रियाविशेषणं वा महाजयं यथा भवत्येवं यजते यतिरिति गम्यते, ततो भवन्तोऽप्येवमेव यजन्तामिति भावः' तिङ्व्यचनव्यत्ययेन वा 'जइय' त्ति यजत, कमित्याह—'जण्णसिट्ठं' ति प्राकृतत्वाच्छ्रेष्ठयज्ञं, श्रेष्ठयज्ञेनेन चैनमेव यज्ञं श्रेष्ठं कुशला वदन्ति, एष एव च कर्मप्रमादनोदाय इत्युक्तं भवतीति सूत्रार्थः ।

यदीदृग्गुणः श्रेष्ठयज्ञं यजते अतस्त्वमपीदृग्गुण एव, तथा च ते यजमानस्य कान्युपकरणानि को वा यजनविधिरित्यभिप्रायेण त एवमाहुः—

के ते जोई के व ते जोइठाणं ?,
का ते सुया किं च ते कारिसंऽगं ? ।
एहा य ते कयरा संति भिक्खू ?,
कयरेण होमेण हुणासि जोइं ? ॥ ४३ ॥

किम्, अयमर्थः-किंरूपं ते—तव 'ज्योति' रिति अग्निः 'के व ते जोइठाणं' त्ति किं वा ते-तव ज्योतिःस्थानं यत्र ज्योतिर्निधीयते, का स्रुचो ?—घृतादिप्रक्षेपिका दर्व्यः, 'किं च' त्ति किं वा करीषः—प्रतीतः स एवाङ्गम्-अग्न्युद्दीपनकारणं करीषाङ्गं येनासौ सन्धुक्ष्यते, एधाश्च-समिधो याभिरग्निः प्रज्वाल्यते, ते—तव कतरा इति-काः ? 'संति-' त्ति चस्य गम्यमानत्वाच्छान्तिश्च-दुरितोपशमनहेतुरध्ययनपद्धतिः कतरेति प्रक्रमः, 'भिक्खु' इति भिक्षो ! कतरेण होमेन—हवनविधिना, समेन धावतीत्यादिवत् तृतीया जुहोषि-आहुतिभिः प्रीणयसि, किं ?—ज्योतिः—अग्निं षड्जीवनिकायसमारम्भनिषेधेन ह्यस्मदभिमतो होमः तदुपकरणानि च पूर्वं निषिद्धानीति कथं भवतो यजनसम्भवः ? इति सूत्रार्थः ।

मुनिराह—

तवो जोई जीवो जोइठाणं,
जोगा सुया सरीरं करीसंऽगं ।
कम्म एहा संजमजोग संती,
होमं हुणामी इसिणं पसत्थं ॥ ४४ ॥

तपो—बाह्याभ्यन्तरभेदभिन्नं ज्योतिः—अग्निः, यथा हि ज्योतिरिन्धनानि भस्मीकरोत्येवं तपोऽपि भावेन्धनानि—कर्माणि, जीवो—जन्तुर्ज्योतिः स्थानं-तपोज्योतिषस्तदाश्रयत्वात्, युज्यन्ते—सम्बध्यन्ते स्वकर्मणेति योगाः—मनोवाक्कायाः स्रुचः, ते हि शुभव्यापाराः स्नेहस्थानीयाः, तपोज्योतिषो ज्वलनहेतुभूताः तत्र संस्थाप्यन्त इति, शरीरं-करीषाङ्गं, तेनैव हि तपोज्योतिरुद्दीप्यते, तद्भावभावित्वात्तस्य, कर्म—उक्तरूपम् एधास्तस्यैव तपसा भस्मीभावनयनात्, 'संजमजोग' त्ति संयमयोगाः—संयमव्यापाराः शान्तिः सर्वप्राण्युपद्रवापहारित्वात्तेषां, तथा 'होमं' ति होमेन जुहोति तपोज्योतिरिति गम्यते, ऋषीणां-मुनीनां सम्बन्धिना 'पसत्थं' ति प्रशस्तेन जीवोपघातरहितत्वेन विवेकिभिः श्लाघितेन सम्यक्चारित्रेणेति भावः । अनेन च कतरेण होमेन जुहोषि ज्योतिरिति प्रत्युक्तमिति सूत्रार्थः । तदेतत् 'किं माहना जोइसमारभंता' इत्यादिना लोकप्रसिद्धयज्ञानां स्नानस्य च निषिद्धत्वाद्यज्ञस्वरूपं तैः पृष्टं कथितं च मुनिना ।

इदानीं स्नानस्वरूपं विपृच्छिषव इदमाहुः—

के ते हरए के य ते संतितित्थे ?,
कहिंसि एहाओ व रयं जहासि ? ।
आयक्ख णे संजय ! जक्खपूइया, !
इच्छामु नाउं भवओ सगासे ॥ ४५ ॥

कस्ते—तव ह्रदः—नदः ?, 'के य ते संतितित्थे' त्ति किं च 'ते'-तव शान्त्यै—पापोपशमननिमित्तं तीर्थं—पुण्यक्षेत्रं—शान्तितीर्थम्, अथवा-'कानि च' किंरूपाणि 'ते'-तव सन्ति—विद्यन्ते तीर्थानि—संसारोदधितरणोपायभूतानि, लोकप्रसिद्धतीर्थानि हि त्वया निषिद्धानीति, तथा च-'कहिंसि एहाओ व' ति वाशब्दस्य भिन्नक्रमत्वात्कस्मिन् वा स्नातः—शुचिर्भूतो रज इव रजः—कर्म जहासि—त्यजसि त्वं ?, गम्भीराभिप्रायो हि भवांस्तत् किमस्माकमिव भवतोऽपि ह्रदतीर्थ एव शुद्धिस्थानमन्यद्वेति न विद्म इति भावः-आचक्ष्व—व्यक्तं वद संयत ! यक्षपूजित ! इच्छामः—अभिलषामो ज्ञातुम्—अवगन्तुं भवतः—तव सकाशे—समीप इति सूत्रार्थः ।

मुनिराह—

धम्मे हरए बंभे संतितित्थे,
अणाविले अत्तपसन्नलेसे ।
जहिं सि एहाओ विमलो विसुद्धो,
सुसीइभूओ पजहामि दोसं ॥ ४६ ॥
एयं सिणाणं कुसलेण दिट्ठं,
महासिणाणं इसिणं पसत्थं ।
जहिं सि एहाया विमला विसुद्धा,
महारिसी उत्तमं ठाणँ पत्ति ॥ ४७ ॥

धर्मः-अहिंसाद्यात्मको ह्रदः--कर्मरजोऽपहन्तृत्वाद् ब्रह्मेति-ब्रह्मचर्यं शान्तितीर्थं,तदासेवनेन हि सकलमलमूलं रागद्वेषावुन्मूलितावेव भवतः, तदुन्मूलनाच्च न कदाचिन्मलस्य सम्भवोऽस्ति, सत्याद्युपलक्षणं चैतत्, तथा चाऽऽह-"ब्रह्मचर्येण सत्येन, तपसा संयमेन च । मातङ्गर्षिर्गतः शुद्धिं, न शुद्धिस्तीर्थयात्रया ॥ १ ॥" अथवा-'ब्रह्म' ति ब्रह्मचर्यवन्तो मतुब्लोपादभेदोपचाराद्वा साधव उच्यन्ते, सुव्यत्ययाच्चैकवचनं, सन्ति-विद्यन्ते तीर्थानि ममेति गम्यते, उक्तं हि-"साधूनां दर्शनं श्रेष्ठं, तीर्थभूता हि साधवः । तीर्थं पुनाति कालेन, सद्यः साधुसमागमः ॥ १ ॥" किं च-भवत्प्रतीततीर्थानि प्राण्युपमर्दहेतुतया प्रत्युत मलोपचयनिमित्तानीति कुतस्तेषां शुद्धिहेतुता ?, तथा चोक्तम्-"कुर्याद्वर्षसहस्रं तु, अहन्यहनि मज्जनम् । सागरेणापि कृत्स्नेन, वधको नैव शुद्ध्यति ॥ १ ॥" इदशान्तितीर्थे एव विशिनष्टि--अनाविले मिथ्यात्वगुप्तिविराधनादिभिरकलुषे अनाविलत्वादेवात्मनो-जीवस्य प्रसन्ना-मनागप्यकलुषा पीताद्यन्यतरा लेश्या यस्मिंस्तदात्मप्रसन्नलेश्यं तस्मिन्, अथवा-आप्ता प्राणिनामिह परत्र च हिता प्राप्ता वा तेनैव प्रसन्नलेश्या-उत्कृष्टा यस्मिंस्तदात्मप्रसन्नलेश्यं तस्मिन्नेवंविधे धर्मह्रदे,ब्रह्माख्यशान्तितीर्थे च यदाह-ब्रह्मशब्देन ब्रह्मचर्यवन्त उच्यन्ते तत्पक्षे वचनविपरिणामेन निशेषणद्वयं व्याख्येयं, 'जहिंसि' त्ति यत्रास्मि स्नात इव स्नातः-अत्यन्तशुद्धिमवनाद्विमलो-भावमलरहितोऽत एवाऽतिविशुद्धो-गतकलङ्कः, 'सुसीतीभूओ' त्ति सुशीतीभूतो रागाद्युत्पत्तिविरहतः सुष्ठु शैत्यं प्राप्तः, पठ्यते च--'सुसीलभूओ' त्ति सुष्ठु--शोभनं शील--समाधानं चारित्रं वा-भूत--प्राप्तः सुशीलभूतः प्रजहामि--प्रकर्षेण त्यजामि दूषयति-विशुद्धमप्यात्मानं विकृतिं नयतीति दोषः-कर्म तम्, अमुमेवार्थमाह—ममापि ह्रदतीर्थे एव शुद्धिस्थानं परमेवंविधं एवेति, निगमयितुमाह-'एतदि' त्यनन्तरमुक्तं स्नानं-रजोहानं कुशलैः-प्रागुक्तरूपैर्दृष्टं-प्रतीतमिदमेव महास्नानं, न तु युष्मत्प्रतीतम्, अस्यैव सकलमलापहारित्वाद्, अत एव चेदं ऋषीणां प्रशस्तं-प्रशंसास्पदं, न तु जलस्नानवत्सदोषतया निन्द्यम्, अस्यैव फलमाह-'जहिंसि' त्ति सुव्यत्ययाद् येन स्नाता विमला विशुद्धा इति च प्राग्वत् महर्षयो-महामुनय उत्तमं स्थानं मुक्तिलक्षणं प्राप्ताः-गता इति सूत्रद्वयार्थः। इतिः परिसमाप्तौ,ब्रवीमीति पूर्ववद्, गतोऽनुगमः, सम्प्रति नयास्ते च प्राग्वदेव । उत्त० १२ अ० । स्था० । ती० । व्य० । प्रश्न० । राजगृहनगरे श्रेणिकस्याध्यापके, नि० चू० १ उ० ।

**हरिओभास-हरितावभास-पुं०** । हरितत्वेन अवभासमाने, रा० । जी० ।

**हरिकंखीणयर-हरिकंखीनगर-न०** । स्वनामख्याते नगरे, ती० । "पणमिय पासजिणंदं,हरिकंखीणयरचेइयनिविट्ठं । तस्सेव कप्पमप्पं, भणामि निहलिअकप्पमयं ॥ १ ॥" गुज्जरधराए हरिकंखी नामो अभिरामो गामो अत्थि । तत्थ जिणभवणे उत्तुंगसिहरे सोवाहियपाडिहेरा सिरिपासनाहपडिमा चिरहपूआहिं पूइज्जइ भवियजणेहिं ति काउं । अन्नया चालुक्कवंसपईवेण सिरिभीमदेवरज्जे तुरुक्कमंडलाओ आगएणं सबलवाहणेण अनतुच्छुक्काभिहाणमल्लारेण, अणहिलवाडयपट्टणगढं भंजित्ता चलंतेण दिट्ठं हरिकंखीगामे तं चेइयं । भज्झं पविसित्ता भग्गा भगवओ पासनाहपडिमा । तं च गाम उवद्दवित्ता चलिओ सट्ठाणं पइ मल्लारो । पुणो वसिओ गामो समागया गुट्ठियसावया भगवंतं भग्गं तं निरूवित्ता एकेण भणिओऽहियती अहो ! भगवओ महामहप्पस्सावि कहं नाम भंगो विहिओ मिलक्खेहिं, कत्थ पुण सा भगवओ तारिसी कला गय त्ति ? । तओ तेसिं पसुत्ताणं सुमिणे आइट्ठमहिट्ठायगसुरेहिं.जहा एयाए पडिमाए खंडाणि सव्वाणि एगट्ठीकाऊण गब्भहरे ठावित्ता दुवारकवाडे ढंकित्ता भयं दाऊण छम्मासे ०जाव पडिवालियव्वं । तओ परं दुवारमुग्घाडियव्वं पडिमा निरक्खियव्वा संपुण्णंगोवंगा होहिइ । गुट्ठिएहिं भोगं काऊण तहेव कयं०जाव पंच मासा वोलीणा, छट्ठम्म पारंते उस्सुगीहोऊण गोट्ठिएहिं दुवारमुग्घाडियं ०जाव दिट्ठा भगवओ संपुण्णंगोवंगरूवा केवलं ठाणे ठाणे मसाविवहपूरिआ । तओ तत्तमविवयारित्ता भंदि आइट्ठओ सुत्तधारो । तेण टंकियाए मसा छिंदिउमारद्धा ०जाव निस्सारियं मसाहिंतो रुहिरं । तओ भीआ गुट्ठिआ भूओ—भूओ भोगाईएहिं पसाएउमारद्धा, तओ रत्तीए सुमिणे आइट्ठमहिट्ठायगेहिं, जहा—न सोहणं कयं तुम्मेहि जओ अपुण्णाए वि छम्मासीए दुआरमुग्घाडियमिति । दारे दिट्ठा पाससामिस्स पडिमा निरुवद्दवअक्खंडिअंगोवंगा केवल तहसुत्ती सु अंगुट्ठ य मणागं तुच्छा, परिट्ठियगुट्ठियापुच्चं च पूइओ एयस्स्यागंच्छंति चाउद्दिसाओ संघा, करिंति जत्तामहूसवं । एवं च सुकरकारी माहप्पनिही सिरिपासनाहो " इय हरिकंखीनयरे, पारट्ठिअस्सासपण तणयस्स । सिरिजिणपहसूरीहिं, कप्पो विहिओ समासेणं ॥ १ ॥ " इति । ती० २८ कल्प ।

**हरिकंत-हरिकान्त--पुं०** । दाक्षिणात्यानां कुमाराणामिन्द्रे, भ० ३ श० ८ उ० । स्था० । स० । प्रज्ञा० ।

**हरिकंतप्पवायदह-हरिकान्ताप्रपातह्रद--पुं०** । हरिकान्तायाः महानद्याः प्रपातह्रदे, हरिकान्तोक्तरूपा महानदी यत्र निपतति, यश्च हरित्कुण्डसमानो हरिद्द्वीपसमानेन हरिकान्तादेवीद्वीपेन सभवनेन भूषितमध्यभागः स हरिकान्ताप्रपातह्रद इति । स्था० २ ठा० ३ उ० ।

**हरिकंता-हरिकान्ता--स्त्री०** । हरिवर्षे महानद्याम्, रा० । जं० । स० । हरिकान्ता तु महापद्महदाद् दक्षिणेन तोरणेन निर्गत्य पञ्चोत्तराणि षोडश शतानि सातिरेकाणि उत्तराभिमुखीपर्वतेन गत्वा सातिरेकयोजनशतद्वयप्रमाणेन प्रपातेन हरिकान्ताकुण्डे तथैव प्रपतति । मकरमुखजिह्विकाप्रमाणं पूर्वोक्ताद्विगुणं, ततः प्रपातकुण्डादुत्तरतोरणेन निर्गत्य हरिवर्षमध्यभागवर्त्तिनं गन्धापातिवृत्तवैताढ्यं योजनेनासम्प्राप्ता पश्चिमाभिमुखीभूता षट्पञ्चाशता सरित्सहस्रैः समग्रा समुद्रमभिगच्छति, इयं च हरिकान्ता प्रमाणतो रोहिन्नदीतो द्विगुणेति । स्था० २ ठा० ३ उ० ।

**हरिकंताकूड-हरिकान्ताकूट--पुं०** । नदीदेवतासत्के कूटे, स्था० ८ ठा० ३ उ० । जम्बूद्वीपे महाहिमवत्-षष्ठे कूटे, स्था० २ ठा० ३ उ० ।

**हरिकण्ण-हरिकर्ण--पुं०** । अपरनामके अन्तर्द्वीपे, नं० ।

**हरिकूड-हरिकूट--पुं०** । नीलवत्पर्वतस्य नीलवत्कूटाद्दक्षिणतः सहस्रप्रमाणे विद्युत्प्रभवक्षस्कारकूटे, स्था० ६ ठा० ६ उ० ।

माल्यवद्वक्षस्कारपर्वतस्य कूटे, निषधवर्षधरस्य पञ्चमे कूटे च । जं० १ वक्ष० ।

**हरिकेसीबल-हरिकेशीबल**-पुं० । स्वनामख्याते साधौ, उत्त० १२ अ० । (अत्रत्या सर्वा वक्तव्यता 'हरिएस' शब्देऽस्मिन्नेव भागेऽनुपदमेव गता । )

**हरिचंद-हरिश्चन्द्र**-पुं० । अयोध्यायामिक्ष्वाकुवंशे त्रिशङ्कुपुत्रे उशीनरनृपसुतायाः सुताराख्यायाः पत्यौ रोहिताश्वपितरि, नी० । कल्प० । आ० म० । ( वनवराहरूपधारिभ्यां देवाभ्यां हरिश्चन्द्रस्य परीक्षेति 'वाणारसी' शब्दे षष्ठे भागे दर्शितम् ।) साकेतनगरवास्तव्ये गृहपतौ, अन्त० ६ वर्ग ५ अ० । ( स च वीरान्तिके प्रव्रज्य दश वर्षाणि श्रामण्यं परिपाल्य विपुलपर्वते सिद्ध इत्यन्तकृद्दशानां षष्ठवर्गस्य पञ्चमाध्ययने सूचितम् । )

**हरिचंदण**-देशी--कुङ्कुमे, दे० ना० ८ वर्ग० ६५ गाथा ।

**हरिण-हरिण**-पुं० । मृगे, प्रव० २६ द्वार ।

**हरिणंदी-हरिनन्दी**-पुं० । उज्जयिनीवास्तव्ये स्वनामख्याते गृहपतौ, ध० र० २ अधि० ४ लक्ष० । ( अत्रत्या वक्तव्यता 'उज्जुयववहार' शब्दे द्वितीयभागे ७३६ पृष्ठे गता । )

**हरिणेगमेसि(ण्) हरिनैगमेषिन्**-पुं० । हरिरिन्द्रस्तत्सम्बन्धित्वात् हरिनैगमेषी । भ०५ श०४ उ० । शक्रस्य पदातिकटकनायके, कल्प०१ अधि०२ क्षण । हरेरिन्द्रस्य नैगममादेशमिच्छतीति हरिनैगमेषी । अथवा-हरेरिन्द्रस्य नैगमेषी नामा देवः यो देवानन्दायाः कुक्षेर्वीरजिनमपहृत्य त्रिशलागर्भे प्रावेशयत् । आ०म०२अ० । ('वीर' शब्दे षष्ठे भागे वक्तव्यताऽस्य द्रष्टव्या ।) शक्रस्य देवेन्द्रस्य पदात्यनीकाधिपतौ, स्था० ७ ठा० ३ उ० ।

**हरितग-हरितक**-पुं० । नीलके दूर्वादिवनस्पतौ, प्रश्न०३ संव० द्वार । प्रज्ञा० ।

से किं तं हरिया ? , हरिया अणेगविहा पण्णत्ता , तं जहा-" अज्जोरुह वोडाणे , हरितग तह तंदुलेज्जगतणे य । वत्थल पोरग मज्जा-रयाइ बिल्ली य पालक्का ॥३७॥ दगपिप्पली य दव्वी, सोत्थिय साए तहेव मंडुक्की । मूलग सरिसव अंबिल, साएय जियंतए चेव ॥३८॥ तुलस कण्ह ओराले,फणिज्जए अज्जए य भूयणए । वारगदमणगमरुयग, सतपुप्फिंदीवरे य तहा ॥ ३९ ॥" जे यावन्ना तहप्पगारा । से त्तं हरिया । प्रज्ञा० १ पद ।

'हरितगरेरिज्जमाणा'-हरितकाश्च ते नीलका रेरिज्यमानाश्च देदीप्यमाना हरितकरेरिज्यमानाः । भ० १ श० २ उ० ।

**हरिप्पवायदह-हरित्प्रपातहृद**-पुं० । हरिसलिलायाः प्रपातहृदे, स्था० । 'हरिप्पवायद्दहे' त्ति हरिसलिला प्रागुक्तलक्षणा यत्र निपतति । यश्च द्वे शते चत्वारिंशदधिके आयामविष्कम्भाभ्यां सप्तशतानि एकोनषष्ट्यधिकानि परिक्षेपेण यस्य च मध्यभागे हरिद्वीपः द्वात्रिंशद्योजनायामविष्कम्भः एकोत्तरशतपरिक्षेपः जलान्ताद् द्विक्रोशोच्छ्रितो हरिदेवताभवनभूषितोपरितनभागोऽसौ हरित्प्रपातहृद इति । स्था०२ ठा०३ उ० ।

**हरिभद्द-हरिभद्र**-पुं० । श्वेताम्बराचार्यजिनभटनिगदानुसारिणि विद्याधरकुलतिलकाचार्यजिनदत्तशिष्ये धर्मतो याकिनीमहत्तरासूनौ स्वनामख्याते आचार्ये. आव०६अ० । दश० ।

हरिभद्रसूरिवृत्तलेशस्त्वेवं प्रभावकचरितादावाख्यायते--चित्रकूटनगरे हरिभद्रो नाम विद्यागर्वाध्मातो ब्राह्मण आसीत् । स च यद्वाक्यं नाहं बोद्धुं शक्नुयाम् तस्य शिष्यः स्यामिति कृतप्रतिज्ञः, "चक्किदुगं हरिपणगं, पणगं चक्कीण केसवो चक्की । केसव चक्की केसव, दुचक्की केसीय चक्की य ।" इति गाथां भणन्तीं याकिनीं नाम महत्तरिकां तदर्थपरिज्ञानाय पृष्टवान् , सा च तं स्वाचार्यपार्श्वे नीत्वाऽदीक्षयत् । तत्र सोऽखिलं समयमध्यगमत् .हंसपरमहंसनामानौ च शिष्यौ अदीक्षयत् । तौ च प्रमाणशास्त्राधिजिगांसया बौद्धेषु गतौ , तत्र जैनाविति ज्ञातौ मारितौ । ततः क्रुद्धेन हरिभद्रसूरिणा अग्नावाहोतुं सपरिवारो बौद्धाचार्य आकृष्टः, ततो गुरुणाऽनुकम्पया सान्त्वितः । तदनु स हरिभद्रश्चतुर्दश शतानि प्रबन्धानां चक्रे, विक्रमवर्षे ५३५ अयमासीत् । द्वितीयोऽपि हरिभद्रसूरिः नागेन्द्रगच्छीयाऽऽनन्दसूरिशिष्यः कलिकालगौतमबिरुदधारकः तत्त्वप्रबोधाद्यनेकग्रन्थकर्त्ता , अयं विक्रमवर्षे १२३५--१२६० मध्ये आसीत् । तथा श्रीहरिभद्रसूरिणा सौगता हुता एव होतुमारभ्य मुक्ता वा कुत्र वाऽयं संवन्धो वर्त्तते इत्याशङ्क्य श्रीहरिभद्रसूरिभिः सौगता होतुं च आकृष्टास्तदनु गुरुभिर्ज्ञाते साधू प्रहितौ ताभ्यां " गुणसेण अग्गिसम्मा,सीहाणं दाय " इत्यादि चरित्रकथनमूलगाथात्रयं दत्तं, ततः प्रबुद्धेन सूरिणा ते मुक्ता इति तत्प्रबन्धे । प्रभावकचरित्रे तु पणपूर्वकं वादे जितः सौगतगुरुः स्वयमेव तप्ततैलकटाहे प्रविवेशेति । तथा तत्रैव इह किल कथयन्ति केचिदित्थं गुरुतरमन्त्रजपप्रभावतोऽत्र सुगतमतबुधान् विकृष्य तप्ततैले तु हरिभद्रगुरुर्जुहाव तैलेन , इत्यपि लिखितमस्तीति । ही० १ प्रका० । पञ्चाशकाख्यप्रकरणकारके आचार्ये,पञ्चा०१६विव० । "आचार्यहरिभद्रेण.दृब्धा सन्तापसङ्कता । चैत्यवन्दनसूत्रस्य, वृत्तिर्ललितविस्तरा ॥ १ ॥" ल० । अनुयोगद्वारटीकाकारके, ज्यो० २ पाहु० । "सध्ये समस्तभूपीठं यशो यस्याभिवर्द्धते । तस्मै श्रीहरिभद्राय , नमष्टीकाविधायिने ॥ १ ॥" नं० ।

**हरिमन्थ-हरिमन्थ**-न० । धान्यविशेषे, प्रव० १५६ द्वार । कृष्णचणके, ध० २ अधि० । ग० । नि० चू० ।

**हरिमहाणई-हरिमहानदी**-स्त्री० । निषधपर्वते पद्महृदनिर्गते महानदीभेदे. जं० ४ वक्ष० । ( 'सिगिच्छद्दह' शब्दे चतुर्थभागे २२४० पृष्ठे व्याख्यातैषा । )

**हरिमिच्छ-हरिमिच्छ**-पुं० । कृष्णचणके, दश० ६ अ० ।

**हरिमेला-हरिमेला**-स्त्री० । वनस्पतिविशेषे, औ० ।

**हरिय-हरित**-त्रि० । शुकपुच्छवद् वर्णविशेषपरिणते, हरितभेदे च इति वृद्धाः । औ० । उपरि बीजेषु , सूत्र० १ श्रु० ६ अ० । ज्ञा० । अङ्कुरादिकबीजे, चू० । मधुरतृणादिविशेषे, स्था० ६ ठा० ३ अ० । दूर्वादिके , भ० ७ श० ६ उ० । प्रश्न० । सूत्र० । आचा० । शार्दूले, जी० ३ प्रति० ४ अधि० । हरितसूक्ष्ममत्यन्ताभिनवाङ्कुरे पृथिवीसमानवर्णे , स्था० ८ ठा० ३ उ० । तन्दुलीयकाध्यारुहवस्तुलवदरकमार्जारपादिकाचिल्लीपालक्यादिषु, आचा० १ श्रु०१ अ० ५उ० ।

**कइ णं भंते हरियकाया हरियकायसया पण्णत्ता ?, गोयमा ! तओ हरियकाया तओ हरियकायसया पण्णत्ता, फलसहस्सं च बिंटबद्धाणं फलसहस्सं च णालबद्धाणं, ते सव्वे हरितकायमेव समोयरंति ।**

'कइ णं' मित्यादि, कति भदन्त ! हरितकायाः कति हरितकायशतानि प्रज्ञप्तानि ? भगवानाह-गौतम ! त्रयो हरितकायाः प्रज्ञप्ता-जलजाः स्थलजा उभयजाः, एकैकस्मिंश्च शतसंख्यान्तरभेदानामिति, त्रीणि हरितकायशतानि । 'फलसहस्सं च' त्यादि, फलसहस्रं च 'वृन्तबन्धानां' वृन्ताकप्रभृतीनां फलसहस्रं च नालबद्धानां, 'तेऽपि सव्वे' इत्यादि, तेऽपि सर्वे भेदा अपिशब्दादन्येऽपि तथाविधाः हरितकायमेव समवतरन्ति—हरितकायेऽन्तर्भवन्ति हरितकायोऽपि वनस्पतौ वनस्पतिरपि स्थावरेषु स्थावरा अपि जीवेषु।जी० ३प्रति०१उ०।जात्यार्यभेदे,प्रज्ञा०१पद। ( वक्तव्यता 'आर्यारय' शब्दे द्वितीयभागे ३२७ पृष्ठे उक्ता । )

**हरियग-हरितक-**पुं० । जीरकादिके,सं०प्र० २० पाहु० । भ० । सू० प्र० । स्था० । हस्वतृणे, आ० १ श्रु० १ अ० ।

**हरियपण्णी-हरितपर्णी-**स्त्री० । कथंचिद्गृहेषु राज्ञा दण्डं दत्त्वा देशमपहारार्थमागन्तुकः पुरुषो मार्यते गृहस्योपरिष्टात् आर्द्रवृक्षशाखा चिह्नं क्रियते योऽप्यन्योऽविज्ञात आगमिष्यति सोऽप्येवं मारिष्यतीति सूचकं चिह्नं, सू० १ उ० २ प्रक० ।

**हरियकंति-हरितकान्ति-**स्त्री० । शाकवहुलदेशे शाकभक्षणे, सू० १ उ० २ प्रक० । औ० ।

**हरियभद्द-हरितभद्र-**पुं० । यक्षभेदे, प्रज्ञा० १ पद ।

**हरियभोयण-हरितभोजन-**न० । हरितानि मधुरतृणकट्वाम्लादीनि एव, भुज्यन्ते इति भोजनानि । औ० । मधुरतृणादिविशेषरूपेषु भोजनेषु, स्था० ६ ठा० ३ उ० ।

**हरियभोयणा-हरितभोजना-**स्त्री०।हरितानि भोजनानि यस्यां सा हरितभोजना । हरितभोजनवत्याम्, आव० ४ अ० ।

**हरियवेरुलियवण्णाभ-हरितवैडूर्यवर्णाभ-**पुं० । हरितश्चासौ वेरुलियवर्णाभश्चेति । नीलवर्णे वैडूर्यभेदे,भ० १६ श० ६ उ० ।

**हरियसाग-हरितशाक-**न० । पत्रशाके, विपा० १ श्रु० ८ अ० ।

**हरियसुहुम-हरितसूक्ष्म-**न० । अत्यन्ताभिनवोद्भिन्ने पृथिवीसमानवर्णे हरितके, स्था० ८ ठा० ३ उ० । दश० । कल्प० ।

**से किं तं हरियसुहुमे ? हरियसुहुमे पंचविहे पण्णत्ते, तं जहा-किण्हे ०जाव सुक्किल्ले अत्थि हरियसुहुमे । पुढवीसमाणवण्णए णामं पण्णत्ते,जे निग्गंथाण वा निग्गंथीणं वा ० जाव पडिलेहियव्वे भवइ । से तं हरियसुहुमे । कल्प० ३ अधि० ६ क्षण ।**

**हरिया-हरिता-**स्त्री० । जम्बूद्वीपे पूर्वापरेण लवणसमुद्रं समुत्सर्पन्त्यां स्वनामख्यातायां नद्याम्, स० १४ सम० ।

**हरियाल-हरिताल-**पुं० । पृथिवीकायरूपे ( जी० ३ प्रति० ४ अधि० । ) वर्णकद्रव्ये, आ० १ श्रु० १ अ० । आचा० ।

**हरियालगुलिया-हरितालगुटिका-**स्त्री० । हरितालिकासारनिर्वर्तितगुटिकायाम्, जी० ३ प्रति० ४ अधि० । रा० ।

**हरियालभेय-हरितालभेद-**पुं० । हरितालिकाच्छेदे, जी० ३ प्रति० ४ अधि० । रा० ।

**हरियालिया-हरितालिका-**स्त्री० । दूर्वायाम्, आ० १ श्रु० १ अ० । दे०ना० । कल्प० । पृथिवीविकारवर्णकद्रव्ये, रा० । जं० ।

**हरियाहडिया-हृताहृतिका-**स्त्री०।पूर्वं हृतं पश्चादाहृतम् आनीतं यस्य हृताहृतं तदेव हृताहृतिका । स्वार्थे कप्रत्ययः, अनित्यत्वेन स्वार्थिकप्रत्ययप्रकृतिलिङ्गवचनातीति वचनादत्र रूढितः स्त्रीलिङ्गनिर्देशः । स्तेनैः पूर्वं हृतं पश्चादानीतं,सू० १ उ० ३ प्रक० ।

हरिताहृतिका--त्रि० । हरितेषु वनस्पतिषु आहृतं हरिताहृतिका । वनस्पतिष्वाहृते, स्तेनानीतप्रतीच्छायां च । व्य० ८ उ० । ( 'उवहि' शब्दे द्वितीयभागे १०७५पृष्ठे हृताहृतिकायाः ग्रहणं निषिद्धम् । )

**हरिरेणु-हरिद्रेणु-**पुं० । नीलवर्णपांशौ, आ० १ श्रु० १६ अ० ।

**हरिल-हरिल-**पुं० । नागदत्ता-यशोमती-रत्नवतीनाम्नां ब्रह्मदत्तचक्रिभार्याणां पितरि, उत्त० १३ अ० ।

**हरिवंस-हरिवंश-**पुं०।हरिः-पूर्वभववैरिसुरानीतहरिवर्षक्षेत्रयुगलं तस्य वंशो हरिवंशः। कल्प० १अधि०२ क्षण। हरेः पुरुषविशेषस्य वंशो हरिवंशः । हरिवर्षजातहरिनाम्नः पुरुषजातायां पुत्रपौत्रादिपरम्परायाम्, स्था० १० ठा० ३ उ० । कल्प० । कौशाम्बीनगरे केनचिद् राज्ञा कस्यचित् शालापतिभार्या वनमाला नाम्नी सुरूपेति स्वान्तःपुरे क्षिप्ता, स शालापतिस्तस्या वियोगेन विकलो जातो यं कंचन पश्यति तं वनमाला वनमालेति जल्पति । एवं च कौतुकाक्षिप्तैरनेकैः लोकैः परिवृतः पुरे भ्रमन् वनमालया समं क्रीडता राज्ञा दृष्टस्तेनाऽऽत्माभिरनुचितं कृतम्, इति चिन्तयन्तौ तौ दम्पती तत्क्षणात् विद्युत्पातेन मृतौ हरिवर्षक्षेत्रे युगलित्वेन समुत्पन्नौ, शालापतिश्च तौ मृतौ श्रुत्वा आः पापिनोः पापं लग्नम्, इति सावधानोऽभूत् । ततोऽसौ वैराग्यात्तपस्तप्त्वा व्यन्तरोऽभूत्, विभङ्गज्ञानेन च तौ दृष्ट्वा चिन्तितवान्, अहो ! इमौ मद्वैरिणौ युगलसुखमनुभूय देवौ भविष्यतस्तत इमौ दुर्गतौ पातयामीति विचिन्त्य स्वशक्त्या संक्षिप्तदेहौ तौ इहानीतवान्, आनीय च राज्यं दत्त्वा सप्त व्यसनानि शिक्षितौ, ततस्तौ तथाभूतौ नरकं गतौ । अथ तस्य वंशो हरिवंशः । कल्प० १ अधि० २ क्षण । आ० म० ।

**हरिवंसकुलुप्पत्ति-हरिवंशकुलोत्पत्ति-**स्त्री० । हरिवंशलक्षणस्य कुलस्योत्पत्तौ,स्था० १० ठा० ३ उ० । ( अस्या व्याख्या 'अच्छेर' शब्दे प्रथमभागे २०० पृष्ठे गता । )

**हरिवंसग-हरिवंशक-**पुं०।हरिवंशजे मनुष्ये,स्था०६ठा० ३उ० ।

**हरिवंसगंडिया-हरिवंशगण्डिका-**स्त्री० ।हरिवंशमात्रवक्तव्यतार्थाधिकारानुगतायां वाक्यपद्धतौ, स० ।

**हरिवास-हरिवास-**पुं० । जम्बूद्वीपस्य भरतापेक्षया तृतीये वर्षक्षेत्रे,स्वनामख्याते तदधिपतिदेवे च । स्था० १० ठा० ३ उ० ।

**कहि णं भन्ते ! जम्बुद्दीवे दीवे हरिवासे णामं वासे पण्णत्ते ?,गोयमा ! णिसहस्स वासहरपव्वयस्स दक्खिणेणं**

महाहिमवन्तवासहरपव्वयस्स उत्तरेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं एत्थ णं जम्बुद्दीवे दीवे हरिवासे णामं वासे पण्णत्ते, एवं ०जाव पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठे अट्ठ जोअणसहस्साइं चत्तारि अ एगवीसे जोअणसए एगं च एगूणवीसइभागं जोअणस्स विक्खम्भेणं, तस्स बाहा पुरत्थिमपच्चत्थिमेणं तेरस जोअणसहस्साइं तिण्णि अ एगसट्ठे जोअणसए छच्च एगूणवीसइभाए जोअणस्स अद्धभागं च आयामेणंति १ । तस्स जीवा उत्तरेणं पाईणपडीणायया दुहा लवणसमुद्दं पुट्ठा पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं ०जाव लवणसमुद्दं पुट्ठा तेवत्तरिं जोअणसहस्साइं णव य एगुत्तरे जोअणसए सत्तरस य एगूणवीसइभाए जोअणस्स अद्धभागं च आयामेणं २ । तस्स धणुं दाहिणेणं चउरासीइं जोअणसहस्साइं सोलस जोयणाइं चत्तारि एगूणवीसइभाए जोअणस्स परिक्खेवेणं ३ । हरिवासस्स णं भंते ! वासस्स केरिसए आगारभावपडोआरे पण्णत्ते ?, गोअमा ! बहुसमरमणिज्जे भूमिभागे पण्णत्ते ०जाव मणीहिं तणेहि अ उवसोभिए एवं मणीणं तणाण य वण्णो गन्धो फासो सद्दो भाणिअव्वो । हरिवासे णं तत्थ तत्थ देसे तहिं तहिं बहवे खुड्डा खुड्डिआओ एवं जो सुसमाए अणुभावो सो चेव अपरिसेसो वत्तव्वो त्ति । कहि णं भन्ते ! हरिवासे वासे विअडावई णामं वट्टवेअड्ढपव्वए पण्णत्ते ?, गोअमा! हरीए महाणईए पच्चत्थिमेणं हरिकंताए महाणईए पुरत्थिमेणं हरिवासस्स वासस्स बहुमज्झदेसभाए एत्थ णं विअडावई णामं वट्टवेअड्ढपव्वए पण्णत्ते , एवं जो चेव सद्दावइस्स विक्खंभुच्चत्तुव्वेहपरिक्खेवसंठाणवण्णावासो सो चेव विअडावइस्स वि भाणिअव्वो , णवरं अरुणो देवो पउमावई ०जाव विअडावइवण्णाभाइं अरुणे अ इत्थ देवे महिड्ढीए एवं ०जाव दाहिणेणं रायहाणी णेअव्वा, से केणट्ठेणं भन्ते ! एवं वुच्चइ हरिवासे, वासे ?, गोअमा ! हरिवासे णं वासे मणुआ अरुणा अरुणोभासा सेआ णं संखदलसन्निकासा हरिवासे अ इत्थ देवे महिड्ढीए ०जाव पलिओवमट्ठिइए परिवसइ, से तेणट्ठेणं गोअमा ! एवं वुच्चइ । ( सू० ८२ )

' कहि णं भन्ते ! जम्बुद्दीवे दीवे ' इत्यादि, व्यक्तं,नवरं अष्टौ योजनसहस्राणि चत्वारि च योजनशतानि एकविंशत्यधिकानि एकं चैकोनविंशतितमं भागं योजनस्य विष्कम्भेण, महाहिमवतो द्विगुणविष्कम्भकत्वादिति । अधुनाऽस्य बाहादित्रयमाह--" तस्स बाहा " इत्यादि, 'तस्स जीवा' इत्यादि, 'तस्स धणु' मित्यादि, सूत्रत्रयमपि व्यक्तम् । अथास्य स्वरूपं पिपृच्छिषुराह--'हरिवासे ' इत्यादि, हरिवर्षस्य वर्षस्य भगवन् ! कीदृश आकारभावप्रत्यवतारः प्रज्ञप्तः ?, गौतम ! बहुसमरमणीयो भूमिभागः प्रज्ञप्तः, अत्रातिदेशवाक्यमाह—यावन्मणिभिस्तृणैश्चोपशोभितः , एवं मणीनां तृणानां च वर्णो गन्धः स्पर्शः शब्दश्च भणितव्यः, पद्मवरवेदिकानुसारेणेत्यर्थः, अत्र जलाशयस्वरूपं निरूपयन्नाह—' हरिवासे णं ' मित्यादि, सूत्रस्य सरसत्वेन तत्र तत्र देशप्रदेशेषु क्षुद्रिकादयो जलाशया अस्माता एव सन्तीत्यर्थः , अत्रैकदेशग्रहणेन सर्वोऽपि वाप्यादिजलाशयालापको ग्राह्यः, अत्र कालनियमार्थमाह—' एवं जो सुसमाए ' इत्यादि , एवम-उक्तप्रकारेण वर्तमाने तस्मिन् क्षेत्रे कः सुषमायाः अवसर्पिणीद्वितीयारकस्यानुभावः स एवापरिशेषः-सम्पूर्णो वक्तव्यः, सुषमाप्रतिभागनामकावस्थितकालस्य तत्र सद्भावात् । अथास्य क्षेत्रस्य विभाजकगिरिमाह—'कहि णं' मित्यादि, प्रश्नसूत्रं व्यक्तम् , उत्तरसूत्रे हरितो-हरिसलिलाया महानद्याः पश्चिमाया हरिकान्ताया महानद्याः पूर्वस्यां हरिवर्षस्य वर्षस्य बहुमध्यदेशभागे अत्रान्तरे विकटापातिनामा वृत्तवैताढ्यपर्वतः प्रज्ञप्तः , अत्र निगमयन्नाद्यार्थमतिदेशसूत्रमाह—एवं विकटापातिवृत्तवैताढ्यवर्णनं क्रियमाणं य एव शब्दापातिनो विष्कम्भोच्चत्वोद्वेधपरिक्षेपसंस्थानानां वर्णावासो वर्णकग्रन्थविस्तरः चकारात्प्रत्यप्रासादतत्स्वामिराजधान्यादिसंग्रहः, विकटापातिप्रभाणि विकटापातिवर्णाभानि च तेन विकटापातीति नाम, अरुणश्चात्र देव आधिपत्यं परिपालयति तेन तद्योगादपि तथा नाम प्रसिद्धम् । आह विसदृशनामकदेवाद्विकटापातीति नाम कथमुपपद्यते ?,उच्यते-अरुणो विकटापातिपतिरिति तत्कल्पपुस्तकादिषु आख्यायते , सामानिकादीनामप्यनेनैव नाम्ना प्रसिद्धिरिति सामर्थ्याद्विकटापातीति । सुस्थितलवणाद्यधिपतेर्गौतमाधिपतित्वाद् गौतमद्वीप इव बृहत्क्षेत्रविचारादिषु हैरण्यवते विकटापाती, हरिवर्षे गन्धापातीत्युक्तं, तत्त्वं तु केवलिगम्यम् । एवं यावद्दक्षिणस्यां दिशि मेरो राजधानी नेतव्या । अथ हरिवर्षनामार्थं पिपृच्छिषुराह-' से केणट्ठेणं ' इत्यादि, प्रश्नसूत्रं सुगमम् । उत्तरसूत्रे हरिवर्षे वर्षे कञ्चन मनुजा अरुणा रक्तवर्णाः , अरुणं च चीनपिष्टादिकम् आसन्नवस्तूनि अरुणप्रकाशं न कुर्वन्ति अभास्वरत्वात् इमे च न तथा इत्याह--अरुणावभासा इति , कञ्चन-श्वेताः ण पूर्ववत् , शङ्खदलानि--शङ्खखण्डानि हि अतिश्वेताः स्युस्तेषां सन्निकाशाः--सदृशाः तेन तद्योगाद्धरिवर्षं तदुच्यते , कोऽर्थः ?--हरिशब्देन सूर्यश्चन्द्रश्च तत्र कञ्चनमनुष्याः सूर्य इवारुणा अरुणावभासाः , सूर्यश्चात्र रक्तवर्णप्रस्तावादुदयगच्छन् गृह्यते , कञ्चन चन्द्र इव श्वेता इति, हरय इव हरयो हनुष्याः साध्यवसामलक्षणयाऽभेदप्रतिपत्तिः, ततस्तद्योगात् क्षेत्रं हरय इति व्यपदिश्यते , हरयश्च तद्वर्षं च हरिवर्षं, यदा च मनुष्ययोगात् हरिशब्दः क्षेत्रे वर्तते तदा स्वभावाद्बहुवचनान्तः प्रयुज्यते, यदाह तत्त्वार्थमूलटीकाकृद् गन्धहस्ती--"हरयो विदेहाश्च पञ्चालादितुल्या" इति , यद्वा-हरिवर्षनामा अत्र देव आधिपत्यं परिपालयति तेन तद्योगादपि हरिवर्षम् । जं० ४ वक्ष० ।

दो हरिवासाइं । स्था० २ ठा० ३ उ० ।

हरिवासकूड-हरिवासकूट-पुं० । जम्बूद्वीपे मन्दरस्य दक्षिणे

महाहिमवति वर्षधरपर्वते स्वनामख्याते कूटे , स्था० ८ ठा० ३ उ०। जम्बूद्वीपे हरिवर्षस्य दक्षिणतस्याधिष्ठातृदेव स्वनामक्ते निषधवर्षधरपर्वतस्य स्वनामख्याते कूटे , स्था० ६ ठा० ३ उ० ।

हरिवासय-हरिवासक-पुं० । हरिवर्षे जातो हरिवर्षो वाऽस्य वासः । हरिवर्षे उत्पन्ने , अनु० ।

हरिवाहण-हरिवाहन-पुं० । नन्दीश्वरद्वीपस्य अपरार्धाधिपती देवे , जी० ३ प्रति० ४ अधि० । द्वी० ।

हरिवेरुलियवण्णाभ-हरिवैडूर्यवर्णाभ-न० । हरिः पिङ्गो वर्णो, वैडूर्यं मणिविशेषस्तस्य वर्णो नीलो वैडूर्यवर्णस्तत्ताभ्यां द्वन्द्व-स्तद्वदाभाति यत्तद्धरिवैडूर्यवर्णाभम् । स्था० १० ठा० ३ उ० । नीलवैडूर्यवर्णाभे , भ० १६ श० ६ उ० ।

हरिस-हृष-धा० । हर्षे,"हृषादीनामरिः" ॥८।४।२३५॥ इति ऋतः 'अरि' इत्यादेशः । हरिसइ । हृष्यति । प्रा० ४ पाद ।

हृष-पुं० । हर्षणं हर्षः । आतु० । मनःप्रमोदे , आ० १ अधि० । आ० म० । सा० । मनसः प्रीतिविशेषे, विशे० । रूढिगम्या-भरणविशेषे, औ० । सन्तोषे, जीवा० २० अधि० ।"हरिसवस-विसप्पमाणहियया " हर्षवशेन विसर्पद् विस्तारयदपि हृदयं यस्याः सा । भ० ६ श० ३३ उ० । कल्प० । रा० ।

हरिसपुर-हर्षपुर-पुं० । अजमेरनिकटवर्तिनि सुभटपालस-मन्वितानि स्वनामख्याते पुरे , कल्प० २ अधि० ८ क्षण ।

हरिसप्पओसावण्ण-हर्षप्रद्वेषापन्न-पुं० । हर्षेण प्रद्वेषेण हर्षप्र-द्वेषं गतवान्तः । रागद्वेषसमाकुले, सूत्र० १ श्रु० ३ अ० १ उ० ।

हरिसह-हरिसह-पुं० । आलम्भिकायां वीरजिनस्य प्रियपृच्छके , आ० म० १ अ० । दाक्षिणात्यानामग्निकुमाराणा-मिन्द्रे , स्था० २ ठा० ३ उ० ।

हरिसहकूड-हरिसहकूट-न० । जम्बूद्वीपे वक्षस्कारपर्वते स्वनामख्याते कूटे , स्था० ६ ठा० ३ उ० । उत्तरश्रेणिपतिवि-द्युत्कुमारेन्द्रस्य माल्यवद्वर्षधरकूटे, जं० ४ वक्ष० ।

हरिसाहु-हरिसाधु-पुं० आचाराङ्गसूत्रकृताङ्गयोष्टीकाकारक-स्य शीलाङ्काचार्यस्य टीकाकरणसहायके साधौ, आचा० १ श्रु० ६ अ० ४ उ० ।

हरिसिह-हरिशिख-पुं० । उत्तरश्रेणिपतिविद्युत्कुमारेन्द्रे, स्था० ४ ठा० १ उ० ।

हरिसेण-हरिषेण- पुं० । काम्पिल्यनगरे जाते दशमचक्रवर्ति-नि , ती० २७ कल्प । स० । प्रव० । आव० । स्था० ।

हरिसेणे णं राया चाउरंतचक्कवट्टी एगूणणउइं वाससयाइं महाराया होत्था । ( सू० ८६ ) स० ८६ सम० ।

हरिसेणे णं राया चाउरंतचक्कवट्टी देसूणाइं सत्ताणउइं-वाससयाइं अगारमज्झे वसित्ता मुंडे भवित्ता णं ०जाव पव्वइए । ( सू० ६७X )

हरिषेणो दशमचक्रवर्ती देशोनानि सप्तनवति वर्षशतानि गृहमध्युषितत्वादिनि चाधिकानि प्रव्रज्यां पालितवान् । दशव-र्षसहस्रत्वात्सदायुष्कस्येति । स० ६७ सम० । स्वनामख्याते श्रुतभद्रपुत्रे, तन्निवेशिते देशविशेषे च । कल्प० १ अधि० ७ क्षण ।

हरी-हरी-स्त्री० । जम्बूद्वीपे पूर्वाभिमुखेन लवणसमुद्रं गच्छ-न्त्यां स्वनामख्यातायां महानद्याम् , स्था० ७ ठा० ३ उ० ।

हरीडक-हरीतक-पुं० । कोङ्कणदेशप्रसिद्धे कषायबहुले प-ण्याकले, प्रश्न० १ द्वार ।

हरीयई-हरीतकी-स्त्री० । स्वनामख्याते वृक्षे , हरीतकीफले च । विशे० । " ग्रीष्मे तुल्यगुडां सुसैन्धवयुतां मेघावन-द्धऽम्बरे, तुल्यां शर्करया शरद्यमलया शुण्ठ्या तुषारागमे । पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संयोजितां, पुंसां प्राप्य हरीतकीमिव गदा नश्यन्तु ते शत्रवः ॥ १ ॥" सूत्र० १ श्रु० ४ अ० ।

हरे-हरे-अव्य० । क्षेपादिषु, " हरे क्षेपे च " ॥ ८ । २ । २०२ ॥ क्षेपे संभाषणरतिकलहयोश्च हरे इति प्रयोक्तव्यम् । क्षेपे-हरे णिलज्ज । संभाषणे-हरे पुरिसा । रतिकलहे-हरे बहुवल्लह । प्रा० ढुं० २ पाद ।

हरेडगाइ-हरीतक्यादि-पुं० । पथ्याप्रभृतौ, पञ्चा० १० विव० ।

हरेणुया-हरेणुका-स्त्री० । प्रियङ्गौ , उत्त० ३ अ० ।

हल-हल-पुं० । लाङ्गले, औ० । प्रश्न० । स्था० । हलमस्त्यस्य बल-देव, नामैकदेशग्रहणात्-" नञ्चंतस्स य लीला-पायुक्खेवेण कंपिया वसुधा । उच्छल्लन्ति समुद्दा, सइला निपतन्ति तं हलं नमथ ॥१॥" प्रा० ४ पाद । श्रेणिकराजस्य कुक्षिज पुत्रे, अनु० । ( स च वीरान्तिके प्रव्रज्य षोडश वर्षाणि श्रामण्यं परिपाल्य जयन्ते कल्पे उत्पन्नो महाविदेहे सेत्स्यतीति अनुत्त-रोपपातिकदशानां द्वितीये वर्गे षष्ठेऽध्ययने सूचितम् । )

हलकुद्दाल-हलकुद्दाल-पुं० । हलस्योपरितने भागे, उत्त० २ अ० । " हलकुद्दालसंठिया से हणुया गल्लकडिल्ले य अवड्ड " उपा० २ अ० ।

हलद्दा-हरिद्रा-स्त्री० । "पवि पृथिवी-प्रतिभुन्मूषिक-हरिद्रा-विभीतकष्वत्" ॥ ८ । १ । ८८ ॥ इति आदेरितो ऽकारादेशः । " हरिद्रादौ लः " ॥ ८ । १ । २५४ ॥ इति रस्य लः । हलद्दा । प्रा० । " छायाहरिद्रयोः" ॥८ । ३ । ३४॥ इति स्त्रियां ङीर्वा । हलद्दी । हलद्दा । पीतवर्णे मूलभेदे, प्रा० ३ पाद ।

हलधर-हलधर-पुं० । बलदेवे , प्रव० २०६ द्वार । स्था० । प्रश्न० । जं० । रा० । आ० म० ।

हलधरकोसेज्ज-हलधरकौशेय-न० । बलदेववस्त्रे, औ० । रा० ।

हलधरवसण-हलधरवसन-न० । हलधरो बलदेवस्तस्य व-सनम् । बलदेववस्त्रे, तच्च किल नीलं भवति । सर्वैव सर्वा-स्वभावतो हलधरस्य नीलवस्त्रपरिधानात् इति, नीलोप-मायामिदं वर्णितं । रा० ।

**हल्लप्प**–देशी–बहुभाषिणि, दे० ना० ८ वर्ग ६१ गाथा ।

**हलबोल**–देशी–कलकले, दे० ना० ८ वर्ग ६४ गाथा ।

**हला–हला**–अव्य० । देशविशेषगौरवार्थे स्त्र्यामन्त्रणवचने, दश० ७ अ० ।

**हले–हले**–देशी०।सख्या आमन्त्रणे, "मामि–हला–हले सख्या वा" ॥ ८ । २ । १९५ ॥ एते सख्या आमन्त्रणे वा प्रयोक्तव्याः । "पणवह माणस्स हला । हले हयासस्स" प्रा० । विशेषगौरवार्थे स्त्र्यामन्त्रणे,दश० ७ अ० । ( अत्रन्या व्याख्या 'भामा' शब्दे पञ्चमभागे गता ।) त्रीन्द्रियजीवविशेषे, प्रज्ञा० १ पद ।

**हलि–हली**–स्त्री० । पर्वतविशेषे, जं० ३ वक्ष० ।

**हलिअ–हालिक**–पुं० । "वाऽव्ययोत्खातादावदातः" ॥ ८ । १ । ६७ ॥ इति आदेराकारस्य अद्वा । हलिओ । हालिओ । हलवाहके, प्रा० १ पाद ।

**हलिद्दपत्त–हरिद्रपत्र**–न० । चतुरिन्द्रियजीवविशेषे, प्रज्ञा० १ पद । जी० ।

**हलिद्दमच्छ–हरिद्रमत्स्य**–पुं० । मत्स्यविशेषे, प्रज्ञा० १ पद । विपा० ।

**हलिद्दमत्तिया–हरिद्रमृत्तिका**–स्त्री०। श्लक्ष्णबादरपृथिवीकायविशेषे, प्रज्ञा० १ पद ।

**हलिद्दागुलिया–हरिद्रागुटिका**–स्त्री० । हरिद्रासारनिर्वर्त्तितायाँ गुटिकायाम्, जी० ३ प्रति० ४ अधि० ।

**हलिद्दाभेय–हरिद्राभेद**–पुं० । हरिद्राच्छेदे, जी० ३ प्रति० ४ अधि० । रा० ।

**हलिद्दुग–हरिद्रुक**–पुं० । स्वनामख्याते नगरे । यत्र विहारकर्मेण स्वामी गतः । आ० चू० १ अ० ।

**हलिसागर–हरिसागर**–पुं० । मत्स्यविशेषे, जी० १ प्रति० । प्रज्ञा० ।

**हलुअ लघुक**–न० । "लघुके ल–हो." ॥ ८ । २ । १२२ ॥ इति लघुकशब्दे घस्य हत्वे कृते लहोऽर्यत्ययो वा भवति । हलुअं । लहुअं । शीघ्र. प्रा० २ पाद ।

**हलूर**–देशी–सतृष्णे, दे०ना० ८ वर्ग ६२ गाथा ।

**हल्ल–हल्ल**–पुं० । चम्पायां कूणिकराजभ्रातरि श्रेणिकस्य चेल्लणागर्भजे पुत्रे, भ० ७ श० ९ उ० ।

"हल्लविहल्लनामाणो कूणियस्स चिल्लणादेवीअंगजाया दो भायरा अन्नेऽवि अत्थि । अहुणा हारस्स उप्पत्ती भण्णइ— इत्थ सक्को सेणियस्स भगवंते पइ निच्चलभत्तिस्स पसंसं करेइ । तओ सेडुयस्स जीवदेवो तब्भत्तिरंजिओ सेणियस्स तुट्ठो संतो अट्ठारसवंकं हारं देइ, दोन्नि य वट्टगोलके देइ । सेणिएण सो हारो चेल्लणाए दिन्नो पिय त्ति काउं, वट्टदुगं सुनंदाए अभयमंतिजणणीए । ताए रुट्ठाए किं अहं चेडरूवं ति काऊण अच्छोडिया भग्गा, तत्थ एगम्मि कुंडलजुयलं एगम्मि वत्थजुयलं तुट्ठाए गहियाणि । अन्नया अभओ सामि पुच्छइ—' को अपच्छिमो रायरिसि' त्ति । सामिणा उदायणो वागरिओ, अओ परं बद्धमउडा न पव्वयंति । ताहे अभएण रज्जं दिज्जमाणं न इच्छियं ति पच्छा सेणिओ चिंतइ ' कोणियस्स दिज्जिहि ' त्ति हल्लस्स हत्थी दिन्नो सेयणगो विहल्लस्स देवदिन्नो हारो, अभएण वि पव्वयंतेण सुनंदाए खोमजुयलं कुंडलजुयलं च हल्लविहल्लाणं दिन्नाणि । महया विहवेण अभओ नियजणणीसमेओ पव्वइओ । सेणियस्स चेल्लणादेवीअंगसमुब्भूया तिन्नि पुत्ता कूणिओ हल्लविहल्ला य ।" नि० १ श्रु० १ वर्ग १ अ० । आ० क० । आव० । आ० म० । गोवालिकातृणसमाकारे कीटविशेषे, भ० १५ श० । राजगृहे श्रेणिकराज्ञो धारिण्यां जाते पुत्रे, ( "जयंते दोण्हि" जयन्ते विमाने उपपद्य सेत्स्यतीत्यादि 'महासीहसेण' शब्दे षष्ठभागे व्याख्यातम् । )

**हल्लप्फलिअ**–देशी—आकुलत्वे, दे० ना० ८ वर्ग ५६ गाथा ।

**हल्लिअ**–देशी—चलिते, दे० ना० ८ वर्ग ६२ गाथा ।

**हल्लीस**–देशी—रासे, दे० ना० ८ वर्ग ६१ गाथा ।

**हल्लोहलिआ–हल्लोहलिका**–स्त्री० । सरट्याम्, "हल्लो हलिआ आहलोडी सरडी कांकिडी" इत्येकार्थाः । कल्प० ३ अधि० ६ क्षण ।

**हव–भू**–धा० । सत्तायाम्, "भुवेर्हो–हुव–हवाः" ॥ ८ । ४ । ६० ॥ इति भुवो धातोर्हो हुव हवा इत्येते आदेशा वा । होइ । होन्ति । हुवइ । हुवन्ति । हवइ । हवन्ति । भवति । भवन्ति । प्रा० ४ पाद ।

**हविअ–भूत्वा**–अव्य० । उत्पद्यत्यर्थे, "क्त्व इय–दूणौ" ॥ ८ । ४ । २७१ ॥ शौरसेन्यां क्त्वाप्रत्ययस्य इय दूण इत्यादेशौ वा भवतः । हविअ । होदूण । प्रा० । प्रक्षिप्ते, 'हविअं' प्रक्षिप्तम् । दे० ना० ८ वर्ग ६२ गाथा ।

**हवै–हवै**–अव्य० । हवै इत्येतदपि निपातद्वयं हिशब्दार्थत्वाद्यस्माद्यर्थे, "न हवै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति" इति श्रुतिः । विशे० ।

**हव्व–हव्य**–न० । शीघ्रे, अनु० । स्था० । आचा० । ज्ञा० । जी० । औ० । नं० । भ० । विपा० । नि० ।

**हव्ववाह–हव्यवाह**–पुं० । अग्नौ, आचा० १ श्रु० ४ अ० ३ उ० ।

**हस–हस**–धा० । हासे, दन्तनिष्कासने, "व्यञ्जनाददन्ते" ॥ ८ । ४ । २३९ ॥ इति अन्तेऽकारः । हसइ । प्रा० । "हसेर्गुञ्जः" ॥ ८ । ४ । १९६ ॥ इति हसेर्गुञ्जादेशः । गुञ्जइ । हसति । प्रा० । "वर्त्तमाना—पञ्चमी—शतृषु वा" ॥ ८ । ३ । १५८ ॥ इति अकारस्थाने एकारो वा । हसेइ । हसइ । प्रा० ३ पाद ।

**हसंत–हसत्**–त्रि० । परिहासं कुर्वाणे, भ० १३ श०६उ० । "हंसः

सेश्रा आ वा " ॥८।३।२८॥ इति जश्शसोश्च स्थाने आकारो वा । एसा हसंतीश्रा । प्रा० ३ पाद ।

हसण-हसन-न० । हासे, स्था० ४ ठा० १ उ० । पञ्चा० । नि० चू० ।

जे भिक्खू मुहं विप्फालिय विप्फालिय हसइ हसंतं वा साइज्जइ ॥ २६ ॥

मुखं वक्त्रं वयणं च एगट्ठं, विप्फालेति विहाडेति अतीव फालेति विप्फालेति । विये भृशार्थे व विविधैः प्रकारैः फालेति विप्फालेति । विगाड (डि) कारयत् । वीप्सा पुनः पुनः मोहनीयोदयो हास्यं, तस्स चउव्विहा उप्पत्ती ।

गाहा—

पासित्ता भासित्ता, सोतुं सरितूण वा वि जे भिक्खू ।
विप्फालेत्ताण मुहं, सविगार कहकहं हसती ॥ २५६॥

असंबुडादि पासित्ता वा अतिविकर्मालयं भासित्ता,णमोक्कारगिज्जुलीए कागसरडादि अक्खाणगं सुणेत्ता, पुव्वरयपुव्वकीलियाति सरिऊण मोहमुदीरकं अएणस्स वा हासुप्पायगं सविकारं महतेण वा उक्कालियासद्देण कहकह भणणाति, जो एवं हसति ।

गाहा-

सो आणा अणवत्थं, मिच्छत्तविराहणं तहा दुविधा ।
पावति जम्हा तेणं, सवियारकहकहं ण हसे ॥ २५७ ॥

को दोसो ?,

गाहा-

पुव्वामयप्पकोवो, अहो व धमणी गलस्स गहणं वा ।
असंवुडणं भंवज्जा, तावसमरणेण दिट्ठंतो ॥२५८॥

पुव्वामयो सूलादिरोगो सो उवसंतो पकोवं गच्छति । कएणस्स अहो महंती गलसरणी मता भवति, मा भंवज्ज, मुहस्स वा असंवुडणं भंवज्ज, जहा सेट्ठिस्स मुहं विप्फाडिय हसमाणस्स तारिसं चेव ठितं, ताहे वेज्जेण आयपिंड तावित्ता मुहस्स ढोइतं, संवुडं जातं, किंचान्यत् पंचसता तावसा णं मोयए भक्खंति । तत्थ एगेण अंतेसकाले दाढिया मोडिया, सव्वे पहसिता गललग्गेहिं मोयगेहिं सव्वे मता ।

गाहा-

आसंकवेरजणगं, परपरिभवकारगं च हासं तु ।
संपातिमाण य वहो, हसयंत मयगदिट्ठंतो ॥२५९॥

परस्स आसंका अहं अणेण हसितो त्ति । किंच, अहमणेण हसितो त्ति वेरसंभवो भवति । हसंतेहि परपरिभवो कतो भवति, संपातिमादि मुहं पविसंति, मयगदिट्ठंतो य भाणियव्वो । राया सह देवीए उज्जाणेण चिट्ठति,देवी भणति-राय ! मतं माणुसं ति हसति । राया संभंते कहं कम्स वा ? साधुं दरिसेति, राया भणति कहं मतो त्ति,देवी भणति-इह भव सव्वसुहवर्जितत्वात् मृतो मृतवत् ।

गाहा-

बितियपदमणप्पज्झे,उप्पात विकोविते य अप्पज्झे ।
जाणंते वावि पुणो, सागारितमाइकज्जेसु ॥ २६० ॥

सागारियमाति कज्जेसु सागारियं मेहुणं को वि पडिवुज्झ-
वसहीए सयति ताहे हसिउं जति जेण णातो ऽयमिति लज्जिया ण मोहो णासति । अहवा मा अपरिणया इत्थिगाए सद्दं सुणेतु त्ति हसिज्जति । आदिसद्दातो कारणे आगरालिसु । नि० चू० ४ उ० ।

हसणिज्ज-हसनीय-त्रि० । हसितुं योग्ये, आचा० १ श्रु० २ अ० १ उ० ।

हसमाणी-हसन्ती-स्त्री० । " अजातेः पुंसः " ॥८।३।३२॥ इति स्त्रियां वर्त्तमानात् पुल्लिङ्गात् ङीर्वा । हसमाणी । हसमाणा । हासं कुर्वत्याम् , प्रा० ३ पाद ।

हसहसेऊण-जाज्वालित्वा-अव्य० । भृशमुद्दीपितो भूत्वेत्यर्थे, सू० ३ उ० ।

हसाविअ-हासित-पुं० । " णुगावी क्त—भाव—कर्म्मसु " ॥ ८ । ३ । १५२ ॥ इति णे स्थाने णुगावि इत्यादेशौ भवतः । हासिअं । हसाविअं । हासं प्रापिते, प्रा० ३ पाद ।

हसिअ-हसित त्रि० । " क्त " ॥ ८ । ३ । १५६ ॥ क्ते परतोऽत इत्वम् , हसिअं । हासकारिते, प्रा० ३ पाद ।

हसिऊण-हसित्वा--अव्य० । " एच्च क्त्वा—तुम्—तव्य—भविष्यत्सु ॥ ८ । ३।१५७ ॥ इति अत एकारः इकारश्च । हसेऊण । हसिऊण । हासं कृत्वेत्यर्थे, प्रा० ३ पाद ।

हसिज्जंत-हास्यमान-त्रि० । " ईअ इज्जौ क्यस्य " ॥८।३।१६०॥ इति क्यस्य स्थाने ईअ इज्ज इत्येतावादेशौ । हसिअंतो । हसिज्जंतो । हासविषयीक्रियमाणे , प्रा० ३ पाद ।

हसितून--हसित्वा-अव्य० । " क्त्वस्तूनः " ॥ ८ । ४ । ३१२ ॥ इति पैशाच्यां क्त्वाप्रत्ययस्य स्थाने तून इत्यादेशः । हसितून । हासं कृत्वेत्यर्थे प्रा० ४ पाद ।

हसिय-हसित--न० । वक्रोक्तिगर्भे हसने, प्रव० १६९ द्वार । दश० । ईषत् हासे, प्रश्न० ४ संव० द्वार । औ० । कपोलविकाशिनि प्रसन्नदर्शिनि च हसने, जं० २ वक्ष० । जी० । हसितं यत् कपोलविकाशमात्रसूचितं नत्वट्टहासादि । रा० । उद्बुद्धे, विशे० ।

हसिर--हसितृ-त्रि० । " शीलाद्यर्थस्येरः " ॥ ८ । २ । १४५ ॥ इति शीलार्थप्रत्ययस्येरादेशः । हसनशीले, प्रा० २ पाद ।

हसिरिआ--देशी—हास्ये,दे० ना० ८ वर्ग ६२ गाथा ।

हस्स-ह्रस्व--त्रि० । वामनकादौ,सूत्र० २ श्रु०१ अ० । आचा० । को० । प्रश्न० ।

हस्य-न० । हसने, भ० १ श० ६ उ० । प्रश्न० ।

घर्ष-पुं० । घर्षणे , प्रश्न० २ पद ।

हस्--धा० । हसने, "गमादीनां द्वित्वम् " ॥ ८ । ४ । २४६ ॥ इति सकारस्य द्वित्वम् । हस्सइ । हसति , । प्रा० ४ पाद ।

हहा-हहा-अव्य । खेदे , स्था० ।

हा-हा--अव्य० । महत्खेदे , उत्त० २१ अ० । सं० ।

हाउं-हापयित्वा-अव्य० । वञ्चयित्वेत्यर्थे , सू० ३ उ० ।

पुत्तेण से पलाविया णि, तेण विभंगेण दिट्ठाणि मारिपाणि य सोलस य रोगायंका पाउब्भूया, विवरीया इंदियत्था जाया, जं दुग्गंधं तं सुगंधं मन्नइ । पुत्तेण य से अभयस्स कहियं, ताहे चंदणिउयगं दिज्जइ । भणइ—अहो मिट्ठ मिट्ठुण आलिप्पइ पूइमंसं आहारो, एव किमिऊण मओ, अह सत्तमं गओ । ताहे सयणेण पुत्तो से ठविज्जइ सो नेच्छइ, मा नरगं जाइस्सामि त्ति सो नेच्छइ । ताहे भणंति-अम्हे विगिंचिस्सामो तुमं नवरं एकं मारेहि सेसए सव्वे परियणो मारिहिति । इत्थीए महिसओ विइए कुहाडो य रत्तचंदणेणं रत्तकणवीरेहिं, दोवि डंडीया सो तेण कुहाडएण अप्पा हओ पडिओ विलवइ, सयणं भणइ—एयं दुक्खं अवणेह, भणंति—न तीरंति । तो कहं भणइ-अम्हे विगिंचामो त्ति ?, एवं पसंगेण भणियं, तेण देवेणं सेणियस्स तुट्ठेण अट्ठारसवंको हारो दिणो, दोणि य अक्खोलियवट्टा दिण्णा । सो हारो चेल्लणाए दिण्णो पिय त्ति काउ, वट्टा नंदाए । ताए रुट्ठाए किमहं चेडरूव त्ति काऊण अंतरिक्खया खंभे आवडिया भग्गा, तत्थ एगम्मि कुंडलजुयलं, एगम्मि देवदूसजुयल, तुट्ठाए गहियाणि । एवं हारस्स उप्पत्ती । " आव० ४ अ० । 'हारुत्थयसुकयरइयवच्छं' हारेण अवस्तृतम्-आच्छादितम् । अत एव सुष्ठु कृतं रतिकं दर्शनां प्रमोददायि एवंविधं वक्षो हृदयं यस्य स तथा । कल्प० १ अधि० ३ क्षण । हरणं हारः । हृतौ, ध्य० १ उ० । स्वनामख्याते द्वीपे, जी० ३ प्रति० ४ अधि० । सू० प्र० ।

हारज्झयण-हाराध्ययन-न० । गृद्धिदशानां नवमाध्ययने, स्था० १ ठा० ३ उ० ।

हारणिगर-हारनिकर-पुं० । पुञ्जीकृतमुक्ताहारे, कल्प० १ अधि० २ क्षण ।

हारपुडपाय-हारपुटपात्र-न० । लोहपात्रे, आचा० २ श्रु० १ चू० ६ अ० १ उ० ।

हारभद्द-हारभद्र-पुं० । हारद्वीपे स्वनामख्याते देवे, जी० ३ प्रति० ४ अधि० ।

हारमहाभद्द-हारमहाभद्र-पुं० । हारद्वीपे स्वनामख्याते देवे, जी० ३ प्रति० ४ अधि० ।

हारमहावर हारमहावर-पुं० । हारसमुद्रे स्वनामख्याते देवे, जी० ३ प्रति० ४ अधि० ।

हारव-नश-धा० । अदर्शने, " नशेर्विउड-नासव-हारव-विप्पगाल-पलावाः " ॥ ८ । ४ । ३१ ॥ इति नशधातोर्हारवाऽऽदेशः । हारवइ । नश्यति । प्रा० ४ पाद ।

हारवर-हारवर-पुं० । स्वनामख्याते द्वीपे, समुद्रे च । चं० प्र० २० पाहु० । जी० । सू० प्र० । हारवरद्वीपे स्वनामख्याते देवे, जी० ३ प्रति० ४ अधि० ।

हारवरोभास-हारवरावभास-पुं० । स्वनामख्याते द्वीपे,समुद्रे च हारवरावभासे स्वनामख्याते देवे,जी० ३ प्रति० ४ अधि० ।

हारवरोभासमहाभद्द-हारवरावभासमहाभद्र-पुं० । हारवरावभाससमुद्रे स्वनामख्याते देवे, जी० ३ प्रति० ४ अधि० ।

हारविराइय-हारविराजित-त्रि० । मौक्तिकादिमालया शोभमाने, कल्प० १ अधि० २ क्षण । स्था० । 'हारविराइयवच्छे' हारेण विराजमानं 'वच्छं' त्ति' हृदयं यस्य । कल्प० १ अधि० १ क्षण । हारैर्विराजितं वक्षो येषां ते हारविराजितवक्षसः । जी० ३ प्रति० ४ अधि० । "हारविराइयरइयवच्छा" हारेण विराजमानेन रचितं शोभितं वक्षो यस्य स हारविराजमानरचितवक्षः । रा० । औ० ।

हारि-हारिन्-त्रि० । मनआह्लादकारिणि, आचा० १ श्रु० ६ अ० २ उ० ।

हारिभद्द-हारिभद्र-पुं० । हरिभद्रस्येदं हारिभद्रम् । हरिभद्रसूरेः सम्बन्धिनि, षो० १६ विव० ।

हारि(री)य-हारीत-पुं० । कौत्सगोत्रविशेषप्रवर्त्तके स्वनामख्याते ऋषौ, स्था० ७ ठा० ३ उ० । नं० । हारितोऽचलभ्राता । आ० म० १ अ० । गोत्रभेदे, कल्प० २ अधि० ८ क्षण ।

हारि(री)या-हारीता-स्त्री० । श्रीगुप्तार्षिगणस्य चारणगणस्य प्रथमशाखायाम्, कल्प० २ अधि० ८ क्षण ।

हारि(री)यायण-हारीतायन-पुं० । हारीतर्षिगोत्रापत्ये,कल्प० २ अधि० ८ क्षण ।

हारीस-हारीश-पुं० । म्लेच्छदेशभेदे, तत्र जातेऽनार्यमनुष्ये च । प्रज्ञा० १७ पद २ उ० ।

हारोत्थय-हारावस्तृत-त्रि० । हारेणाऽऽच्छादिते, कल्प० १ अधि० ३ क्षण । "हारोत्थयसुकयरइयवच्छा" हारावस्तृतेन-हारावच्छादनेन सुष्ठु कृतरतिकं वक्ष-उरो यस्याः । औ० । भ० । हारेणावस्तृतमाच्छादितं तेनैव सुष्ठु कृतं रतिदं च वक्ष-उरो यस्याः । नं० ।

हारोद-हारोद-पुं० । हारद्वीपस्याभितः समुद्रे, जी० ३ प्रति० ४ अधि०

हाल-हाल-पुं० । 'पगिहि' शब्दे पञ्चमभागे उदाहृते सुगुकच्छराजे, आ० क० ४ अ० ।

हाला-देशी—कामिश्रिहंश पुरुषाधामन्त्रणे, ज्ञा० १ श्रु० ६ अ० ।

हालाहल-हालाहाल-पुं० । श्रावस्त्यां नगर्यामाजीविकोपासके स्वनामख्याते कुम्भकारे, भ० १५ श० । त्रीन्द्रियजीवविशेषे, प्रज्ञा० १ पद । स्थावराविषभेदे, ग० २ अधि० ।

हालिज्ज-हारीत-न० । स्थविरात् श्रीगुप्तार्षिगणस्य चारणगणस्य तृतीये कुले, कल्प० २ अधि० ८ क्षण ।

हालिद्द-हारिद्र-त्रि० । हरिद्रावर्णे पीते, कर्म० १ कर्म० । सू० प्र० । रा० । जी० ।

एगे हालिद्दे । स्था० १ ठा० ।

हालिद्दणाम-हारिद्रनामन्-न० । यदुदयात् जन्तुशरीरं हारिद्रं-पीतं हरिद्रादिवद्भवति तद् हारिद्रनाम । वर्णनामभेदे, कर्म० १ कर्म० ।

हालियंड-हालिकाण्ड-न० । गृहकोलिकायाः ब्राह्मण्या वा अण्डे, कल्प० ३ अधि० ६ क्षण ।

हालिय-हालिक-पुं० । हलेन व्यवहरतीति हालिकः । अनु० । लाङ्गलिके, ज्ञा० १ श्रु० १ अ० ।

**हालिया-हालिका**-स्त्री० । गृहकोलिकायाम् , ब्राह्मण्यां च । कल्प० ३ अधि० ६ क्षण ।

**हाव-हाव**-पुं० । मुखविकारलक्षणे स्त्रीणां चेष्टाविशेषे , आ० १ श्रु० १ अ० । रा० ।

**हास-हास**-पुं० । हसनं हासः । हास्यमोहनीयकर्मोदयतो विकृतवचनैर्विधीयमाने , दश० १ तत्त्व । हीभयादिनिमित्ते चेतोविसेव, आचा० १ श्रु० ३ अ० २ उ० । मोहोदयजनितविकारे , स्था० ३ ठा० १ उ० । स्त्रीभिः सह हसितं , नि० चू० १ उ० । हासाद्भवन्ति , हाससम्भूतत्वाद्वा हासाः । हासेजवृषभगेषु, स्था० ४ ठा० ४ उ० । वाणिक्यन्तराणां महाकन्दव्यन्तराणामिन्द्रे, स्था० २ ठा ३ उ० ।

**हास्य**-न० । हास्यतेऽनेनेति हासस्तद्भावो हास्यम् । हास्यमोहनीये कर्मणि , दश० १ अ० । हसनं, ग० २ अधि० । यत् सनिमित्तमनिमित्तं वा हसति तद्धास्यम् । सू० १ उ० ३ प्रक० । उत्त० । आचा० । प्रव० । विकृतासम्बद्धपरवचनवेषालंकारादिहास्यार्हप्रभवे मनःप्रकर्षादिचेष्टात्मके रसभेदे, अनु० ।

हास्यरसं हेतुलक्षणाभ्यामाह—

रूववयवेसभासा, विवरीअविलंबणासमुप्पणो ।
हासो मणप्पहासो, पगासलिंगो रसो होइ ॥ १४ ॥
हासो रसो जहा—
पासुत्तमसीमंडिअ, पडिबुद्धं देवरं पलोअंती ।
ही जह थणभरकंपण-पणमिअमज्झा हसइ सामा ॥ १५ ॥

रूपवयोवेषभाषाणां हास्योत्पादकानां वैपरीत्येन या विडम्बना—निवर्त्तना तत्समुत्पन्नो हासो रसो भवतीति संबन्धः, तत्र पुरुषादेर्योषिदादिरूपकरणं रूपवैपरीत्यं,तरुणादेर्वृद्धादिभावापादनं वयोवैपरीत्य , राजपुत्रादेर्वणिगादिवेषधारणं वेषवैपरीत्यं, गुर्जरादेस्तु मध्यदेशादिभाषाभिधानं भाषावैपरीत्यम् । स च कथंभूतः?, इत्यादित्याह 'मणप्पहासो' त्ति मनःप्रहर्षकारी प्रकाशो नेत्रवक्त्रादिविकाशस्वरूपो लिङ्गं यस्य स तथा, अथवा-प्रकाशानि-प्रकटान्युदरप्रकम्पनाऽट्टहासादीनि लिङ्गानि यस्येति स तथेति ॥१४॥'पासुत्तमसी ' इत्यादि निदर्शनगाथा इह कदाचित्सुप्ता प्रसुप्ता निजदेवरस्य मषीमण्डनेन मण्डित ' , तं प्रबुद्धं च सा हसन्ति । तां च हसन्तीमुपलभ्य कश्चित्पार्श्ववर्त्तिनं कञ्चिदामन्त्र्य प्राह-हीति कन्दर्पातिशयद्योतक वचः, पश्यत भो श्यामा स्त्री यथा हसतीति सम्बन्धः, किं कुर्वती ?-देवरं प्रलोकयन्ती । कथं भूतम् ?'पासुत्ते' त्यादि लिङ्गव्यत्ययादत्र कर्मधारयः-पूर्वं प्रसुप्तश्च असौ ततो मषीमण्डितश्चासौ ततोऽपि प्रबुद्धश्च स तथा तं, कथंभूता ? स्तनभरकम्पनेन प्रणतं मध्यं यस्याः सा तथेति । अनु० । प्रहासकाभिधाने स्मरविशेषे , प्रश्न० ५ सव० १ द्वार । "हासं खेड्डं कंदप्पगाहं वा पकरेज्जा उवहसं" महा० १ अ० । हास्यं न सेवितव्यमिति सत्यव्रतस्य पञ्चमी भावना । प्रश्न० २ संव० द्वार । (सा च ' मुसावायवेरमण ' शब्दे षष्ठे भागे द्रष्टव्या । ) व्यन्तरभेदे , स्था० २ ठा० ३ उ० । आचा० ।

**हासज्झाण-हासध्यान**-न० । हासो—हास्यं तस्य ध्यानं यत्र— एडकरुद्राचार्यशिष्यस्येव मिथ्यादृष्टिकस्य यज्ञबाहुकुमारं प्रति सुन्दरमृषाऽस्य च वा । दुर्ध्यानभेदे, आतु० ।

**हासकम्म--हास्यकर्मन्**--न० । यदुदयेन सनिमित्तमनिमित्तं वा हसति तत्कर्म हास्यम् । मोहनीयकर्मभेदे,स्था० ६ ठा० ३ उ० ।

**हासकर--हास्यकर**--पुं० । हास्योपजीविनषु, भ० ६ श० ३३ उ० । औ० । जं० । हास्यं च विचित्रवेषवचनैः स्वस्य परेषां हासनं भाण्डवत्परच्छिद्रान्वेषणं येन तत्करः । ध०३ अधि० । वेषवचनादिना स्वपरहासोत्पादके, स्था० ४ ठा० ४ उ० ।

अथ हासकरमाह—

वेसवयणेहि हासं, जणयंतो अप्पणो परेसिं च ।
अह हासणो त्ति भण्णइ,घयणो व्व छले नियच्छंतो ।४७०।

'घयणो व्व' भाण्ड इव परेषां छिद्राणि विरूपरूपभाषाविषयाणि नियच्छन् निरन्तरमन्वेषयन् तादृशैरेव वेषवचनैर्विविधैरात्मनः परेषां च प्रेक्षकाणां हास्यं जनयन् उत्पादयन् , अथैष हासनो हास्यकर इति भण्यते । बृ०१ उ०२ प्रक० । पं० व० ।

**हासकुहय--हास्यकुहक**--पुं० । हास्यकारिकुहके, ' आवि हासं कुहराज्जे स भिक्खू ' दश० १० अ० ।

**हासणिस्सिय--हासनिश्रित**--न० । मृषाभेदे , यथा कन्दर्पिकाणां कस्मिँश्चित्संबन्धिनि गृहीते पृष्टानां न दृष्टमित्यादि । स्था० १० ठा० ३ उ० ।

**हासबोलबहुल--हासबोलबहुल**--पुं० । हासबोलौ च बहुलावतिप्रभूतौ येषां ते हासबोलबहुलाः । हास्यकलकलप्रचुरेषु, जी० ३ प्रति० ४ अधि० ।

**हासमोहणिज्ज--हास्यमोहनीय**--न० । मोहनीयकर्मभेदे, यदुदयवशात्सनिमित्तमनिमित्तं वा हसति स्मयते वा तद् हासमोहनीयम् । पं० सं० ३ द्वार । कर्म० ।

**हासयिता--हासयितृ**--त्रि० । परिहासकारिणि , प्रश्न० १ आश्र० द्वार ।

**हासण- हासन**--पुं० । हास्यकरे, पं० व० ५ द्वार ।

**हासरइ--हास्यरति**--पुं० । औत्तराहाणां महाकन्दव्यन्तराणामिन्द्रे, स्था० २ ठा० ३ उ० । हास्यरतियुगले, 'हासरइकुच्छाभयभेदा " हास्यं च रतिश्च कुत्सा च भयं च हास्यरतिकुत्साभयानि तेषां भेदो व्यवच्छेदो हास्यरतिकुत्साभयभेदः । कर्म० ४ कर्म० ।

**हासा- हासा**--स्त्री० । उत्तररुचकपर्वतवास्तव्यायां दिक्कुमार्याम् , आ० चू० १ अ० । जं० । आ० क० ।

**हासाइछक्क- हास्यादिषट्क**--न०।हास्यरत्यरतिशोकभयजुगुप्सारूपे हास्योपलक्षित षट्के, कर्म० ६ कर्म० । पं० सं० ।

**हासाविअ--हासित**--न०। हस णिच् क्त । णेरायादेशे कृते । "अ-वेल्लुकयादेरत आः " ॥८।३।१५३॥ इति आदेरत आ भवति । हास्यं कारिते, प्रा० ३ पाद ।

**हासीअ**-देशी-हास्ये, दे० ना० ८ वर्ग ६२ गाथा ।

हासुस्सित-हासोत्सुत-पुं०। हासेन युक्त उत्सुतो हृष्टो हासोत्सुतः। हासितमुखे प्रहृष्टे, व्य० २ उ०। बृ०।

हाहक्किय-हाहाकृत-त्रि०। धिगिति भणनपूर्वकं थूत्कृते, बृ० ३ उ०।

हाहा-हाहा-अव्य०। दुःखार्त्तलोकवचने, जं० २ वक्ष०। निपा०। गन्धर्वविशेषे, प्रज्ञा० १ पद।

हाहाभूअ-हाहाभूत-पुं०। हाहा इत्यस्य शब्दस्य दुःखार्त्तलोकेन करणं हाहोच्चारणं। तद्भूतः प्राप्तो यः कालः स हाहाभूतः। हाहेति शब्दे प्राप्ते काले, भ० ७ श० ६ उ०। "दुस्समदुस्समाए समाए हाहाभूए काले भविस्सइ" जं० २ वक्ष०।

हि-हि-अव्य०। यस्मादर्थे, विशे०। सूत्र०। रत्ना०। निश्चिते, ध० ३ अधि०। अष्ट०। प्रति०। पुनरर्थे, विशे०। भावनानुवचने, पञ्चा० १४ विव०। एवकारार्थे, पञ्चा० २ विव०। प्रशान्तिभाषातिशये, अनु०।

हिअ-हृत-त्रि०। "इत्कृपादौ" ॥ ८।१।१२८॥ कृपादित्वाद् त इत्वम्। अपहृते, स्थानान्तरं गमिते च। प्रा० १ पाद।

हित-न०। कल्याणकप्रापके, दश० ४ अ० १ उ०।

किं कर्त्तव्यमित्याह—

अप्पहियं कायव्वं, जइ सक्का परहियं च पयरेज्जा।

अत्तहियपरहियाणं, अत्तहियं चेव कायव्वं ॥ महा० ४ अ०।

हिअअ-हृदय-न०। "स्वार्थे कश्च वा" ॥ ८।२।१६४॥ इति प्राकृते स्वार्थिकः कप्रत्ययः। अन्तःकरणे, प्रा० २ पाद।

हिअडड-हृदय-न०। "योगजाश्चैषाम्" ॥ ८।४।४३०॥ इति स्वार्थे डडप्रत्ययः। "फोडेन्ति जे हिअडडं अप्पणउं।" अन्तःकरणे, प्रा०। हिअडा फुट्टि तड त्ति करि कालक्खेवं काइं। प्रा० ४ पाद।

हिअपवित्ति-हितप्रवृत्ति-स्त्री०। परार्थपरमार्थकरणे, पं० व० २ द्वार।

हिअय-हृदय-न०। "इत्कृपादौ" ॥ ८।१।१२८॥ इति ऋकारेण इत्वम्। हिअयं। अन्तःकरणे, प्रा० १ पाद।

हितक-पुं०। हितकारिणि, कल्प० १ अधि० ३ क्षण।

हिअयगमणिज्जा-हृदयगमनीया-स्त्री०। हृदयप्रह्लादिहृद्गतशोकाद्युच्छेदिकायाम्, कल्प० १ अधि० ३ क्षण।

हिंगु-हिङ्गु-न०। रामठदेशोद्भवे वृक्षे, हिङ्गी च। यस्य निर्यासो हिङ्गु द्रव्यम्। ल०।

हिंगुरुक्ख-हिङ्गुवृक्ष-पुं०। वृक्षविशेषे, यस्य निर्यासो हिङ्गु भवति, भ० ८ श० ३ उ०।

हिंगुलय-हिङ्गुलक-न०। स्वनामख्याते वर्णकद्रव्ये, ज्ञा० १ श्रु० १ अ०। सूत्र०। आचा०। उत्त०। खनिजोऽपि हिङ्गुलः "ओमणसयं तु गंतुं" इत्यत्रबलात् प्रवहणादागतोऽचित्तीभवति कृत्रिमस्य सर्वाचित्तत्वे किं वाच्यम्? तथापि तस्य मांचत्तताव्यवहारः क्रियते, तत्र को हेतुरिति प्रश्नः, अत्रोत्तरम्-हिङ्गुलः खानिजो योजनशतादेः परत आयातत्वात्कृत्रिमश्च स्वत एव उभावप्यचित्तौ जायेते, तद्ग्रहणं तु अनाचीर्णतया तेन साम्प्रतं संवर्जितः सन् गृह्यते इति यतिव्यवहार इति ॥ ३३५॥ सेन० ३ उल्ला०।

हिंगुलयसमुग्गय-हिङ्गुलकसमुद्गक-पुं०। हिङ्गुलकरक्षार्थे-सम्पुटे, जी० ३ प्रति० ४ अ०।

हिंगुसिव-हिङ्गुशिव-पुं०। हिङ्गुमयशिवलिङ्गे, स्था० ४ ठा० ३ उ०। दश०। ('उवणाकम्म' शब्दे चतुर्थभागे १६८४ पृष्ठे व्याख्यातमेतत्।)

हिंगोल-हिङ्गोल-न०। मृतकभक्ते, यक्षादियात्राभोजने च। आचा० २ श्रु० १ चू० १ अ० ४ उ०।

हिंडग-हिंडक-पुं०। पर्यटके साधौ, सूत्र०१ श्रु०२ अ० ३ उ०।

इदानीं हिण्डक उच्यते—

उवएस अणुवएसा, दुविहा अ हिंडआ समासेणं।

उवएस देसदंसण, अणुवएसा इमे होंति ॥११८॥

उपदेशहिण्डकाः, अनुपदेशहिण्डकाश्च। एवं द्विविधा हिण्डकाः समासतः—संक्षेपेण। 'उवएस' त्ति उपदेशहिण्डका ये देशदर्शनार्थं सूत्रार्थोभयनिष्पन्ना हिण्डन्ते—विहरन्ति। 'अणुवएस' त्ति अनुपदेशहिण्डका इमे भवन्ति वक्ष्यमाणकाः—

चक्के थूभे पडिमा, जम्मण निक्खमण नाण निव्वाणे।

संखडि विहार आहा-र उवहि तह दंसणट्ठाए ॥११९॥

चक्रं—धर्मचक्रं स्तूपा—मथुरायां प्रतिमा—जीवन्तस्वामिप्रतिमा पुरिकायां पश्यति, 'जम्मण' त्ति जन्म—यत्रार्हतां सौरिकपुरादौ व्रजति, निष्क्रमणभूमिम्—उज्जयन्ताद्रिं द्रष्टुं प्रयाति, ज्ञाने यत्रैवोत्पन्नं तत्प्रदेशदर्शनार्थं प्रयाति निर्वाणभूमिदर्शनार्थं प्रयाति। संखडीप्रकरणं तदर्थं व्रजति, 'विहार' त्ति विहारार्थं व्रजति, स्थानाजीर्णममाभूदिति-'आहार' त्ति यस्मिन् विषये स्वभावेनैव चाहारः शोभनस्तत्र प्रयाति। 'उवहि' त्ति अमुकत्र विषये उपधिः शोभनो लभ्यते इत्यतः प्रयाति, 'तह दंसणट्ठाए' तथा रम्यदेशदर्शनार्थं व्रजति।

एते अकारणा सं-जयस्स असमत्त तदुभयस्स भवे।

ते चेव कारणा पुण, गीयत्थविहारिणो भणिआ ॥१२०॥

एतान्यकारणानि संयतस्य, किंविशिष्टस्य?—असमस्ततदुभयस्य—असमाप्तसूत्रार्थोभयस्य संयतस्य भवन्ति अकारणानीति। 'ते चेव' त्ति तान्येव धर्मचक्रादीनि कारणानि भवन्ति, कस्य?—'गीयत्थविहारिणो' गीतार्थविहारिणः सूत्रार्थोभयनिष्पन्नस्य दर्शनादिस्थिरीकरणार्थं विहरत इति।

तथा चाह—

गीयत्थो य विहारो, विइओ गीयत्थमीसिओ भणिओ।

एत्तो तइअविहारो, नाणुन्नाओ जिणवरेहिं ॥१२१॥

'गीयत्थो' गीतार्थानां विहारः—विहरणमुक्तम्। 'विइओ गीयत्थमीसिओ' द्वितीयो विहारः—द्वितीयं विहरणं

गीतार्थमिश्रं-गीतार्थेन सह , इतस्तृतीयो विहारो नानुज्ञातो-नोक्तो जिनवरैः ।

किमर्थमित्यत आह—

संजमआयविराहण, नाणं तह दंसणे चरित्ते अ ।
आणालोव जिणाणं,कुव्वइ दीहं तु संसारं ॥ १२२ ॥

संयमविराधना आत्मविराधना तथा ज्ञानदर्शनचारित्राणां विराधना, आज्ञालोपश्च जिनानां कृतो भवति, तथा अगीतार्थ एकाकी हिण्डन् करोति दीर्घं च संसारमिति ।

इदानीमेव (निर्युक्ति) गाथां भाष्यकारो व्याख्यानयन्नाह—

संजमतो छक्काया, आयाकंटऽट्ठिऽजीरगेलन्ने ।
नाणे नाणायारो,दंसण चरगाइवुग्गाहे ॥ ६७ ॥

' संजमतो छक्काया ' संयमविराधनामङ्गीकृत्य षट्कायविराधना संभवति । ' आय ' त्ति आत्मविराधना संभवति,कथं ?, 'कंटऽट्ठिऽजीरगेलन्ने' कण्टकेभ्यः अस्थिशकलेभ्यः आहारस्याजरणेन तथा ग्लानत्वेन । ' नाणं ' ज्ञानविराधना भवति, कथं ? स हिण्डन् ज्ञानाचारं न करोति. ' दंसण चरगाइउग्गाहे ' दर्शनविराधना,कथं संभवति ? , स ह्यगीतार्थश्चरकादिभिर्व्युद्ग्राह्यते, ततश्चापैति दर्शनम् , किं पुनः कारणं चारित्रं न व्याख्यानम्?.उच्यते-ज्ञानदर्शनाभावे चारित्रस्याप्यभाव एव द्रष्टव्यः। द्वारम । एवं तावदेकः कारणिको 'निक्कारणिओ य सो वि ठाणट्ठिओ दूइज्जंतओ य भणिओ '

इदानीमनेकान प्रत्युपन्नकान प्रतिपादयन्नाह—

गणावि होंति दुविहा, कारणनिक्कारणे दुविहभेओ ।
जं एत्थं नाणत्तं, तमहं वोच्छं समासेणं ॥ १२३ ॥

' अनेकेऽपि द्विविधा भवन्ति, कतमेन द्वैविध्येन?. अत आह ' कारणनिक्कारणि ' त्ति कारणमङ्गीकृत्य अकारणं चाङ्गीकृत्य द्विविधाः, ' दुविहभेद ' त्ति पुनर्द्विधो भेदः , ये ते कारणिकास्ते स्थानस्थिता 'दूइज्जमानाश्च'येऽपि ते निष्कारणिकास्तेऽपि स्थानस्थिता 'दूइज्जमानाश्च'। तत्थ जे कारणिआ दूनिज्जंतगा ठाणठिआ अ ते तहेव असिवादिकारणेहिं जहापुव्वं एगस्स गमणविहिं वक्खाणेतेण भणिअं , जे वि निक्कारणिआ दूइज्जंता ठाणट्ठिआ य तेऽवि तह चेव थूभाईहिं. 'जं एत्थ नाणत्तं' यदत्र नानात्वं-यो विशेषस्तमहं वक्ष्ये समासतः ।

इदानीमनन्तरगाथोक्ताः सर्व एव सामान्येन चतुर्विधाः साधवो भवन्ति ।

जयमाणा विहरंता, ओहाणा हिंडगा चउद्धा उ ।
जयमाणा तत्थ तिहा, नाणट्ठा दंसणचरित्ते ॥ १२४ ॥

'यती' प्रयत्ने यतमानाः—प्रयत्नपराः विहरन्तः—विहरमाणा मासकल्पेन पर्यटन्तः ' ओहाण ' त्ति अवधावमानाः प्रव्रज्यातोऽवसर्पन्त इत्यर्थः , तथा आहिण्डकाः—भ्रमणशीलाः, एवमेते चतुर्विधाः,इदानीं 'यथोद्देशं निर्देशः " इति न्यायाद्यतमाना उच्यन्ते—' जयमाणा तत्थ तिहा ' यतमानास्त्रिप्रकाराः, कथं ?, 'नाणदंसणचरित्ते' तत्थ णाणट्ठा कधं जयन्ति ?. जति आयरिआणं जं सुत्तं अत्थो वा पम्माहिअ अएणो य से सत्ती अत्थि घेत्तुं धारिउं वा ताहे विसज्जावित्ता अत्ताणं अणओ वच्चंति, एवं चेव दंसणपभावगाणं सत्थाणं अट्ठाए वच्चंति, तत्थार्थादीनां, तथा चरित्तट्ठाए देसंतरं गयाण कणइ कारणेणं, तत्थ जदि पुढविकाइयाइ पउरं ततो न चरित्तं सुज्झइ ताहे निग्गच्छन्ति, एसा चरित्तजयणा खलु एवं तिविहा समासतो समक्खाया । द्वारं ।

इदानीं विहरमाणका उच्यन्ते, अत आह-' विहरंता वि अ दुविहा ' विहरमाणका द्विप्रकाराः, ' गच्छगता निग्गया चेव ' एतदेव-व्याख्यानयन्नाह—

पत्तेयबुद्ध जिणक-प्पिया य पडिमासु चेव विहरंता ।
आयरिअथेरवसभा,भिक्खू खुड्डा य गच्छम्मि ॥१२५॥

प्रत्येकबुद्धा जिनकल्पिकाश्च प्रतिमाप्रतिपन्नाश्च—' मासाई सत्ता ' इत्येवमादि एते गच्छनिर्गता विहरमाणकाः । इदानीं गच्छप्रविष्टा उच्यन्ते-' आयरिअ ' आचार्यः-प्रसिद्धः, स्थविरो-यः सीदन्तं ज्ञानादौ स्थिरीकरोति वृषभो-वैयावृत्त्यकरणसमर्थः भिक्षवः-एतद्व्यतिरिक्ताः, क्षुल्लकाः प्रसिद्धाः, 'एते गच्छगता गच्छनिर्गताश्च' इत्थमुपन्यासः प्राक् कृतः, तत्कस्माज्जिनकल्पिकादयो गच्छनिर्गता आदौ व्याख्याताः?, उच्यते- जिनकल्पिकादीनां प्राधान्यख्यापनार्थम् , आह-प्रथममेव कस्मादित्थं नोपन्यासः कृतः ?, उच्यते—तेऽपि जिनकल्पिकादयो गच्छगतपूर्वा एतस्यार्थस्य ज्ञापनार्थम् , आह-प्रत्येकबुद्धा न गच्छनिर्गताः,न, तेषामपि जन्मान्तरे तन्निर्गतत्वसद्भावात् , यतस्तेषां नव पूर्वाणि पूर्वाधीतानि विद्यन्ते । ओघ० । (अवधावनवक्तव्यता 'ओहावंत' शब्दे तृतीयभागे ।)

अधुना ये ते गच्छगता विहरमाणकास्तेषामेव विधिं प्रतिपादयन्नाह—

पुण्णम्मि मासकप्पे, वासावासासु जयणसंकमणा ।
आमंतणा य भावे, सुत्तत्थ न हायई जत्थ ॥ १२८ ॥

मासकल्पे—मासावस्थाने पूर्णे सति तथा ' वासावासासु ' त्ति वर्षासु वासो वर्षावासः तस्मिन् वा यो वासकल्पस्तस्मिन् पूर्णे सति । पुनश्च यतनया-संक्रमणया क्षेत्रसंक्रान्तिः कर्तव्या । किं कृत्वा ?-'आमंतणा य' त्ति आमन्त्रणं आचार्यः शिष्यानामन्त्रयति पृच्छति क्षेत्रप्रत्युपेक्षकप्रेषणकाले, क्षेत्रादागतेषु क्षेत्रप्रत्युपेक्षकेषु क्षेत्रगमने वा, 'भावे' त्ति आगतेषु क्षेत्रप्रत्युपेक्षकेषु भावं प्रतीक्षते, कस्य किं क्षेत्रं रोचते ?, तत्र सर्वेषां मतं गृहीत्वा यत्र सूत्रार्थहानिर्न भवति तत्र गमनं करिष्यत्याचार्यः ।

इदानीमेनामेव गाथां व्याख्यानयति, अत्र यदुपन्यस्तं ' जयणसंकमण ' त्ति तद् व्याख्यानयन्नाह—

अप्पडिलेहियदोसा, वसही भिक्खं च दुल्लहं होज्जा ।
बालाइगिलाणाण व, पाउग्गं अहव सज्झाओ ॥१२९॥

अप्रत्युपेक्षणे दोषा भवन्ति, ते चामी—' वसहि ' त्ति कदाचिद्वसतिर्दुर्लभा भवेत् , तथा भिक्षा वा दुर्लभा भवेत् , तथा बालादिग्लानानां प्रायोग्यं दुर्लभं भवेत् । अथवा-स्वाध्यायो दुर्लभः, मांसाद्याकीर्णत्वात् ।

तस्मात् किम् ?—

तम्हा पुव्वं पडिले-हिऊण पच्छा विहीए संकमणं ।
पेसेइ जइ अणापु-च्छिउं गणं तत्थिमे दोसा ॥ १३० ॥

तस्मात्पूर्वमेव प्रत्युपेक्ष्य—निरूप्य पश्चाद् विधिना—यत्नया संक्रमणं कर्त्तव्यम् । इदानीं यदुपन्यस्तम् 'आमंतणा य' त्यवयवेन तं व्याख्यानयन्नाह—' पेसेंति जइ अणापुच्छिउं गणं ' प्रेषयति क्षेत्रप्रत्युपेक्षकान् यदि गणमनापृच्छ्य ततोऽमी दोषाः वक्ष्यमाणलक्षणाः ।

अइरेगोवहिपडिले-हणाए कत्थ वि गय त्ति तो पुच्छे ।
खेत्ते पडिलेहेउं, अमुगत्थ गय त्ति तं दुट्ठं ॥ १३१ ॥

यदा क्षेत्रप्रत्युपेक्षकाः शेषप्रव्रजिताननापृच्छ्य गतास्तदा कथं ज्ञायन्ते ?, अत आह—अतिरिक्तोपधिप्रत्युपेक्षणायां सत्यां ते पृच्छन्ति—कुत्र गतास्त इत्येवं पृच्छन्ति । आचार्योऽप्याह—क्षेत्रं प्रत्युपेक्षितुममुकत्र क्षेत्रे गता इति, तदप्याहुः—'तं दुट्ठं ' ति , तत्—क्षेत्रं न शोभनम् ।

यतस्तत्र गच्छताम्—

तेणा सावय मसगा, ओमऽसिवे सेह इत्थिपडिणीए ।
थंडिल्लअगणि उट्ठा-ण एवमाई भवे दोसा ॥१३२॥

स्तेनाः अर्द्धपथे श्वापदानि—व्याघ्रादीनि मशका वाऽतिबहुशः ओमं-दुर्भिक्षम् 'असिवं' देवताकृत उपद्रवो. यदि वा-'सेह' त्ति अभिनवप्रव्रजितस्य स्वजना विद्यन्ते, ते चोत्प्रव्राजयन्ति, 'इत्थि' त्ति स्त्रियो वा मोहप्रचुराः, 'पडिणीय' त्ति प्रत्यनीकोपद्रवश्च. 'थंडिल्ल' त्ति स्थण्डिलानि वा न तत्र विद्यन्ते, 'अगणि' त्ति अग्निना वा दग्धः स देशः, 'उट्ठाणे' त्ति उत्थितः—उद्वासितः प्रदेशो वाऽपान्तराले इत्येवमादयो दोषा भवन्ति ।

तत्रापि प्राप्तस्यैते दोषाः—

पच्चंतितावसीओ, सावयदुब्भिक्खतेणपउराइं ।
णियगपदुट्ठुट्ठाणे, फडणहरियाइपत्तीए ॥

स हि प्रत्यन्तदेशः म्लेच्छाद्युपद्रवोपेतः तापस्यः-तापसप्रव्राजिकाः ताश्च प्रचुरमोहाः संयमाद् भ्रंशयन्ति श्वापदभयदुर्भिक्षभयस्तेनप्रचुराणि वा क्षेत्राणि 'णियग' त्ति अभिनवप्रव्राजितस्य निजः—स्वजनादिः स चोत्प्रव्राजयति 'पदुट्ठ' त्ति प्रद्विष्टो वा तत्र कश्चित् 'उट्ठाणे' त्ति उत्थितः—उद्वासितः स कदाचिद्देशो भवेत् 'फडण' त्ति प्राक् तत्र वसतिरासीत् इदानीं तु कदाचिदपनीता भवेत् । (हरि) 'हरितपत्तीए' त्ति हरितं तत्र शाकादि बाहुल्येन भक्ष्यते, तच्च साधूनां न कल्पते दुर्भिक्षप्रायं वा ' हरितपत्ती ' ति तत्र देशे कयुचिद् गृहेषु राज्ञा दण्डं दत्त्वा देवतायै बल्यर्थं पुरुषो मार्यते, स च प्रव्रजितादिर्भिक्षार्थं प्रविष्टः सन् , तत्र गृहस्योपरि आर्द्रा वृक्षशाखा चिह्नं क्रियते, तच्च गृहीतसङ्केतो दूरत एव परिहरति, अगृहीतसङ्केतश्च विनश्यति, तस्मादरणं पृष्ट्वा गन्तव्यमिति । अथवा-अन्यकर्तृकेयं गाथा, ततश्च न पुनरुक्तदोषः ।

इदानीं स आचार्यः क्षेत्रप्रत्युपेक्षकान् प्रेषयन् सर्वं गणमालोचयति , अथ तु विशिष्य कांश्चिदेकमालोचयति शिष्यादिकं ततश्चैते दोषा भवन्ति—

सीसे जइ आमंतइ, पडिच्छगा तेण बाहिरं भावं ।
अह इयरा तो सीसा, ते वि समत्तम्मि गच्छंति ॥१३४॥

शिष्यान् विशिष्य केवलान् यद्यामन्त्रयति ततश्च को दोषः ?, ' पडिच्छ ' त्ति सूत्रार्थग्रहणार्थं य आयाताः साधवस्ते प्रतीच्छकाः ' तेण ' त्ति तेन अनालोचनेन ' बाहिरं भावं ' ति बहिर्भावं चिन्तयन्ति, बाह्या वयमत्र । अथेतरान्—प्रतीच्छकानालोचयति ततः शिष्या बहिर्भावं मन्यन्ते, प्रतीच्छकाश्च सूत्रार्थग्रहणसमाप्तौ गच्छन्ति ततश्चाचार्य एकाकी संजायत इत्येवं दोषस्तावत् ।

अथ वृद्धान् पृच्छति ततः—

तरुणा बाहिरभावं, न य पडिलेहोवही न किइकम्मं ।
मूलयपत्तसरिसया, परिभूया वच्चिमो थेरा ॥ १३५ ॥

वृद्धानालोचयति तरुणा बहिर्भावं मन्यन्ते , ततश्च ते तरुणाः किं कुर्वन्त्यत आह—' न य पडिलेहोवही ' उपधेः प्रत्युपेक्षणां न कुर्वन्ति, न च कृतिकर्म—पादप्रक्षालनादि कुर्वन्ति । अथ तरुणानेव पृच्छति ततः को दोषः ।?, वृद्धा एवं चिन्तयन्ति-' मूलयपत्तसरिसया ' मूलम्-आद्यं यत्पूर्णं निस्सारं परिपक्वप्रायं तत्तुल्या वयमत एव च परिभूतास्ततश्च व्रजामः इत्येवं स्थविराश्चिन्तयन्ति, यद्वा-'मूलयपत्तसरिसया ' मूलकपत्रतुल्याः-शाकपत्रप्राया वयम् ,

अथ मतं स्थविरा न प्रष्टव्या एव, तत्तु न, यत, आह—

जुण्णमएहिँ विहूणं, जं जूहं होइ सुट्ठु वि महल्लं ।
तं तरुणरहसपोईय-मयगुम्मइअं सुहं हंतुं ॥ १३६ ॥

जीर्णमृगैर्विहीनं यद्यूथं भवति सुष्ठ्वपि महद्यूथं तरुणरभस-राग पोतितं-निमग्नं मदेन गुल्मयितं-मूढं सुखं हन्तुं-विनाशयितुं-सुखेन तद्व्यापाद्यते ।

यस्मादेतदेवं तस्मात्सर्व एव मिलिताः
सन्तः प्रष्टव्याः, कथम् ?—

थुइमंगलमामंतण, नागच्छइ जो य पुच्छिओ न कहे ।
तस्सुवरिं ते दोसा, तम्हा मिलिएसु पुच्छेज्जा ॥ १३७ ॥

स्तुतिमङ्गलं कृत्वा—प्रतिक्रमणस्यान्ते स्तुतित्रयं पठित्वा ततश्चामन्त्रयति आकारिते च दूरस्थो यदि नागच्छति कश्चिद्वा पृष्टः सन्न कथयति ततस्तस्योपरि ते दोषाः, तस्मान्मिलितेषु प्रष्टव्यमेकत्रीभूतेषु ।

केई भणंति पुव्वं, पडिलेहिअ एवमेव गंतव्वं ।
तं च न जुज्जइ वसही,फडण आगंतु पडिणीए ॥१३८॥

केचनाचार्या एवं ब्रुवते—प्राक् प्रत्युपेक्षिते यस्मिन् क्षेत्रे प्रागपि स्थिता आसन् तस्मिन् पुनरप्रत्युपेक्ष्य गम्यते , तच्च न युज्यते, यस्मात्तत्र कदाचित् ' वसही फडण ' त्ति सा प्राक्तनी वसतिरपनीता, आगन्तुको वा प्रत्यनीकः संजातः, अत एव दोषभयात्पूर्वदृष्टाऽपि वसतिः प्रत्युपेक्षणीया ।

इदं च ते प्रष्टव्याः—

कयरी दिसा पसत्था ?, अमुई सव्वेसि अणुमई गमणं ।
चउदिसि ति दुएगं वा, सत्तग पणगं तिग जहन्नं ॥१३९॥

कतरा दिक् प्रशस्ता-शोभना ?; सुभिक्षपथ्यर्थः , तेऽप्याहुः ' अमुई ' अमुका दिक् सुभिक्षेति । एवं सर्वेषां यदा अनुमता—अभिरुचिता भवति , दिगित्यर्थः , तदा गमनं कर्त्तव्यम् । तत्र चतसृष्वपि दिक्षु—पूर्वदक्षिणापश्चिमोत्तरासु प्रत्युपेक्षकाः प्रयान्ति, अथवा—चतसृणां

विशामुपद्रवादिसम्भवे तिसृषु यान्ति, तदभावे द्वयोर्दिशो-र्यान्ति, तदभावेऽप्येकस्यां दिशि । तासु च दिक्षु प्रजन्तः कियन्तो व्रजन्त्यत आह—' सत्तग पणगं तिग जहएणं ' एकैकस्यां दिशि उत्कृष्टतः सप्त सप्त प्रयान्ति, सप्तानामभावे पञ्च पञ्च व्रजन्ति, पञ्चानामभावे जघन्येन त्रयस्त्रयः प्रयान्तीति ।

अत्र च ये आभिग्रहिकास्ते प्रहेतव्याः, तेषां त्वभावे-

अणभिग्गहिए वावा-रणा उ तत्थ उ इमे न वावारे ।
बालं वुड्डमगीअं, जोगिं वसहं तहा खमगं ॥ १४० ॥

' अणभिग्गहिए ' त्ति यैरभिग्रहो न गृहीतस्तान् व्यापारयेद्-गमनाय चोदयेदित्यर्थः । तत्र तु बालं वृद्धम् अगीतार्थं योगिनं वृषभं—वैयावृत्यकरं तथा क्षपकं—मासक्षपकादिकम् , एतांश्च व्यापारयेद्गमनाय ।

इदानीमेतामेव गाथां भाष्यकृद् व्याख्यानयन्नाह—

हीलेज्ज व खेलेज्ज व, कज्जाकज्जं न याणई बालो ।
सो वाऽणुकंपणिज्जो, न दिंति वा किंचि बालस्स ॥६८॥

बाले प्रेष्यमाणेऽयं दोषः-ह्रियते म्लेच्छादिना क्रीडेत वा बालस्वभावत्वात् कार्याकार्यं च-कर्त्तव्याकर्त्तव्यं वा न जानाति बालः, स च बालः क्षेत्रप्रत्युपेक्षणार्थं प्रहितः सन् अनुकम्पया सर्वं लभते, आगत्य चाचार्याय कथयति यदुत सर्वं लभ्यते, ततश्च तत्र गच्छेः यावन्न किञ्चिल्लभते, बालकस्यैवानुकम्पया स लाभ आसीत् , अथवा—न ददति वा किञ्चिद्बालाय परिभवेनातस्तं न व्यापारयेत् ।

वृद्धोऽपि न प्रेषणीयो, यतस्तत्रैते दोषाः—

वुड्डोऽणुकंपणिज्जो, चिरेण न य मग्गथंडिले पेहे ।
अहवावि बालवुड्डा,असमत्था गोयरतिअस्स॥६९॥(भा०)

वृद्धोऽनुकम्पनीयस्ततश्चासावेव लभते, नान्यः, तथा 'चिरेण' त्ति चिरेण-प्रभूतेन कालेन गमनम् आगमनं च करोति, न च मार्गं—पन्थानं प्रत्युपेक्षितुं समर्थः, नापि स्थण्डिलानि प्रत्युपेक्षितुं समर्थः,इदानीं तु द्वयोरपि बालवृद्धयोस्तुल्यदोषोद्भावनार्थमाह-अथवा-बाला वृद्धाश्च असमर्थाः—अशक्ताः गोचरत्रिकस्य—त्रिकालभिक्षाटनस्येत्यर्थः । द्वारं । अगीतार्थेऽपि प्रेष्यमाणे एते दोषाः—

पंथं च मासवासं, उवस्सयं एच्चिरेण कालेणं ।
एहामो त्ति न याणइ,चउव्विहमणुण्ण ठाणं च॥७०॥(भा०)

पन्थानं—मार्गं न जानाति वक्ष्यमाणं ' मासं ' त्ति मासकल्पं न जानाति ' वासं ' त्ति वर्षाकल्पं न जानाति, तथा उपाश्रयं—वसतिं परीक्षितुं न जानाति, तथा शय्यातरेण पृष्टः—कदा आगमिष्यथ ?, ततश्च ब्रवीति—' एच्चिरेण एहामो' त्ति इयता कालेन—अर्द्धमासादिना एष्याम इत्येवं वदतो यो दोषः अविधिभाषणजनितस्तं न जानाति, यतः कदाचिदन्या दिक् शोभनतरा शुद्धा भवति तत्र गम्यते, अतो नैवं वक्तव्यम्—एतावता कालेनैष्यामः । तथा ' चउव्विहमणुण्ण ' त्ति तत्रोपाश्रये शय्यातरश्चतुर्विधमनुज्ञाप्यते—द्रव्यतः क्षेत्रतः कालतो भावतश्चेति । तत्र द्रव्यतस्तृण-डगलादि अनुज्ञाप्यते,क्षेत्रतः पात्रकप्रक्षालनभूमिरनुज्ञाप्यते, कालतो दिवा रात्रौ वा निस्सरणमनुज्ञाप्यते, भावतो ग्लानस्य कस्यचिद्भावप्रणिधानार्थं कायिकासंज्ञादि निरूप्यते , एतां चतुर्विधामनुज्ञामनुज्ञापयितुं न जानाति । 'ठाणं च' त्ति वसतिः कीदृशे प्रशस्ते स्थाने भवतीत्येतच्च जानाति । द्वारं ।

योगिनमपि न प्रेषयेत् , कस्मात् ?—

तुरंतो अ न पेहे,पंथं पाढट्ठिओ न चिर हिंडे ।
विगई पडिसेहेइ,तम्हा जोगिं न पेसेज्जा ॥७१॥ (भा०)

त्वरमाणः सन् प्रत्युपेक्षते पन्थानं, तथा पाठार्थी सन् चिरं भिक्षां हिण्डते, तथा लभ्यमाना विकृतीः—दध्यादिकाः प्रतिषेधयति, तस्माद्योगिनं न प्रेषयेत् । द्वारं ।

वृषभोऽपि न प्रेषणीयो यत एते दोषा भवन्ति—

ठवणकुलाणि न साहे,सिड्डाणि न देंति जा विराहणया ।
परितावणअणुकंपण,तिपहऽसमत्थो भवे खमगो ७२।भा०

वृषभो हि प्रेष्यमाणः कदाचिद्रुषा स्थापनाकुलानि ' न साहे ' त्ति न कथयति, अथवा—' सिड्डाणि न देंति ' त्ति कथितान्यपि तानि स्थापनाकुलानि न ददति अन्यस्य , तस्यैव तानि परिचितानि, ' जा विराहणय ' त्ति ततश्च स्थापनाकुलेषु अलभ्यमानेषु या विराधना ग्लानादीनां सा सर्वा आचार्यस्य दोषेण कृता भवति । द्वारं । अथ क्षपकोऽपि न प्रेष्यते, यतः परितापना—दुःखासिका आत्मपीडा भवति क्षपकस्य, 'अणुकंपण' त्ति अनुकम्पया वा लोकः क्षपकस्यैव ददाति नान्यस्य, तथा ' तिपहऽसमत्थो भवे खमगो ' त्रयो वारा यद्भिक्षाटनं तस्य-वारत्रयाटनस्यासमर्थः क्षपकः । द्वारं-

यदा तु पुनः प्रेषणार्हा न भवन्ति—

एए चेव हवेज्जा, पडिलोमेणं तु पेसए विहिणा ।
अविही पेसिज्जंते, ते चेव तहिं तु पडिलोमं ॥ १४१ ॥

एत एव बालादयो भवेयुस्तदा किं कर्त्तव्यमित्याह—'पडिलोमेणं तु पेसए विहिणा ' अनुलोमः—उत्सर्गस्तद्विपरीतः प्रतिलोमः—अपवादस्तं प्रतिलोमम्-अपवादमङ्गीकृत्य एतानेव बालादीन् प्रेषयेत् , कथम् ?—विधिना—यतनया—वक्ष्यमाणया । यदा पुनस्त एव बालादयोऽविधिना प्रेष्यन्ते , तदाऽविधिना प्रेष्यमाणेषु त एव दोषाः, क्व ?, ' तहिं तु ' तस्मिन् ' क्षेत्रे प्रेष्यमाणानां कथयन् ?—' पडिलोमं ' ति प्रतिलोमं अपवादमङ्गीकृत्य । अथवा-अविधिना प्रेष्यमाणेषु त एव दोषाः , तत्र ' पडिलोमं ' ति अविधिप्रतिलोमो विधिस्तेन-अप्रतिलोमविधिना प्रेषयेत् । ओघ० । ( द्विएडकसामाचारी ' सामायारी ' शब्दे उक्ता । )

इदानीं तेषां गमनविधिं प्रतिपादयन्नाह—

पंथुच्चारे उदए, ठाणे भिक्खंतरा य वसहीओ ।
तेणा सावयवाला, पच्चावाया य जाणविही ॥१४२॥

'पंथ ' त्ति पन्थानं—मार्गं चतुर्विधया प्रत्युपेक्षणया निरूपयन्तो गच्छन्ति , ' उच्चारे ' त्ति उच्चारप्रस्रवणभूमिं निरूपयन्तो व्रजन्ति, 'उदए' त्ति पानकस्थानानि निरूपयन्ति, येन बालादीनां पानीयमानीय दीयते, ' ठाणे ' त्ति विश्रामस्थानं गच्छन्तश्च निरूपयन्तो व्रजन्ति,'भिक्खं' ति भिक्षां निरूपयन्ति , येषु प्रदेशेषु लभ्यते येषु वा न लभ्यत इति । ' अंतरा य वसहीउ ' त्ति अन्तराले वसतीश्च निरूपयन्तो

गच्छन्ति यत्र गच्छः सुखेन वसितुं याति, स्तेनाश्च यत्र न सन्ति, यत्र व्यालाः तथा श्वापदा न सन्ति—श्वापदभुजगादयो न सन्ति, 'पच्चवाय' त्ति एकस्मिन् पथि गच्छतां दिवा प्रत्यपायः, अन्यत्र रात्रौ प्रत्यपायः, ततो निरूप्य गन्तव्यम् । 'जाणविहि' त्ति अयं गमनविधिः ।

कथं पुनस्ते व्रजन्तीत्याह—

सुत्तत्थं अकरिंता, भिक्खं काउं अइंति अवरण्हे ।
बिइयदिवसे सज्झाओ, पोरिसिअद्धाइ संघाडो ॥१४४॥

सूत्रपौरुषीम् अर्थपौरुषीं चाकुर्वन्तो व्रजन्ति तावद्यावदभिमतं क्षेत्रं प्राप्ता भवन्ति, पुनश्च ते किं कुर्वन्तीत्यत आह—'भिक्खं काउं अइंति अवरण्हे' भिक्षां कृत्वा—तदासन्नग्रामे तद्बहिर्वा भक्षयित्वा पुनश्चापराह्णे प्रविशन्ति, ततो वसतिमन्वेषयन्ति, लब्धायां च वसतौ कालं गृहीत्वा द्वितीयदिवसे किञ्चिन्न्यूनपौरुषीमात्रं कालं स्वाध्यायं कुर्वन्ति । पुनश्च 'पोरिसिअद्धाइ संघाडो' 'पोरुसिअद्धाए' पौरुषीकाले सङ्घाटकं कृत्वा भिक्षार्थं प्रविशन्ति, अथवा-स्वाध्यायं कियन्तमपि कालं कृत्वा 'पोरुसिअद्धाए' अर्द्धपौरुष्यामित्यर्थः, सङ्घाटकं कृत्वा प्रविशन्तीति ।

इदानीं ते सङ्घाटकेन प्रविष्टास्तत् क्षेत्रं त्रिधा विभजयन्ति, एतदेवाह—

खेत्तं तिहा करेत्ता, दोसीणे नीणिअम्मि ण वयंति ।
अयणो लद्धो बहुओ, थोवं द मा य रूसेज्जा ॥१४५॥

क्षेत्रं त्रिधा कृत्वा—त्रिभिर्भागैर्विभज्य एको विभागः प्रत्युषस्येव हिण्ड्यते, अपरो मध्याह्ने हिण्ड्यते, अपरोऽपराह्णे, एवं ते भिक्षामटन्ति । 'दोसीणे नीणियम्मि उ वदंति' 'दोसीणे' पर्युषिते आहारे निस्सारिते सति वदन्ति—'अयणो लद्धो बहुओ' अन्य आहारो लब्धः प्रचुरः, ततश्च 'थोव दे' त्ति स्तोकं ददस्व—स्वल्पं प्रयच्छ, 'मा य रूसेज्ज' त्ति मा वा रोषं ग्रहीष्यस्यनादरज्ञानतम्, एतच्चासौ परीक्षार्थं करोति, किमयं लोको दानशीलो ? न वेति ।

अहव ण दोसीणं चिअ, जायामो देहि दहि घयंखीरं ।
खीरे घयगुलपज्जा, थोवं थोवं च सव्वत्थ ॥१४३॥

अथवा—एतदसौ साधुर्ब्रवीति—न वयं 'दोसीणं चिअ' याचयामः, किन्तु दधि याचयामः, तथा क्षीरं याचयामः, तथा क्षीरे लब्धे सति गुडं घृतं पेयां ददस्व । सर्वत्र—सर्वेषु कुलेषु स्तोकं स्तोकं गृह्णन्ति ते साधवः, एवं तावत्प्रत्युषसि भिक्षाटनं कुर्वन्ति ।

अधुना मध्याह्नाटनविधिरुच्यते—

मज्झण्हि पउरभिक्खं, परितावियपिज्जजूसपयकढिअं ।
ओभट्ठमणोभट्ठं, लब्भइ जं जत्थ पाउग्गं ॥१४७॥

मध्याह्ने प्रचुरा भिक्षा लभ्यते 'परितावियं' त्ति परितलितं सुकुमारिकादि, तथा पेया लभ्यते, जूषः पाटलादेः [पटोलादेः] तथा पयः—क्वथितम् 'ओभट्ठमणोभट्ठ लब्भति' प्रार्थितमप्रार्थितं वा लभ्यते 'जं जत्थ' यद्-वस्तु यत्र क्षेत्रे प्रायोग्यम्—इष्टं तदित्थंभूतं तत्र प्रधानमिति ।

इदानीमपराह्णे भिक्षावेलां प्रतिपादयन्नाह—

चरिमे परितावियपे-ज्ज जूस आएस अतरणट्ठाए ।
एक्केक्कगमंजुत्तं, भत्तट्ठं एक्कमेक्कस्स ॥ १४८ ॥

चरिमे—चरमपौरुष्यामटन्ति, तत्र च परितलितानि पेया यूषश्च यदि लभ्यते ततः 'आएस' त्ति प्राघूर्णकः 'अतरण' त्ति ग्लानस्तदर्थमर्थाय भवति, ततश्च तत्प्रधानम् । एवं तेऽटित्वा 'भत्तट्ठं' ति उदरपूरणमेकस्यानयन्ति, कथम् ?—'एक्केक्कगसंजुत्तं' एकः साधुरेकेन संयुक्तो यस्मिन्नानयने तदेकैकसंयुक्तमानयन्ति, 'एक्कमेक्कस्स' त्ति परस्परस्य आनयन्ति, एतदुक्तं भवति—द्वौ साधू अटतः एक आस्ते प्रत्युषसि पुनर्द्वितीयवेलायां तयोर्द्वयोर्मध्यादेक आस्ते अपरः प्रयाति प्रथमव्यवस्थितं गृहीत्वा, तृतीयवेलायां च यो द्वितीयवेलायां रक्षपालः स्थितः स प्रथमस्थितरक्षपालेन सह व्रजति, इतरस्तु येन वारद्वयमटितं स तिष्ठति । एवमेव एषां त्रयाणामेकैकस्य सङ्घाटककल्पनया पर्यटनं द्रष्टव्यं योजनीयम् ।

एवम्—

ओसह भेसज्जाणि अ, कालं च कुले य दाणमाईणि ।
सग्गामे पेहित्ता, पेहंति ततो परग्गामे ॥ १४६ ॥

एवम् औषधं—हरीतक्यादि, भेषजं-पथ्यादि, एतच्च प्रार्थनाद्वारेण प्रत्युपेक्षते, 'कालं च' त्ति कालं प्रत्युपेक्षते, 'कुले य दाणमाईणि' कुलानि च दानश्राद्धकादीनि, "दाणे अभिगमसड्ढे" एवमादि, एतानि कुलानि प्रत्युपेक्षते । एतानि च स्वग्रामे 'पेहत्ता' प्रत्युपेक्ष्य ततः परग्रामे प्रत्युपेक्षते ।

चोयगवयणं दीहं, पणीयगहणे य नणु भवे दोसा ।
जुज्जइ तं गुरुपाहुण-गिलाणगट्ठा न दप्पट्ठा ॥ १५० ॥

चोदकवचनं, किमित्यत आह—दीहं' दीर्घं भिक्षाटनं कुर्वन्ति ते 'पणीयगहणं' त्ति स्निग्धद्रव्यग्रहणं च ननु भवन्ति दोषाः । आचार्यस्त्वाह—'जुज्जति तं' युज्यते तत्सर्वं दीर्घं भिक्षाटनं यत् प्रणीतग्रहणं च, यतः 'गुरुपाहुणगिलाणगट्ठा' गुरुप्राघूर्णकग्लानार्थमसौ प्रत्युपेक्षते न दर्पार्थं, न चात्मार्थं प्रणीतादिग्रहणमिति ।

जइ पुण खद्धपणीए, अकारणे एक्कसिं पि गिण्हेज्जा ।
तहिअं दोसा तेण उ, अकारणे खद्धनिद्धाइं ॥१५१॥

यदि पुनः खद्धं-प्रचुरं प्रणीतं-स्निग्धम्, एतानि अकारणे सकृदपि गृह्णीयात् 'तहिअं दोसा' ततस्तस्मिन् ग्रहणे दोषा भवेयुः । किं कारणम् ?—यतः 'तेण उ' तेन—साधुना 'अकारणे खद्धनिद्धाइं' अकारणे-कारणमन्तरेणैव 'खद्धाइं' भक्षितानि स्निग्धानि-काङ्क्षन्ति द्रव्याणि, अथवा-अकारणे 'खद्धनिद्धाइं' प्रचुरस्निग्धानि तेनास्वादितानीति ।

एवं रुइए थंडिल वसही, य देउलिअसुण्णगेहमाईणि ।
पाओगमणुण्णवणा, वियालणे तस्स परिकहणा ॥१५२॥

एवम्—उक्तेन प्रकारेण 'रुचिए' त्ति 'रुचिते' अभीष्टे क्षेत्रे सति 'थंडिल' त्ति ततः स्थण्डिलानि प्रत्युपेक्षन्ते, पुनः पुनः परिभाव्यते महास्थण्डिलं 'वसहि' त्ति वसतिं निरूपयन्ति ।

---

१–एवमित्यधिकमपि पुस्तकानुरोधात् टीकाकृता व्याख्यातत्वाच्च मूले एव गृहीतम् ।

किं प्रशस्ते प्रदेशे आहोस्विदप्रशस्ते—सिंगक्खोडादियुक्ते इति, पत्तनमध्ये शालादि, तदभावे 'देउलिआ' देवकुलं शून्यं प्रत्युपेक्ष्यते 'सुन्नगहमादीणि' शून्यगृहादीनि आदिशब्देन-सभा गृह्यते, तां च वसतिं लब्ध्वा किं कर्तव्यम् ?—'पाउग्गमणुन्नवणा' प्रायोग्याणां-तृणडगलकादीनां शय्यातरोऽनुज्ञापनां कार्यते-यथा उत्संकलय एतानि वस्तूनि । अथासौ प्रायोग्याणि न जानाति 'वियालणं' त्ति विचारयति, प्रायोग्यं किमभिधीयते ? इति, एवंविधे विचारे तस्य शय्यातरस्य कथ्यते 'परिकहणा' यथाऽस्माकं तृणक्षारडगलादि उत्संकलयेत् ।

एतां निर्युक्तिगाथां भाष्यकरो व्याख्यानयति, तत्र कश्चित् क्षेत्रे स्थण्डिलं परीक्ष्यते, तच्च बहुवक्तव्यत्वादुपरिष्टाद्वक्ष्यति, वसतिस्तु कीदृशे स्थाने कर्तव्या कीदृशे च न कर्तव्येति व्याख्यानयन्नाह—

सिंगक्खोडे कलहो, ठाणं पुण नेव होइ चलणेसुं ।
अहिठाणि पोट्टरोगो, पुच्छम्मि अ फेडणं जाण ॥७६॥ (भा०)
मुहमूलम्मि अ चारी, सिरे य कउहे य पूयसक्कारो ।
खंधे पट्ठीऍ भरो, पोट्टम्मि य धायओ वसहो ॥७७॥ (भा०)

तत्र ग्रामपार्श्वोपविष्टपूर्वाभिमुखवृषभरूपं क्षेत्रं बुद्ध्या कल्पयित्वा तत इदमुच्यते-शृङ्गखोडे-शृङ्गप्रदेशे यदि वसतिं करोति ततः कलहो भवतीति क्रियां वक्ष्यति, स्थानम्-अवस्थितिर्नास्ति चरणेषु—पादप्रदेशेषु, अधिष्ठाने—अपानप्रदेशे वसतौ क्रियमाणायामुदररोगो भवतीति क्रिया सर्वत्र योजनीया । 'पुच्छे' पुच्छप्रदेशे 'फेडणं' अपनयनं भवति वसत्याः । मुखमूले चारी भवति, शिरसि—शृङ्गयोर्मध्ये ककुदे च पूजासत्कारो भवति, स्कन्धे पृष्ठे च भारो भवति, साधुभिरागच्छद्भिराकुलो भवति, उदरप्रदेशे तु नित्यं तृप्त एव भवति क्षेत्रवृषभः । क्वचिन्निर्व्याख्यातो, तद्व्याख्यानाच्च देवकुलशून्यगृहाद्यपि व्याख्यानमेव द्रष्टव्यम् । इयं च वृषभपरिकल्पना यावन्मात्रं वसतिनाऽऽक्रान्तं तस्मिन् नोपरिष्टात्, उपरिष्टात्तु तदनुसारेण कर्तव्या वसतिः ।

अधुना 'पाउग्गअणुन्नवणं' त्यमुमेवावयवं व्याख्यानयन्नाह, तत्र प्रायोग्याणामनुज्ञापना कर्तव्या-द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतः—

दव्वे तणडगलाई, अच्छणभाणाइधोवणा खेत्ते ।
काले उच्चाराई, भावेण गिलाणकुरुयमा ॥७८॥ (भा०)

द्रव्यतः-द्रव्यमङ्गीकृत्य तृणानां संस्तारकार्थं डगलानां च-अधिष्ठानप्रोञ्छनार्थं लष्टूनामनुज्ञापना-क्रियते 'अच्छणं' ति आस्या-यत्राऽऽस्यते यथासुखेन स्वाध्यायपूर्वकं 'भाणादिधोवणा' भाजनादिधावनं-क्षालनं पात्रकादेर्यत्र क्रियते सा क्षेत्रानुज्ञा । कालविषयाऽनुज्ञा दिवा रात्रौ वा उच्चारादिव्युत्सर्जनम् । भावविषयाऽनुज्ञापना ग्लानादेः साम्यकरणार्थं निर्वातप्रदेशाद्यनुज्ञापना क्रियते । इदानीं 'वियालणं तस्स परिकहणा' त्ति अमुमवयवं—व्याख्यानयन्नाह—'कुरुयमा' यदा शय्यातर एवं ब्रूते—इयति प्रदेशे मयाऽवस्थानमनुज्ञातं भवतां नोपरिष्टात्, तदा तस्य परिकथना क्रियते कुरुदृष्टान्तेन । यो हि भोजनं कस्यचिद्ददाति स नियमेनैव भोजनोदकासेवनाद्यपि ददात्यनुक्तमपि सामर्थ्यात्तथा, एवं वसतिं प्रयच्छता उच्चारप्रस्रवणभूम्यादि सामर्थ्यात्तत्सर्वमेव दत्तं भवति । अथवा-इदमसौ शय्यातरो विचारयति-कियन्तं कालमत्र स्थास्यन्ति भवन्तः ?, अस्मिन् विचारे "तस्सपरिकहणा"—

जाव गुरूण य तुज्झ य, केवइया तत्थ सागरेणुवमा ।
केवइकालेणेहिह ?, सागार ठवंति अण्णे वि ॥१५३॥

यावद् गुरूणां 'मे'—तव च प्रतिभाति तावदवस्थानं करिष्यामः, अथैवमसौ विचारयति-'वियालणा' यदुत 'केवइआ' कियन्त इहावस्थास्यन्ते ? 'तस्स परिकहणा' क्रियते सागरोपमा, यथा हि सागरः कश्चित्काले प्रचुरसलिलो भवति कदाचित्पुनर्मर्यादावस्थ एव भवति, एवं गच्छोऽपि कदाचिद्बहुप्रव्राजितो भवति कदाचित्स्वल्पप्रव्राजित इति । अथासौ पुनरपि 'वियालणं' त्ति विचारयति-यथा 'केवइ कालेणेहिह' त्ति कियता कालेनागमिष्यथ ?, एवमुक्ताः सन्तः साधवः तत्र 'सागारठविंति' सविकल्पं कुर्वन्तीत्यर्थः । कथं कुर्वन्ति ?—'अन्ने वि' अन्येऽपि साधवः क्षेत्रप्रत्युपेक्षणार्थं गता एव, ततश्च तदालोचनमागमिष्याम इति ।

पुव्वदिट्ठं इच्छइ, अहव भणिज्जा हवंतु एवइया ।
तत्थ न कप्पइ वासो, असई खेत्ताणऽणुन्नाओ ॥१५४॥

यदा त्वसौ पूर्वदृष्टानेवेच्छति यैः प्राग् मासकल्पः कृतः स्वभावेनर्यालुः स दृष्टप्रत्ययानिच्छति, नान्यान्, तत्र न कल्पते वासः । अथवा—भणेदसौ एतावन्त एवात्र तिष्ठन्तु, तत्र 'न कल्पते वासः' न युज्यतेऽवस्थानं, यतः साधवः कदाचित्स्तोकाः कदाचिद्बहवो भवन्ति । अथान्यानि क्षेत्राणि न सन्ति तदा असति-क्षेत्राणामन्येषामभावे 'अणुन्नाउ' त्ति तस्यामेव वसतावनुज्ञातो वासः ।

शेषक्षेत्राभावे सति तत्र च नियतपरिमितायां वसतौ यदि प्राघूर्णका आगच्छन्ति ततः को विधिरित्यत आह--

सक्कारो सम्माणो, भिक्खग्गहणं च होइ पाहुणए ।
जइ जाणउ वसइ तहिं, साहम्मिअवच्छलाऽऽणाई ॥१५५॥

सत्कारः—वन्दनाभ्युत्थानादिकः सन्मानः—पादप्रक्षालनादिकः भिक्षाग्रहणं—भिक्षानयनं च एतत्प्राघूर्णके आगते सति क्रियते । पुनश्च तस्य प्राघूर्णकस्य वसतिस्वरूपं कथ्यते यथा-परिमितैरेवेषा लब्धा, नान्यस्यावकाशः, ततश्च त्वयाऽन्यत्र वसितव्यम् । 'यदि जाणउ वसइ तहिं' ति एवमसावुक्तो ज्ञोऽपि सन्—यदि जानन्नपि तत्र वसति ततः को दोषोऽत आह-'साहम्मिअवच्छलाऽऽणाई' साधर्मिकवात्सल्यं न कृतं भवति, यतोऽसौ शय्यातरो दृष्ट्वा तानपि निर्घाटयति, आज्ञाभङ्गश्च कृतः—आज्ञालोपश्चैवं कृतो भवति सूत्रस्य, आदिशब्दात्तद्द्रव्यान्यद्रव्यव्यवच्छेदः ।

इदानीं ते क्षेत्रप्रत्युपेक्षका आचार्यसमीपमागच्छन्तः—
किं कुर्वन्तीत्यत आह--

जइ तिन्नि सव्वगमणं, एसु न एसु त्ति दोसु वि अ दोसा ।
आपपहेणऽणुगंता, नियगावासोऽह मा गुरुणो ॥१५६॥

यदि ते क्षेत्रप्रत्युपेक्षकास्त्रय एव ततः सर्व एव गमनं कुर्व-

न्ति अथ सप्त पञ्च वा ततः सङ्घाटकमेकं मुक्त्वा व्रजन्ति, 'पसु न पसु' त्ति शय्यातरेण पृष्टाः सन्तस्ते नैवं वदन्ति-एष्यामो न वा एष्याम इति, यत एवं भणने दोषः, किं कारणं?, यदेवं भणन्ति यदुत आगमिष्यामः, ततश्च शोभनतरे क्षेत्रे लब्धे सति नागच्छन्ति ततश्चानृतदोषः, अथ भणन्ति-नागमिष्यामः ततश्च कदाचिदन्यस्तत्र न परिव्रजिष्यति ततश्च पुनस्तत्रागच्छतां दोषोऽनृतजनितः । 'अण्णपहेणं' ति ते हि क्षेत्रप्रत्युपेक्षका गुरुसमीपमागच्छन्तोऽन्येन मार्गेणागच्छन्ति, कदाचित्स शोभनतरो भवेत्, 'अगुणेन' त्ति सूत्रपौरुषीमकुर्वन्तः प्रयान्ति,मा भूद्विलम्बः,मा भूत्विलम्बो गुरोरिति, किं कारणं ?, यतस्तेषां विलम्बमागच्छतां मासकल्पोऽधिको भवति, ततश्च नित्यवासो गुरोरिति ।

गंतूण गुरुसमीवं, आलोएत्ता कहेंति खेत्तगुणा ।
न य सेसकहणा मा हो-ज्ज संखडं रत्ति साहेंति ॥१५७॥

गत्वा गुरुसमीपम् आलोचयित्वा ईर्यापथिकातिचारं कथयन्त्याचार्याय क्षेत्रगुणान् । 'न य सेसकहणं' ति न च शेषसाधुभ्यः क्षेत्रगुणान् कथयन्ति । किं कारणं ?—'मा होज्ज संखडं' मा भवेत् स्वक्षेत्रपक्षपातजनिता राटिरिति, तस्मात् 'रत्ति साहेंति' त्ति रात्रौ, मिलितानां सर्वेषां साधूनां क्षेत्रगुणान् कथयन्ति ।

ते च गत्वा एतत्कथयन्ति—

पढमाएँ नत्थि पढमा, तत्थ उ घयखीरकूरदहिलंभो ।
बिइयाए बिइ तइया-ऍ दोन्नि तेसिं च धुवलंभो ॥१५८॥
ओहासिअधुवलंभो, पाउग्गाणं चउत्थिए नियमा ।
इहराविं जहिच्छाए, तिकालजोगं च सव्वेसिं ॥१५९॥

प्रथमायां—पूर्वस्यां दिशि नास्ति प्रथमा-नास्ति सूत्रपौरुषीत्यर्थः किन्तु तत्र घृतक्षीरकूरदधिलाभोऽस्ति, अन्ये त्वन्यस्यां दिशि कथयन्ति, द्वितीयायां दिशि नास्ति द्वितीयाऽर्थपौरुषी, यतस्तत्र द्वितीयायां पौरुष्यामेव भोजनं, घृतादयस्तु लभ्यन्त एव, 'तइआए दो वि' त्ति तृतीयायां दिशि द्वे अपि सूत्रार्थपौरुष्यौ विद्येते 'तेसिं च धुवलंभो' त्ति तेषां घृतादीनां निश्चितं लाभः । 'ओभासिअधुवलंभो' त्ति प्रार्थितस्य ध्रुवो लाभः, केषां?—प्रायोग्यानां घृतादीनाम् 'चउत्थीए' चतुर्थ्यां दिशि नियमात्—अवश्यम् 'इहराविं' त्ति अप्रार्थितेऽपि यदृच्छया त्रिकालयोग्यं प्रातर्मध्याह्नसायाह्नेषु त्रिकालमपि 'सव्वेसिं' ति सर्वेषां बालादीनां योग्यं प्राप्यत इति ।

*एवं तैः सर्वैः क्षेत्रप्रत्युपेक्षकैराख्याते सत्या-*
चार्यः किं करोतीत्याह—

मयगहणं आयरिओ, कत्थ वयामो त्ति ? तत्थ ओयरिआ ।
खुभिआ भणंति पढमं,तं चिअ अणुओगतत्तिल्ला ॥१६०॥

मतग्रहणम् अभिप्रायग्रहणम् आचार्यः शिष्याणां करोति यदुत भो आयुष्मन्तः ! तत्क व्रजामः ?-कया दिशा गच्छामः? तत्रैवमामन्त्रिते शिष्यगणे आचार्येण 'तत्थ ओदरिका' तत्रैवमामन्त्रिते शिष्यगणे आचार्येण 'तत्र औदरिका' उदरभरणैकचित्ताः क्षुभिताः—आकुला भणन्ति—यदुत 'पढमं' ति प्रथमां दिशं व्रजामः, यत्र प्रथमपौरुष्यां भुज्यते, 'तं चिय' त्ति तामेव दिशम्, 'अणुओगतत्तिल्ला' व्याख्यानार्थिन इच्छन्ति, यतस्ते सूत्रग्रहणनिरपेक्षाः केवलमर्थग्रहणार्थिनः, तेषां चार्थग्रहणप्रपञ्चो द्वितीयायां पौरुष्यां भवतीत्यतस्तामेवेच्छन्तीति ।

बिइयं सुत्तग्गाही, उभयग्गाही अ तइययं खेत्तं ।
आयरिओ अ चउत्थं,सो उ पमाणं हवइ तत्थ ॥१६१॥

द्वितीयां च दिशं सूत्रग्राहिण इच्छन्ति, यतः प्रथमपौरुष्यामेव स्वाध्यायो भवति, स च तेषामस्ति, उभयग्राहिणश्च--सूत्रार्थग्राहिणस्तृतीयं क्षेत्रमिच्छन्ति, आचार्यस्तु चतुर्थं क्षेत्रमिच्छति यतस्तत्र चतुर्थ्यामपि पौरुष्यां प्राघूर्णकादेः प्रायोग्यं लभ्यत इति, 'स एव प्रमाणम्' आचार्य एव सर्वेषां प्रमाणं भवति 'तत्थ' त्ति तत्र शिष्यगणमध्ये ।

किं पुनः कारणम् आचार्याश्चतुर्थमेव क्षेत्रमिच्छन्ति ?,
अत आह--

मोहुब्भवो उ बलिए, दुब्बलदेहो न साहए जोए ।
तो मज्झबला साहू, दुड्डऽस्सेणेत्थ दिट्ठंतो ॥१६२॥

प्रथमद्वितीययोः क्षेत्रयोः प्रचुरभक्तपानकेभ्यः सकाशाद्बलवान् भवति, बलिनश्च मोहोद्भवो भवति—कामोद्भवो भवतीत्यर्थः । आह—एवं तर्हि यत्र भिक्षा न लभ्यते तत्र प्रयान्तु, उच्यते—दुर्बलदेहः--कृशशरीरो न साधयति—नाराधयति योगान्—व्यापारान् यतस्ततो मध्यमबलाः साधव इष्यन्ते । दुष्टाश्वेन चात्र दृष्टान्तः, दुष्टाश्वो-गर्दभ उच्यते, स यथा प्रचुरभक्षणाद्दर्पितः सन् कुम्भकारारोपितभाण्डकानि भनक्ति दर्पोत्सेकादुत्प्लुत्य, पुनस्तेनैव कुम्भकारेण निरुद्धाहारः सन्नतिदुर्बलत्वात्प्रस्खलितः सन् भनक्ति, स एव च गर्दभो मध्यमाहारक्रियया सम्यग् भाण्डानि वहति, एवं साधवोऽपि संयमक्रियां मध्यमबला वहन्ति ।

पणपण्णगस्स हाणी, आरेणं जेण तेण वा धरइ ।
जइ तरुणा नीरोगा, वच्चंति चउत्थगं ताहे ॥१६३॥

अथ तस्मिन् गच्छे पञ्चपञ्चाशद्वर्षदेशीयाः त्रिंशद्वर्षा वा चत्वारिंशद्वर्षा वा भवन्ति,ततो गम्यते चतुर्थं क्षेत्रं, यतस्ते येन केनचिद् ध्रियन्ते-याप्यन्ति तथा यदि च तरुणा नीरोगाः—शक्ता भवन्ति ततश्चतुर्थमेव क्षेत्रं व्रजन्ति ।

अह पुण जुण्णा थेरा, रोगविमुक्का य साहुणो तरुणा ।
ते अणुकूलं खेत्तं, पेसंति न यावि खग्गूडे ॥१६४॥

अथ पुनर्जूर्णाः ( जीर्णाः ) स्थविरा भवन्ति, रोगेण च-ज्वरादिना मुक्तमात्रास्तरुणाः, नाद्यापि येषां सामर्थ्यं भवति *शरीरस्य, ततस्ताननुकूलं क्षेत्रं प्रेषयन्त्याचार्याः । 'न यावि* खग्गूडे' त्ति 'खग्गूडा' अलसा निर्धर्मप्रायास्तांश्च प्रेषयन्ति ।

कियता पुनः कालेन क्षुल्लादय आप्यायन्ते ?, उच्यते—
पञ्चमात्रैर्दिवसैः, यत उक्तं वैद्यके—

एगपणअद्धमासं, सट्ठी सुणमणुयगोणहत्थीणं ।
राइंदिएण उ बलं, पणगं तो एक दो तिन्नि ॥१६५॥

एकेन रात्रिन्दिवेन शुनो बलं भवति, पञ्चभिर्दिनैर्मनुजस्य बलं भवति,अर्द्धमासेन बलीवर्दस्य, षष्टिभिर्दिनैर्हस्तिनो बलं भवति । एवमेतद्यथासंख्यं योजनीयम् । 'पणगं तो एक

दो निसिणं' एवमसौ तस्मिन् तेन पश्चकमेकं धार्यते, अथ तथाऽपि वस्त्रं न गृह्णाति द्वौ पश्चकौ धार्यते, त्रीन् वा पश्चकान् धार्यते, पुनरानीयत इति । एवं ते आलंबितमशिष्यगणा आचार्याः शय्यातरमापृच्छ्य ग्रामान्तरं संक्रामन्ति ।

अथ न पृच्छन्ति ततो दोषा उपजायन्ते । एतदेवाह—

सागारिअपुच्छगमणं,बाहि(ही)रा मिच्छ छेय कयनासी ।
गिहिसाहू अभिधारण, तेणगसंकाइ जं चऽऽएणं ॥१६६॥

सागारिकं—शय्यातरम् अनापृच्छ्य यदि गमनं क्रियते ततो 'बाहिर' त्ति बाह्या लोकधर्मस्यैते भिक्षवः इत्येवं वक्ति शय्यातरः, यत्र धर्मं लोकधर्मं न जानन्ति इमे, ते कथमदृष्टं जानन्ति ? इत्यतः 'मिच्छ' त्ति मिथ्यात्वं प्रतिपद्यते, 'छेय' त्ति अव्यवच्छेदो वसतिलाभस्य, पुनरन्येऽपि वा वसतिं न लभन्ते, 'कयनासि' त्ति कृतघ्ना एते प्रव्रजिता इत्येवं मन्यते, 'गिहिसाहू अभिधारण' त्ति गृही कश्चिच्छ्रावकस्तमाचार्यमभिधार्य—संचिन्त्याऽऽगतः प्रव्रज्यार्थं, तेनाप्यागत्य शय्यातरः पृष्टः—क्वाऽऽचार्यः ?, सोऽपि रुष्टः सन्नाह—यः कथयित्वा व्रजति स ज्ञायते, तं तु को जानाति ?, तमाकर्ण्य स श्रावकः कदाचिद्दर्शनमप्युज्झति, लोकज्ञानमप्येषां नास्ति कुतः परलोकज्ञानमिति ? कदाचित्साधुः कश्चित्तमाचार्यम् अभिधार्य—मनसि कृत्वा उपसंपद्दानार्थमायाति, सोऽपि शय्यातरं पृच्छति, शय्यातरोऽप्याह—न जाने क्व गत इति, ततः स साधुः अनाचारवानाचार्य इति विचिन्त्यान्यत्र गतः, सोऽपि निर्जरया आचार्योऽनाभागी जात इति । 'तेणग' त्ति कदाचित्तद्गृहे कश्चित्कश्चिदेव दिवसे मुष्टे भवेत्तत एवंविधा बुद्धिर्भवेत्—यदुत संयतास्ते इत्येवं शङ्कां करोति, आदिशब्दादन्यदपि केनचित्सह गता, ततो गृहात् तेऽप्यनाकथ्य गताः ततश्च शङ्कोपजायते, 'जं चऽऽएणं ति यच्चान्यत् शङ्कादि जातं एतन्निमित्तं तत्सर्वमनुभवन्ति इति गच्छद्भिश्च शय्यातर आपृच्छनीयः ।

स च विधिना, यतोऽविधिना पृच्छत एते दोषाः—

अविहीपुच्छा उग्गा–हिएण सिज्जातरी उ रोवज्जा ।
सागारियस्स संका,कलह य मएज्जिआ खिंसे ॥१६७॥

अविधिपृच्छा इयं वर्त्तते, यदुत—'उग्गाहिएण' उद्ग्राहितेन उपकरणेन पृच्छति, तत्र 'सेज्जातरी उ रोवज्जा' तत्राकस्मिकेन गमनेन शय्यातरी रोदनं कुर्युः, ततश्च सागारिकस्य—शय्यातरस्य शङ्कोपजायते, कलहश्च सति 'मएज्जिआए' सह भक्तिक्रियया 'खिंस' त्ति यथा न शोभना त्वं येन त्वया तत्र काले भिक्षार्थिनां न दत्तम् । किं च—त स पिता भवति ? येन रोदिषीति ।

अथानागतमेव कथयन्ति—अमुकदिवसे गमिष्यामः, तत्राप्येते दोषाः—

हरिअच्छेयण छप्पइ–य घयणं किच्चणं च पोत्ताणं ।
छगणेयरं च पगयं, इच्छमणिच्छे य दोसा उ ॥१६८॥

तद्दिने शय्यातरकुटुम्बं साधवो यास्यन्तीति विमुक्तशेषव्यापारं सत् गृह एव तिष्ठति, कृष्यादिमतिक्रामयत्यं च करोति, ततश्च ताविकं सत् स्वकृहआनहरितच्छेदं करोति । तथा निर्व्यपागत्यादिच वा तारका: षट्पदीनां परस्परानन्त्यपसेनापमर्दं कुर्वन्ति । 'किच्चणं च पोत्ताणं' ति तत्र दिवसे वणिका विमुक्तान्यव्यापारा वस्त्राणि शोधयन्ति । 'छगणेयरं च पगयं' प्रकृतं—भोजनं तच्च कुर्वन्ति, अप्रकटमित्यर्थः, 'इयरं च' त्ति प्रकटमेव भोजनं संयतार्थं कुर्वन्ति, तत्र इच्छतामनिच्छतां च दोषा भवन्ति, कथं ?, यदि तद्भोजनं गृह्णन्ति, ततस्तत्कल्पनीयम्, अथ न गृह्णन्ति ततो रोषभावं कदाचित्प्रतिपद्यन्ते ।

एते दोषा अनागतकथने, ततश्च कः पृच्छाविधिरित्याह—

जइआ चेव उ खेत्तं, गया उ पडिलेहगा तओ पाए ।
सागारियस्स भावं, तणुएंति गुरू इमेहिं तु ॥ १६९ ॥

यदैव क्षेत्रं गताः प्रत्युपेक्षकाः 'तओ पाए' त्ति ततः प्रभृति सागारिकस्य—शय्यातरस्य भावं—स्नेहप्रतिबन्धं तनूकुर्वन्ति, के ?—गुरवः एभिः-वक्ष्यमाणैर्गाथाद्वयोपन्यस्तैर्वचनैरिति—

उच्छू वोलिंति वइं, तुंबीओ जायपुत्तभंडा य ।
वसभा जायत्थामा, गामा पव्वायचिक्खल्ला ॥ १७० ॥
अप्पोदगा य मग्गा, वसुहा वि अ पक्कमट्टिआ जाया ।
अण्णक्कंता पंथा, साहूणं विहरिउं कालो ॥ १७१ ॥

एतद्गाथाद्वयं सूत्रतः शय्यातरस्य कथयन्ति । ततः सोऽपि श्रुत्वा भणति-किं यूयं गमनोत्सुकाः ?

आचार्योऽप्याह—

समणाणं सउणाणं, भमरकुलाणं च गोउलाणं च ।
अनियाओ वसहीओ, सारइयाणं च मेहाणं ॥ १७२ ॥

सुगमा ।

ततश्चेमां गाथां पठित्वा इदमाचरन्ति—

आवस्सगकयनियमा, कल्लं गच्छाम तो उ आयरिआ ।
सपरिजणं सागारिअ,वाहरिउं दिंति अणुसिट्ठिं ॥१७३॥

आवश्यककृतनियमाः—कृतप्रतिक्रमणा इत्यर्थः, विकालवेलायां कृतावश्यका इदं भणन्ति-यदुत कल्यं गच्छामः । पुनश्च तत आचार्याः सपरिजनं सागारिकम् शय्यातरं आहूय अनुशास्ति ददति—धर्मकथां कुर्वन्तीत्यर्थः ।

पव्वज्ज सावओ वा, दंसणमद्दो जहन्नयं वसहिं ।
जोगम्मि वट्टमाणे, अमुगं वेलं गमिस्सामो ॥ १७४ ॥

सोऽपि सागारिको धर्मकथां श्रुत्वा कश्चित्प्रव्रज्यां प्रतिपद्यते, श्रावको वा भवति, दर्शनधरो वा भवति, भद्रको वा भवति, सर्वथा जघन्यतो वसतिमात्रप्रदायको भवति । पुनश्च धर्मकथां कृत्वाऽऽचार्या एवं भणन्ति-यदुत 'जोगे वट्टमाणे' योऽसौ योगो गमनाय मां प्रेरयति तस्मिन् वर्त्तमाने—भवति सति अमुकवेलायां गमिष्याम इति ।

इदानीं ते विकालवेलायां कथयित्वा प्रत्युषसि व्रजन्ति, किं कुर्वन्तस्तत आह—

तदुभयसुत्तं पडिले–हणा य उग्गायमणुग्गये वावि ।

पडिच्छाहिंसरया तेणे, नट्ठे खग्गूड संगारे ॥ १७५ ॥

तदुभयं—सूत्रपौरुषीमर्थपौरुषीं च कृत्वा व्रजन्ति, 'सुत्तं' ति सूत्रपौरुषीं वा कृत्वा व्रजन्ति, अथ दूरतरं क्षेत्रं भवति ततः पादोनप्रहर एव कालप्रतिलेखनामकृत्वा व्रजन्ति, 'उग्गय' त्ति उद्गमनमात्र एव वा सूर्ये गच्छन्ति, 'अणुग्गय' त्ति अनुद्गते वा सूर्ये रात्रावेव गच्छन्ति, 'पडिच्छे' ति ते साधवस्तस्माद्विनिर्गताः परस्परं प्रतीक्षन्ते, 'अधिकरण' त्ति अथ ते साधवो न प्रतीक्षन्ते ततो मार्गमजानानाः परस्परतः पूत्कुर्वन्ति, तेन च पूत्कृतेन लोको विबुध्यते, तत्राधिकरणं भवति, 'तेण' त्ति स्तेनका वा विबुद्धाः सन्तो मोषणार्थं पश्चाद् व्रजन्ति. 'नट्ठे' त्ति कदाचित्कश्चिन्नश्यति, ततश्च प्रदोष एव सङ्केतः क्रियते, अमुकत्र विश्रमणं करिष्यामः अमुकत्र भिक्षाममुकत्र वसतिमिति । ततश्च रात्रौ गच्छद्भिः सङ्केतः क्रियते । 'खग्गूडे' त्ति कश्चित् खग्गूडप्रायो भवति, स इदं ब्रूते-यदुत साधूनां रात्रौ न युज्यते एवं गन्तुं पुनः, स आस्ते, ततश्च 'संगारो' त्ति सङ्केतं खग्गूडाय प्रयच्छन्ति, यदुत त्वयाऽमुकत्र देशे आगन्तव्यमिति ।

इदानीमस्या एव गाथाया भाष्यकृत् कांश्चिदवयवान् व्याख्यानयति, तत्र प्रथमावयवं व्याख्यानयन्नाह—

पडिलेहंतच्चिय वें-टियाउ काऊण पोरिसिं करिंति ।
चरिमा उग्गाहेउं, सोच्चा मज्झण्हि वच्चंति ॥७६ ॥

ते हि साधवः प्रभातमात्र एव प्रतिलेखयित्वा उपधिकां पुनश्च वेण्टलिकां कुर्वन्ति-संवर्तयन्तीत्यर्थः । ततश्चानितुसोपधय एव 'पोरिसिं करेंति' सूत्रपौरुषीं कुर्वन्ति, 'चरिमा उग्गाहेउ' त्ति चरिमवेलायां पादोनपौरुष्यां पात्रकाणि उद्ग्राह्य-संवर्तयित्वा पुनश्चार्थमिदमेव पात्रकैः 'सोच्चा' त्ति श्रुत्वा अर्थपौरुषीं कृत्वेत्यर्थः , ततो मध्याह्ने व्रजन्तीति । तं च शोभन एवाह्नि व्रजन्तीति ।

अत एवाह—( भा० )

तिहिकरणम्मि पसत्थे, नक्खत्ते अहिवइस्स अणुकूले ।
घेतूण निंति वसभा, अक्खे सउणे परिक्खंता ॥८०॥

'तिथौ प्रशस्तायां , करणे' च बवादिके प्रशस्ते नक्षत्रे वा अधिपतेः—आचार्यस्य अनुकूले सति गृहीत्वा अक्षान् अग्रे वृषभा निर्गच्छन्ति । किंकुर्वाणा अत आह-'सउणे परिक्खंता' शकुनान्—प्रशस्तान् परीक्षमाणाः सन्तो वृषभा निर्गच्छन्तीति पश्चादाचार्याः ।

किं पुनः कारणं पश्चादाचार्यो निर्गच्छति ?, तत्र कारणमाह—( भा० )

वासस्स य आगमणे, अवसउणे पट्ठिआ नियत्तंति ।
ओभावणा पवयणे, आयरिआ मग्गओ तम्हा ॥८१॥

वर्षणं वर्षस्तस्यागमनं कदाचिद्भवति, अपशकुने वा दृष्टे प्रस्थिता अपि निवर्तन्ते वृषभाः । यदि पुनराचार्या एव प्राग् निर्गच्छन्ति ततोऽपशकुनदर्शने सूरी च निवर्तमानस्य सतः किं भवति ?, अत आह-'ओहावणा पवयणे' प्रवचने हीलना भवति , यदुत-यदपि ज्योतिष्कांगं विजानन्ति तदप्येतेषां नास्तीति, 'आयरिया मग्गओ' त्ति अत आचार्याः मार्गतः—पृष्ठतो निर्गच्छन्तीति ।

अप्रशस्ताश्च शकुना अपशकुना वा विकल्पनीयाः, तत्रापशकुनं प्रतिपादयन्नाह—( भा० )

मइलकुचेले अब्भं-गियल्लए साण खुज्जवडभे य ।
एए उ अप्पसत्था, हवंति खित्ताउ निंताणं ॥८२॥
नारी पीवरगब्भा, वड्डकुमारी य कट्ठभारो अ ।
कासायवत्थ कुच्चं-धरा य कज्जं न साहेंति ॥ ८३ ॥

मलिनः शरीरकर्पटैः कुचेलो-जीर्णकपटः 'अब्भंगियल्लिय' त्ति स्नेहाभ्यक्तशरीरः श्वा यदि वामपार्श्वाद्दक्षिणपार्श्वे प्रयाति कुब्जो-वक्रः वडभो-वामनः , एतेऽप्रशस्ताः-पीवरगर्भा-आसन्नप्रसवकाला । शेषं सुगमम् ।

[ चंकयरम्मि भमाडो, भुक्खामारो य पंडुरंगम्मि ।
तच्चन्नि रुहिरपडणं, बोडियमसिए धुवं मरणं ]
जंबू चासमऊरे, भारद्दाए तहेव नउले अ ।
दंसणमेव पसत्थं,पयाहिणे सव्वसंपत्ती ॥८४॥ (भा०)

सुगमा ।

नंदी तूरं पुण्ण-स्स दंसणं संखपडहसद्दो य ।
भिंगारछत्तचामर, धयप्पडागा पसत्थाई ॥८५॥ (भा०)

सुगमम् । नवरं- पूर्णकलशदर्शनं, ध्वज एव पताका ध्वजपताका ।

समणं संजयं दंतं, सुमणं मोयगा दहिं ।
मीणं घंटं पडागं च,सिद्धमत्थं वियागरे ॥८६॥ (भा०)

श्रमणः—लिङ्गमात्रधारी संयतः—सम्यक् संयमानुष्ठाने यतः—तत्परः दान्तः—इन्द्रियनोइन्द्रियैः सुमनसः—पुष्पाणि , शेषं सुगमम् ।

गच्छंभासो—

सेज्जातरेऽणुभासइ, आयरिओ सेसगा चिलिमिलीए ।
अंतो गिण्हन्तुवहिं, सारविअपडिस्सया पुव्विं ॥१८७॥

व्रजनसमये शय्यातरमनुभाषते—व्रजाम इत्येवमादि आचार्यः । 'सेसगा चिलिमिलीए अंतो' शेषाः साधवः चिलिमिलिकायाः-जवनिकायाः अन्तः—अभ्यन्तरे, किम् ?-उपधिं गृह्णन्ति—संवर्तयन्तीत्यर्थः । 'सारविअपडिस्सया पुव्विं' ति किंविशिष्टाः सन्तस्ते साधव उपधिं गृह्णन्ति ?—संमार्जितः—उपलिप्तः प्रतिश्रयो यैस्ते संमार्जितप्रतिश्रयाः 'पुव्विं' प्रागेव; प्रथममेवेत्यर्थः ।

इदानीं कः कियदुपकरणं गृह्णातीत्याह—

बालाई उवगरणं, जावइयं तरति तत्तिअं गिण्हं ।
जहसेण जहाजायं, सेसं तरुणा विरिंचिंति ॥ ८८ ॥

बालादयः, आदिशब्दाद्-वृद्धा गृह्णन्ते, ते ह्युपकरणं याव-

१-[ चक्रधरे भ्रमणं क्षुधा मरणं च पाण्डुराङ्गे ।
तच्च किल रुधिरपातं बोटिकेऽसिते ध्रुवं मरणम् ]

न्मात्रं तरन्ति-शक्नुवन्ति तावन्मात्रं गृह्णन्ति तैश्च बाला-
दिभिः , जघन्येन—जघन्यतः ' जहाजायं ' रजोहरणं चोलप-
ट्टकश्च, एतदशक्नुवद्भिरपि ग्राह्यं. शेषम् उपकरणं तरुणाः
आभिग्रहिकाः विरिश्चन्ति-विभजन्ति बालादिसत्कम् ।

यदा तु पुनराभिग्रहिका न सन्ति तदा--

आयरिओवहि बाला-इयाण गिण्हंति संघयणजुत्ता ।
दो सुत्ति उग्गिसंथा-रए य गहणेक्कपासेणं ॥८९॥ (भा०)

आचार्योपधिं 'बालाइयाणं' ति बालादीनां च संबन्धिनमु-
पधिं गृह्णन्ति , के ?-'संघयणजुत्ता ' येऽन्ये शेषा अनाभिग्र
हिकाः संहननोपेतास्ते गृह्णन्ति , कथं पुनर्गृह्णन्ति ते उपाधिं?-
' दो सुत्तिउ ' त्ति द्वौ सौत्रिकौ कल्पौ एक और्णिकः कल्पः
संस्तारकश्चशब्दादुत्तरपट्टकश्च, एषां ग्रहणम् 'एक्कपासेणं'ति-
ग्रहणम् एकस्मिन् पार्श्वे-एकत्र स्कन्धे ग्रहणं करोति, द्विती-
ये तु पार्श्वे स्कन्धे पात्रकाणि गृह्णन्ति, आत्मीयां तूपधि
विण्टलिकां कृत्वा यत्र स्कन्धे उपधिः कृतस्तयैव दिशा क-
क्षायां करोति ।

इदानीम् ' अधिकरणतेणे ' त्ति अमुमवयवं
व्याख्यानयन्नाह-

आउज्जोवण वणिए, अगणि कुडुंबी कुकम्म कुम्मरिए ।
तेणे मालागारे, उब्भामग पंथिए जंते ॥९०॥ ( भा० )

ते हि यदि सशब्दं व्रजन्ति ततश्च लोको विबुध्यते , विबु-
द्धश्च सन् ' आउज्जोवण ' त्ति अप्कायमन्त्राणि योज्यन्ते-
वहनाय सज्जीक्रियन्ते । अथवा-' आउ ' त्ति अप्कायाय यो-
षितो विबुद्धा व्रजन्ति 'जोवणं' ति धान्यप्रकरः तदर्थं लो-
को याति. प्रकरो—मर्दनं धान्यस्य , लाटविषये 'जोवणं ध-
ण्णमद्दणं भण्णइ ' , 'वणिय' त्ति वणिजो—वालञ्जुका वि-
भातमिति कृत्वा व्रजन्ति । 'अगणि' त्ति लोहकारशालादिषु
अग्निं प्रज्वालयते 'कुडुंबि ' त्ति कुटुम्बिनः स्वकर्मणि लगन्ति
'कुकम्म' त्ति कुत्सितं कर्म येषां ते कुकर्माणः मात्स्यिकादयः
कुत्सिता माराः कुमाराः-सौकरिकाः,एषां बोधो भवति रात्रौ
पूत्कारयतां , ' तेणे ' त्ति स्तेनकानां च , ' मालाकार ' त्ति
मालिका विबुध्यन्ते 'उब्भामग' त्ति पारदारिका विबुध्यन्ते
'पंथिए' त्ति पान्थका विबुध्यन्ते 'जंते' त्ति यान्त्रिकाः विबुद्धा
सन्तो यन्त्राणि वाहयन्ति चाक्रिकादयः ।

तत्र यदुक्तं प्राक् "तट्ठ खग्गुडसिंगारो" तत्रेदमुक्तं निर्युक्ति-
कृता सङ्कारकरणमात्रम् , इह पुनः स एव निर्युक्तिकारः स-
ङ्कारः कया यतनया कर्त्तव्यः ? कस्यां च वेलायां कर्त्तव्यः ?
इत्यदाह—

संगार बीय वसही,तइए सण्णी चउत्थ साहम्मी ।
पंचमगम्मि अ वसही,छट्ठे ठाणट्ठिओ होति ॥१७६॥

'संगार ' त्ति सङ्केतोऽभिधीयते, सद्दिर्धिवक्तव्यः, ' बिति-
य वसहि ' त्ति द्वितीये द्वारे वसतिः कर्तव्या, पूर्वप्रत्युपे-
क्षिता तस्या व्याघाते वा वसतेर्ग्रहणविधिर्वक्तव्य', ' तइए
सण्णि ' त्ति तृतीये द्वारे संज्ञी श्रावको वक्तव्यः, ' चउत्थ
साहम्मि ' त्ति चतुर्थे द्वारे साधर्मिका वक्तव्याः , ' पंचम-
गम्मि अ वसहि , त्ति पञ्चमे द्वारे वसतिर्वक्तव्या-' विच्छुण्ण
खुड्डुलिआ ' इत्येवमादि, ' छट्ठे ठाणट्ठिओ होति ' षष्ठे द्वारे
स्थानस्थिता भवति । द्वारगाथयम् ।

इदानीं निर्युक्तिकृतोपन्यस्तं सङ्कारद्वयं
भाष्यकृद् व्याख्यानयन्नाह-

आओसे संगारो, अमुई वेलाएँ निग्गए ठाणं ।
अमुगत्थ वसहिभिक्खं, बीओ खग्गूडसंगारो ॥९१॥

' आओसे ' त्ति प्रदोषे ' संगारो ' त्ति सङ्केतः आचार्येण
कर्त्तव्यः , कथम् ?-' अमुई वेलाए ' त्ति अमुकया वेलया
यास्यामः, पुनश्च ' निग्गए ठाणं अमुगत्थ' निर्गतानां सताम्
अमुकत्र स्थाने-विश्रामसंस्थानं करिष्यामः, ' वसहि ' त्ति
अमुकत्र वसतिर्भविष्यति-वासको भविष्यतीत्यर्थः, ' भि-
क्ख ' त्ति अमुकत्र ग्रामे भिक्षाटनं कर्त्तव्यम् , एकस्तावदयं
' सङ्कारः ' सङ्केतः । ' बितिओ खग्गूडसंगारो ' त्ति द्वितीयः
संकेतः खग्गूडस्य दीयते ।

स चैवमाह-

रत्तिं न चेव कप्पइ, नीयदुवारे विराहणा दुविहा ।
पण्णवण बहुतरगुणा,अणिच्छ बीउवत्त उवही वा ।९२।(भा०)

' रत्तिं न चेव कप्पति ' त्ति रात्रौ साधूनां गमनं न कल्प-
ते. द्विविधविराधनासंभवात् , यत उक्तं-दिवाऽपि तावत्-
' नीयदुवारे विराहणा दुविह ' त्ति दिवाऽपि तावदयं दोषः,
"नीयदुवारं तमसं,कोट्ठगं परिवज्जए" इति वचनात् ,नीचद्वारे
द्विविधा विराधना संयमस्यात्मनश्च आस्तां तावद्रात्रौ, एवं च
धर्मश्रद्धया न निर्गच्छति । ' पण्णवण बहुतरगुण ' त्ति पुनश्च
तस्य प्रज्ञापना-प्ररूपणा क्रियते, तत्र रात्रिगमने बहवो गुणा
दृश्यन्ते , बालवृद्धादयः सुखेन गच्छन्ति रात्रौ, न तृषा
बाध्यन्ते इति । ' अणिच्छ ' त्ति अथ तथाऽपि नेच्छति
गमनम् ' बितिओ य ' त्ति द्वितीयस्तस्य दीयते-तदर्थं मु-
च्यते इति । ' उवही य ' त्ति उपधिस्तस्य दीयते जीर्णो,
तदीयश्च शोभनो गृह्यते इति , मा भूत्तत्पार्श्वे स्थितमुपधिं
स्तेनका आच्छेत्स्यन्ति ।

इदानीमसावेकाकी यदि स्वपिति ततो दोषः प्रमाद्यति-
तस्तेनश्चोपधिरुपहन्यते , उपहतश्चाकल्प्यो भवति ।
एतदेवाह-

सुवणे वीसुवघातो, पडिबज्झंतो अ जो उ न मिलेज्जा ।
उग्गाण अप्पडिबज्झणा,जइ वि चिरेणं न उवहम्मे ९३(भा०)

स्वापे ' वीसुं ' एकाकिनो निद्रावशे सति, को दोषः ?-
' उवघाउ ' त्ति तस्यैकाकिनः सुप्तस्य उपधिरुपहन्यते , स
ह्येकाकी स्वपन् प्रमादवान् भवति कथाद्यभियोगसंभवात् ,
ततश्च निद्रावशं प्राप्तस्य उपधिरुपहन्यते , अतोऽकल्पनीयो
भवति परिष्ठापनीयश्चासौ । गच्छे तु स्वपतोऽपि नोपहन्यते ,
किं कारणम् ? , यतस्तत्र केचित्सूत्रपौरुषीं कुर्वन्ति , अन्ये
द्वितीयप्रहरेऽर्थानुचिन्तनं कुर्वन्ति , तृतीये तु प्रहरे आचार्य
उत्तिष्ठति ध्यानाद्यर्थं , चतुर्थे तु प्रहरे सर्व एव भिक्षव उत्ति-
ष्ठन्ति , ततश्च रात्रावेकोऽपि प्रहरः शून्यः , ततो नोपहन्यते
उपधिः । एकाकिनस्तु जागरणं नास्त्यत उपघातः , 'पडिब-
ज्झंते य जो उ न मिलेज्ज ' त्ति प्रतिबध्यमानो वा व्रजा-

विषु क्षीरपावलेच्छया प्रतिबध्यमानो यो न मिलेत् तस्या-प्युपहन्यते उपधिः । किं कारणम् ?, एकाकिनः पर्यटनं नोक्तम् । एकाकी च पर्यटन् प्रमादभाग् भवति अतो प्रज्ञा-निप्रतिबन्धेऽप्युपधिरुपहन्यते । यस्तु पुनर्जागर्ति तस्मिन् दिवसेऽमुक्तो न प्रज्ञादिषु प्रतिबध्यते स यथाविधिस्तस्मिन् दिवसे मिलत्यपि नोपधिमुपहन्ति । 'जहवि चि-रेणं' ति किं बहुना ?, आग्रामेऽपि गोकुलादिषु चाऽप्रति-बध्यमानो यद्यपि चिरेण मिलति बहुभिर्दिवसैस्तथाऽप्यु-पधिस्तस्य नोपहन्यते, अप्रमादपरत्वात्तस्येति ।

इदानीं गच्छस्य गमनविधिं प्रतिपादयन्नाह—

**पुरओ मज्झे तह म-ग्गओ य ठायंति खित्तपडिलेहा ।**
**दाइंतुच्चाराई, भावासण्णाइरक्खट्ठा ॥१७७॥**

क्षेत्रप्रत्युपेक्षका एषु विभागेषु भवन्ति—केचन पुरतः—अग्रतो गच्छस्य, केचन मध्ये गच्छस्य, ते हि मार्गाभि-ज्ञाः । मार्गतश्च—पृष्ठतश्च तिष्ठन्ति क्षेत्रप्रत्युपेक्षकाः । किमर्थं पुरत एव तिष्ठन्ति ?, 'दाइंतुच्चाराई' उच्चारप्रश्र-वणस्थानानि दर्शयन्ति गच्छस्य, 'भावासण्णाइर-क्खट्ठ' त्ति भावासण्णो—प्रबलाभियासओ, तद्रक्षणार्थ-म् । एतदुक्तं भवति—उच्चारादिना बाध्यमानस्य ते मार्ग-ज्ञाः स्थण्डिलानि दर्शयन्ति ।

**डहरे भिक्खगामे, अंतरगामम्मि ठावए तरुणे ।**
**उवगरणगहणा असहू, व ठावए जाणगं चेगं ॥१७८॥**

'डहरे भिक्खगामे' त्ति यत्र ग्रामे वासकोऽभिप्रेतः भि-क्षा च अटितुमभिप्रेता तस्मिन् 'डहर' क्षुल्लके ग्रामे सति किं कर्तव्यमत आह—'अंतरगामम्मि' अपान्तराल एव यो ग्रामस्तस्मिन् भिक्षार्थं तरुणान् स्थापयेत्, 'उवगर-णगहणं' ति तदीयमुपकरणमन्ये भिक्षवो गृह्णन्ति, 'अ-सहू व ठावए' त्ति अथ ते तत्स्थापितेतरभिक्षुसत्कमुप-करणं ग्रहीतुं न शक्नुवन्ति ततोऽसहिष्णव एव तत्रान्त-रग्रामे भिक्षार्थं स्थाप्यन्ते 'जाणगं चेगं' ति च चैकं—मार्गज्ञं चैकं तेषां मध्ये स्थापयेत् येन सुखेनैवागच्छन्ति ।

**दूरुट्ठिय खुड्डलए, नव भद्द अगणी य पंत पडिणीए ।**
**संघाडेगो धुवक-म्मिओ व सुसे नवरि रिक्खा ॥१७९॥**

अथवा-असौ वासकभिक्षार्थमभिप्रेतो ग्रामो दूरे स्थितः स्यात्, उत्थितो वा—उद्वसितः क्षुल्लको वा प्राक् संपूर्णो दृष्टः इदानीमवक्षुल्लसितमतः क्षुल्लकः, नवः-प्राग् यस्मि-न् स्थाने दृष्टस्ततः स्थानादन्यत्र प्रदेशे जातः 'भद्द' त्ति भद्राक्रान्तो जातः 'अगणि' त्ति अग्निना वा इदानीं दग्धः प्रान्तः-प्राक् शोभनो दृष्ट इदानीं प्रान्तीभूतो विरूपो जातः 'पडिणीए' त्ति प्रत्यनीकाक्रान्त इदानीं जातः, प्राक् प्रतिलेखनाकाले प्रत्यनीकस्तत्र नासीत् इदानीं तु आयातः, पूर्वप्रतिलेखिते ग्रामे एवंविधे जाते सति दूरोत्थितादि-दोषाभिभूते सति किं कर्तव्यम् ?—'संघाड' त्ति तत्र स-ङ्घाटकः स्थाप्यते, पाश्चात्यप्रव्रजितमीलनार्थम् 'एगोवि' त्ति सङ्घाटकाभावे एकः स्थाप्यते साधुः 'धुवकम्मिओ' त्ति ध्रुवकर्मिको—लोहकारादिस्तस्य कथ्यते—यथा वयमन्यत्र ग्रामे यास्यामः, त्वया पाश्चात्यसाधुभ्यः कथनीयं—यथा-

अत्रैव ग्रामे गन्तव्यमिति, एवं तावत् वसति ग्रामे 'एस विही' । 'सुण्णे नवरि रिक्खा' त्ति यदा स्वसौ ग्रामो भा-मस्तदा किं कर्तव्यम् ?—'नवरि रिक्खा' त्ति अस्मिन्—ग्रामेऽभिप्रेते तिरश्चीने रेखाद्वयं पात्यते, येन तु अस्मिन् गतास्तत्र दीर्घा रेखां कुर्वन्ति । यदा तु पुनर्ध्रुवकर्मिको-पैर्युक्तो न भवति स ग्रामस्तदा तत्रैव या वसतिस्तस्यां प्रविशन्ति । ततश्च ये ते भिक्षार्थमन्तराग्रामे स्थिता आ-सन् तेषां मध्ये यदि वसतिमार्गज्ञो भवति ततस्तस्यामेव वसतौ आगच्छन्ति, न कश्चित्प्रतिपालयति ।

एतदेवाह—

**वाघायम्मि व ग्रउ, वसहीए नत्थि कोइ पडियरइ ।**
**असयाएऽजाणंते-सु वसति संघाड धुवकम्मी ॥१८०॥**

'आघायम्मि' मार्गाभिज्ञे स्थिते तस्यां वसतावागच्छ-न्ति 'नत्थि कोइ पडियरइ' त्ति न कश्चित् तान् प्रतिपा-लयति बहिः—स्थितः, 'असयाए' त्ति यदा तस्याः पू-र्वप्रत्युपेक्षितायाः वसतेर्व्याघातः संजातः किन्त्वन्या, तस्या-मन्यस्यां वसतौ जातायां 'अजाणंतेसु वावि,' अथवा-ये ते भिक्षानिमित्तं स्थिताः पश्चादागमिष्यन्ति तेषु अजानत्सु 'संघाडधुवकम्मि' त्ति वसतिपरिज्ञानार्थं सङ्घाटको बहिः स्थाप्यते, ध्रुवकर्मिको—लोहकारस्तस्य कथ्यते, यदुत—साधव आगमिष्यन्ति तेषामियं वसतिर्दर्शनीया कथनीया वेति ।

इदानीं ये ते भिक्षार्थं पश्चाद्ग्रामे स्थापितास्तैः किं कर्तव्य-मत आह—

**जइ अब्भासे गमणं, दूरे गंतुं दुगाउयं पेसे ।**
**ते वि असंथरमाणा, इंती अहवा विसज्जंति ॥१८१॥**

यदि अभ्यासे-आसन्ने गच्छस्ततस्ते 'गमणं' त्ति गच्छस-मीपमेव गच्छन्ति, 'दूरे' त्ति अथ दूरे गच्छस्ततो गन्तुं द्वि-गव्यूतं-गत्वा क्रोशद्वयं, किम् ?—'पेसे' त्ति एकं श्रमणं ग-च्छसमीपे प्रेषयन्ति, 'तेवि असंथरमाणा इति' तेऽपि गच्छगताः साधवः असंस्तरमाणाः—अतृप्ताः सन्तः किं कु-र्वन्ति ?—'एंति' आगच्छन्ति, क ?—यत्र ते साधवो भिक्षया गृहीतया तिष्ठन्ति, अथ च तृप्तास्ततस्तं साधुं विसर्जयन्ति यदुत—पर्याप्तमस्माकं, यूयं भक्षयित्वाऽऽगच्छत । 'सं-थार' त्ति द्वारं, व्याख्यातं, तत्प्रसङ्गायातं च व्याख्यातम् ।

इदानीं वसतिद्वारमुच्यते, तत्प्रतिपादनायेदमाह—

**पढमबियाए गमणं, गहणं पडिलेहणा पवेसो उ ।**
**काले संघाडेगो, वऽसंथरंताण तह चेव ॥ १८२ ॥**

'पढम' त्ति तस्यां च वसतौ गमनं-प्राप्तिः कदाचित्प्रथमपौरु-ष्यां भवति, कदाचिच्च 'बितियाए' त्ति द्वितीयपौरुष्यां गम-नं प्राप्तिरित्यर्थः । 'गहणं' ति 'दंडउंछयणमादीयं' इतिमिली-णं' कृत्वा ग्रहणं वृषभाः प्रविशन्ति । पुनश्च 'पडिलेहणा' तां वसतिं प्रमार्जयन्ति, 'पवेसो' त्ति ततो गच्छः प्रविशति, 'काल' त्ति कदाचिद्भिक्षाकाल एव प्राप्तास्ततश्च को विधिः ?, अत आह-सङ्घाटक एको वसतिं प्रमार्जयति, अन्ये भिक्षा-र्थं व्रजन्ति । 'एगो य' त्ति यदा सङ्घाटको न पर्याप्नोति तदा एको गीतार्थो वसतिप्रत्युपेक्षणार्थं प्रेष्यते, यदा तु पुनरसौ-

